# *Shrimad Bhagavata Purana*

# ॥ श्रीमद् भागवत पुराण ॥

॥ ॐ नमो भगवते वासुदेवाय ॥

०१०१००११ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्

०१०१००१२ तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः

०१०१००१३ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा

०१०१००१४ धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि

०१०१००२१ धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां

०१०१००२२ वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्

०१०१००२३ श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः

०१०१००२४ सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्

०१०१००३१ निगमकल्पतरोर्गलितं फलं

०१०१००३२ शुकमुखादमृतद्रवसंयुतम्

०१०१००३३ पिबत भागवतं रसमालयं

०१०१००३४ मुहुरहो रसिका भुवि भावुकाः

०१०१००४१ नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः

०१०१००४३ सत्रं स्वर्गाय लोकाय सहस्रसममासत

०१०१००५१ त एकदा तु मुनयः प्रातर्हुतहुताग्नयः

०१०१००५३ सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात्

०१०१००६० ऋषय ऊचुः

०१०१००६१ त्वया खलु पुराणानि सेतिहासानि चानघ

०१०१००६३ आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत

०१०१००७१ यानि वेदविदां श्रेष्ठो भगवान्बादरायणः

०१०१००७३ अन्ये च मुनयः सूत परावरविदो विदुः

०१०१००८१ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात्

०१०१००८३ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत

०१०१००९१ तत्र तत्राञ्जसायुष्मन्भवता यद्विनिश्चितम्

०१०१००९३ पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि

०१०१०१०१ प्रायेणाल्पायुषः सभ्य कलावस्मिन्युगे जनाः

०१०१०१०३ मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः
०१०१०१११ भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः
०१०१०११३ अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया
०१०१०११५ ब्रूहि भद्राय भूतानां येनात्मा सुप्रसीदति
०१०१०१२१ सूत जानासि भद्रं ते भगवान्सात्वतां पतिः
०१०१०१२३ देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया
०१०१०१३१ तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम्
०१०१०१३३ यस्यावतारो भूतानां क्षेमाय च भवाय च
०१०१०१४१ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्
०१०१०१४३ ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्
०१०१०१५१ यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः
०१०१०१५३ सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया
०१०१०१६१ को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः
०१०१०१६३ शुद्धिकामो न शृणुयाद्यशः कलिमलापहम्
०१०१०१७१ तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः
०१०१०१७३ ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः
०१०१०१८१ अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः
०१०१०१८३ ईला विदधतः स्वैरमीश्वरस्यात्ममायया
०१०१०१९१ वयं तु न वितृप्याम उत्तमश्लोकविक्रमे
०१०१०१९३ यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे
०१०१०२०१ कृतवान्किल कर्माणि सह रामेण केशवः
०१०१०२०३ अतिमर्त्यानि भगवान्गूढः कपटमानुषः
०१०१०२११ कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम्
०१०१०२१३ आसीना दीर्घसत्रेण कथायां सक्षणा हरेः
०१०१०२२१ त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम्
०१०१०२२३ कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम्
०१०१०२३१ ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि
०१०१०२३३ स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः
०१०२००१० व्यास उवाच
०१०२००११ इति सम्प्रश्नसंहृष्टो विप्राणां रौमहर्शणिः
०१०२००१३ प्रतिपूज्य वचस्तेशां प्रवक्तुमुपचक्रमे

०१०२००२० सूत उवाच

०१०२००२१ यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव

०१०२००२३ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि

०१०२००३१ यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोऽन्धम्

०१०२००३३ संसारिणां करुणयाह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम्

०१०२००४१ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्

०१०२००४३ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्

०१०२००५१ मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्

०१०२००५३ यत्कृतः कृष्णसम्प्रश्नो येनात्मा सुप्रसीदति

०१०२००६२ स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे

०१०२००६३ अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति

०१०२००७१ वासुदेवे भगवति भक्तियोगः प्रयोजितः

०१०२००७३ जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्

०१०२००८१ धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः

०१०२००८३ नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्

०१०२००९१ धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते

०१०२००९३ नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः

०१०२०१०१ कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता

०१०२०१०३ जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः

०१०२०१११ वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्

०१०२०११३ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते

०१०२०१२१ तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया

०१०२०१२३ पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया

०१०२०१३१ अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः

०१०२०१३३ स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्

०१०२०१४१ तस्मादेकेन मनसा भगवान्सात्वतां पतिः

०१०२०१४३ श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा

०१०२०१५१ यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम्

०१०२०१५३ छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम्

०१०२०१६१ शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः

०१०२०१६३ स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात्

०१०२०१७१ शृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्तनः
०१०२०१७३ हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्
०१०२०१८१ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया
०१०२०१८३ भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी
०१०२०१९१ तदा रजस्तमोभावाः कामलोभादयश्च ये
०१०२०१९३ चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति
०१०२०२०१ एवं प्रसन्नमनसो भगवद्भक्तियोगतः
०१०२०२०३ भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते
०१०२०२११ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः
०१०२०२१३ क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे
०१०२०२२१ अतो वै कवयो नित्यं भक्तिं परमया मुदा
०१०२०२२३ वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम्
०१०२०२३१ सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परमपुरुष एक इहास्य धत्ते
०१०२०२३३ स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः
०१०२०२४१ पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः
०१०२०२४३ तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शनम्
०१०२०२५१ भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्
०१०२०२५३ सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह
०१०२०२६१ मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ
०१०२०२६३ नारायणकलाः शान्ता भजन्ति ह्यनसूयवः
०१०२०२७१ रजस्तमःप्रकृतयः समशीला भजन्ति वै
०१०२०२७३ पितृभूतप्रजेशादीन्श्रियैश्वर्यप्रजेप्सवः
०१०२०२८१ वासुदेवपरा वेदा वासुदेवपरा मखाः
०१०२०२८३ वासुदेवपरा योग वासुदेवपराः क्रियाः
०१०२०२९१ वासुदेवपरं ज्ञानं वासुदेवपरं तपः
०१०२०२९३ वासुदेवपरो धर्मो वासुदेवपरा गतिः
०१०२०३०१ स एवेदं ससर्जाग्रे भगवानात्ममायया
०१०२०३०३ सदसद्रूपया चासौ गुणमयागुणो विभुः
०१०२०३११ तया विलसितेष्वेषु गुणेषु गुणवानिव
०१०२०३१३ अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः
०१०२०३२१ यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु

०१०२०३२३ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान्
०१०२०३३१ असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः
०१०२०३३३ स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान्
०१०२०३४१ भावयत्येष सत्त्वेन लोकान्वै लोकभावनः
०१०२०३४३ लीलावतारानुरतो देवतिर्यङ्नरादिषु
०१०३००१० सूत उवाच
०१०३००११ जगृहे पौरुषं रूपं भगवान्महदादिभिः
०१०३००१३ सम्भूतं षोडशकलमादौ लोकसिसृक्षया
०१०३००२१ यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः
०१०३००२३ नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः
०१०३००३१ यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः
०१०३००३३ तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम्
०१०३००४१ पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्
०१०३००४३ सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्
०१०३००५१ एतन्नानावताराणां निधानं बीजमव्ययम्
०१०३००५३ यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः
०१०३००६१ स एव प्रथमं देवः कौमारं सर्गमाश्रितः
०१०३००६३ चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम्
०१०३००७१ द्वितीयं तु भवायास्य रसातलगतां महीम्
०१०३००७३ उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः
०१०३००८१ तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः
०१०३००८३ तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः
०१०३००९१ तुर्ये धर्मकलासर्गे नरनारायणावृषी
०१०३००९३ भूत्वात्मोपशमोपेतमकरोद्दुश्चरं तपः
०१०३०१०१ पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्
०१०३०१०३ प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्
०१०३०१११ षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया
०१०३०११३ आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्
०१०३०१२१ ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत
०१०३०१२३ स यामाद्यैः सुरगणैरपात्स्वायम्भुवान्तरम्
०१०३०१३१ अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः

०१०३०१३३ दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम्
०१०३०१४१ ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः
०१०३०१४३ दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः
०१०३०१५१ रूपं स जगृहे मात्स्यं चाक्षुषोदधिसम्प्लवे
०१०३०१५३ नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्
०१०३०१६१ सुरासुराणामुदधिं मथ्नतां मन्दराचलम्
०१०३०१६३ दध्रे कमठरूपेण पृष्ठ एकादशे विभुः
०१०३०१७१ धान्वन्तरं द्वादशमं त्रयोदशमृमेव च
०१०३०१७३ अपाययत्सुरानन्यान्मोहिन्या मोहयन्स्त्रिया
०१०३०१८१ चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम्
०१०३०१८३ ददार करजैरूरावेरकां कटकृद्यथा
०१०३०१९१ पञ्चदशं वामनकं कृत्वागादध्वरं बलेः
०१०३०१९३ पदत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम्
०१०३०२०१ अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान्
०१०३०२०३ त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम्
०१०३०२११ ततः सप्तदशे जातः सत्यवत्यां पराशरात्
०१०३०२१३ चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः
०१०३०२२१ नरदेवत्वमापन्नः सुरकार्यचिकीर्षया
०१०३०२२३ समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम्
०१०३०२३१ एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी
०१०३०२३३ रामकृष्णाविति भुवो भगवानहरद्भरम्
०१०३०२४१ ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्
०१०३०२४३ बुद्धो नाम्नाञ्जनसुतः कीकटेषु भविष्यति
०१०३०२५१ अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु
०१०३०२५३ जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः
०१०३०२६१ अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः
०१०३०२६३ यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः
०१०३०२७१ ऋषयो मनवो देवा मनुपुत्रा महौजसः
०१०३०२७३ कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः
०१०३०२८१ एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्
०१०३०२८३ इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे

०१०३०२९१ जन्म गुह्यं भगवतो य एतत्प्रयतो नरः
०१०३०२९३ सायं प्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यते
०१०३०३०१ एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः
०१०३०३०३ मायागुणैर्विरचितं महदादिभिरात्मनि
०१०३०३११ यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले
०१०३०३१३ एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः
०१०३०३२१ अतः परं यदव्यक्तमव्यूढगुणबृंहितम्
०१०३०३२३ अदृष्टाश्रुतवस्तुत्वात्स जीवो यत्पुनर्भवः
०१०३०३३१ यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा
०१०३०३३३ अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम्
०१०३०३४१ यद्येषोपरता देवी माया वैशारदी मतिः
०१०३०३४३ सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते
०१०३०३५१ एवं च जन्मानि कर्माणि ह्यकर्तुरजनस्य च
०१०३०३५३ वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः
०१०३०३६१ स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन्
०१०३०३६३ भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः
०१०३०३७१ न चास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः
०१०३०३७३ नामानि रूपाणि मनोवचोभिः सन्तन्वतो नटचर्यामिवाज्ञः
०१०३०३८१ स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः
०१०३०३८३ योऽमायया सन्ततयानुवृत्त्या भजेत तत्पादसरोजगन्धम्
०१०३०३९१ अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे
०१०३०३९३ कुर्वन्ति सर्वात्मकमात्मभावं न यत्र भूयः परिवर्त उग्रः
०१०३०४०१ इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्
०१०३०४०३ उत्तमश्लोकचरितं चकार भगवानृषिः
०१०३०४११ निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत्
०१०३०४१३ तदिदं ग्राहयामाससुतमात्मवतां वरम्
०१०३०४२१ सर्ववेदेतिहासानां सारं सारं समुद्धृतम्
०१०३०४२३ स तु संश्रावयामासमहाराजं परीक्षितम्
०१०३०४३१ प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः
०१०३०४३३ कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह
०१०३०४४१ कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः

०१०३०४४३ तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः
०१०३०४५१ अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात्
०१०३०४५३ सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति
०१०४००१० व्यास उवाच
०१०४००११ इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम्
०१०४००१३ वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत्
०१०४००२० शौनक उवाच
०१०४००२१ सूत सूत महाभाग वद नो वदतां वर
०१०४००२३ कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः
०१०४००३१ कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना
०१०४००३३ कुतः सञ्चोदितः कृष्णः कृतवान्संहितां मुनिः
०१०४००४१ तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः
०१०४००४३ एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते
०१०४००५१ दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम्
०१०४००५३ तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुम्भिदा न तु सुतस्य विविक्तदृष्टेः
०१०४००६१ कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलान्
०१०४००६३ उन्मत्तमूकजडवद्विचरन्गजसाह्वये
०१०४००७१ कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह
०१०४००७३ संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः
०१०४००८१ स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम्
०१०४००८३ अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम्
०१०४००९१ अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम्
०१०४००९३ तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः
०१०४०१०१ स सम्राट्कस्य वा हेतोः पाण्डूनां मानवर्धनः
०१०४०१०३ प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम्
०१०४०१११ नमन्ति यत्पादनिकेतमात्मनः शिवाय हानीय धनानि शत्रवः
०१०४०११३ कथं स वीरः श्रियमङ्ग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहासुभिः
०१०४०१२१ शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः
०१०४०१२३ जीवन्ति नात्मार्थमसौ पराश्रयं मुमोच निर्विद्य कुतः कलेवरम्
०१०४०१३१ तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन
०१०४०१३३ मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात्

०१०४०१४० सूत उवाच
०१०४०१४१ द्वापरे समनुप्राप्ते तृतीये युगपर्यये
०१०४०१४३ जातः पराशराद्योगी वासव्यां कलया हरेः
०१०४०१५१ स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः
०१०४०१५३ विविक्त एक आसीन उदिते रविमण्डले
०१०४०१६१ परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा
०१०४०१६३ युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे
०१०४०१७१ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम्
०१०४०१७३ अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः
०१०४०१८१ दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा
०१०४०१८३ सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक्
०१०४०१९१ चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम्
०१०४०१९३ व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम्
०१०४०२०१ ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः
०१०४०२०३ इतिहासपुराणं च पञ्चमो वेद उच्यते
०१०४०२११ तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः
०१०४०२१३ वैशम्पायन एवैको निष्णातो यजुषामुत
०१०४०२२१ अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः
०१०४०२२३ इतिहासपुराणानां पिता मे रोमहर्षणः
०१०४०२३१ त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा
०१०४०२३३ शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्
०१०४०२४१ त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा
०१०४०२४३ एवं चकार भगवान्व्यासः कृपणवत्सलः
०१०४०२५१ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा
०१०४०२५३ कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह
०१०४०२५५ इति भारतमाख्यानं कृपया मुनिना कृतम्
०१०४०२६१ एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः
०१०४०२६३ सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः
०१०४०२७१ नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ
०१०४०२७३ वितर्कयन्विविक्तस्थ इदं चोवाच धर्मवित्
०१०४०२८१ धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः

०१०४०२८३ मानिता निर्व्यलीकेन गृहीतं चानुशासनम्
०१०४०२९१ भारतव्यपदेशेन ह्याम्नायार्थश्च प्रदर्शितः
०१०४०२९३ दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत
०१०४०३०१ तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः
०१०४०३०३ असम्पन्न इवाभाति ब्रह्मवर्चस्य सत्तमः
०१०४०३११ किं वा भागवता धर्मा न प्रायेण निरूपिताः
०१०४०३१३ प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः
०१०४०३२१ तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः
०१०४०३२३ कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम्
०१०४०३३१ तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः
०१०४०३३३ पूजयामास विधिवन्नारदं सुरपूजितम्
०१०५००१० सूत उवाच
०१०५००११ अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः
०१०५००१३ देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव
०१०५००२० नारद उवाच
०१०५००२१ पाराशर्य महाभाग भवतः कच्चिदात्मना
०१०५००२३ परितुष्यति शारीर आत्मा मानस एव वा
०१०५००३१ जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्
०१०५००३३ कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितम्
०१०५००४१ जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम्
०१०५००४३ तथापि शोचस्यात्मानमकृतार्थ इव प्रभो
०१०५००५० व्यास उवाच
०१०५००५१ अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे
०१०५००५३ तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वात्मभवात्मभूतम्
०१०५००६१ स वै भवान्वेद समस्तगुह्यमुपासितो यत्पुरुषः पुराणः
०१०५००६३ परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः
०१०५००७१ त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी
०१०५००७३ परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व
०१०५००८० श्रीनारद उवाच
०१०५००८१ भवतानुदितप्रायं यशो भगवतोऽमलम्
०१०५००८३ येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्

०१०५००९१ यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः
०१०५००९३ न तथा वासुदेवस्य महिमा ह्यनुवर्णितः
०१०५०१०१ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्
०१०५०१०३ तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः
०१०५०१११ तद्वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि
०१०५०११३ नामान्यनन्तस्य यशोऽङ्कितानि यत्शृण्वन्ति गायन्ति गृणन्ति साधवः
०१०५०१२१ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्
०१०५०१२३ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्
०१०५०१३१ अथो महाभाग भवानमोघदृक्षुचिश्रवाः सत्यरतो धृतव्रतः
०१०५०१३३ उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम्
०१०५०१४१ ततोऽन्यथा किञ्चन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः
०१०५०१४३ न कर्हिचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम्
०१०५०१५१ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान्व्यतिक्रमः
०१०५०१५३ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः
०१०५०१६१ विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम्
०१०५०१६३ प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः
०१०५०१७१ त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि
०१०५०१७३ यत्र क्व वाभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः
०१०५०१८१ तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः
०१०५०१८३ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा
०१०५०१९१ न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्
०१०५०१९३ स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जनः
०१०५०२०१ इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः
०१०५०२०३ तद्धि स्वयं वेद भवांस्तथापि ते प्रादेशमात्रं भवतः प्रदर्शितम्
०१०५०२११ त्वमात्मनात्मानमवेह्यमोघदृक्परस्य पुंसः परमात्मनः कलाम्
०१०५०२१३ अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम्
०१०५०२२१ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः
०१०५०२२३ अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम्
०१०५०२३१ अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम्
०१०५०२३३ निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम्
०१०५०२४१ ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि

०१०५०२४३ चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि
०१०५०२५१ उच्छिष्टलेपाननुमोदितो द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः
०१०५०२५३ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते
०१०५०२६१ तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाश्रृणवं मनोहराः
०१०५०२६३ ताः श्रद्धया मेऽनुपदं विश्रृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रुचिः
०१०५०२७१ तस्मिंस्तदा लब्धरुचेर्महामते प्रियश्रवस्यस्खलिता मतिर्मम
०१०५०२७३ ययाहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे
०१०५०२८१ इत्थं शरत्प्रावृषिकावृतू हरेर्विश्रृण्वतो मेऽनुसवं यशोऽमलम्
०१०५०२८३ सङ्कीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्तात्मरजस्तमोपहा
०१०५०२९१ तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः
०१०५०२९३ श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च
०१०५०३०१ ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम्
०१०५०३०३ अन्ववोचन्गमिष्यन्तः कृपया दीनवत्सलाः
०१०५०३११ येनैवाहं भगवतो वासुदेवस्य वेधसः
०१०५०३१३ मायानुभावमविदं येन गच्छन्ति तत्पदम्
०१०५०३२१ एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम्
०१०५०३२३ यदीश्वरे भगवति कर्म ब्रह्मणि भावितम्
०१०५०३३१ आमयो यश्च भूतानां जायते येन सुव्रत
०१०५०३३३ तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम्
०१०५०३४१ एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः
०१०५०३४३ त एवात्मविनाशाय कल्पन्ते कल्पिताः परे
०१०५०३५१ यदत्र क्रियते कर्म भगवत्परितोषणम्
०१०५०३५३ ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्
०१०५०३६१ कुर्वाणा यत्र कर्माणि भगवच्छिक्षयासकृत्
०१०५०३६३ गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च
०१०५०३७१ ओं नमो भगवते तुभ्यं वासुदेवाय धीमहि
०१०५०३७३ प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च
०१०५०३८१ इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम्
०१०५०३८३ यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान्
०१०५०३९१ इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम्
०१०५०३९३ अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः

०१०५०४०१ त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम्
०१०५०४०३ प्राख्याहि दुःखैर्मुहुरर्दितात्मनां सङ्क्लेशनिर्वाणमुशन्ति नान्यथा
०१०६००१० सूत उवाच
०१०६००११ एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च
०१०६००१३ भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः
०१०६००२० व्यास उवाच
०१०६००२१ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव
०१०६००२३ वर्तमानो वयस्याद्ये ततः किमकरोद्भवान्
०१०६००३१ स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः
०१०६००३३ कथं चेदमुदस्राक्षीः काले प्राप्ते कलेवरम्
०१०६००४१ प्राक्कल्पविषयामेतां स्मृतिं ते मुनिसत्तम
०१०६००४३ न ह्येष व्यवधात्काल एष सर्वनिराकृतिः
०१०६००५० नारद उवाच
०१०६००५१ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम
०१०६००५३ वर्तमानो वयस्याद्ये तत एतदकारषम्
०१०६००६१ एकात्मजा मे जननी योषिन्मूढा च किङ्करी
०१०६००६३ मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम्
०१०६००७१ सास्वतन्त्रा न कल्पासीद्योगक्षेमं ममेच्छती
०१०६००७३ ईशस्य हि वशे लोको योषा दारुमयी यथा
०१०६००८१ अहं च तद्ब्रह्मकुले ऊषिवांस्तदुपेक्षया
०१०६००८३ दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः
०१०६००९१ एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि
०१०६००९३ सर्पोऽदशत्पदा स्पृष्टः कृपणां कालचोदितः
०१०६०१०१ तदा तदहमीशस्य भक्तानां शमभीप्सतः
०१०६०१०३ अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम्
०१०६०१११ स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान्
०१०६०११३ खेटखर्वटवाटीश्च वनान्युपवनानि च
०१०६०१२१ चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान्
०१०६०१२३ जलाशयाञ्छिवजलान्नलिनीः सुरसेविताः
०१०६०१३१ चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः
०१०६०१३३ नलवेणुशरस्तन्ब कुशकीचकगह्वरम्

०१०६०१४१ एक एवातियातोऽहमद्राक्षं विपिनं महत्
०१०६०१४३ घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम्
०१०६०१५१ परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः
०१०६०१५३ स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः
०१०६०१६१ तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः
०१०६०१६३ आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम्
०१०६०१७१ ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा
०१०६०१७३ औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः
०१०६०१८१ प्रेमातिभरनिर्भिन्न पुलकाङ्गोऽतिनिर्वृतः
०१०६०१८३ आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने
०१०६०१९१ रूपं भगवतो यत्तन्मनःकान्तं शुचापहम्
०१०६०१९३ अपश्यन्सहसोत्तस्थे वैक्लव्याद्दुर्मना इव
०१०६०२०१ दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि
०१०६०२०३ वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः
०१०६०२११ एवं यतन्तं विजने मामाहागोचरो गिराम्
०१०६०२१३ गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव
०१०६०२२१ हन्तास्मिञ्जन्मनि भवान्मा मां द्रष्टुमिहार्हति
०१०६०२२३ अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्
०१०६०२३१ सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ
०१०६०२३३ मत्कामः शनकैः साधु सर्वान्मुञ्चति हृच्छयान्
०१०६०२४१ सत्सेवयादीर्घयापि जाता मयि दृढा मतिः
०१०६०२४३ हित्वावद्यमिमं लोकं गन्ता मज्जनतामसि
०१०६०२५१ मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित्
०१०६०२५३ प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात्
०१०६०२६१ एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम्
०१०६०२६३ अहं च तस्मै महतां महीयसे शीर्ष्णावनामं विदधेऽनुकम्पितः
०१०६०२७१ नामान्यनन्तस्य हतत्रपः पठन्गुह्यानि भद्राणि कृतानि च स्मरन्
०१०६०२७३ गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः
०१०६०२८१ एवं कृष्णमतेर्ब्रह्मन्नासक्तस्यामलात्मनः
०१०६०२८३ कालः प्रादुरभूत्काले तडित्सौदामनी यथा
०१०६०२९१ प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्

०१०६०२९३ आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः
०१०६०३०१ कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः
०१०६०३०३ शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः
०१०६०३११ सहस्रयुगपर्यन्ते उत्थायेदं सिसृक्षतः
०१०६०३१३ मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे
०१०६०३२१ अन्तर्बहिश्च लोकांस्त्रीन्पर्येम्यस्कन्दितव्रतः
०१०६०३२३ अनुग्रहान्महाविष्णोरविघातगतिः क्वचित्
०१०६०३३१ देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम्
०१०६०३३३ मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम्
०१०६०३४१ प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः
०१०६०३४३ आहूत इव मे शीघ्रं दर्शनं याति चेतसि
०१०६०३५१ एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः
०१०६०३५३ भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम्
०१०६०३६१ यमादिभिर्योगपथैः कामलोभहतो मुहुः
०१०६०३६३ मुकुन्दसेवया यद्वत्तथात्माद्धा न शाम्यति
०१०६०३७१ सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयानघ
०१०६०३७३ जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम्
०१०६०३८० सूत उवाच
०१०६०३८१ एवं सम्भाष्य भगवान्नारदो वासवीसुतम्
०१०६०३८३ आमन्त्र्य वीणां रणयन्ययौ यादृच्छिको मुनिः
०१०६०३९१ अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः
०१०६०३९३ गायन्माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत्
०१०७००१० शौनक उवाच
०१०७००११ निर्गते नारदे सूत भगवान्बादरायणः
०१०७००११ श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः
०१०७००२० सूत उवाच
०१०७००२१ ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे
०१०७००२३ शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः
०१०७००३१ तस्मिन्स्व आश्रमे व्यासो बदरीषण्डमण्डिते
०१०७००३३ आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम्
०१०७००४१ भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले

०१०७००४३ अपश्यत्पुरुषं पूर्णं मायां च तदपाश्रयम्
०१०७००५१ यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्
०१०७००५३ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते
०१०७००६१ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे
०१०७००६३ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्
०१०७००७१ यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे
०१०७००७३ भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा
०१०७००८१ स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम्
०१०७००८३ शुकमध्यापयामास निवृत्तिनिरतं मुनिः
०१०७००९० शौनक उवाच
०१०७००९१ स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः
०१०७००९३ कस्य वा बृहतीमेतामात्मारामः समभ्यसत्
०१०७०१०० सूत उवाच
०१०७०१०१ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे
०१०७०१०३ कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः
०१०७०१११ हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः
०१०७०११३ अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः
०१०७०१२१ परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनम्
०१०७०१२३ संस्थां च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम्
०१०७०१३१ यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु
०१०७०१३३ वृकोदराविद्धगदाभिमर्श भग्नोरुदण्डे धृतराष्ट्रपुत्रे
०१०७०१४१ भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि
०१०७०१४३ उपाहरद्विप्रियमेव तस्य जुगुप्सितं कर्म विगर्हयन्ति
०१०७०१५१ माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना
०१०७०१५३ तदारुदद्वाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटमाली
०१०७०१६१ तदा शुचस्ते प्रमृजामि भद्रे यद्ब्रह्मबन्धोः शिर आततायिनः
०१०७०१६३ गाण्डीवमुक्तैर्विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि दग्धपुत्रा
०१०७०१७१ इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाच्युतमित्रसूतः
०१०७०१७३ अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन
०१०७०१८१ तमापतन्तं स विलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन
०१०७०१८३ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथा कः

०१०७०१९१ यदाशरणमात्मानमैक्षत श्रान्तवाजिनम्
०१०७०१९३ अस्त्रं ब्रह्मशिरो मेने आत्मत्राणं द्विजात्मजः
०१०७०२०१ अथोपस्पृश्य सलिलं सन्दधे तत्समाहितः
०१०७०२०३ अजानन्नपि संहारं प्राणकृच्छ्र उपस्थिते
०१०७०२११ ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतो दिशम्
०१०७०२१३ प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह
०१०७०२२० अर्जुन उवाच
०१०७०२२१ कृष्ण कृष्ण महाबाहो भक्तानामभयङ्कर
०१०७०२२३ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः
०१०७०२३१ त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः
०१०७०२३३ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि
०१०७०२४१ स एव जीवलोकस्य मायामोहितचेतसः
०१०७०२४३ विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम्
०१०७०२५१ तथायं चावतारस्ते भुवो भारजिहीर्षया
०१०७०२५३ स्वानां चानन्यभावानामनुध्यानाय चासकृत्
०१०७०२६१ किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम्
०१०७०२६३ सर्वतो मुखमायाति तेजः परमदारुणम्
०१०७०२७० श्रीभगवानुवाच
०१०७०२७१ वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम्
०१०७०२७३ नैवासौ वेद संहारं प्राणबाध उपस्थिते
०१०७०२८१ न ह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवकर्शनम्
०१०७०२८३ जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा
०१०७०२९० सूत उवाच
०१०७०२९१ श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा
०१०७०२९३ स्पृष्ट्वापस्तं परिक्रम्य ब्राह्मं ब्राह्मास्त्रं सन्दधे
०१०७०३०१ संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते
०१०७०३०३ आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत्
०१०७०३११ दृष्ट्वास्त्रतेजस्तु तयोस्त्रींल्लोकान्प्रदहन्महत्
०१०७०३१३ दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत
०१०७०३२१ प्रजोपद्रवमालक्ष्य लोकव्यतिकरं च तम्
०१०७०३२३ मतं च वासुदेवस्य सञ्जहारार्जुनो द्वयम्

०१०७०३३१ तत आसाद्य तरसा दारुणं गौतमीसुतम्
०१०७०३३३ बबन्धामर्षताम्राक्षः पशुं रशनया यथा
०१०७०३४१ शिबिराय निनीषन्तं रज्ज्वा बद्ध्वा रिपुं बलात्
०१०७०३४३ प्राहार्जुनं प्रकुपितो भगवानम्बुजेक्षणः
०१०७०३५१ मैनं पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहि
०१०७०३५३ योऽसावनागसः सुप्तानवधीन्निशि बालकान्
०१०७०३६१ मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम्
०१०७०३६३ प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित्
०१०७०३७१ स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः
०१०७०३७३ तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान्
०१०७०३८१ प्रतिश्रुतं च भवता पाञ्चाल्यै शृण्वतो मम
०१०७०३८३ आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा
०१०७०३९१ तदसौ वध्यतां पाप आततायात्मबन्धुहा
०१०७०३९३ भर्तुश्च विप्रियं वीर कृतवान्कुलपांसनः
०१०७०४०० सूत उवाच
०१०७०४०१ एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः
०१०७०४०३ नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं महान्
०१०७०४११ अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः
०१०७०४१३ न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान्हतान्
०१०७०४२१ तथाहृतं पशुवत्पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन
०१०७०४२३ निरीक्ष्य कृष्णापकृतं गुरोः सुतं वामस्वभावा कृपया ननाम च
०१०७०४३१ उवाच चासहन्त्यस्य बन्धनानयनं सती
०१०७०४३३ मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः
०१०७०४४१ सरहस्यो धनुर्वेदः सविसर्गोपसंयमः
०१०७०४४३ अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात्
०१०७०४५१ स एष भगवान्द्रोणः प्रजारूपेण वर्तते
०१०७०४५३ तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी
०१०७०४६१ तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम्
०१०७०४६३ वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः
०१०७०४७१ मा रोदीदस्य जननी गौतमी पतिदेवता
०१०७०४७३ यथाहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः

०१०७०४८१ यैः कोपितं ब्रह्मकुलं राजन्यैरजितात्मभिः
०१०७०४८३ तत्कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम्
०१०७०४९० सूत उवाच
०१०७०४९१ धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत्
०१०७०४९३ राजा धर्मसुतो राज्ञ्याःप्रत्यनन्दद्वचो द्विजाः
०१०७०५०१ नकुलः सहदेवश्च युयुधानो धनञ्जयः
०१०७०५०३ भगवान्देवकीपुत्रो ये चान्ये याश्च योषितः
०१०७०५११ तत्राहामर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः
०१०७०५१३ न भर्तुर्नात्मनश्चार्थे योऽहन्सुप्तान्शिशून्वृथा
०१०७०५२१ निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः
०१०७०५२३ आलोक्य वदनं सख्युरिदमाह हसन्निव
०१०७०५३० श्रीभगवानुवाच
०१०७०५३१ ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः
०१०७०५३३ मयैवोभयमाम्नातं परिपाह्यनुशासनम्
०१०७०५४१ कुरु प्रतिश्रुतं सत्यं यत्तत्सान्त्वयता प्रियाम्
०१०७०५४३ प्रियं च भीमसेनस्य पाञ्चाल्या मह्यमेव च
०१०७०५५० सूत उवाच
०१०७०५५१ अर्जुनः सहसाज्ञाय हरेर्हार्दमथासिना
०१०७०५५३ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम्
०१०७०५६१ विमुच्य रशनाबद्धं बालहत्याहतप्रभम्
०१०७०५६३ तेजसा मणिना हीनं शिबिरान्निरयापयत्
०१०७०५७१ वपनं द्रविणादानं स्थानान्निर्यापणं तथा
०१०७०५७३ एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः
०१०७०५८१ पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया
०१०७०५८३ स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम्
०१०८००१० सूत उवाच
०१०८००११ अथ ते सम्परेतानां स्वानामुदकमिच्छताम्
०१०८००१३ दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः
०१०८००२१ ते निनीयोदकं सर्वे विलप्य च भृशं पुनः
०१०८००२३ आप्लुता हरिपादाब्जरजःपूतसरिज्जले
०१०८००३१ तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम्

०१०८००३३ गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः

०१०८००४१ सान्त्वयामास मुनिभिर्हतबन्धूञ्शुचार्पितान्

०१०८००४३ भूतेषु कालस्य गतिं दर्शयन्न प्रतिक्रियाम्

०१०८००५१ साधयित्वाजातशत्रोः स्वं राज्यं कितवैर्हृतम्

०१०८००५३ घातयित्वासतो राज्ञः कचस्पर्शक्षतायुषः

०१०८००६१ याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः

०१०८००६३ तद्यशः पावनं दिक्षु शतमन्योरिवातनोत्

०१०८००७१ आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः

०१०८००७३ द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः

०१०८००८१ गन्तुं कृतमतिर्ब्रह्मन्द्वारकां रथमास्थितः

०१०८००८३ उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम्

०१०८००९० उत्तरोवाच

०१०८००९१ पाहि पाहि महायोगिन्देवदेव जगत्पते

०१०८००९३ नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम्

०१०८०१०१ अभिद्रवति मामीश शरस्तप्तायसो विभो

०१०८०१०३ कामं दहतु मां नाथ मा मे गर्भो निपात्यताम्

०१०८०११० सूत उवाच

०१०८०१११ उपधार्य वचस्तस्या भगवान्भक्तवत्सलः

०१०८०११३ अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत

०१०८०१२१ तर्ह्येवाथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान्

०१०८०१२३ आत्मनोऽभिमुखान्दीप्तानालक्ष्यास्त्राण्युपाददुः

०१०८०१३१ व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम्

०१०८०१३३ सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः

०१०८०१४१ अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः

०१०८०१४३ स्वमाययावृणोद्गर्भं वैराट्याः कुरुतन्तवे

०१०८०१५१ यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम्

०१०८०१५३ वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह

०१०८०१६१ मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमये ऽच्युते

०१०८०१६३ य इदं मायया देव्या सृजत्यवति हन्त्यजः

०१०८०१७१ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया

०१०८०१७३ प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती

०१०८०१८० कुन्त्युवाच
०१०८०१८१ नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम्
०१०८०१८३ अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम्
०१०८०१९१ मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम्
०१०८०१९३ न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा
०१०८०२०१ तथा परमहंसानां मुनीनाममलात्मनाम्
०१०८०२०३ भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः
०१०८०२११ कृष्णाय वासुदेवाय देवकीनन्दनाय च
०१०८०२१३ नन्दगोपकुमाराय गोविन्दाय नमो नमः
०१०८०२२१ नमः पङ्कजनाभाय नमः पङ्कजमालिने
०१०८०२२३ नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये
०१०८०२३१ यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता
०१०८०२३३ विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात्
०१०८०२४१ विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः
०१०८०२४३ मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः
०१०८०२५१ विपदः सन्तु ताः शश्वत्तत्र तत्र जगद्गुरो
०१०८०२५३ भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्
०१०८०२६१ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान्
०१०८०२६३ नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम्
०१०८०२७१ नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये
०१०८०२७३ आत्मारामाय शान्ताय कैवल्यपतये नमः
०१०८०२८१ मन्ये त्वां कालमीशानमनादिनिधनं विभुम्
०१०८०२८३ समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः
०१०८०२९१ न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम्
०१०८०२९३ न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम्
०१०८०३०१ जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः
०१०८०३०३ तिर्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम्
०१०८०३११ गोप्याददे त्वयि कृतागसि दाम तावद्या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम्
०१०८०३१३ वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति
०१०८०३२१ केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये
०१०८०३२३ यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम्

०१०८०३३१ अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात्
०१०८०३३३ अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम्
०१०८०३४१ भारावतारणायान्ये भुवो नाव इवोदधौ
०१०८०३४३ सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः
०१०८०३५१ भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः
०१०८०३५३ श्रवणस्मरणार्हाणि करिष्यन्निति केचन
०१०८०३६१ शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः
०१०८०३६३ त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम्
०१०८०३७१ अप्यद्य नस्त्वं स्वकृतेहित प्रभो जिहाससि स्वित्सुहृदोऽनुजीविनः
०१०८०३७३ येषां न चान्यद्भवतः पदाम्बुजात्परायणं राजसु योजितांहसाम्
०१०८०३८१ के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः
०१०८०३८३ भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः
०१०८०३९१ नेयं शोभिष्यते तत्र यथेदानीं गदाधर
०१०८०३९३ त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः
०१०८०४०१ इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः
०१०८०४०३ वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः
०१०८०४११ अथ विश्वेश विश्वात्मन्विश्वमूर्ते स्वकेषु मे
०१०८०४१३ स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु
०१०८०४२१ त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्
०१०८०४२३ रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति
०१०८०४३१ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य
०१०८०४३३ गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते
०१०८०४४० सूत उवाच
०१०८०४४१ पृथयेत्थं कलपदैः परिणूताखिलोदयः
०१०८०४४३ मन्दं जहास वैकुण्ठो मोहयन्निव मायया
०१०८०४५१ तां बाढमित्युपामन्त्र्य प्रविश्य गजसाह्वयम्
०१०८०४५३ स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः
०१०८०४६१ व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा
०१०८०४६३ प्रबोधितोऽपीतिहासैर्नाबुध्यत शुचार्पितः
०१०८०४७१ आह राजा धर्मसुतश्चिन्तयन्सुहृदां वधम्
०१०८०४७३ प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः

०१०८०४८१ अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः
०१०८०४८३ पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः
०१०८०४९१ बालद्विजसुहृन्मित्र पितृभ्रातृगुरुद्रुहः
०१०८०४९३ न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः
०१०८०५०१ नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम्
०१०८०५०३ इति मे न तु बोधाय कल्पते शासनं वचः
०१०८०५११ स्त्रीणां मद्धतबन्धूनां द्रोहो योऽसाविहोत्थितः
०१०८०५१३ कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम्
०१०८०५२१ यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम्
०१०८०५२३ भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति
०१०९००१० सूत उवाच
०१०९००११ इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया
०१०९००१३ ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत्
०१०९००२१ तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः
०१०९००२३ अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा
०१०९००३१ भगवानपि विप्रर्षे रथेन सधनञ्जयः
०१०९००३३ स तैर्व्यरोचत नृपः कुवेर इव गुह्यकैः
०१०९००४१ दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम्
०१०९००४३ प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा
०१०९००५१ तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम
०१०९००५३ राजर्षयश्च तत्रासन्द्रष्टुं भरतपुङ्गवम्
०१०९००६१ पर्वतो नारदो धौम्यो भगवान्बादरायणः
०१०९००६३ बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः
०१०९००७१ वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः
०१०९००७३ कक्षीवान्गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः
०१०९००८१ अन्ये च मुनयो ब्रह्मन्ब्रह्मरातादयोऽमलाः
०१०९००८३ शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः
०१०९००९१ तान्समेतान्महाभागानुपलभ्य वसूत्तमः
०१०९००९३ पूजयामास धर्मज्ञो देशकालविभागवित्
०१०९०१०१ कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम्
०१०९०१०३ हृदिस्थं पूजयामास माययोपात्तविग्रहम्

०१०९०१११ पाण्डुपुत्रानुपासीनान्प्रश्रयप्रेमसङ्गतान्
०१०९०११३ अभ्याचष्टानुरागाश्रैरन्धीभूतेन चक्षुषा
०१०९०१२१ अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दनाः
०१०९०१२३ जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः
०१०९०१३१ संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजा वधूः
०१०९०१३३ युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः
०१०९०१४१ सर्वं कालकृतं मन्ये भवतां च यदप्रियम्
०१०९०१४३ सपालो यद्वशे लोको वायोरिव घनावलिः
०१०९०१५१ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः
०१०९०१५३ कृष्णोऽस्त्री गाण्डिवं चापं सुहृत्कृष्णस्ततो विपत्
०१०९०१६१ न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम्
०१०९०१६३ यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि
०१०९०१७१ तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ
०१०९०१७३ तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो
०१०९०१८१ एष वै भगवान्साक्षादाद्यो नारायणः पुमान्
०१०९०१८३ मोहयन्मायया लोकं गूढश्चरति वृष्णिषु
०१०९०१९१ अस्यानुभावं भगवान्वेद गुह्यतमं शिवः
०१०९०१९३ देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप
०१०९०२०१ यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम्
०१०९०२०३ अकरोः सचिवं दूतं सौहृदादथ सारथिम्
०१०९०२११ सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः
०१०९०२१३ तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्
०१०९०२२१ तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्
०१०९०२२३ यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः
०१०९०२३१ भक्त्यावेश्य मनो यस्मिन्वाचा यन्नाम कीर्तयन्
०१०९०२३३ त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः
०१०९०२४१ स देवदेवो भगवान्प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम्
०१०९०२४३ प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः
०१०९०२५० सूत उवाच
०१०९०२५१ युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे
०१०९०२५३ अपृच्छद्विविधान्धर्मानृषीणां चानुशृण्वताम्

०१०९०२६१ पुरुषस्वभावविहितान्यथावर्णं यथाश्रमम्
०१०९०२६३ वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान्
०१०९०२७१ दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः
०१०९०२७३ स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः
०१०९०२८१ धर्मार्थकाममोक्षांश्च सहोपायान्यथा मुने
०१०९०२८३ नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित्
०१०९०२९१ धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः
०१०९०२९३ यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः
०१०९०३०१ तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसङ्गं मन आदिपूरुषे
०१०९०३०३ कृष्णे लसत्पीतपटे चतुर्भुजे पुरः स्थितेऽमीलितदृग्व्यधारयत्
०१०९०३११ विशुद्धया धारणया हताशुभस्तदीक्षयैवाशु गतायुधश्रमः
०१०९०३१३ निवृत्तसर्वेन्द्रियवृत्तिविभ्रमस्तुष्टाव जन्यं विसृजञ्जनार्दनम्
०१०९०३२० श्रीभीष्म उवाच
०१०९०३२१ इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि
०१०९०३२३ स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः
०१०९०३३१ त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने
०१०९०३३३ वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या
०१०९०३४१ युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये
०१०९०३४३ मम निशितशरैर्विभिद्यमान त्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा
०१०९०३५१ सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य
०१०९०३५३ स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु
०१०९०३६१ व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या
०१०९०३६३ कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु
०१०९०३७१ स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः
०१०९०३७३ धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः
०१०९०३८१ शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे
०१०९०३८३ प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान्गतिर्मुकुन्दः
०१०९०३९१ विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये
०१०९०३९३ भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम्
०१०९०४०१ ललितगतिविलासवल्गुहास प्रणयनिरीक्षणकल्पितोरुमानाः
०१०९०४०३ कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्किल यस्य गोपवध्वः

०१०९०४११ मुनिगणनृपवर्यसङ्कुलेऽन्तः सदसि युधिष्ठिरराजसूय एषाम्
०१०९०४१३ अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा
०१०९०४२१ तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्
०१०९०४२३ प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः
०१०९०४३० सूत उवाच
०१०९०४३१ कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः
०१०९०४३३ आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत्
०१०९०४४१ सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले
०१०९०४४३ सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये
०१०९०४५१ तत्र दुन्दुभयो नेदुर्देवमानववादिताः
०१०९०४५३ शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः
०१०९०४६१ तस्य निर्हरणादीनि सम्परेतस्य भार्गव
०१०९०४६३ युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत्
०१०९०४७१ तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः
०१०९०४७३ ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः
०१०९०४८१ ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम्
०१०९०४८३ पितरं सान्त्वयामास गान्धारीं च तपस्विनीम्
०१०९०४९१ पित्रा चानुमतो राजा वासुदेवानुमोदितः
०१०९०४९३ चकार राज्यं धर्मेण पितृपैतामहं विभुः
०११०००१० शौनक उवाच
०११०००११ हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः
०११०००१३ सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः
०११०००२० सूत उवाच
०११०००२१ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः
०११०००२३ निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह
०११०००३१ निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः
०११०००३३ शशास गामिन्द्र इवाजिताश्रयः परिध्युपान्तामनुजानुवर्तितः
०११०००४१ कामं ववर्ष पर्जन्यः सर्वकामदुघा मही
०११०००४३ सिषिचुः स्म व्रजान्गावः पयसोधस्वतीर्मुदा
०११०००५१ नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः
०११०००५३ फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै

०११०००६१ नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः
०११०००६३ अजातशत्रावभवञ्जन्तूनां राज्ञि कर्हिचित्
०११०००७१ उषित्वा हास्तिनपुरे मासान्कतिपयान्हरिः
०११०००७३ सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया
०११०००८१ आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम्
०११०००८३ आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः
०११०००९१ सुभद्रा द्रौपदी कुन्ती विराटतनया तथा
०११०००९३ गान्धारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ
०११००१०१ वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः
०११००१०३ न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः
०११००१११ सत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः
०११००११३ कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम्
०११००१२१ तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम्
०११००१२३ दर्शनस्पर्शसंलाप शयनासनभोजनैः
०११००१३१ सर्वे तेऽनिमिषैरक्षैस्तमनु द्रुतचेतसः
०११००१३३ वीक्षन्तः स्नेहसम्बद्धा विचेलुस्तत्र तत्र ह
०११००१४१ न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते
०११००१४३ निर्यात्यगारान्नोऽभद्रमिति स्याद्बान्धवस्त्रियः
०११००१५१ मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः
०११००१५३ धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभयस्तथा
०११००१६१ प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया
०११००१६३ ववृषुः कुसुमैः कृष्णं प्रेमव्रीडास्मितेक्षणाः
०११००१७१ सितातपत्रं जग्राह मुक्तादामविभूषितम्
०११००१७३ रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह
०११००१८१ उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते
०११००१८३ विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि
०११००१९१ अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः
०११००१९३ नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः
०११००२०१ अन्योन्यमासीत्सञ्जल्प उत्तमश्लोकचेतसाम्
०११००२०३ कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः
०११००२११ स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि

०११००२१३ अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु
०११००२२१ स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम्
०११००२२३ अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत्
०११००२३१ स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः
०११००२३३ पश्यन्ति भक्त्युत्कलितामलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति
०११००२४१ स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः
०११००२४३ य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते
०११००२५१ यदा ह्यधर्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल
०११००२५३ धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे
०११००२६१ अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम्
०११००२६३ यदेष पुंसामृषभः श्रियः पतिः स्वजन्मना चङ्क्रमणेन चाञ्चति
०११००२७१ अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः
०११००२७३ पश्यन्ति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः
०११००२८१ नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः
०११००२८३ पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः सम्मुमुहुर्यदाशयाः
०११००२९१ या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः
०११००२९३ प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः
०११००३०१ एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते
०११००३०३ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन्
०११००३११ एवंविधा गदन्तीनां स गिरः पुरयोषिताम्
०११००३१३ निरीक्षणेनाभिनन्दन्सस्मितेन ययौ हरिः
०११००३२१ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः
०११००३२३ परेभ्यः शङ्कितः स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम्
०११००३३१ अथ दूरागतान्शौरिः कौरवान्विरहातुरान्
०११००३३३ सन्निवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः
०११००३४१ कुरुजाङ्गलपाञ्चालान्शूरसेनान्सयामुनान्
०११००३४३ ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ
०११००३५१ मरुधन्वमतिक्रम्य सौवीराभीरयोः परान्
०११००३५३ आनर्तान्भार्गवोपागाच्छ्रान्तवाहो मनाग्विभुः
०११००३६१ तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः
०११००३६३ सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा

०१११००१० सूत उवाच
०१११००११ आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान्
०१११००१३ दध्मौ दरवरं तेषां विषादं शमयन्निव
०१११००२१ स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा
०१११००२३ दाध्मायमानः करकञ्जसम्पुटे यथाब्जखण्डे कलहंस उत्स्वनः
०१११००३१ तमुपश्रुत्य निनदं जगद्भयभयावहम्
०१११००३३ प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः
०१११००४१ तत्रोपनीतबलयो रवेर्दीपमिवादृताः
०१११००४३ आत्मारामं पूर्णकामं निजलाभेन नित्यदा
०१११००५१ प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा
०१११००५३ पितरं सर्वसुहृदमवितारमिवार्भकाः
०१११००६१ नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम्
०१११००६३ परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः
०१११००७१ भवाय नस्त्वं भव विश्वभावन त्वमेव माताथ सुहृत्पतिः पिता
०१११००७३ त्वं सद्गुरुर्नः परमं च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम
०१११००८१ अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम्
०१११००८३ प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम्
०१११००९१ यर्ह्यम्बुजाक्षापससार भो भवान्कुरून्मधून्वाथ सुहृद्दिदृक्षया
०१११००९३ तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाक्ष्णोरिव नस्तवाच्युत
०१११०१०१ कथं वयं नाथ चिरोषिते त्वयि प्रसन्नदृष्ट्याखिलतापशोषणम्
०१११०१०३ जीवेम ते सुन्दरहासशोभितमपश्यमाना वदनं मनोहरम्
०१११०१११ इति चोदीरिता वाचः प्रजानां भक्तवत्सलः
०१११०११३ शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरम्
०१११०१२१ मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः
०१११०१२३ आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव
०१११०१३१ सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः
०१११०१३३ उद्यानोपवनारामैर्वृतपद्माकरश्रियम्
०१११०१४१ गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम्
०१११०१४३ चित्रध्वजपताकाग्रैरन्तः प्रतिहतातपाम्
०१११०१५१ सम्मार्जितमहामार्ग रथ्यापणकचत्वराम्
०१११०१५३ सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः

०१११०१६१ द्वारि द्वारि गृहाणां च दध्यक्षतफलेक्षुभिः
०१११०१६३ अलङ्कृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः
०१११०१७१ निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः
०१११०१७३ अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः
०१११०१८१ प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः
०१११०१८३ प्रहर्षवेगोच्छशितशयनासनभोजनाः
०१११०१९१ वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः
०१११०१९३ शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः
०१११०१९५ प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः
०१११०२०१ वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः
०१११०२०३ लसत्कुण्डलनिर्भातकपोलवदनश्रियः
०१११०२११ नटनर्तकगन्धर्वाः सूतमागधवन्दिनः
०१११०२१३ गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च
०१११०२२१ भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम्
०१११०२२३ यथाविध्युपसङ्गम्य सर्वेषां मानमादधे
०१११०२३१ प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः
०१११०२३३ आश्वास्य चाश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः
०१११०२४१ स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि
०१११०२४३ आशीर्भिर्युज्यमानोऽन्यैर्वन्दिभिश्चाविशत्पुरम्
०१११०२५१ राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः
०१११०२५३ हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः
०१११०२६१ नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम्
०१११०२६३ न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम्
०१११०२७१ श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम्
०१११०२७३ बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम्
०१११०२८१ सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि
०१११०२८३ पिशङ्गवासा वनमालया बभौ घनो यथार्कोडुपचापवैद्युतैः
०१११०२९१ प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः
०१११०२९३ ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा
०१११०३०१ ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः
०१११०३०३ हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः

०१११०३११ अथाविशत्स्वभवनं सर्वकाममनुत्तमम्
०१११०३१३ प्रासादा यत्र पत्नीनां सहस्राणि च षोडश
०१११०३२१ पत्न्यः पतिं प्रोष्य गृहानुपागतं विलोक्य सञ्जातमनोमहोत्सवाः
०१११०३२३ उत्तस्थुरारात्सहसासनाशयात्साकं व्रतैर्व्रीडितलोचनाननाः
०१११०३३१ तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम्
०१११०३३३ निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात्
०१११०३४१ यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम्
०१११०३४३ पदे पदे का विरमेत तत्पदाच्चलापि यच्छ्रीर्न जहाति कर्हिचित्
०१११०३५१ एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम्
०१११०३५३ विधाय वैरं श्वसनो यथानलं मिथो वधेनोपरतो निरायुधः
०१११०३६१ स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया
०१११०३६३ रेमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा
०१११०३७१ उद्दामभावपिशुनामलवल्गुहास
०१११०३७२ व्रीडावलोकनिहतो मदनोऽपि यासाम्
०१११०३७३ सम्मुह्य चापमजहात्प्रमदोत्तमास्ता
०१११०३७४ यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः
०१११०३८१ तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम्
०१११०३८३ आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः
०१११०३९१ एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः
०१११०३९३ न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया
०१११०४०१ तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः
०१११०४०३ अप्रमाणविदो भर्तुरीश्वरं मतयो यथा
०११२००१० शौनक उवाच
०११२००११ अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा
०११२००१३ उत्तराया हतो गर्भ ईशेनाजीवितः पुनः
०११२००२१ तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः
०११२००२३ निधनं च यथैवासीत्स प्रेत्य गतवान्यथा
०११२००३१ तदिदं श्रोतुमिच्छामो गदितुं यदि मन्यसे
०११२००३३ ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः
०११२००४० सूत उवाच
०११२००४१ अपीपलद्धर्मराजः पितृवद्रञ्जयन्प्रजाः

०११२००४३ निःस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया
०११२००५१ सम्पदः क्रतवो लोका महिषी भ्रातरो मही
०११२००५३ जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम्
०११२००६१ किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः
०११२००६३ अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे
०११२००७१ मातुर्गर्भगतो वीरः स तदा भृगुनन्दन
०११२००७३ ददर्श पुरुषं कञ्चिद्दह्यमानोऽस्त्रतेजसा
०११२००८१ अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम्
०११२००८३ अपीव्यदर्शनं श्यामं तडिद्वाससमच्युतम्
०११२००९१ श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम्
०११२००९३ क्षतजाक्षं गदापाणिमात्मनः सर्वतो दिशम्
०११२००९५ परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः
०११२०१०१ अस्त्रतेजः स्वगदया नीहारमिव गोपतिः
०११२०१०३ विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ
०११२०१११ विधूय तदमेयात्मा भगवान्धर्मगुब्विभुः
०११२०११३ मिषतो दशमासस्य तत्रैवान्तर्दधे हरिः
०११२०१२१ ततः सर्वगुणोदर्के सानुकूलग्रहोदये
०११२०१२३ जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा
०११२०१३१ तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः
०११२०१३३ जातकं कारयामास वाचयित्वा च मङ्गलम्
०११२०१४१ हिरण्यं गां महीं ग्रामान्हस्त्यश्वान्नृपतिर्वरान्
०११२०१४३ प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्
०११२०१५१ तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयान्वितम्
०११२०१५३ एष ह्यस्मिन्प्रजातन्तौ पुरूणां पौरवर्षभ
०११२०१६१ दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि
०११२०१६३ रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना
०११२०१७१ तस्मान्नाम्ना विष्णुरात इति लोके भविष्यति
०११२०१७३ न सन्देहो महाभाग महाभागवतो महान्
०११२०१८० श्रीराजोवाच
०११२०१८१ अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः
०११२०१८३ अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः

०११२०१९० ब्राह्मणा ऊचुः
०११२०१९१ पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः
०११२०१९३ ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा
०११२०२०१ एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः
०११२०२०३ यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम्
०११२०२११ धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः
०११२०२१३ हुताश इव दुर्धर्षः समुद्र इव दुस्तरः
०११२०२२१ मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव
०११२०२२३ तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव
०११२०२३१ पितामहसमः साम्ये प्रसादे गिरिशोपमः
०११२०२३३ आश्रयः सर्वभूतानां यथा देवो रमाश्रयः
०११२०२४१ सर्वसद्गुणमाहात्म्ये एष कृष्णमनुव्रतः
०११२०२४३ रन्तिदेव इवोदारो ययातिरिव धार्मिकः
०११२०२५१ हृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः
०११२०२५३ आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः
०११२०२६१ राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम्
०११२०२६३ निग्रहीता कलेरेष भुवो धर्मस्य कारणात्
०११२०२७१ तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात्
०११२०२७३ प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः
०११२०२८१ जिज्ञासितात्मयाथार्थ्यो मुनेर्व्याससुतादसौ
०११२०२८३ हित्वेदं नृप गङ्गायां यास्यत्यद्धाकुतोभयम्
०११२०२९१ इति राज्ञ उपादिश्य विप्रा जातककोविदाः
०११२०२९३ लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान्गृहान्
०११२०३०१ स एष लोके विख्यातः परीक्षिदिति यत्प्रभुः
०११२०३०३ पूर्वं दृष्टमनुध्यायन्परीक्षेत नरेष्विह
०११२०३११ स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः
०११२०३१३ आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम्
०११२०३२१ यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया
०११२०३२३ राजा लब्धधनो दध्यौ नान्यत्र करदण्डयोः
०११२०३३१ तदभिप्रेतमालक्ष्य भ्रातरो ऽच्युतचोदिताः
०११२०३३३ धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः

०११२०३४१ तेन सम्भृतसम्भारो धर्मपुत्रो युधिष्ठिरः
०११२०३४३ वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम्
०११२०३५१ आहूतो भगवान्राज्ञा याजयित्वा द्विजैर्नृपम्
०११२०३५३ उवास कतिचिन्मासान्सुहृदां प्रियकाम्यया
०११२०३६१ ततो राज्ञाभ्यनुज्ञातः कृष्णया सहबन्धुभिः
०११२०३६३ ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः
०११३००१० सूत उवाच
०११३००११ विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्
०११३००१३ ज्ञात्वागाद्धास्तिनपुरं तयावाप्तविवित्सितः
०११३००२१ यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः
०११३००२३ जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह
०११३००३१ तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः
०११३००३३ धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा
०११३००४१ गान्धारी द्रौपदी ब्रह्मन्सुभद्रा चोत्तरा कृपी
०११३००४३ अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः
०११३००५१ प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम्
०११३००५३ अभिसङ्गम्य विधिवत्परिष्वङ्गाभिवादनैः
०११३००६१ मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्यकातराः
०११३००६३ राजा तमर्हयां चक्रे कृतासनपरिग्रहम्
०११३००७१ तं भुक्तवन्तं विश्रान्तमासीनं सुखमासने
०११३००७३ प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम्
०११३००८० युधिष्ठिर उवाच
०११३००८१ अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान्
०११३००८३ विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः
०११३००९१ कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम्
०११३००९३ तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले
०११३०१०१ भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो
०११३०१०३ तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता
०११३०१११ अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः
०११३०११३ दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते
०११३०१२१ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत्

०११३०१२३ यथानुभूतं क्रमशो विना यदुकुलक्षयम्
०११३०१३१ नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम्
०११३०१३३ नावेदयत्सकरुणो दुःखितान्द्रष्टुमक्षमः
०११३०१४१ कञ्चित्कालमथावात्सीत्सत्कृतो देववत्सुखम्
०११३०१४३ भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां सुखमावहन्
०११३०१५१ अबिभ्रदर्यमा दण्डं यथावदघकारिषु
०११३०१५३ यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः
०११३०१६१ युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम्
०११३०१६३ भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया
०११३०१७१ एवं गृहेषु सक्तानां प्रमत्तानां तदीहया
०११३०१७३ अत्यक्रामदविज्ञातः कालः परमदुस्तरः
०११३०१८१ विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत
०११३०१८३ राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम्
०११३०१९१ प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित्प्रभो
०११३०१९३ स एष भगवान्कालः सर्वेषां नः समागतः
०११३०२०१ येन चैवाभिपन्नोऽयं प्राणैः प्रियतमैरपि
०११३०२०३ जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः
०११३०२११ पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयम्
०११३०२१३ आत्मा च जरया ग्रस्तः परगेहमुपाससे
०११३०२२१ अन्धः पुरैव वधिरो मन्दप्रज्ञाश्च साम्प्रतम्
०११३०२२३ विशीर्णदन्तो मन्दाग्निः सरागः कफमुद्वहन्
०११३०२३१ अहो महीयसी जन्तोर्जीविताशा यथा भवान्
०११३०२३३ भीमापवर्जितं पिण्डमादत्ते गृहपालवत्
०११३०२४१ अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः
०११३०२४३ हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत्
०११३०२५१ तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः
०११३०२५३ परैत्यनिच्छतो जीर्णो जरया वाससी इव
०११३०२६१ गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः
०११३०२६३ अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः
०११३०२७१ यः स्वकात्परतो वेह जातनिर्वेद आत्मवान्
०११३०२७३ हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः

०११३०२८१ अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान्

०११३०२८३ इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः

०११३०२९१ एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधित आजमीढः

०११३०२९३ छित्त्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसन्दर्शिताध्वा

०११३०३०१ पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चानुजगाम साध्वी

०११३०३०३ हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव सत्सम्प्रहारः

०११३०३११ अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोभूमिरुक्मैः

०११३०३१३ गृहं प्रविष्टो गुरुवन्दनाय न चापश्यत्पितरौ सौबलीं च

०११३०३२१ तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः

०११३०३२३ गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः

०११३०३३१ अम्बा च हतपुत्रार्ता पितृव्यः क्व गतः सुहृत्

०११३०३३३ अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्यया

०११३०३३५ आशंसमानः शमलं गङ्गायां दुःखितोऽपतत्

०११३०३४१ पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून्

०११३०३४३ अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः

०११३०३५० सूत उवाच

०११३०३५१ कृपया स्नेहवैक्लव्यात्सूतो विरहकर्शितः

०११३०३५३ आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः

०११३०३६१ विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना

०११३०३६३ अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन्

०११३०३७० सञ्जय उवाच

०११३०३७१ नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन

०११३०३७३ गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः

०११३०३८१ अथाजगाम भगवान्नारदः सहतुम्बुरुः

०११३०३८३ प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन्मुनिम्

०११३०३९० युधिष्ठिर उवाच

०११३०३९१ नाहं वेद गतिं पित्रोर्भगवन्क्व गतावितः

०११३०३९३ अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी

०११३०४०१ कर्णधार इवापारे भगवान्पारदर्शकः

०११३०४०३ अथाबभाषे भगवान्नारदो मुनिसत्तमः

०११३०४१० नारद उवाच

०११३०४११ मा कञ्चन शुचो राजन्यदीश्वरवशं जगत्
०११३०४१३ लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः
०११३०४१५ स संयुनक्ति भूतानि स एव वियुनक्ति च
०११३०४२१ यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः
०११३०४२३ वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः
०११३०४३१ यथा क्रीडोपस्कराणां संयोगविगमाविह
०११३०४३३ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम्
०११३०४४१ यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम्
०११३०४४३ सर्वथा न हि शोच्यास्ते स्नेहादन्यत्र मोहजात्
०११३०४५१ तस्माज्जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः
०११३०४५३ कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना
०११३०४६१ कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः
०११३०४६३ कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथा परम्
०११३०४७१ अहस्तानि सहस्तानामपदानि चतुष्पदाम्
०११३०४७३ फल्गूनि तत्र महतां जीवो जीवस्य जीवनम्
०११३०४८१ तदिदं भगवान्राजन्नेक आत्मात्मनां स्वदृक्
०११३०४८३ अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा
०११३०४९१ सोऽयमद्य महाराज भगवान्भूतभावनः
०११३०४९३ कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम्
०११३०५०१ निष्पादितं देवकृत्यमवशेषं प्रतीक्षते
०११३०५०३ तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः
०११३०५११ धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया
०११३०५१३ दक्षिणेन हिमवत ऋषीणामाश्रमं गतः
०११३०५२१ स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात्
०११३०५२३ सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते
०११३०५३१ स्नात्वानुसवनं तस्मिन्हुत्वा चाग्नीन्यथाविधि
०११३०५३३ अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः
०११३०५४१ जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः
०११३०५४३ हरिभावनया ध्वस्तरजःसत्त्वतमोमलः
०११३०५५१ विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम्
०११३०५५३ ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे

०११३०५६१ ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः
०११३०५६३ निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः
०११३०५६५ तस्यान्तरायो मैवाभूः सन्न्यस्ताखिलकर्मणः
०११३०५७१ स वा अद्यतनाद्राजन्परतः पञ्चमेऽहनि
०११३०५७३ कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति
०११३०५८१ दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे
०११३०५८३ बहिः स्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति
०११३०५९१ विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन
०११३०५९३ हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः
०११३०६०१ इत्युक्त्वाथारुहत्स्वर्गं नारदः सहतुम्बुरुः
०११३०६०३ युधिष्ठिरो वचस्तस्य हृदि कृत्वाजहाच्छुचः
०११४००१० सूत उवाच
०११४००११ सम्प्रस्थिते द्वारकायांजिष्णौ बन्धुदिदृक्षया
०११४००१३ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम्
०११४००२१ व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः
०११४००२३ ददर्श घोररूपाणि निमित्तानि कुरूद्वहः
०११४००३१ कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः
०११४००३३ पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम्
०११४००४१ जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम्
०११४००४३ पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम्
०११४००५१ निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम्
०११४००५३ लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः
०११४००६० युधिष्ठिर उवाच
०११४००६१ सम्प्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षयाज्
०११४००६३ ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम्
०११४००७१ गताः सप्ताधुना मासा भीमसेन तवानुजः
०११४००७३ नायाति कस्य वा हेतोर्नाहं वेदेदमञ्जसा
०११४००८१ अपि देवर्षिणादिष्टः स कालोऽयमुपस्थितः
०११४००८३ यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति
०११४००९१ यस्मान्नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः
०११४००९३ आसन्सपत्नविजयो लोकाश्च यदनुग्रहात्

०११४०१०१ पश्योत्पातान्नरव्याघ्र दिव्यान्भौमान्सदैहिकान्
०११४०१०३ दारुणान्शंसतोऽदूराद्भयं नो बुद्धिमोहनम्
०११४०१११ ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः
०११४०११३ वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम्
०११४०१२१ शिवैषोद्यन्तमादित्यमभिरौत्यनलानना
०११४०१२३ मामङ्ग सारमेयोऽयमभिरेभत्यभीरुवत्
०११४०१३१ शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे
०११४०१३३ वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम
०११४०१४१ मृत्युदूतः कपोतोऽयमुलूकः कम्पयन्मनः
०११४०१४३ प्रत्युलूकश्च कुह्वानैर्विश्वं वै शून्यमिच्छतः
०११४०१५१ धूम्रा दिशः परिधयः कम्पते भूः सहाद्रिभिः
०११४०१५३ निर्घातश्च महांस्तात साकं च स्तनयित्नुभिः
०११४०१६१ वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः
०११४०१६३ असृग्वर्षन्ति जलदा बीभत्समिव सर्वतः
०११४०१७१ सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि
०११४०१७३ ससङ्कुलैर्भूतगणैर्ज्वलिते इव रोदसी
०११४०१८१ नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च
०११४०१८३ न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति
०११४०१९१ न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः
०११४०१९३ रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे
०११४०२०१ दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च
०११४०२०३ इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः
०११४०२०५ भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः
०११४०२११ मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः
०११४०२१३ अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा
०११४०२२१ इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा
०११४०२२३ राज्ञः प्रत्यागमद्ब्रह्मन्यदुपुर्याः कपिध्वजः
०११४०२३१ तं पादयोर्निपतितमयथापूर्वमातुरम्
०११४०२३३ अधोवदनमब्बिन्दून्सृजन्तं नयनाब्जयोः
०११४०२४१ विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः
०११४०२४३ पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम्

०११४०२५० युधिष्ठिर उवाच
०११४०२५१ कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते
०११४०२५३ मधुभोजदशार्हार्ह सात्वतान्धकवृष्णयः
०११४०२६१ शूरो मातामहः कच्चित्स्वस्त्यास्ते वाथ मारिषः
०११४०२६३ मातुलः सानुजः कच्चित्कुशल्यानकदुन्दुभिः
०११४०२७१ सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः
०११४०२७३ आसते सस्नुषाः क्षेमंदेवकीप्रमुखाः स्वयम्
०११४०२८१ कच्चिद्राजाहुको जीवत्यसत्पुत्रोऽस्य चानुजः
०११४०२८३ हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः
०११४०२९१ आसते कुशलं कच्चिद्ये च शत्रुजिदादयः
०११४०२९३ कच्चिदास्ते सुखं रामो भगवान्सात्वतां प्रभुः
०११४०३०१ प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः
०११४०३०३ गम्भीररयोऽनिरुद्धो वर्धते भगवानुत
०११४०३११ सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः
०११४०३१३ अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः
०११४०३२१ तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः
०११४०३२३ सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः
०११४०३३१ अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः
०११४०३३३ अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः
०११४०३४१ भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः
०११४०३४३ कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः
०११४०३५१ मङ्गलाय च लोकानां क्षेमाय च भवाय च
०११४०३५३ आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान्
०११४०३६१ यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः
०११४०३६३ क्रीडन्ति परमानन्दं महापौरुषिका इव
०११४०३७१ यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः
०११४०३७३ निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः
०११४०३८१ यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः
०११४०३८३ अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम्
०११४०३९१ कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे
०११४०३९३ अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः

०११४०४०१ कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः
०११४०४०३ न दत्तमुक्तमर्थिभ्य आशया यत्प्रतिश्रुतम्
०११४०४११ कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम्
०११४०४१३ शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः
०११४०४२१ कच्चित्त्वं नागमोऽगम्यां गम्यां वासत्कृतां स्त्रियम्
०११४०४२३ पराजितो वाथ भवान्नोत्तमैर्नासमैः पथि
०११४०४३१ अपि स्वित्पर्यभुङ्क्थास्त्वं सम्भोज्यान्वृद्धबालकान्
०११४०४३३ जुगुप्सितं कर्म किञ्चित्कृतवान्न यदक्षमम्
०११४०४४१ कच्चित्प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना
०११४०४४३ शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक्
०११५००१० सूत उवाच
०११५००११ एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः
०११५००१३ नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः
०११५००२१ शोकेन शुष्यद्वदन हृत्सरोजो हतप्रभः
०११५००२३ विभुं तमेवानुस्मरन्नाशक्नोत्प्रतिभाषितुम्
०११५००३१ कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः
०११५००३३ परोक्षेण समुन्नद्ध प्रणयौत्कण्ठ्यकातरः
०११५००४१ सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन्
०११५००४३ नृपमग्रजमित्याह बाष्पगद्गदया गिरा
०११५००५० अर्जुन उवाच
०११५००५१ वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा
०११५००५३ येन मेऽपहृतं तेजो देवविस्मापनं महत्
०११५००६१ यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः
०११५००६३ उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा
०११५००७१ यत्संश्रयाद्द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम्
०११५००७३ तेजो हृतं खलु मयाभिहतश्च मत्स्यः सज्जीकृतेन धनुषाधिगता च कृष्णा
०११५००८१ यत्सन्निधावहमु खाण्डवमग्नयेऽदामिन्द्रं च सामरगणं तरसा विजित्य
०११५००८३ लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते
०११५००९१ यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थमार्योऽनुजस्तव गजायुतसत्त्ववीर्यः
०११५००९३ तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन्बलिमध्वरे ते
०११५०१०१ पत्न्यास्तवाधिमखक्लृप्तमहाभिषेक श्लाघिष्ठचारुकबरं कितवैः सभायाम्

०११५०१०३ स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यस्तत्स्त्रियोऽकृतहतेशविमुक्तकेशाः
०११५०१११ यो नो जुगोप वन एत्य दुरन्तकृच्छ्राद्दुर्वाससोऽरिरचितादयुताग्रभुग्यः
०११५०११३ शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्ताममंस्त सलिले विनिमग्नसङ्घः
०११५०१२१ यत्तेजसाथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे
०११५०१२३ अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्धम्
०११५०१३१ तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः
०११५०१३३ सेन्द्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना
०११५०१४१ यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमतीर्यसत्त्वम्
०११५०१४३ प्रत्याहृतं बहु धनं च मया परेषां तेजास्पदं मणिमयं च हृतं शिरोभ्यः
०११५०१५१ यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र राजन्यवर्यरथमण्डलमण्डितासु
०११५०१५३ अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत्
०११५०१६१ यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्ण नप्तृत्रिगर्तशल्यसैन्धवबाह्लिकाद्यैः
०११५०१६३ अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृशुर्नृहरिदासमिवासुराणि
०११५०१७१ सौत्ये वृतः कुमतिनात्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः
०११५०१७३ मां श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्तचित्ताः
०११५०१८१ नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति
०११५०१८३ सञ्जल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य
०११५०१९१ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः
०११५०१९३ सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया कुमतेरघं मे
०११५०२०१ सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः
०११५०२०३ अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन्गोपैरसद्भिरबलेव विनिर्जितोऽस्मि
०११५०२११ तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति
०११५०२१३ सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम्
०११५०२२१ राजंस्त्वयानुपृष्टानां सुहृदां नः सुहृत्पुरे
०११५०२२३ विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः
०११५०२३१ वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम्
०११५०२३३ अजानतामिवान्योन्यं चतुःपञ्चावशेषिताः
०११५०२४१ प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम्
०११५०२४३ मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः
०११५०२५१ जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः
०११५०२५३ दुर्बलान्बलिनो राजन्महान्तो बलिनो मिथः

०११५०२६१ एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः
०११५०२६३ यदून्यदुभिरन्योन्यं भूभारान्सञ्जहार ह
०११५०२७१ देशकालार्थयुक्तानि हृत्तापोपशमानि च
०११५०२७३ हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे
०११५०२८० सूत उवाच
०११५०२८१ एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम्
०११५०२८३ सौहार्देनातिगाढेन शान्तासीद्विमला मतिः
०११५०२९१ वासुदेवाङ्घ्र्यनुध्यान परिबृंहितरंहसा
०११५०२९३ भक्त्या निर्मथिताशेष कषायधिषणोऽर्जुनः
०११५०३०१ गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्धनि
०११५०३०३ कालकर्मतमोरुद्धं पुनरध्यगमत्प्रभुः
०११५०३११ विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः
०११५०३१३ लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः
०११५०३२१ निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च
०११५०३२३ स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः
०११५०३३१ पृथाप्यनुश्रुत्य धनञ्जयोदितं नाशं यदूनां भगवद्गतिं च ताम्
०११५०३३३ एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः
०११५०३४१ ययाहरद्भुवो भारं तां तनुं विजहावजः
०११५०३४३ कण्टकं कण्टकेनेव द्वयं चापीशितुः समम्
०११५०३५१ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः
०११५०३५३ भूभारः क्षपितो येनजहौ तच्च कलेवरम्
०११५०३६१ यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः
०११५०३६३ तदाहरेवाप्रतिबुद्धचेतसामभद्रहेतुः कलिरन्ववर्तत
०११५०३७१ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तथात्मनि
०११५०३७३ विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात्
०११५०३८१ स्वराद्पौत्रं विनयिनमात्मनः सुसमं गुणैः
०११५०३८३ तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये
०११५०३९१ मथुरायां तथा वज्रं शूरसेनपतिं ततः
०११५०३९३ प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः
०११५०४०१ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम्
०११५०४०३ निर्ममो निरहङ्कारः सञ्छिन्नाशेषबन्धनः

०११५०४११ वाचं जुहाव मनसि तत्प्राण इतरे च तम्
०११५०४१३ मृत्यावपानं सोत्सर्गं तं पञ्चत्वे ह्यजोहवीत्
०११५०४२१ त्रित्वे हुत्वा च पञ्चत्वं तच्चैकत्वे ऽजुहोन्मुनिः
०११५०४२३ सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये
०११५०४३१ चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः
०११५०४३३ दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत्
०११५०४४१ अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा
०११५०४४३ उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः
०११५०४४५ हृदि ब्रह्म परं ध्यायन्नावर्तेत यतो गतः
०११५०४५१ सर्वे तमनुनिर्जग्मुर्भ्रातरः कृतनिश्चयाः
०११५०४५३ कलिनाधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि
०११५०४६१ ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः
०११५०४६३ मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम्
०११५०४७१ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे
०११५०४७३ तस्मिन्नारायणपदे एकान्तमतयो गतिम्
०११५०४८१ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः
०११५०४८३ विधूतकल्मषा स्थानं विरजेनात्मनैव हि
०११५०४९१ विदुरोऽपि परित्यज्य प्रभासे देहमात्मनः
०११५०४९३ कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ
०११५०५०१ द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम्
०११५०५०३ वासुदेवे भगवति ह्येकान्तमतिराप तम्
०११५०५११ यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोः सुतानामिति सम्प्रयाणम्
०११५०५१३ शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम्
०११६००१० सूत उवाच
०११६००११ ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह
०११६००१३ यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा
०११६००२१ स उत्तरस्य तनयामुपयेम इरावतीम्
०११६००२३ जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान्
०११६००३१ आजहाराश्वमेधांस्त्रीन्गङ्गायां भूरिदक्षिणान्
०११६००३३ शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः
०११६००४१ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित्

०११६००४३ नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा
०११६००५० शौनक उवाच
०११६००५१ कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः
०११६००५३ नृदेवचिह्नधृक्शूद्र कोऽसौ गां यः पदाहनत्
०११६००५५ तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम्
०११६००६१ अथवास्य पदाम्भोज मकरन्दलिहां सताम्
०११६००६३ किमन्यैरसदालापैरायुषो यदसद्व्ययः
०११६००७१ क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम्
०११६००७३ इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि
०११६००८१ न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः
०११६००८३ एतदर्थं हि भगवानाहूतः परमर्षिभिः
०११६००८५ अहो नृलोके पीयेत हरिलीलामृतं वचः
०११६००९१ मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै
०११६००९३ निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः
०११६०१०० सूत उवाच
०११६०१०१ यदा परीक्षित्कुरुजाङ्गलेऽवसत्कलिं प्रविष्टं निजचक्रवर्तिते
०११६०१०३ निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे
०११६०१११ स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः पुरात्
०११६०११३ वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः
०११६०१२१ भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून्
०११६०१२३ किम्पुरुषादीनि वर्षाणि विजित्य जगृहे बलिम्
०११६०१३१ नगरांश्च वनांश्चैव नदीश्च विमलोदकाः
०११६०१३३ पुरुषान्देवकल्पांश्च नारीश्च प्रियदर्शनाः
०११६०१४१ अदृष्टपूर्वान्सुभगान्स ददर्श धनञ्जयः
०११६०१४३ सदनानि च शुभ्राणि नारीश्चाप्सरसां निभाः
०११६०१५१ तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम्
०११६०१५३ प्रगीयमाणं च यशः कृष्णमाहात्म्यसूचकम्
०११६०१६१ आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः
०११६०१६३ स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे
०११६०१७१ तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः
०११६०१७३ महाधनानि वासांसि ददौ हारान्महामनाः

०११६०१८१ सारथ्यपारषदसेवनसख्यदौत्य
०११६०१८२ वीरासनानुगमनस्तवनप्रणामान्
०११६०१८३ स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णोर्
०११६०१८४ भक्तिं करोति नृपतिश्चरणारविन्दे
०११६०१९१ तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम्
०११६०१९३ नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे
०११६०२०१ धर्मः पदैकेन चरन्विच्छायामुपलभ्य गाम्
०११६०२०३ पृच्छति स्माश्रुवदनां विवत्सामिव मातरम्
०११६०२१० धर्म उवाच
०११६०२११ कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायासि म्लायतेषन्मुखेन
०११६०२१३ आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कश्चनाम्ब
०११६०२२१ पादैर्न्यूनं शोचसि मैकपादमात्मानं वा वृषलैर्भोक्ष्यमाणम्
०११६०२२३ आहो सुरादीन्हृतयज्ञभागान्प्रजा उत स्विन्मघवत्यवर्षति
०११६०२३१ अरक्ष्यमाणाः स्त्रिय उर्वि बालान्शोचस्यथो पुरुषादैरिवार्तान्
०११६०२३३ वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान्
०११६०२४१ किं क्षत्रबन्धून्कलिनोपसृष्टान्राष्ट्राणि वा तैरवरोपितानि
०११६०२४३ इतस्ततो वाशनपानवासः स्नानव्यवायोन्मुखजीवलोकम्
०११६०२५१ यद्वाम्ब ते भूरिभरावतार कृतावतारस्य हरेर्धरित्रि
०११६०२५३ अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि
०११६०२६१ इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे येन विकर्शितासि
०११६०२६३ कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमम्ब सौभगम्
०११६०२७० धरण्युवाच
०११६०२७१ भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि
०११६०२७३ चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः
०११६०२८१ सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम्
०११६०२८३ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्
०११६०२९१ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः
०११६०२९३ स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च
०११६०३०१ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः
०११६०३०३ गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः
०११६०३११ एते चान्ये च भगवन्नित्या यत्र महागुणाः

०११६०३१३ प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्
०११६०३२१ तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम्
०११६०३२३ शोचामि रहितं लोकं पाप्मना कलिनेक्षितम्
०११६०३३१ आत्मानं चानुशोचामि भवन्तं चामरोत्तमम्
०११६०३३३ देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान्
०११६०३४१ ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष
०११६०३४२ कामास्तपः समचरन्भगवत्प्रपन्नाः
०११६०३४३ सा श्रीः स्ववासमरविन्दवनं विहाय
०११६०३४४ यत्पादसौभगमलं भजतेऽनुरक्ता
०११६०३५१ तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः
०११६०३५२ श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी
०११६०३५३ त्रीनत्यरोच उपलभ्य ततो विभूतिं
०११६०३५४ लोकान्स मां व्यसृजदुत्स्मयतीं तदन्ते
०११६०३६१ यो वै ममातिभरमासुरवंशराज्ञाम्
०११६०३६२ अक्षौहिणीशतमपानुददात्मतन्त्रः
०११६०३६३ त्वां दुःस्थमूनपदमात्मनि पौरुषेण
०११६०३६४ सम्पादयन्यदुषु रम्यमबिभ्रदङ्गम्
०११६०३७१ का वा सहेत विरहं पुरुषोत्तमस्य
०११६०३७२ प्रेमावलोकरुचिरस्मितवल्गुजल्पैः
०११६०३७३ स्थैर्यं समानमहरन्मधुमानिनीनां
०११६०३७४ रोमोत्सवो मम यदङ्घ्रिविटङ्किताया
०११६०३८१ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा
०११६०३८३ परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम्
०११७००१० सूत उवाच
०११७००११ तत्र गोमिथुनं राजा हन्यमानमनाथवत्
०११७००१३ दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम्
०११७००२१ वृषं मृणालधवलं मेहन्तमिव बिभ्यतम्
०११७००२३ वेपमानं पदैकेन सीदन्तं शूद्रताडितम्
०११७००३१ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम्
०११७००३३ विवत्सामाश्रुवदनां क्षामां यवसमिच्छतीम्
०११७००४१ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम्

०११७००४३ मेघगम्भीरया वाचा समारोपितकार्मुकः
०११७००५१ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली
०११७००५३ नरदेवोऽसि वेषेण नटवत्कर्मणाद्विजः
०११७००६१ यस्त्वं कृष्णे गते दूरं सहगाण्डीवधन्वना
०११७००६३ शोच्योऽस्यशोच्यान्रहसि प्रहरन्वधमर्हसि
०११७००७१ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन्
०११७००७३ वृषरूपेण किं कश्चिद्देवो नः परिखेदयन्
०११७००८१ न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते
०११७००८३ भूतलेऽनुपतन्त्यस्मिन्विना ते प्राणिनां शुचः
०११७००९१ मा सौरभेयात्र शुचो व्येतु ते वृषलाद्भयम्
०११७००९३ मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि
०११७०१०१ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्व्यसाधुभिः
०११७०१०३ तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः
०११७०१११ एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः
०११७०११३ अत एनं वधिष्यामि भूतद्रुहमसत्तमम्
०११७०१२१ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पद
०११७०१२३ मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम्
०११७०१३१ आख्याहि वृष भद्रं वः साधूनामकृतागसाम्
०११७०१३३ आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम्
०११७०१४१ जनेऽनागस्यघं युञ्जन्सर्वतोऽस्य च मद्भयम्
०११७०१४३ साधूनां भद्रमेव स्यादसाधुदमने कृते
०११७०१५१ अनागःस्विह भूतेषु य आगस्कृन्निरङ्कुशः
०११७०१५३ आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम्
०११७०१६१ राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम्
०११७०१६३ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह
०११७०१७० धर्म उवाच
०११७०१७१ एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः
०११७०१७३ येषां गुणगणैः कृष्णो दौत्यादौ भगवान्कृतः
०११७०१८१ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ
०११७०१८३ पुरुषं तं विजानीमो वाक्यभेदविमोहिताः
०११७०१९१ केचिद्विकल्पवसना आहुरात्मानमात्मनः

०११७०१९३ दैवमन्येऽपरे कर्म स्वभावमपरे प्रभुम्
०११७०२०१ अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः
०११७०२०३ अत्रानुरूपं राजर्षे विमृश स्वमनीषया
०११७०२१० सूत उवाच
०११७०२११ एवं धर्मे प्रवदति स सम्राड्विजसत्तमाः
०११७०२१३ समाहितेन मनसा विखेदः पर्यचष्ट तम्
०११७०२२० राजोवाच
०११७०२२१ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक्
०११७०२२३ यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत्
०११७०२३१ अथवा देवमायाया नूनं गतिरगोचरा
०११७०२३३ चेतसो वचसश्चापि भूतानामिति निश्चयः
०११७०२४१ तपः शौचं दया सत्यमिति पादाः कृते कृताः
०११७०२४३ अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव
०११७०२५१ इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः
०११७०२५३ तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः
०११७०२६१ इयं च भूमिर्भगवता न्यासितोरुभरा सती
०११७०२६३ श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका
०११७०२७१ शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिता सती
०११७०२७३ अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति
०११७०२८१ इति धर्मं महीं चैव सान्त्वयित्वा महारथः
०११७०२८३ निशातमाददे खड्गं कलयेऽधर्महेतवे
०११७०२९१ तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम्
०११७०२९३ तत्पादमूलं शिरसा समगाद्भयविह्वलः
०११७०३०१ पतितं पादयोर्वीरः कृपया दीनवत्सलः
०११७०३०३ शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव
०११७०३१० राजोवाच
०११७०३११ न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित्
०११७०३१३ न वर्तितव्यं भवता कथञ्चन क्षेत्रे मदीये त्वमधर्मबन्धुः
०११७०३२१ त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः
०११७०३२३ लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः
०११७०३३१ न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये

०११७०३३३ ब्रह्मावर्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः
०११७०३४१ यस्मिन्हरिर्भगवानिज्यमान इज्यात्ममूर्तिर्यजतां शं तनोति
०११७०३४३ कामानमोघान्स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा
०११७०३५० सूत उवाच
०११७०३५१ परीक्षितैवमादिष्टः स कलिर्जातवेपथुः
०११७०३५३ तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम्
०११७०३६० कलिरुवाच
०११७०३६१ यत्र क्व वाथ वत्स्यामि सार्वभौम तवाज्ञया
०११७०३६३ लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम्
०११७०३७१ तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि
०११७०३७३ यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम्
०११७०३८० सूत उवाच
०११७०३८१ अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ
०११७०३८३ द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः
०११७०३९१ पुनश्च याचमानाय जातरूपमदात्प्रभुः
०११७०३९३ ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम्
०११७०४०१ अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः
०११७०४०३ औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत्
०११७०४११ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्
०११७०४१३ विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः
०११७०४२१ वृषस्य नष्टांस्त्रीन्पादान्तपः शौचं दयामिति
०११७०४२३ प्रतिसन्दध आश्वास्य महीं च समवर्धयत्
०११७०४३१ स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम्
०११७०४३३ पितामहेनोपन्यस्तं राज्ञारण्यं विविक्षता
०११७०४४१ आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन्
०११७०४४३ गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः
०११७०४५१ इत्थम्भूतानुभावोऽयमभिमन्युसुतो नृपः
०११७०४५३ यस्य पालयतः क्षौणीं यूयं सत्राय दीक्षिताः
०११८००१० सूत उवाच
०११८००११ यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः
०११८००१३ अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः

०११८००२१ ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात्
०११८००२३ न सम्मुमोहोरुभयाद्भगवत्यर्पिताशयः
०११८००३१ उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः
०११८००३३ वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम्
०११८००४१ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम्
०११८००४३ स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम्
०११८००५१ तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः
०११८००५३ यावदीशो महानुर्व्यामाभिमन्यव एकराट्
०११८००६१ यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम्
०११८००६३ तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः
०११८००७१ नानुद्वेष्टि कलिं सम्राट्सारङ्ग इव सारभुक्
०११८००७३ कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत्
०११८००८१ किं नु बालेषु शूरेण कलिना धीरभीरुणा
०११८००८३ अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते
०११८००९१ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया
०११८००९३ वासुदेवकथोपेतमाख्यानं यदपृच्छत
०११८०१०१ या याः कथा भगवतः कथनीयोरुकर्मणः
०११८०१०३ गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः
०११८०११० ऋषय ऊचुः
०११८०१११ सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः
०११८०११३ यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः
०११८०१२१ कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान्
०११८०१२३ आपाययति गोविन्द पादपद्मासवं मधु
०११८०१३१ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्
०११८०१३३ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः
०११८०१४१ को नाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य
०११८०१४३ नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः
०११८०१५१ तन्नो भवान्वै भगवत्प्रधानो महत्तमैकान्तपरायणस्य
०११८०१५३ हरेरुदारं चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन्
०११८०१६१ स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः
०११८०१६३ ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्

०११८०१७१ तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम्
०११८०१७३ आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम्
०११८०१८० सूत उवाच
०११८०१८१ अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्यापि विलोमजाताः
०११८०१८३ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः
०११८०१९१ कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य
०११८०१९३ योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः
०११८०२०१ एतावतालं ननु सूचितेन गुणैरसाम्यानतिशायनस्य
०११८०२०३ हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः
०११८०२११ अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः
०११८०२१३ सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः
०११८०२२१ यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम्
०११८०२२३ व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशमः स्वधर्मः
०११८०२३१ अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान्
०११८०२३३ नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः
०११८०२४१ एकदा धनुरुद्यम्य विचरन्मृगयां वने
०११८०२४३ मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम्
०११८०२५१ जलाशयमचक्षाणः प्रविवेश तमाश्रमम्
०११८०२५३ ददर्श मुनिमासीनं शान्तं मीलितलोचनम्
०११८०२६१ प्रतिरुद्धेन्द्रियप्राण मनोबुद्धिमुपारतम्
०११८०२६३ स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम्
०११८०२७१ विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च
०११८०२७३ विशुष्यत्तालुरुदकं तथाभूतमयाचत
०११८०२८१ अलब्धतृणभूम्यादिरसम्प्राप्तार्घ्यसूनृतः
०११८०२८३ अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह
०११८०२९१ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः
०११८०२९३ ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च
०११८०३०१ स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा
०११८०३०३ विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागतः
०११८०३११ एष किं निभृताशेष करणो मीलितेक्षणः
०११८०३१३ मृषासमाधिराहोस्वित्किं नु स्यात्क्षत्रबन्धुभिः

०११८०३२१ तस्य पुत्रोऽतितेजस्वी विहरन्बालकोऽर्भकैः
०११८०३२३ राज्ञाघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत्
०११८०३३१ अहो अधर्मः पालानां पीव्नां बलिभुजामिव
०११८०३३३ स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव
०११८०३४१ ब्राह्मणैः क्षत्रबन्धुर्हि गृहपालो निरूपितः
०११८०३४३ स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति
०११८०३५१ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम्
०११८०३५३ तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम्
०११८०३६१ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकः
०११८०३६३ कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह
०११८०३७१ इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि
०११८०३७३ दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम्
०११८०३८१ ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम्
०११८०३८३ पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह
०११८०३९१ स वा आङ्गिरसो ब्रह्मन्श्रुत्वा सुतविलापनम्
०११८०३९३ उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम्
०११८०४०१ विसृज्य तं च पप्रच्छ वत्स कस्माद्धि रोदिषि
०११८०४०३ केन वा तेऽपकृतमित्युक्तः स न्यवेदयत्
०११८०४११ निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत्
०११८०४१३ अहो बतांहो महदद्य ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः
०११८०४२१ न वै नृभिर्नरदेवं पराख्यं सम्मातुमर्हस्यविपक्वबुद्धे
०११८०४२३ यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः
०११८०४३१ अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः
०११८०४३३ तदा हि चौरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात्
०११८०४४१ तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकात्
०११८०४४३ परस्परं घ्नन्ति शपन्ति वृञ्जते पशून्स्त्रियोऽर्थान्पुरुदस्यवो जनाः
०११८०४५१ तदार्यधर्मः प्रविलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः
०११८०४५३ ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसङ्करः
०११८०४६१ धर्मपालो नरपतिः स तु सम्राड्बृहच्छ्रवाः
०११८०४६३ साक्षान्महाभागवतो राजर्षिर्हयमेधयाट्
०११८०४६५ क्षुत्तृड्श्रमयुतो दीनो नैवास्मच्छापमर्हति

०११८०४७१ अपापेषु स्वभृत्येषु बालेनापक्कबुद्धिना
०११८०४७३ पापं कृतं तद्भगवान्सर्वात्मा क्षन्तुमर्हति
०११८०४८१ तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि
०११८०४८३ नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि
०११८०४९१ इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः
०११८०४९३ स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत्
०११८०५०१ प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः
०११८०५०३ न व्यथन्ति न हृष्यन्ति यत आत्मागुणाश्रयः
०११९००१० सूत उवाच
०११९००११ महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः
०११९००१३ अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि
०११९००२१ ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात्
०११९००२३ तदस्तु कामं ह्यघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा
०११९००३१ अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे
०११९००३३ दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवगोभ्यः
०११९००४१ स चिन्तयन्नित्थमथाश‍ृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः
०११९००४३ स साधु मेने न चिरेण तक्षका नलं प्रसक्तस्य विरक्तिकारणम्
०११९००५१ अथो विहायेमममुं च लोकं विमर्शितौ हेयतया पुरस्तात्
०११९००५३ कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम्
०११९००६१ या वै लसच्छ्रीतुलसीविमिश्र कृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री
०११९००६३ पुनाति लोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः
०११९००७१ इति व्यवच्छिद्य स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम्
०११९००७३ दधौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः
०११९००८१ तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः
०११९००८३ प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः
०११९००९१ अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च
०११९००९३ पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ
०११९०१०१ मेधातिथिर्देवल आर्ष्टिषेणो भारद्वाजो गौतमः पिप्पलादः
०११९०१०३ मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च
०११९०१११ अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च
०११९०११३ नानार्षेयप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववन्दे

०११९०१२१ सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत्
०११९०१२३ विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः
०११९०१३० राजोवाच
०११९०१३१ अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः
०११९०१३३ राज्ञां कुलं ब्राह्मणपादशौचाद्दूराद्विसृष्टं बत गर्ह्यकर्म
०११९०१४१ तस्यैव मेऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम्
०११९०१४३ निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते
०११९०१५१ तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे
०११९०१५३ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः
०११९०१६१ पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु
०११९०१६३ महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः
०११९०१७१ इति स्म राजाध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः
०११९०१७३ उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः
०११९०१८१ एवं च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः
०११९०१८३ प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः
०११९०१९१ महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः
०११९०१९३ ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणाभिरूपम्
०११९०२०१ न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु
०११९०२०३ येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः
०११९०२११ सर्वे वयं तावदिहास्महेऽथ कलेवरं यावदसौ विहाय
०११९०२१३ लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः
०११९०२२१ आश्रुत्य तदृषिगणवचः परीक्षित्समं मधुच्युद्गुरु चाव्यलीकम्
०११९०२२३ आभाषतैनानभिनन्द्य युक्ताञ्शुश्रूषमाणश्चरितानि विष्णोः
०११९०२३१ समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे
०११९०२३३ नेहाथ नामुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम्
०११९०२४१ ततश्च वः पृच्छ्यमिमं विपृच्छे विश्रभ्य विप्रा इति कृत्यतायाम्
०११९०२४३ सर्वात्मना म्रियमाणैश्च कृत्यं शुद्धं च तत्रामृशताभियुक्ताः
०११९०२५१ तत्राभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः
०११९०२५३ अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः
०११९०२६१ तं द्व्यष्टवर्षं सुकुमारपाद करोरुबाह्वंसकपोलगात्रम्
०११९०२६३ चार्वायताक्षोन्नसतुल्यकर्ण सुभ्र्वाननं कम्बुसुजातकण्ठम्

०११९०२७१ निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरं च
०११९०२७३ दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम्
०११९०२८१ श्यामं सदापीव्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन
०११९०२८३ प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम्
०११९०२९१ स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाजहार
०११९०२९३ ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः
०११९०३०१ स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः
०११९०३०३ व्यरोचतालं भगवान्यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः
०११९०३११ प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य
०११९०३१३ प्रणम्य मूर्ध्नावहितः कृताञ्जलिर्नत्वा गिरा सूनृतयान्वपृच्छत्
०११९०३२० परीक्षिदुवाच
०११९०३२१ अहो अद्य वयं ब्रह्मन्सत्सेव्याः क्षत्रबन्धवः
०११९०३२३ कृपयातिथिरूपेण भवद्भिस्तीर्थकाः कृताः
०११९०३३१ येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः
०११९०३३३ किं पुनर्दर्शनस्पर्श पादशौचासनादिभिः
०११९०३४१ सान्निध्यात्ते महायोगिन्पातकानि महान्त्यपि
०११९०३४३ सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः
०११९०३५१ अपि मे भगवान्प्रीतः कृष्णः पाण्डुसुतप्रियः
०११९०३५३ पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः
०११९०३६१ अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम्
०११९०३६३ नितरां म्रियमाणानां संसिद्धस्य वनीयसः
०११९०३७१ अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्
०११९०३७३ पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा
०११९०३८१ यच्छ्रोतव्यमथो जप्यं यत्कर्तव्यं नृभिः प्रभो
०११९०३८३ स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम्
०११९०३९१ नूनं भगवतो ब्रह्मन्गृहेषु गृहमेधिनाम्
०११९०३९३ न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित्
०११९०४०० सूत उवाच
०११९०४०१ एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा
०११९०४०३ प्रत्यभाषत धर्मज्ञो भगवान्बादरायणिः
०२०१००१० श्रीशुक उवाच

०२०१००११ वरीयानेष ते प्रश्नः कृतो लोकहितं नृप
०२०१००१३ आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः
०२०१००२१ श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः
०२०१००२३ अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम्
०२०१००३१ निद्रया ह्रियते नक्तं व्यवायेन च वा वयः
०२०१००३३ दिवा चार्थेहया राजन्कुटुम्बभरणेन वा
०२०१००४१ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि
०२०१००४३ तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति
०२०१००५१ तस्माद्भारत सर्वात्मा भगवानीश्वरो हरिः
०२०१००५३ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्
०२०१००६१ एतावान्साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया
०२०१००६३ जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः
०२०१००७१ प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः
०२०१००७३ नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः
०२०१००८१ इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्
०२०१००८३ अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम्
०२०१००९१ परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया
०२०१००९३ गृहीतचेता राजर्षे आख्यानं यदधीतवान्
०२०१०१०१ तदहं तेऽभिधास्यामि महापौरुषिको भवान्
०२०१०१०३ यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती
०२०१०१११ एतन्निर्विद्यमानानामिच्छतामकुतोभयम्
०२०१०११३ योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम्
०२०१०१२१ किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह
०२०१०१२३ वरं मुहूर्तं विदितं घटते श्रेयसे यतः
०२०१०१३१ खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः
०२०१०१३३ मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम्
०२०१०१४१ तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः
०२०१०१४३ उपकल्पय तत्सर्वं तावद्यत्साम्परायिकम्
०२०१०१५१ अन्तकाले तु पुरुष आगते गतसाध्वसः
०२०१०१५३ छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम्
०२०१०१६१ गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः

०२०१०१६३ शुचौ विविक्त आसीनो विधिवत्कल्पितासने
०२०१०१७१ अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम्
०२०१०१७३ मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन्
०२०१०१८१ नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः
०२०१०१८३ मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया
०२०१०१९१ तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा
०२०१०१९३ मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत्
०२०१०१९५ पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति
०२०१०२०१ रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः
०२०१०२०३ यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम्
०२०१०२११ यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः
०२०१०२१३ आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः
०२०१०२२० राजोवाच
०२०१०२२१ यथा सन्धार्यते ब्रह्मन्धारणा यत्र सम्मता
०२०१०२२३ यादृशी वा हरेदाशु पुरुषस्य मनोमलम्
०२०१०२३० श्रीशुक उवाच
०२०१०२३१ जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः
०२०१०२३३ स्थूले भगवतो रूपे मनः सन्धारयेद्धिया
०२०१०२४१ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम्
०२०१०२४३ यत्रेदं व्यज्यते विश्वं भूतं भव्यं भवच्च सत्
०२०१०२५१ अण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते
०२०१०२५३ वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः
०२०१०२६१ पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम्
०२०१०२६३ महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे
०२०१०२७१ द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च
०२०१०२७३ महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति
०२०१०२८१ उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य
०२०१०२८३ तपो वराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः
०२०१०२९१ इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः
०२०१०२९३ नासत्यदस्रौ परमस्य नासे घ्राणोऽस्य गन्धो मुखमग्निरिद्धः
०२०१०३०१ द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च

०२०१०३०३ तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा
०२०१०३११ छन्दांस्यनन्तस्य शिरो गृणन्ति दंष्ट्रा यमः स्नेहकला द्विजानि
०२०१०३१३ हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः
०२०१०३२१ व्रीडोत्तरौष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठम्
०२०१०३२३ कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः
०२०१०३३१ नाड्योऽस्य नद्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र
०२०१०३३३ अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः
०२०१०३४१ ईशस्य केशान्विदुरम्बुवाहान्वासस्तु सन्ध्यां कुरुवर्य भूम्नः
०२०१०३४३ अव्यक्तमाहुर्हृदयं मनश्चस चन्द्रमाः सर्वविकारकोशः
०२०१०३५१ विज्ञानशक्तिं महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रम्
०२०१०३५३ अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे
०२०१०३६१ वयांसि तद्व्याकरणं विचित्रं मनुर्मनीषा मनुजो निवासः
०२०१०३६३ गन्धर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुरानीकवीर्यः
०२०१०३७१ ब्रह्माननं क्षत्रभुजो महात्मा विड्ूरुरङ्घ्रिश्रितकृष्णवर्णः
०२०१०३७३ नानाभिधाभीज्यगणोपपन्नो द्रव्यात्मकः कर्म वितानयोगः
०२०१०३८१ इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते
०२०१०३८३ सन्धार्यतेऽस्मिन्वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किञ्चित्
०२०१०३९१ स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः
०२०१०३९३ तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः
०२०२००१० श्रीशुक उवाच
०२०२००११ एवं पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात्
०२०२००१३ तथा ससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः
०२०२००२१ शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः
०२०२००२३ परिभ्रमंस्तत्र न विन्दतेऽर्थान्मायामये वासनया शयानः
०२०२००३१ अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः
०२०२००३३ सिद्धेऽन्यथार्थे न यतेत तत्र परिश्रमं तत्र समीक्षमाणः
०२०२००४१ सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम्
०२०२००४३ सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः
०२०२००५१ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
०२०२००५२ नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन्
०२०२००५३ रुद्धा गुहाः किमजितोऽवति नोपसन्नान्

०२०२००५४ कस्माद्भजन्ति कवयो धनदुर्मदान्धान्
०२०२००६१ एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः
०२०२००६३ तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र
०२०२००७१ कस्तां त्वनादृत्य परानुचिन्तामृते पशूनसतीं नाम कुर्यात्
०२०२००७३ पश्यञ्जनं पतितं वैतरण्यां स्वकर्मजान्परितापाञ्जुषाणम्
०२०२००८१ केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्
०२०२००८३ चतुर्भुजं कञ्जरथाङ्गशङ्ख गदाधरं धारणया स्मरन्ति
०२०२००९१ रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम्
०२०२००९३ लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम्
०२०२०१०१ उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम्
०२०२०१०३ श्रीलक्षणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालयाचितम्
०२०२०१११ विभूषितं मेखलयाङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः
०२०२०११३ स्निग्धामलाकुञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम्
०२०२०१२१ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम्
०२०२०१२३ ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयावतिष्ठते
०२०२०१३१ एकैकशोऽङ्गानि धियानुभावयेत्पादादि यावद्धसितं गदाभृतः
०२०२०१३३ जितं जितं स्थानमपोह्य धारयेत्परं परं शुद्ध्यति धीर्यथा यथा
०२०२०१४१ यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः
०२०२०१४३ तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत
०२०२०१५१ स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम्
०२०२०१५३ काले च देशे च मनो न सज्जयेत्प्राणान्नियच्छेन्मनसा जितासुः
०२०२०१६१ मनः स्वबुद्ध्यामलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि
०२०२०१६३ आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात्
०२०२०१७१ न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे
०२०२०१७३ न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम्
०२०२०१८१ परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः
०२०२०१८३ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यार्हपदं पदे पदे
०२०२०१९१ इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः
०२०२०१९३ स्वपार्ष्णिनापीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः
०२०२०२०१ नाभ्यां स्थितं हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः
०२०२०२०३ ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत

०२०२०२११ तस्माद्भ्रुवोरन्तरमुन्नयेत निरुद्धसप्तायतनोऽनपेक्षः
०२०२०२१३ स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन्विसृजेत्परं गतः
०२०२०२२१ यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम्
०२०२०२२३ अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च
०२०२०२३१ योगेश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम्
०२०२०२३३ न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्
०२०२०२४१ वैश्वानरं याति विहायसा गतः सुषुम्णया ब्रह्मपथेन शोचिषा
०२०२०२४३ विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैशुमारम्
०२०२०२५१ तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः
०२०२०२५३ नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते
०२०२०२६१ अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम्
०२०२०२६३ निर्याति सिद्धेश्वरयुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम्
०२०२०२७१ न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित्
०२०२०२७३ यच्चित्ततोऽदः कृपयानिदंविदां दुरन्तदुःखप्रभवानुदर्शनात्
०२०२०२८१ ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोऽनलमूर्तिरत्वरन्
०२०२०२८३ ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम्
०२०२०२९१ घ्राणेन गन्धं रसनेन वै रसं रूपं च दृष्ट्या श्वसनं त्वचैव
०२०२०२९३ श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी
०२०२०३०१ स भूतसूक्ष्मेन्द्रियसन्निकर्षं मनोमयं देवमयं विकार्यम्
०२०२०३०३ संसाद्य गत्या सह तेन याति विज्ञानतत्त्वं गुणसन्निरोधम्
०२०२०३११ तेनात्मनात्मानमुपैति शान्तमानन्दमानन्दमयोऽवसाने
०२०२०३१३ एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग
०२०२०३२१ एते सृती ते नृप वेदगीते त्वयाभिपृष्टे च सनातने च
०२०२०३२३ ये वै पुरा ब्रह्मण आह तुष्ट आराधितो भगवान्वासुदेवः
०२०२०३३१ न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह
०२०२०३३३ वासुदेवे भगवति भक्तियोगो यतो भवेत्
०२०२०३४१ भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया
०२०२०३४३ तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्
०२०२०३५१ भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः
०२०२०३५३ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः
०२०२०३६१ तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा

०२०२०३६३ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्
०२०२०३७१ पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु सम्भृतम्
०२०२०३७३ पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम्
०२०३००१० श्रीशुक उवाच
०२०३००११ एवमेतन्निगदितं पृष्टवान्यद्भवान्मम
०२०३००१३ नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम्
०२०३००२१ ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणः पतिम्
०२०३००२३ इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन्
०२०३००३१ देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम्
०२०३००३३ वसुकामो वसून्रुद्रान्वीर्यकामोऽथ वीर्यवान्
०२०३००४१ अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान्
०२०३००४३ विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशाम्
०२०३००५१ आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत्
०२०३००५३ प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ
०२०३००६१ रूपाभिकामो गन्धर्वान्स्त्रीकामोऽप्सर उर्वशीम्
०२०३००६३ आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्
०२०३००७१ यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम्
०२०३००७३ विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम्
०२०३००८१ धर्मार्थ उत्तमश्लोकं तन्तुः तन्वन्पितॄन्यजेत्
०२०३००८३ रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान्
०२०३००९१ राज्यकामो मनून्देवान्निरृतिं त्वभिचरन्यजेत्
०२०३००९३ कामकामो यजेत्सोममकामः पुरुषं परम्
०२०३०१०१ अकामः सर्वकामो वा मोक्षकाम उदारधीः
०२०३०१०३ तीव्रेण भक्तियोगेन यजेत पुरुषं परम्
०२०३०१११ एतावानेव यजतामिह निःश्रेयसोदयः
०२०३०११३ भगवत्यचलो भावो यद्भागवतसङ्गतः
०२०३०१२१ ज्ञानं यदाप्रतिनिवृत्तगुणोर्मिचक्रम्
०२०३०१२२ आत्मप्रसाद उत यत्र गुणेष्वसङ्गः
०२०३०१२३ कैवल्यसम्मतपथस्त्वथ भक्तियोगः
०२०३०१२४ को निर्वृतो हरिकथासु रतिं न कुर्यात्
०२०३०१३० शौनक उवाच

०२०३०१३१ इत्यभिव्याहृतं राजा निशम्य भरतर्षभः
०२०३०१३३ किमन्यत्पृष्टवान्भूयो वैयासकिमृषिं कविम्
०२०३०१४१ एतच्छुश्रूषतां विद्वन्सूत नोऽर्हसि भाषितुम्
०२०३०१४३ कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम्
०२०३०१५१ स वै भागवतो राजा पाण्डवेयो महारथः
०२०३०१५३ बालक्रीडनकैः क्रीडन्कृष्णक्रीडां य आददे
०२०३०१६१ वैयासकिश्च भगवान्वासुदेवपरायणः
०२०३०१६३ उरुगायगुणोदाराः सतां स्युर्हि समागमे
०२०३०१७१ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ
०२०३०१७३ तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया
०२०३०१८१ तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत
०२०३०१८३ न खादन्ति न मेहन्ति किं ग्रामे पशवोऽपरे
०२०३०१९१ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः
०२०३०१९३ न यत्कर्णपथोपेतो जातु नाम गदाग्रजः
०२०३०२०१ बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य
०२०३०२०३ जिह्वासती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः
०२०३०२११ भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्
०२०३०२१३ शावौ करौ नो कुरुते सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा
०२०३०२२१ बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये
०२०३०२२३ पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ
०२०३०२३१ जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु
०२०३०२३३ श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम्
०२०३०२४१ तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः
०२०३०२४३ न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः
०२०३०२५१ अथाभिधेह्यङ्ग मनोऽनुकूलं प्रभाषसे भागवतप्रधानः
०२०३०२५३ यदाह वैयासकिरात्मविद्या विशारदो नृपतिं साधु पृष्टः
०२०४००१० सूत उवाच
०२०४००११ वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः
०२०४००१३ उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात्
०२०४००२१ आत्मजायासुतागार पशुद्रविणबन्धुषु
०२०४००२३ राज्ये चाविकले नित्यं विरूढां ममतां जहौ

०२०४००३१ पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः
०२०४००३३ कृष्णानुभावश्रवणे श्रद्दधानो महामनाः
०२०४००४१ संस्थां विज्ञाय सन्न्यस्य कर्म त्रैवर्गिकं च यत्
०२०४००४३ वासुदेवे भगवति आत्मभावं दृढं गतः
०२०४००५० राजोवाच
०२०४००५१ समीचीनं वचो ब्रह्मन्सर्वज्ञस्य तवानघ
०२०४००५३ तमो विशीर्यते मह्यं हरेः कथयतः कथाम्
०२०४००६१ भूय एव विवित्सामि भगवानात्ममायया
०२०४००६३ यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः
०२०४००७१ यथा गोपायति विभुर्यथा संयच्छते पुनः
०२०४००७३ यां यां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान्
०२०४००७५ आत्मानं क्रीडयन्क्रीडन्करोति विकरोति च
०२०४००८१ नूनं भगवतो ब्रह्मन्हरेरद्भुतकर्मणः
०२०४००८३ दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम्
०२०४००९१ यथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा
०२०४००९३ बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः
०२०४०१०१ विचिकित्सितमेतन्मे ब्रवीतु भगवान्यथा
०२०४०१०३ शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान्खलु
०२०४०११० सूत उवाच
०२०४०१११ इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः
०२०४०११३ हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे
०२०४०१२० श्रीशुक उवाच
०२०४०१२१ नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया
०२०४०१२३ गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने
०२०४०१३१ भूयो नमः सद्वृजिनच्छिदेऽसतामसम्भवायाखिलसत्त्वमूर्तये
०२०४०१३३ पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे
०२०४०१४१ नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम्
०२०४०१४३ निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः
०२०४०१५१ यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम्
०२०४०१५३ लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः
०२०४०१६१ विचक्षणा यच्चरणोपसादनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः

०२०४०१६३ विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः
०२०४०१७१ तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः
०२०४०१७३ क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः
०२०४०१८१ किरातहूणान्ध्रपुलिन्दपुल्कशा आभीरशुम्भा यवनाः खसादयः
०२०४०१८३ येऽन्ये च पापा यदपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः
०२०४०१९१ स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः
०२०४०१९३ गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान्प्रसीदताम्
०२०४०२०१ श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः
०२०४०२०३ पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः
०२०४०२११ यदङ्घ्र्यभिध्यानसमाधिधौतया धियानुपश्यन्ति हि तत्त्वमात्मनः
०२०४०२१३ वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान्प्रसीदताम्
०२०४०२२१ प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि
०२०४०२२३ स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम्
०२०४०२३१ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः
०२०४०२३३ भुङ्क्ते गुणान्षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान्वचांसि मे
०२०४०२४१ नमस्तस्मै भगवते वासुदेवाय वेधसे
०२०४०२४३ पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम्
०२०४०२५१ एतदेवात्मभू राजन्नारदाय विपृच्छते
०२०४०२५३ वेदगर्भोऽभ्यधात्साक्षाद्यदाह हरिरात्मनः
०२०५००१० नारद उवाच
०२०५००११ देवदेव नमस्तेऽस्तु भूतभावन पूर्वज
०२०५००१३ तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम्
०२०५००२१ यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो
०२०५००२३ यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः
०२०५००३१ सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः
०२०५००३३ करामलकवद्विश्वं विज्ञानावसितं तव
०२०५००४१ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः
०२०५००४३ एकः सृजसि भूतानि भूतैरेवात्ममायया
०२०५००५१ आत्मन्भावयसे तानि न पराभावयन्स्वयम्
०२०५००५३ आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः
०२०५००६१ नाहं वेद परं ह्यस्मिन्नापरं न समं विभो

०२०५००६३ नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः
०२०५००७१ स भवानचरद्घोरं यत्तपः सुसमाहितः
०२०५००७३ तेन खेदयसे नस्त्वं पराशङ्कां च यच्छसि
०२०५००८१ एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर
०२०५००८३ विजानीहि यथैवेदमहं बुध्येऽनुशासितः
०२०५००९० ब्रह्मोवाच
०२०५००९१ सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम्
०२०५००९३ यदहं चोदितः सौम्य भगवद्वीर्यदर्शने
०२०५०१०१ नानृतं तव तच्चापि यथा मां प्रब्रवीषि भोः
०२०५०१०३ अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे
०२०५०१११ येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम्
०२०५०११३ यथार्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः
०२०५०१२१ तस्मै नमो भगवते वासुदेवाय धीमहि
०२०५०१२३ यन्मायया दुर्जयया मां वदन्ति जगद्गुरुम्
०२०५०१३१ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया
०२०५०१३३ विमोहिता विकत्थन्ते ममाहमिति दुर्धियः
०२०५०१४१ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च
०२०५०१४३ वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः
०२०५०१५१ नारायणपरा वेदा देवा नारायणाङ्गजाः
०२०५०१५३ नारायणपरा लोका नारायणपरा मखाः
०२०५०१६१ नारायणपरो योगो नारायणपरं तपः
०२०५०१६३ नारायणपरं ज्ञानं नारायणपरा गतिः
०२०५०१७१ तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः
०२०५०१७३ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः
०२०५०१८१ सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः
०२०५०१८३ स्थितिसर्गनिरोधेषु गृहीता मायया विभोः
०२०५०१९१ कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः
०२०५०१९३ बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः
०२०५०२०१ स एष भगवांल्लिङ्गैस्त्रिभिरेतैरधोक्षजः
०२०५०२०३ स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः
०२०५०२११ कालं कर्म स्वभावं च मायेशो मायया स्वया

०२०५०२१३ आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे
०२०५०२२१ कालाद्गुणव्यतिकरः परिणामः स्वभावतः
०२०५०२२३ कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत्
०२०५०२३१ महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात्
०२०५०२३३ तमःप्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः
०२०५०२४१ सोऽहङ्कार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा
०२०५०२४३ वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा
०२०५०२४५ द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो
०२०५०२५१ तामसादपि भूतादेर्विकुर्वाणादभून्नभः
०२०५०२५३ तस्य मात्रा गुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः
०२०५०२६१ नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः
०२०५०२६३ परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम्
०२०५०२७१ वायोरपि विकुर्वाणात्कालकर्मस्वभावतः
०२०५०२७३ उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत्
०२०५०२८१ तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम्
०२०५०२८३ रूपवत्स्पर्शवच्चाम्भो घोषवच्च परान्वयात्
०२०५०२९१ विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत्
०२०५०२९३ परान्वयाद्रसस्पर्श शब्दरूपगुणान्वितः
०२०५०३०१ वैकारिकान्मनो जज्ञे देवा वैकारिका दश
०२०५०३०३ दिग्वातार्कप्रचेतोऽश्वि वह्नीन्द्रोपेन्द्रमित्रकाः
०२०५०३११ तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्
०२०५०३१३ ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तैजसौ
०२०५०३१५ श्रोत्रं त्वग्घ्राणदृग्जिह्वा वाग्दोर्मेढ्राङ्घ्रिपायवः
०२०५०३२१ यदैतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः
०२०५०३२३ यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम
०२०५०३३१ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः
०२०५०३३३ सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः
०२०५०३४१ वर्षपूगसहस्रान्ते तदण्डमुदके शयम्
०२०५०३४३ कालकर्मस्वभावस्थो जीवो ऽजीवमजीवयत्
०२०५०३५१ स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः
०२०५०३५३ सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान्

०२०५०३६१ यस्येहावयवैर्लोकान्कल्पयन्ति मनीषिणः
०२०५०३६३ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः
०२०५०३७१ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः
०२०५०३७३ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत
०२०५०३८१ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः
०२०५०३८३ हृदा स्वर्लोक उरसा महर्लोको महात्मनः
०२०५०३९१ ग्रीवायां जनलोकोऽस्य तपोलोकः स्तनद्वयात्
०२०५०३९३ मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः
०२०५०४०१ तत्कट्यां चातलं कॢप्तमूरुभ्यां वितलं विभोः
०२०५०४०३ जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम्
०२०५०४११ महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्
०२०५०४१३ पातालं पादतलत इति लोकमयः पुमान्
०२०५०४२१ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः
०२०५०४२३ स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना
०२०६००१० ब्रह्मोवाच
०२०६००११ वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः
०२०६००१३ हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च
०२०६००२१ सर्वासूनां च वायोश्च तन्नासे परमायणे
०२०६००२३ अश्विनोरोषधीनां च घ्राणो मोदप्रमोदयोः
०२०६००३१ रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी
०२०६००३३ कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः
०२०६००३५ तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम्
०२०६००४१ त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि
०२०६००४३ रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु सम्भृतः
०२०६००५१ केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम्
०२०६००५३ बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम्
०२०६००६१ विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च
०२०६००६३ सर्वकामवरस्यापि हरेश्चरण आस्पदम्
०२०६००७१ अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः
०२०६००७३ पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः
०२०६००८१ पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद

०२०६००८३ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदं स्मृतः
०२०६००९१ पराभूतेरधर्मस्य तमसश्चापि पश्चिमः
०२०६००९३ नाड्यो नदनदीनां च गोत्राणामस्थिसंहतिः
०२०६०१०१ अव्यक्तरससिन्धूनां भूतानां निधनस्य च
०२०६०१०३ उदरं विदितं पुंसो हृदयं मनसः पदम्
०२०६०१११ धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च
०२०६०११३ विज्ञानस्य च सत्त्वस्य परस्यात्मा परायणम्
०२०६०१२१ अहं भवान्भवश्चैव त इमे मुनयोऽग्रजाः
०२०६०१२३ सुरासुरनरा नागाः खगा मृगसरीसृपाः
०२०६०१३१ गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः
०२०६०१३३ पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः
०२०६०१४१ अन्ये च विविधा जीवाजलस्थलनभौकसः
०२०६०१४३ ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः
०२०६०१५१ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्
०२०६०१५३ तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति
०२०६०१६१ स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ
०२०६०१६३ एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान्
०२०६०१७१ सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्
०२०६०१७३ महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः
०२०६०१८१ पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः
०२०६०१८३ अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु
०२०६०१९१ पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः
०२०६०१९३ अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः
०२०६०२०१ सृती विचक्रमे विश्वम्साशनानशने उभे
०२०६०२०३ यदविद्या च विद्या च पुरुषस्तूभयाश्रयः
०२०६०२११ यस्मादण्डं विराड्जज्ञे भूतेन्द्रियगुणात्मकः
०२०६०२१३ तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन्
०२०६०२२१ यदास्य नाभ्यान्नलिनादहमासं महात्मनः
०२०६०२२३ नाविदं यज्ञसम्भारान्पुरुषावयवानृते
०२०६०२३१ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः
०२०६०२३३ इदं च देवयजनं कालश्चोरुगुणान्वितः

०२०६०२४१ वस्तून्योषधयः स्नेहा रसलोहमृदो जलम्
०२०६०२४३ ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम
०२०६०२५१ नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च
०२०६०२५३ देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रमेव च
०२०६०२६१ गतयो मतयश्चैव प्रायश्चित्तं समर्पणम्
०२०६०२६३ पुरुषावयवैरेते सम्भाराः सम्भृता मया
०२०६०२७१ इति सम्भृतसम्भारः पुरुषावयवैरहम्
०२०६०२७३ तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम्
०२०६०२८१ ततस्ते भ्रातर इमे प्रजानां पतयो नव
०२०६०२८३ अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः
०२०६०२९१ ततश्च मनवः काले ईजिरे ऋषयोऽपरे
०२०६०२९३ पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम्
०२०६०३०१ नारायणे भगवति तदिदं विश्वमाहितम्
०२०६०३०३ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः
०२०६०३११ सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः
०२०६०३१३ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्
०२०६०३२१ इति तेऽभिहितं तात यथेदमनुपृच्छसि
०२०६०३२३ नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम्
०२०६०३३१ न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः
०२०६०३३३ न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः
०२०६०३४१ सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवन्दितः पतिः
०२०६०३४३ आस्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्मसम्भवः
०२०६०३५१ नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम्
०२०६०३५३ यो ह्यात्ममायाविभवं स्म पर्यगाद्यथा नभः स्वान्तमथापरे कुतः
०२०६०३६१ नाहं न यूयं यदृतां गतिं विदुर्न वामदेवः किमुतापरे सुराः
०२०६०३६३ तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्ष्महे
०२०६०३७१ यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः
०२०६०३७३ न यं विदन्ति तत्त्वेन तस्मै भगवते नमः
०२०६०३८१ स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः
०२०६०३८३ आत्मात्मन्यात्मनात्मानं स संयच्छति पाति च
०२०६०३९१ विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम्

०२०६०३९३ सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्

०२०६०४०१ ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः

०२०६०४०३ यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम्

०२०६०४११ आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च

०२०६०४१३ द्रव्यं विकारो गुण इन्द्रियाणि विराड्स्वराड्स्थास्नु चरिष्णु भूम्नः

०२०६०४२१ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च

०२०६०४२३ स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः

०२०६०४३१ गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः

०२०६०४३३ ये वा ऋषीणामृषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः

०२०६०४३५ अन्ये च ये प्रेतपिशाचभूत कूष्माण्डयादोमृगपक्ष्यधीशाः

०२०६०४४१ यत्किञ्च लोके भगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत्

०२०६०४४३ श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम्

०२०६०४५१ प्राधान्यतो यानृष आमनन्ति लीलावतारान्पुरुषस्य भूम्नः

०२०६०४५३ आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान्सुपेशान्

०२०७००१० ब्रह्मोवाच

०२०७००११ यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्

०२०७००१२ क्रौडीं तनुं सकलयज्ञमयीमनन्तः

०२०७००१३ अन्तर्महार्णव उपागतमादिदैत्यं

०२०७००१४ तं दंष्ट्रयाद्रिमिव वज्रधरो ददार

०२०७००२१ जातो रुचेरजनयत्सुयमान्सुयज्ञ

०२०७००२२ आकूतिसूनुरमरानथ दक्षिणायाम्

०२०७००२३ लोकत्रयस्य महतीमहरद्यदार्तिं

०२०७००२४ स्वायम्भुवेन मनुना हरिरित्यनूक्तः

०२०७००३१ जज्ञे च कर्दमगृहे द्विज देवहूत्यां

०२०७००३२ स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे

०२०७००३३ ऊचे ययात्मशमलं गुणसङ्गपङ्कम्

०२०७००३४ अस्मिन्विधूय कपिलस्य गतिं प्रपेदे

०२०७००४१ अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो

०२०७००४२ दत्तो मयाहमिति यद्भगवान्स दत्तः

०२०७००४३ यत्पादपङ्कजपरागपवित्रदेहा

०२०७००४४ योगर्द्धिमापुरुभयीं यदुहैहयाद्याः

०२०७००५१ तप्तं तपो विविधलोकसिसृक्षया मे
०२०७००५२ आदौ सनात्स्वतपसः स चतुःसनोऽभूत्
०२०७००५३ प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्त्वं
०२०७००५४ सम्यग्जगाद मुनयो यदचक्षतात्मन्
०२०७००६१ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां
०२०७००६२ नारायणो नर इति स्वतपःप्रभावः
०२०७००६३ दृष्ट्वात्मनो भगवतो नियमावलोपं
०२०७००६४ देव्यस्त्वनङ्गपृतना घटितुं न शेकुः
०२०७००७१ कामं दहन्ति कृतिनो ननु रोषदृष्ट्या
०२०७००७२ रोषं दहन्तमुत ते न दहन्त्यसह्यम्
०२०७००७३ सोऽयं यदन्तरमलं प्रविशन्बिभेति
०२०७००७४ कामः कथं नु पुनरस्य मनः श्रयेत
०२०७००८१ विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो
०२०७००८२ बालोऽपि सन्नुपगतस्तपसे वनानि
०२०७००८३ तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो
०२०७००८४ दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात्
०२०७००९१ यद्वेनमुत्पथगतं द्विजवाक्यवज्र
०२०७००९२ निष्प्लुष्टपौरुषभगं निरये पतन्तम्
०२०७००९३ त्रात्वार्थितो जगति पुत्रपदं च लेभे
०२०७००९४ दुग्धा वसूनि वसुधा सकलानि येन
०२०७०१०१ नाभेरसावृषभ आस सुदेविसूनुर्
०२०७०१०२ यो वै चचार समदृग्जडयोगचर्याम्
०२०७०१०३ यत्पारमहंस्यमृषयः पदमामनन्ति
०२०७०१०४ स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः
०२०७०१११ सत्रे ममास भगवान्हयशीरषाथो
०२०७०११२ साक्षात्स यज्ञपुरुषस्तपनीयवर्णः
०२०७०११३ छन्दोमयो मखमयोऽखिलदेवतात्मा
०२०७०११४ वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः
०२०७०१२१ मत्स्यो युगान्तसमये मनुनोपलब्धः
०२०७०१२२ क्षोणीमयो निखिलजीवनिकायकेतः
०२०७०१२३ विस्रंसितानुरुभये सलिले मुखान्मे

०२०७०१२४ आदाय तत्र विजहार ह वेदमार्गान्
०२०७०१३१ क्षीरोदधावमरदानवयूथपानाम्
०२०७०१३२ उन्मथ्नताममृतलब्धय आदिदेवः
०२०७०१३३ पृष्ठेन कच्छपवपुर्विदधार गोत्रं
०२०७०१३४ निद्राक्षणोऽद्रिपरिवर्तकषाणकण्डूः
०२०७०१४१ त्रैपिष्टपोरुभयहा स नृसिंहरूपं
०२०७०१४२ कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम्
०२०७०१४३ दैत्येन्द्रमाशु गदयाभिपतन्तमाराद्
०२०७०१४४ ऊरौ निपात्य विददार नखैः स्फुरन्तम्
०२०७०१५१ अन्तःसरस्युरुबलेन पदे गृहीतो
०२०७०१५२ ग्राहेण यूथपतिरम्बुजहस्त आर्तः
०२०७०१५३ आहेदमादिपुरुषाखिललोकनाथ
०२०७०१५४ तीर्थश्रवः श्रवणमङ्गलनामधेय
०२०७०१६१ श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्
०२०७०१६२ चक्रायुधः पतगराजभुजाधिरूढः
०२०७०१६३ चक्रेण नक्रवदनं विनिपाट्य तस्माद्
०२०७०१६४ धस्ते प्रगृह्य भगवान्कृपयोज्जहार
०२०७०१७१ ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां
०२०७०१७२ लोकान्विचक्रम इमान्यदथाधियज्ञः
०२०७०१७३ क्ष्मां वामनेन जगृहे त्रिपदच्छलेन
०२०७०१७४ याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः
०२०७०१८१ नार्थो बलेरयमुरुक्रमपादशौचम्
०२०७०१८२ आपः शिखाधृतवतो विबुधाधिपत्यम्
०२०७०१८३ यो वै प्रतिश्रुतमृते न चिकीर्षदन्यद्
०२०७०१८४ आत्मानमङ्ग मनसा हरयेऽभिमेने
०२०७०१९१ तुभ्यं च नारद भृशं भगवान्विवृद्ध
०२०७०१९२ भावेन साधु परितुष्ट उवाच योगम्
०२०७०१९३ ज्ञानं च भागवतमात्मसतत्त्वदीपं
०२०७०१९४ यद्वासुदेवशरणा विदुरञ्जसैव
०२०७०२०१ चक्रं च दिक्ष्वविहतं दशसु स्वतेजो
०२०७०२०२ मन्वन्तरेषु मनुवंशधरो बिभर्ति

०२०७०२०३ दुष्टेषु राजसु दमं व्यदधात्स्वकीर्तिं
०२०७०२०४ सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः
०२०७०२११ धन्वन्तरिश्च भगवान्स्वयमेव कीर्तिर्
०२०७०२१२ नाम्ना नृणां पुरुरुजां रुज आशु हन्ति
०२०७०२१३ यज्ञे च भागममृतायुरवावरुन्ध
०२०७०२१४ आयुष्यवेदमनुशास्त्यवतीर्य लोके
०२०७०२२१ क्षत्रं क्षयाय विधिनोपभृतं महात्मा
०२०७०२२२ ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु
०२०७०२२३ उद्धन्त्यसाववनिकण्टकमुग्रवीर्यस्
०२०७०२२४ त्रिःसप्तकृत्व उरुधारपरश्वधेन
०२०७०२३१ अस्मत्प्रसादसुमुखः कलया कलेश
०२०७०२३२ इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे
०२०७०२३३ तिष्ठन्वनं सदयितानुज आविवेश
०२०७०२३४ यस्मिन्विरुध्य दशकन्धर आर्तिमार्च्छत्
०२०७०२४१ यस्मा अदादुदधिरूढभयाङ्गवेपो
०२०७०२४२ मार्गं सपद्यरिपुरं हरवद्दिधक्षोः
०२०७०२४३ दूरे सुहृन्मथितरोषसुशोणदृष्ट्या
०२०७०२४४ तातप्यमानमकरोरगनक्रचक्रः
०२०७०२५१ वक्षःस्थलस्पर्शरुग्नमहेन्द्रवाह
०२०७०२५२ दन्तैर्विडम्बितककुब्जुष ऊढहासम्
०२०७०२५३ सद्योऽसुभिः सह विनेष्यति दारहर्तुर्
०२०७०२५४ विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये
०२०७०२६१ भूमेः सुरेतरवरूथविमर्दितायाः
०२०७०२६२ क्लेशव्ययाय कलया सितकृष्णकेशः
०२०७०२६३ जातः करिष्यति जनानुपलक्ष्यमार्गः
०२०७०२६४ कर्माणि चात्ममहिमोपनिबन्धनानि
०२०७०२७१ तोकेन जीवहरणं यदुलूकिकायास्
०२०७०२७२ त्रैमासिकस्य च पदा शकटोऽपवृत्तः
०२०७०२७३ यद्रिङ्गतान्तरगतेन दिविस्पृशोर्वा
०२०७०२७४ उन्मूलनं त्वितरथार्जुनयोर्न भाव्यम्
०२०७०२८१ यद्वै व्रजे व्रजपशून्विषतोयपीतान्

०२०७०२८२ पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या
०२०७०२८३ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वम्
०२०७०२८४ उच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम्
०२०७०२९१ तत्कर्म दिव्यमिव यन्निशि निःशयानं
०२०७०२९२ दावाग्निना शुचिवने परिदह्यमाने
०२०७०२९३ उन्नेष्यति व्रजमतोऽवसितान्तकालं
०२०७०२९४ नेत्रे पिधाप्य सबलोऽनधिगम्यवीर्यः
०२०७०३०१ गृह्णीत यद्यदुपबन्धममुष्य माता
०२०७०३०२ शुल्बं सुतस्य न तु तत्तदमुष्य माति
०२०७०३०३ यज्जृम्भतोऽस्य वदने भुवनानि गोपी
०२०७०३०४ संवीक्ष्य शङ्कितमनाः प्रतिबोधितासीत्
०२०७०३११ नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशाद्
०२०७०३१२ गोपान्बिलेषु पिहितान्मयसूनुना च
०२०७०३१३ अह्न्यापृतं निशि शयानमतिश्रमेण
०२०७०३१४ लोकं विकुण्ठमुपनेष्यति गोकुलं स्म
०२०७०३२१ गोपैर्मखे प्रतिहते व्रजविप्लवाय
०२०७०३२२ देवेऽभिवर्षति पशून्कृपया रिरक्षुः
०२०७०३२३ धर्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्त
०२०७०३२४ वर्षो महीध्रमनघैककरे सलीलम्
०२०७०३३१ क्रीडन्वने निशि निशाकररश्मिगौर्यां
०२०७०३३२ रासोन्मुखः कलपदायतमूर्च्छितेन
०२०७०३३३ उद्दीपितस्मररुजां व्रजभृद्वधूनां
०२०७०३३४ हर्तुर्हरिष्यति शिरो धनदानुगस्य
०२०७०३४१ ये च प्रलम्बखरदर्दुरकेश्यरिष्ट
०२०७०३४२ मल्लेभकंसयवनाः कपिपौण्ड्रकाद्याः
०२०७०३४३ अन्ये च शाल्वकुजबल्वलदन्तवक्र
०२०७०३४४ सप्तोक्षशम्बरविदूरथरुक्मिमुख्याः
०२०७०३५१ ये वा मृधे समितिशालिन आत्तचापाः
०२०७०३५२ काम्बोजमत्स्यकुरुसृञ्जयकैकयाद्याः
०२०७०३५३ यास्यन्त्यदर्शनमलं बलपार्थभीम
०२०७०३५४ व्याजाह्वयेन हरिणा निलयं तदीयम्

०२०७०३६१ कालेन मीलितधियामवमृश्य न्ṇां
०२०७०३६२ स्तोकायुषां स्वनिगमो बत दूरपारः
०२०७०३६३ आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
०२०७०३६४ वेदद्रुमं विटपशो विभजिष्यति स्म
०२०७०३७१ देवद्विषां निगमवर्त्मनि निष्ठितानां
०२०७०३७२ पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः
०२०७०३७३ लोकान्घ्नतां मतिविमोहमतिप्रलोभं
०२०७०३७४ वेषं विधाय बहु भाष्यत औपधर्म्यम्
०२०७०३८१ यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः
०२०७०३८२ पाषण्डिनो द्विजजना वृषला नृदेवाः
०२०७०३८३ स्वाहा स्वधा वषडिति स्म गिरो न यत्र
०२०७०३८४ शास्ता भविष्यति कलेर्भगवान्युगान्ते
०२०७०३९१ सर्गे तपोऽहमृषयो नव ये प्रजेशाः
०२०७०३९२ स्थानेऽथ धर्ममखमन्वमरावनीशाः
०२०७०३९३ अन्ते त्वधर्महरमन्युवशासुराद्या
०२०७०३९४ मायाविभूतय इमाः पुरुशक्तिभाजः
०२०७०४०१ विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह
०२०७०४०२ यः पार्थिवान्यपि कविर्विममे रजांसि
०२०७०४०३ चस्कम्भ यः स्वरहसास्खलता त्रिपृष्ठं
०२०७०४०४ यस्मात्रिसाम्यसदनादुरुकम्पयानम्
०२०७०४११ नान्तं विदाम्यहममी मुनयोऽग्रजास्ते
०२०७०४१२ मायाबलस्य पुरुषस्य कुतोऽवरा ये
०२०७०४१३ गायन्गुणान्दशशतानन आदिदेवः
०२०७०४१४ शेषोऽधुनापि समवस्यति नास्य पारम्
०२०७०४२१ येषां स एष भगवान्दययेदनन्तः
०२०७०४२२ सर्वात्मनाश्रितपदो यदि निर्व्यलीकम्
०२०७०४२३ ते दुस्तरामतितरन्ति च देवमायां
०२०७०४२४ नैषां ममाहमिति धीः श्वशृगालभक्ष्ये
०२०७०४३१ वेदाहमङ्ग परमस्य हि योगमायां
०२०७०४३२ यूयं भवश्च भगवानथ दैत्यवर्यः
०२०७०४३३ पत्नी मनोः स च मनुश्च तदात्मजाश्च

०२०७०४३४ प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च
०२०७०४४१ इक्ष्वाकुरैलमुचुकुन्दविदेहगाधि
०२०७०४४२ रघ्वम्बरीषसगरा गयनाहुषाद्याः
०२०७०४४३ मान्धात्रलर्कशतधन्वनुरन्तिदेवा
०२०७०४४४ देवव्रतो बलिरमूर्त्तरयो दिलीपः
०२०७०४५१ सौभर्युतङ्कशिबिदेवलपिप्पलाद
०२०७०४५२ सारस्वतोद्धवपराशरभूरिषेणाः
०२०७०४५३ येऽन्ये विभीषणहनूमदुपेन्द्रदत्त
०२०७०४५४ पार्थार्ष्टिषेणविदुरश्रुतदेववर्याः
०२०७०४६१ ते वै विदन्त्यतितरन्ति च देवमायां
०२०७०४६२ स्त्रीशूद्रहूणशबरा अपि पापजीवाः
०२०७०४६३ यद्यद्भुतक्रमपरायणशीलशिक्षास्
०२०७०४६४ तिर्यग्जना अपि किमु श्रुतधारणा ये
०२०७०४७१ शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
०२०७०४७२ शुद्धं समं सदसतः परमात्मतत्त्वम्
०२०७०४७३ शब्दो न यत्र पुरुकारकवान्क्रियार्थो
०२०७०४७४ माया परैत्यभिमुखे च विलज्जमाना
०२०७०४८१ तद्वै पदं भगवतः परमस्य पुंसो
०२०७०४८२ ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्
०२०७०४८३ सध्र्यङ्नियम्य यतयो यमकर्तहेतिं
०२०७०४८४ जह्युः स्वराडिव निपानखनित्रमिन्द्रः
०२०७०४९१ स श्रेयसामपि विभुर्भगवान्यतोऽस्य
०२०७०४९२ भावस्वभावविहितस्य सतः प्रसिद्धिः
०२०७०४९३ देहे स्वधातुविगमेऽनुविशीर्यमाणे
०२०७०४९४ व्योमेव तत्र पुरुषो न विशीर्यते ऽजः
०२०७०५०१ सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः
०२०७०५०३ समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत्
०२०७०५११ इदं भागवतं नाम यन्मे भगवतोदितम्
०२०७०५१३ सङ्ग्रहोऽयं विभूतीनां त्वमेतद्विपुली कुरु
०२०७०५२१ यथा हरौ भगवति नृणां भक्तिर्भविष्यति
०२०७०५२३ सर्वात्मन्यखिलाधारे इति सङ्कल्प्य वर्णय

०२०७०५३१ मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः
०२०७०५३३ शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति
०२०८००१० राजोवाच
०२०८००११ ब्रह्मणा चोदितो ब्रह्मन्गुणाख्यानेऽगुणस्य च
०२०८००१३ यस्मै यस्मै यथा प्राह नारदो देवदर्शनः
०२०८००२१ एतद्वेदितुमिच्छामि तत्त्वं तत्त्वविदां वर
०२०८००२३ हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः
०२०८००३१ कथयस्व महाभाग यथाहमखिलात्मनि
०२०८००३३ कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम्
०२०८००४१ शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम्
०२०८००४३ कालेन नातिदीर्घेण भगवान्विशते हृदि
०२०८००५१ प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्
०२०८००५३ धुनोति शमलं कृष्णः सलिलस्य यथा शरत्
०२०८००६१ धौतात्मा पुरुषः कृष्ण पादमूलं न मुञ्चति
०२०८००६३ मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा
०२०८००७१ यदधातुमतो ब्रह्मन्देहारम्भोऽस्य धातुभिः
०२०८००७३ यदृच्छया हेतुना वा भवन्तो जानते यथा
०२०८००८१ आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम्
०२०८००८३ यावानयं वै पुरुष इयत्तावयवैः पृथक्
०२०८००८५ तावानसाविति प्रोक्तः संस्थावयववानिव
०२०८००९१ अजः सृजति भूतानि भूतात्मा यदनुग्रहात्
०२०८००९३ ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः
०२०८०१०१ स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः
०२०८०१०३ मुक्त्वात्ममायां मायेशः शेते सर्वगुहाशयः
०२०८०१११ पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः
०२०८०११३ लोकैरमुष्यावयवाः सपालैरिति शुश्रुम
०२०८०१२१ यावान्कल्पो विकल्पो वा यथा कालोऽनुमीयते
०२०८०१२३ भूतभव्यभवच्छब्द आयुर्मानं च यत्सतः
०२०८०१३१ कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि
०२०८०१३३ यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम
०२०८०१४१ यस्मिन्कर्मसमावायो यथा येनोपगृह्यते

०२०८०१४३ गुणानां गुणिनां चैव परिणाममभीप्सताम्
०२०८०१५१ भूपातालककुब्व्योम ग्रहनक्षत्रभूभृताम्
०२०८०१५३ सरित्समुद्रद्वीपानां सम्भवश्चैतदोकसाम्
०२०८०१६१ प्रमाणमण्डकोशस्य बाह्याभ्यन्तरभेदतः
०२०८०१६३ महतां चानुचरितं वर्णाश्रमविनिश्चयः
०२०८०१७१ युगानि युगमानं च धर्मो यश्च युगे युगे
०२०८०१७३ अवतारानुचरितं यदाश्चर्यतमं हरेः
०२०८०१८१ नृणां साधारणो धर्मः सविशेषश्च यादृशः
०२०८०१८३ श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम्
०२०८०१९१ तत्त्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम्
०२०८०१९३ पुरुषाराधनविधिर्योगस्याध्यात्मिकस्य च
०२०८०२०१ योगेश्वरैश्वर्यगतिर्लिङ्गभङ्गस्तु योगिनाम्
०२०८०२०३ वेदोपवेदधर्माणामितिहासपुराणयोः
०२०८०२११ सम्प्लवः सर्वभूतानां विक्रमः प्रतिसङ्क्रमः
०२०८०२१३ इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः
०२०८०२२१ यो वानुशायिनां सर्गः पाषण्डस्य च सम्भवः
०२०८०२२३ आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः
०२०८०२३१ यथात्मतन्त्रो भगवान्विक्रीडत्यात्ममायया
०२०८०२३३ विसृज्य वा यथा मायामुदास्ते साक्षिवद्विभुः
०२०८०२४१ सर्वमेतच्च भगवन्पृच्छतो मेऽनुपूर्वशः
०२०८०२४३ तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने
०२०८०२५१ अत्र प्रमाणं हि भवान्परमेष्ठी यथात्मभूः
०२०८०२५३ अपरे चानुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम्
०२०८०२६१ न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी
०२०८०२६३ पिबतो अच्युतपीयूषमतद्वाक्याब्धिविनिःसृतम्
०२०८०२७० सूत उवाच
०२०८०२७१ स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः
०२०८०२७३ ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि
०२०८०२८१ प्राह भागवतं नाम पुराणं ब्रह्मसम्मितम्
०२०८०२८३ ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते
०२०८०२९१ यद्यत्परीक्षिदृषभः पाण्डूनामनुपृच्छति

०२०८०२९३ आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे
०२०९००१० श्रीशुक उवाच
०२०९००११ आत्ममायामृते राजन्परस्यानुभवात्मनः
०२०९००१३ न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसा
०२०९००२१ बहुरूप इवाभाति मायया बहुरूपया
०२०९००२३ रममाणो गुणेष्वस्या ममाहमिति मन्यते
०२०९००३१ यर्हि वाव महिम्नि स्वे परस्मिन्कालमाययोः
०२०९००३३ रमेत गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम्
०२०९००४१ आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम्
०२०९००४३ ब्रह्मणे दर्शयन्रूपमव्यलीकव्रतादृतः
०२०९००५१ स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत
०२०९००५३ तां नाध्यगच्छद्दृशमत्र सम्मतां प्रपञ्चनिर्माणविधिर्यया भवेत्
०२०९००६१ स चिन्तयन्द्व्यक्षरमेकदाम्भस्युपाशृणोद्द्विर्गदितं वचो विभुः
०२०९००६३ स्पर्शेषु यत्षोडशमेकविंशं निष्किञ्चनानां नृप यद्धनं विदुः
०२०९००७१ निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः
०२०९००७३ स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः
०२०९००८१ दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः
०२०९००८३ अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः
०२०९००९१ तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत्परम्
०२०९००९३ व्यपेतसङ्क्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्पुरुषैरभिष्टुतम्
०२०९०१०१ प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः
०२०९०१०३ न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः
०२०९०१११ श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः
०२०९०११३ सर्वे चतुर्बाहव उन्मिषन्मणि प्रवेकनिष्काभरणाः सुवर्चसः
०२०९०११५ प्रवालवैदूर्यमृणालवर्चसः परिस्फुरत्कुण्डलमौलिमालिनः
०२०९०१२१ भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम्
०२०९०१२३ विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः
०२०९०१३१ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः
०२०९०१३३ प्रेङ्खं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती
०२०९०१४१ ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम्
०२०९०१४३ सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदाग्रैः परिसेवितं विभुम्

०२०९०१५१ भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननम्
०२०९०१५३ किरीटिनं कुण्डलिनं चतुर्भुजं पीतांशुकं वक्षसि लक्षितं श्रिया
०२०९०१६१ अध्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः
०२०९०१६३ युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन्रममाणमीश्वरम्
०२०९०१७१ तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः
०२०९०१७३ ननाम पादाम्बुजमस्य विश्वसृग्यत्पारमहंस्येन पथाधिगम्यते
०२०९०१८१ तं प्रीयमाणं समुपस्थितं कविं प्रजाविसर्गे निजशासनार्हणम्
०२०९०१८३ बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन्
०२०९०१९० श्रीभगवानुवाच
०२०९०१९१ त्वयाहं तोषितः सम्यग्वेदगर्भ सिसृक्षया
०२०९०१९३ चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम्
०२०९०२०१ वरं वरय भद्रं ते वरेशं माभिवाञ्छितम्
०२०९०२०३ ब्रह्मञ्छ्रेयःपरिश्रामः पुंसां मद्दर्शनावधिः
०२०९०२११ मनीषितानुभावोऽयं मम लोकावलोकनम्
०२०९०२१३ यदुपश्रुत्य रहसि चकर्थ परमं तपः
०२०९०२२१ प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते
०२०९०२२३ तपो मे हृदयं साक्षादात्माहं तपसोऽनघ
०२०९०२३१ सृजामि तपसैवेदं ग्रसामि तपसा पुनः
०२०९०२३३ बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः
०२०९०२४० ब्रह्मोवाच
०२०९०२४१ भगवन्सर्वभूतानामध्यक्षोऽवस्थितो गुहाम्
०२०९०२४३ वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम्
०२०९०२५१ तथापि नाथमानस्य नाथ नाथय नाथितम्
०२०९०२५३ परावरे यथा रूपेजानीयां ते त्वरूपिणः
०२०९०२६१ यथात्ममायायोगेन नानाशक्त्युपबृंहितम्
०२०९०२६३ विलुम्पन्विसृजन्गृह्णन्बिभ्रदात्मानमात्मना
०२०९०२७१ क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते
०२०९०२७३ तथा तद्विषयां धेहि मनीषां मयि माधव
०२०९०२८१ भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः
०२०९०२८३ नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात्
०२०९०२९१ यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भो जनम्

०२०९०२९३ अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदो ऽज मानिनः
०२०९०३०० श्रीभगवानुवाच
०२०९०३०१ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम्
०२०९०३०३ सरहस्यं तदङ्गं च गृहाण गदितं मया
०२०९०३११ यावानहं यथाभावो यद्रूपगुणकर्मकः
०२०९०३१३ तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्
०२०९०३२१ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्
०२०९०३२३ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्
०२०९०३३१ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि
०२०९०३३३ तद्विद्यादात्मनो मायां यथाभासो यथा तमः
०२०९०३४१ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु
०२०९०३४३ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्
०२०९०३५१ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः
०२०९०३५३ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा
०२०९०३६१ एतन्मतं समातिष्ठ परमेण समाधिना
०२०९०३६३ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्
०२०९०३७० श्रीशुक उवाच
०२०९०३७१ सम्प्रदिश्यैवमजनो जनानां परमेष्ठिनम्
०२०९०३७३ पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः
०२०९०३८१ अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः
०२०९०३८३ सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत्
०२०९०३९१ प्रजापतिर्धर्मपतिरेकदा नियमान्यमान्
०२०९०३९३ भद्रं प्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया
०२०९०४०१ तं नारदः प्रियतमो रिक्थादानामनुव्रतः
०२०९०४०३ शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च
०२०९०४११ मायां विविदिषन्विष्णोर्मायेशस्य महामुनिः
०२०९०४१३ महाभागवतो राजन्पितरं पर्यतोषयत्
०२०९०४२१ तुष्टं निशाम्य पितरं लोकानां प्रपितामहम्
०२०९०४२३ देवर्षिः परिपप्रच्छ भवान्यन्मानुपृच्छति
०२०९०४३१ तस्मा इदं भागवतं पुराणं दशलक्षणम्
०२०९०४३३ प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत्

०२०९०४४१ नारदः प्राह मुनये सरस्वत्यास्तटे नृप
०२०९०४४३ ध्यायते ब्रह्म परमं व्यासायामिततेजसे
०२०९०४५१ यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम्
०२०९०४५३ यथासीत्तदुपाख्यास्ते प्रश्नानन्यांश्च कृत्स्नशः
०२१०००१० श्रीशुक उवाच
०२१०००११ अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः
०२१०००१३ मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः
०२१०००२१ दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्
०२१०००२३ वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा
०२१०००३१ भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः
०२१०००३३ ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः
०२१०००४१ स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः
०२१०००४३ मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः
०२१०००५१ अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्
०२१०००५३ पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः
०२१०००६१ निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः
०२१०००६३ मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः
०२१०००७१ आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते
०२१०००७३ स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते
०२१०००८१ योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः
०२१०००८३ यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः
०२१०००९१ एकमेकतराभावे यदा नोपलभामहे
०२१०००९३ त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः
०२१००१०१ पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः
०२१००१०३ आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः
०२१००१११ तास्ववात्सीत्स्वसृष्टासु सहस्रं परिवत्सरान्
०२१००११३ तेन नारायणो नाम यदापः पुरुषोद्भवाः
०२१००१२१ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च
०२१००१२३ यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया
०२१००१३१ एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः
०२१००१३३ वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा

०२१००१४१ अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः
०२१००१४३ अथैकं पौरुषं वीर्यं त्रिधाभिद्यत तच्छृणु
०२१००१५१ अन्तः शरीर आकाशात्पुरुषस्य विचेष्टतः
०२१००१५३ ओजः सहो बलं जज्ञे ततः प्राणो महानसुः
०२१००१६१ अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु
०२१००१६३ अपानन्तमपानन्ति नरदेवमिवानुगाः
०२१००१७१ प्राणेनाक्षिपता क्षुत्तृडन्तरा जायते विभोः
०२१००१७३ पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत
०२१००१८१ मुखतस्तालु निर्भिन्नंजिह्वा तत्रोपजायते
०२१००१८३ ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते
०२१००१९१ विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः
०२१००१९३ जले चैतस्य सुचिरं निरोधः समजायत
०२१००२०१ नासिके निरभिद्येतां दोधूयति नभस्वति
०२१००२०३ तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः
०२१००२११ यदात्मनि निरालोकमात्मानं च दिदृक्षतः
०२१००२१३ निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः
०२१००२२१ बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः
०२१००२२३ कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः
०२१००२३१ वस्तुनो मृदुकाठिन्य लघुगुर्वोष्णशीतताम्
०२१००२३३ जिघृक्षतस्त्वङ्गिर्भिन्ना तस्यां रोममहीरुहाः
०२१००२३५ तत्र चान्तर्बहिर्वातस्त्वचा लब्धगुणो वृतः
०२१००२४१ हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया
०२१००२४३ तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम्
०२१००२५१ गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम्
०२१००२५३ पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः
०२१००२६१ निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः
०२१००२६३ उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम्
०२१००२७१ उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम्
०२१००२७३ ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः
०२१००२८१ आसिसृप्सोः पुरः पुर्या नाभिद्वारमपानतः
०२१००२८३ तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम्

०२१००२९१ आदित्सोरन्नपानानामासन्कुक्ष्यन्त्रनाडयः
०२१००२९३ नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये
०२१००३०१ निदिध्यासोरात्ममायां हृदयं निरभिद्यत
०२१००३०३ ततो मनश्चन्द्र इति सङ्कल्पः काम एव च
०२१००३११ त्वक्चर्ममांसरुधिर मेदोमज्जास्थिधातवः
०२१००३१३ भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः
०२१००३२१ गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः
०२१००३२३ मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी
०२१००३३१ एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया
०२१००३३३ मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम्
०२१००३४१ अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम्
०२१००३४३ अनादिमध्यनिधनं नित्यं वाङ्मनसः परम्
०२१००३५१ अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते
०२१००३५३ उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः
०२१००३६१ स वाच्यवाचकतया भगवान्ब्रह्मरूपधृक्
०२१००३६३ नामरूपक्रिया धत्ते सकर्माकर्मकः परः
०२१००३७१ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक्
०२१००३७३ सिद्धचारणगन्धर्वान्विद्याध्रासुरगुह्यकान्
०२१००३८१ किन्नराप्सरसो नागान्सर्पान्किम्पुरुषान्नरान्
०२१००३८३ मात्रक्षःपिशाचांश्च प्रेतभूतविनायकान्
०२१००३९१ कूष्माण्डोन्मादवेतालान्यातुधानान्ग्रहानपि
०२१००३९३ खगान्मृगान्पशून्वृक्षान्गिरीन्नृप सरीसृपान्
०२१००४०१ द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः
०२१००४०३ कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः
०२१००४११ सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः
०२१००४१३ तत्राप्येकैकशो राजन्भिद्यन्ते गतयस्त्रिधा
०२१००४१५ यदैकैकतरोऽन्याभ्यां स्वभाव उपहन्यते
०२१००४२१ स एवेदं जगद्धाता भगवान्धर्मरूपधृक्
०२१००४२३ पुष्णाति स्थापयन्विश्वं तिर्यङ्नरसुरादिभिः
०२१००४३१ ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः
०२१००४३३ सन्नियच्छति तत्काले घनानीकमिवानिलः

०२१००४४१ इत्थम्भावेन कथितो भगवान्भगवत्तमः
०२१००४४३ नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः
०२१००४५१ नास्य कर्मणि जन्मादौ परस्यानुविधीयते
०२१००४५३ कर्तृत्वप्रतिषेधार्थं माययारोपितं हि तत्
०२१००४६१ अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः
०२१००४६३ विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः
०२१००४७१ परिमाणं च कालस्य कल्पलक्षणविग्रहम्
०२१००४७३ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु
०२१००४८० शौनक उवाच
०२१००४८१ यदाह नो भवान्सूत क्षत्ता भागवतोत्तमः
०२१००४८३ चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्सुदुस्त्यजान्
०२१००४९१ क्षत्तुः कौशारवेस्तस्य संवादोऽध्यात्मसंश्रितः
०२१००४९३ यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह
०२१००५०१ ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम्
०२१००५०३ बन्धुत्यागनिमित्तं च यथैवागतवान्पुनः
०२१००५१० सूत उवाच
०२१००५११ राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः
०२१००५१३ तद्वोऽभिधास्ये शृणुत राअज्ञः प्रश्नानुसारतः
०३०१००१० श्रीशुक उवाच
०३०१००११ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल
०३०१००१२ क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत्
०३०१००२१ यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः
०३०१००२२ पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम्
०३०१००३० राजोवाच
०३०१००३१ कुत्र क्षत्तुर्भगवता मैत्रेयेणास सङ्गमः
०३०१००३२ कदा वा सहसंवाद एतद्वर्णय नः प्रभो
०३०१००४१ न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः
०३०१००४२ तस्मिन्वरीयसि प्रश्नः साधुवादोपबृंहितः
०३०१००५० सूत उवाच
०३०१००५१ स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता
०३०१००५२ प्रत्याह तं सुबहुवित्प्रीतात्मा श्रूयतामिति

०३०१००६० श्रीशुक उवाच
०३०१००६१ यदा तु राजा स्वसुतानसाधून्पुष्णन्न धर्मेण विनष्टदृष्टिः
०३०१००६२ भ्रातुर्यविष्ठस्य सुतान्विबन्धून्प्रवेश्य लाक्षाभवने ददाह
०३०१००७१ यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम्
०३०१००७२ न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि
०३०१००८१ द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनं गतस्य
०३०१००८२ न याचतोऽदात्समयेन दायं तमोजुषाणो यदजातशत्रोः
०३०१००९१ यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः
०३०१००९२ न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः
०३०१०१०१ यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन
०३०१०१०२ अथाह तन्मन्त्रदृशां वरीयान्यन्मन्त्रिणो वैदुरिकं वदन्ति
०३०१०१११ अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः
०३०१०११२ सहानुजो यत्र वृकोदराहिः श्वसन्रुषा यत्त्वमलं बिभेषि
०३०१०१२१ पार्थांस्तु देवो भगवान्मुकुन्दो गृहीतवान्सक्षितिदेवदेवः
०३०१०१२२ आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः
०३०१०१३१ स एष दोषः पुरुषद्विडास्ते गृहान्प्रविष्टो यमपत्यमत्या
०३०१०१३२ पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशैवं कुलकौशलाय
०३०१०१४१ इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण
०३०१०१४२ असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन
०३०१०१५१ क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः
०३०१०१५२ तस्मिन्प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः
०३०१०१६१ स्वयं धनुर्द्वारि निधाय मायां भ्रातुः पुरो मर्मसु ताडितोऽपि
०३०१०१६२ स इत्थमत्युल्बणकर्णबाणैर्गतव्यथोऽयादुरु मानयानः
०३०१०१७१ स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि
०३०१०१७२ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यामधिष्ठितो यानि सहस्रमूर्तिः
०३०१०१८१ पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरःसु
०३०१०१८२ अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः
०३०१०१९१ गां पर्यटन्मेध्यविविक्तवृत्तिः सदाप्लुतोऽधः शयनोऽवधूतः
०३०१०१९२ अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि
०३०१०२०१ इत्थं व्रजन्भारतमेव वर्षं कालेन यावद्गतवान्प्रभासम्
०३०१०२०२ तावच्छशास क्षितिमेक चक्रामेकातपत्रामजितेन पार्थः

०३०१०२११ तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम्
०३०१०२१२ संस्पर्धया दग्धमथानुशोचन्सरस्वतीं प्रत्यगियाय तूष्णीम्
०३०१०२२१ तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः
०३०१०२२२ तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे
०३०१०२३१ अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः
०३०१०२३२ प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात्कृष्णमनुस्मरन्ति
०३०१०२४१ ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान्कुरुजाङ्गलांश्च
०३०१०२४२ कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श
०३०१०२५१ स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम्
०३०१०२५२ आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम्
०३०१०२६१ कच्चित्पुराणौ पुरुषौ स्वनाभ्य पाद्मानुवृत्त्येह किलावतीर्णौ
०३०१०२६२ आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे
०३०१०२७१ कच्चित्कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः
०३०१०२७२ यो वै स्वस्णां पितृवद्ददाति वरान्वदान्यो वरतर्पणेन
०३०१०२८१ कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः
०३०१०२८२ यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान्स्मरमादिसर्गे
०३०१०२९१ कच्चित्सुखं सात्वतवृष्णिभोज दाशार्हकाणामधिपः स आस्ते
०३०१०२९२ यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात्
०३०१०३०१ कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः
०३०१०३०२ असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे
०३०१०३११ क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः
०३०१०३१२ लेभेऽञ्जसाधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम्
०३०१०३२१ कच्चिद्बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः
०३०१०३२२ यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः
०३०१०३३१ कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः
०३०१०३३२ या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम्
०३०१०३४१ अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः
०३०१०३४२ यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम्
०३०१०३५१ अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये
०३०१०३५२ हृदीकसत्यात्मजचारुदेष्ण गदादयः स्वस्ति चरन्ति सौम्य
०३०१०३६१ अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम्

०३०१०३६२ दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या
०३०१०३७१ किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत्
०३०१०३७२ यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम्
०३०१०३८१ कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते
०३०१०३८२ अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष
०३०१०३९१ यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव
०३०१०३९२ रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात्
०३०१०४०१ अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन
०३०१०४०२ यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः
०३०१०४११ सौम्यानुशोचे तमधःपतन्तं भ्रात्रे परेताय विदुद्रुहे यः
०३०१०४१२ निर्यापितो येन सुहृत्स्वपुर्या अहं स्वपुत्रान्समनुव्रतेन
०३०१०४२१ सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयतो विधातुः
०३०१०४२२ नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन्गतविस्मयोऽत्र
०३०१०४३१ नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः
०३०१०४३२ वधात्प्रपन्नार्तिजिहीर्षयेशोऽप्युपैक्षताघं भगवान्कुरूणाम्
०३०१०४४१ अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम्
०३०१०४४२ नन्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम्
०३०१०४५१ तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे
०३०१०४५२ अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः
०३०२००१० श्रीशुक उवाच
०३०२००११ इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम्
०३०२००१२ प्रतिवक्तुं न चोत्सेह औत्कण्ठ्यात्स्मारितेश्वरः
०३०२००२१ यः पञ्चहायनो मात्रा प्रातराशाय याचितः
०३०२००२२ तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया
०३०२००३१ स कथं सेवया तस्य कालेन जरसं गतः
०३०२००३२ पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन्
०३०२००४१ स मुहूर्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम्
०३०२००४२ तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः
०३०२००५१ पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशा शुचः
०३०२००५२ पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसम्प्लुतः
०३०२००६१ शनकैर्भगवल्लोकान्नृलोकं पुनरागतः

०३०२००६२ विमृज्य नेत्रे विदुरं प्रीत्याहोद्धव उत्स्मयन्
०३०२००७० उद्धव उवाच
०३०२००७१ कृष्णद्युमणि निम्लोचे गीर्णेष्वजगरेण ह
०३०२००७२ किं नु नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम्
०३०२००८१ दुर्भगो बत लोकोऽयं यदवो नितरामपि
०३०२००८२ ये संवसन्तो न विदुर्हरिं मीना इवोडुपम्
०३०२००९१ इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः
०३०२००९२ सात्वतामृषभं सर्वे भूतावासममंसत
०३०२०१०१ देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः
०३०२०१०२ भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ
०३०२०१११ प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्
०३०२०११२ आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम्
०३०२०१२१ यन्मर्त्यलीलौपयिकं स्वयोग मायाबलं दर्शयता गृहीतम्
०३०२०१२२ विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम्
०३०२०१३१ यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः
०३०२०१३२ कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत
०३०२०१४१ यस्यानुरागप्लुतहासरास लीलावलोकप्रतिलब्धमानाः
०३०२०१४२ व्रजस्त्रियो दृग्भिरनुप्रवृत्त धियोऽवतस्थुः किल कृत्यशेषाः
०३०२०१५१ स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा
०३०२०१५२ परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान्यथाग्निः
०३०२०१६१ मां खेदयत्येतदजस्य जन्म विडम्बनं यद्वसुदेवगेहे
०३०२०१६२ व्रजे च वासोऽरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः
०३०२०१७१ दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवन्द्य पित्रोः
०३०२०१७२ ताताम्ब कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम्
०३०२०१८१ को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान्विजिघ्रन्
०३०२०१८२ यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार
०३०२०१९१ दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः
०३०२०१९२ यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत
०३०२०२०१ तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम्
०३०२०२०२ नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूतः पदमापुरस्य
०३०२०२११ स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः

०३०२०२१२ बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्येडितपादपीठः
०३०२०२२१ तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम्
०३०२०२२२ तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति
०३०२०२३१ अहो बकी यं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी
०३०२०२३२ लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम
०३०२०२४१ मन्येऽसुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्
०३०२०२४२ ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसे सुनाभायुधमापतन्तम्
०३०२०२५१ वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने
०३०२०२५२ चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः
०३०२०२६१ ततो नन्दव्रजमितः पित्रा कंसाद्विबिभ्यता
०३०२०२६२ एकादश समास्तत्र गूढार्चिः सबलोऽवसत्
०३०२०२७१ परीतो वत्सपैर्वत्सांश्चारयन्व्यहरद्विभुः
०३०२०२७२ यमुनोपवने कूजद् द्विजसङ्कुलिताङ्घ्रिपे
०३०२०२८१ कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम्
०३०२०२८२ रुदन्निव हसन्मुग्ध बालसिंहावलोकनः
०३०२०२९१ स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम्
०३०२०२९२ चारयन्ननुगान्गोपान्रणद्वेणुररीरमत्
०३०२०३०१ प्रयुक्तान्भोजराजेन मायिनः कामरूपिणः
०३०२०३०२ लीलया व्यनुदत्तांस्तान्बालः क्रीडनकानिव
०३०२०३११ विपन्नान्विषपानेन निगृह्य भुजगाधिपम्
०३०२०३१२ उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितम्
०३०२०३२१ अयाजयद्गोसवेन गोपराजं द्विजोत्तमैः
०३०२०३२२ वित्तस्य चोरुभारस्य चिकीर्षन्सद्व्ययं विभुः
०३०२०३३१ वर्षतीन्द्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः
०३०२०३३२ गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता
०३०२०३४१ शरच्छशिकरैर्मृष्टं मानयन्रजनीमुखम्
०३०२०३४२ गायन्कलपदं रेमे स्त्रीणां मण्डलमण्डनः
०३०३००१० उद्धव उवाच
०३०३००११ ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः
०३०३००१२ निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम्
०३०३००२१ सान्दीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्तरम्

०३०३००२२ तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात्
०३०३००३१ समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बुभूषयैषाम्
०३०३००३२ गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः
०३०३००४१ ककुद्मिनोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह
०३०३००४२ तद्भग्नमानानपि गृध्यतोऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः
०३०३००५१ प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद्द्युतरुं यदर्थे
०३०३००५२ वज्र्याद्रवत्तं सगणो रुषान्धः क्रीडामृगो नूनमयं वधूनाम्
०३०३००६१ सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या
०३०३००६२ आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तःपुरमाविवेश
०३०३००७१ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम्
०३०३००७२ उत्थाय सद्यो जगृहुः प्रहर्ष व्रीडानुरागप्रहितावलोकैः
०३०३००८१ आसां मुहूर्त एकस्मिन्नानागारेषु योषिताम्
०३०३००८२ सविधं जगृहे पाणीननुरूपः स्वमायया
०३०३००९१ तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः
०३०३००९२ एकैकस्यां दश दश प्रकृतेर्विबुभूषया
०३०३०१०१ कालमागधशाल्वादीननीकै रुन्धतः पुरम्
०३०३०१०२ अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत्
०३०३०१११ शम्बरं द्विविदं बाणं मुरं बल्वलमेव च
०३०३०११२ अन्यांश्च दन्तवक्रादीनवधीत्कांश्च घातयत्
०३०३०१२१ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान्
०३०३०१२२ चचाल भूः कुरुक्षेत्रं येषामापततां बलैः
०३०३०१३१ स कर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम्
०३०३०१३२ सुयोधनं सानुचरं शयानं भग्नोरुमूर्व्यां न ननन्द पश्यन्
०३०३०१४१ कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः
०३०३०१४२ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम्
०३०३०१५१ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम्
०३०३०१५२ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म
०३०३०१६१ एवं सञ्चिन्त्य भगवान्स्वराज्ये स्थाप्य धर्मजम्
०३०३०१६२ नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन्
०३०३०१७१ उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना
०३०३०१७२ स वै द्रौण्यस्त्रसम्प्लुष्टः पुनर्भगवता धृतः

०३०३०१८१ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः
०३०३०१८२ सोऽपि क्ष्मामनुजै रक्षन्रेमे कृष्णमनुव्रतः
०३०३०१९१ भगवानपि विश्वात्मा लोकवेदपथानुगः
०३०३०१९२ कामान्सिषेवे द्वार्वत्यामसक्तः साङ्ख्यमास्थितः
०३०३०२०१ स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया
०३०३०२०२ चरित्रेणानवद्येन श्रीनिकेतेन चात्मना
०३०३०२११ इमं लोकममुं चैव रमयन्सुतरां यदून्
०३०३०२१२ रेमे क्षणदया दत्त क्षणस्त्रीक्षणसौहृदः
०३०३०२२१ तस्यैवं रममाणस्य संवत्सरगणान्बहून्
०३०३०२२२ गृहमेधेषु योगेषु विरागः समजायत
०३०३०२३१ दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान्
०३०३०२३२ को विश्रम्भेत योगेन योगेश्वरमनुव्रतः
०३०३०२४१ पुर्यां कदाचित्क्रीडद्भिर्यदुभोजकुमारकैः
०३०३०२४२ कोपिता मुनयः शेपुर्भगवन्मतकोविदाः
०३०३०२५१ ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः
०३०३०२५२ ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः
०३०३०२६१ तत्र स्नात्वा पितृ्देवानृषींश्चैव तदम्भसा
०३०३०२६२ तर्पयित्वाथ विप्रेभ्यो गावो बहुगुणा ददुः
०३०३०२७१ हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान्
०३०३०२७२ यानं रथानिभान्कन्या धरां वृत्तिकरीमपि
०३०३०२८१ अन्नं चोरुरसं तेभ्यो दत्त्वा भगवदर्पणम्
०३०३०२८२ गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः
०३०४००१० उद्धव उवाच
०३०४००११ अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम्
०३०४००१२ तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः
०३०४००२१ तेषां मैरेयदोषेण विषमीकृतचेतसाम्
०३०४००२२ निम्लोचति रवावासीद्वेणूनामिव मर्दनम्
०३०४००३१ भगवान्स्वात्ममायाया गतिं तामवलोक्य सः
०३०४००३१ सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत्
०३०४००४१ अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह
०३०४००४२ बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा

०३०४००५१ तथापि तदभिप्रेतं जानन्नहमरिन्दम
०३०४००५२ पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः
०३०४००६१ अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिम्
०३०४००६२ श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम्
०३०४००७१ श्यामावदातं विरजं प्रशान्तारुणलोचनम्
०३०४००७२ दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च
०३०४००८१ वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम्
०३०४००८२ अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम्
०३०४००९१ तस्मिन्महाभागवतो द्वैपायनसुहृत्सखा
०३०४००९२ लोकाननुचरन्सिद्ध आससाद यदृच्छया
०३०४०१०१ तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभावानतकन्धरस्य
०३०४०१०२ आशृण्वतो मामनुरागहास समीक्षया विश्रमयन्नुवाच
०३०४०११० श्रीभगवानुवाच
०३०४०१११ वेदाहमन्तर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः
०३०४०११२ सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः
०३०४०१२१ स एष साधो चरमो भवानामासादितस्ते मदनुग्रहो यत्
०३०४०१२२ यन्मां नृलोकान्रह उत्सृजन्तं दिष्ट्या ददृश्वान्विशदानुवृत्त्या
०३०४०१३१ पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे
०३०४०१३२ ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति
०३०४०१४१ इत्यादृतोक्तः परमस्य पुंसः प्रतिक्षणानुग्रहभाजनोऽहम्
०३०४०१४२ स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चञ्छुचः प्राञ्जलिराबभाषे
०३०४०१५१ को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह
०३०४०१५२ तथापि नाहं प्रवृणोमि भूमन्भवत्पदाम्भोजनिषेवणोत्सुकः
०३०४०१६१ कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात्पलायनम्
०३०४०१६२ कालात्मनो यत्प्रमदायुताश्रमः स्वात्मन्रतेः खिद्यति धीर्विदामिह
०३०४०१७१ मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः
०३०४०१७२ पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव
०३०४०१८१ ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान्समग्रम्
०३०४०१८२ अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद्वृजिनं तरेम
०३०४०१९१ इत्यावेदितहार्दाय मह्यं स भगवान्परः
०३०४०१९२ आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम्

०३०४०२०१ स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः
०३०४०२०२ प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा
०३०४०२११ सोऽहं तद्दर्शनाह्लाद वियोगार्तियुतः प्रभो
०३०४०२१२ गमिष्ये दयितं तस्य बदर्याश्रममण्डलम्
०३०४०२२१ यत्र नारायणो देवो नरश्च भगवानृषिः
०३०४०२२२ मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ
०३०४०२३० श्रीशुक उवाच
०३०४०२३१ इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम्
०३०४०२३२ ज्ञानेनाशमयत्क्षत्ता शोकमुत्पतितं बुधः
०३०४०२४१ स तं महाभागवतं व्रजन्तं कौरवर्षभः
०३०४०२४२ विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे
०३०४०२५० विदुर उवाच
०३०४०२५१ ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते
०३०४०२५२ वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति
०३०४०२६० उद्धव उवाच
०३०४०२६१ ननु ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्तिके
०३०४०२६२ साक्षाद्भगवतादिष्टो मर्त्यलोकं जिहासता
०३०४०२७० श्रीशुक उवाच
०३०४०२७१ इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः
०३०४०२७२ क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात्
०३०४०२८० राजोवाच
०३०४०२८१ निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः
०३०४०२८२ स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः
०३०४०२९० श्रीशुक उवाच
०३०४०२९१ ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः
०३०४०२९२ संहृत्य स्वकुलं स्फीतं त्यक्ष्यन्देहमचिन्तयत्
०३०४०३०१ अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम्
०३०४०३०२ अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां वरः
०३०४०३११ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः
०३०४०३१२ अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु
०३०४०३२१ एवं त्रिलोकगुरुणा सन्दिष्टः शब्दयोनिना

०३०४०३२२ बदर्याश्रममासाद्य हरिमीजे समाधिना
०३०४०३३१ विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः
०३०४०३३२ क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च
०३०४०३४१ देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम्
०३०४०३४२ अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम्
०३०४०३५१ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम्
०३०४०३५२ ध्यायन्गते भागवते रुरोद प्रेमविह्वलः
०३०४०३६१ कालिन्द्याः कतिभिः सिद्ध अहोभिर्भरतर्षभ
०३०४०३६२ प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः
०३०५००१० श्रीशुक उवाच
०३०५००११ द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम्
०३०५००१२ क्षत्तोपसृत्याच्युतभावसिद्धः पप्रच्छ सौशील्यगुणाभितृप्तः
०३०५००२० विदुर उवाच
०३०५००२१ सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा
०३०५००२२ विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः
०३०५००३१ जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य
०३०५००३२ अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य
०३०५००४१ तत्साधुवर्यादिश वर्त्म शं नः संराधितो भगवान्येन पुंसाम्
०३०५००४२ हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम्
०३०५००५१ करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः
०३०५००५२ यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते
०३०५००६१ यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः
०३०५००६२ योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत्
०३०५००७१ क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः
०३०५००७२ मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि
०३०५००८१ यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान्सह लोकपालान्
०३०५००८२ अचीक्लृपद्यत्र हि सर्वसत्त्व निकायभेदोऽधिकृतः प्रतीतः
०३०५००९१ येन प्रजानामुत आत्मकर्म रूपाभिधानां च भिदां व्यधत्त
०३०५००९२ नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य
०३०५०१०१ परावरेषां भगवन्व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम्
०३०५०१०२ अतृप्नुम क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात्

०३०५०१११ कस्तृप्नुयात्तीर्थपदोऽभिधानात्सत्रेषु वः सूरिभिरीड्यमानात्
०३०५०११२ यः कर्णनाडीं पुरुषस्य यातो भवप्रदां गेहरतिं छिनत्ति
०३०५०१२१ मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः
०३०५०१२२ यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम्
०३०५०१३१ सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः
०३०५०१३२ हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्ययमाशु धत्ते
०३०५०१४१ ताञ्छोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन
०३०५०१४२ क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम्
०३०५०१५१ तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम्
०३०५०१५२ उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः
०३०५०१६१ स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः
०३०५०१६२ चकार कर्माण्यतिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम्
०३०५०१७० श्रीशुक उवाच
०३०५०१७१ स एवं भगवान्पृष्टः क्षत्त्रा कौषारवो मुनिः
०३०५०१७२ पुंसां निःश्रेयसार्थेन तमाह बहुमानयन्
०३०५०१८० मैत्रेय उवाच
०३०५०१८१ साधु पृष्टं त्वया साधो लोकान्साध्वनुगृह्णता
०३०५०१८२ कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः
०३०५०१९१ नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे
०३०५०१९२ गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः
०३०५०२०१ माण्डव्यशापाद्भगवान्प्रजासंयमनो यमः
०३०५०२०२ भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात्
०३०५०२११ भवान्भगवतो नित्यं सम्मतः सानुगस्य ह
०३०५०२१२ यस्य ज्ञानोपदेशाय मादिशद्भगवान्व्रजन्
०३०५०२२१ अथ ते भगवल्लीला योगमायोरुबृंहिताः
०३०५०२२२ विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः
०३०५०२३१ भगवानेक आसेदमग्र आत्मात्मनां विभुः
०३०५०२३२ आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः
०३०५०२४१ स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट्
०३०५०२४२ मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक्
०३०५०२५१ सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका

०३०५०२५२ माया नाम महाभाग ययेदं निर्ममे विभुः
०३०५०२६१ कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः
०३०५०२६२ पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्
०३०५०२७१ ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात्
०३०५०२७२ विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः
०३०५०२८१ सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः
०३०५०२८२ आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया
०३०५०२९१ महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत
०३०५०२९२ कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः
०३०५०३०१ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा
०३०५०३०२ अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्
०३०५०३०३ वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः
०३०५०३११ तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च
०३०५०३१२ तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः
०३०५०३२१ कालमायांशयोगेन भगवद्वीक्षितं नभः
०३०५०३२२ नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम्
०३०५०३३१ अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः
०३०५०३३२ ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम्
०३०५०३४१ अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम्
०३०५०३४२ आधत्ताम्भो रसमयं कालमायांशयोगतः
०३०५०३५१ ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितम्
०३०५०३५२ महीं गन्धगुणामाधात्कालमायांशयोगतः
०३०५०३६१ भूतानां नभआदीनां यद्यद्भव्यावरावरम्
०३०५०३६२ तेषां परानुसंसर्गाद्यथा सङ्ख्यं गुणान्विदुः
०३०५०३७१ एते देवाः कला विष्णोः कालमायांशलिङ्गिनः
०३०५०३७२ नानात्वात्स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम्
०३०५०३८० देवा ऊचुः
०३०५०३८१ नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम्
०३०५०३८२ यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति
०३०५०३९१ धातर्यदस्मिन्भव ईश जीवास्तापत्रयेणाभिहता न शर्म
०३०५०३९२ आत्मन्लभन्ते भगवंस्तवाङ्घ्रि च्छायां सविद्यामत आश्रयेम

०३०५०४०१ मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते
०३०५०४०२ यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः
०३०५०४११ यच्छ्रद्धया श्रुतवत्या च भक्त्या सम्मृज्यमाने हृदयेऽवधाय
०३०५०४१२ ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम्
०३०५०४२१ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते
०३०५०४२२ व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम्
०३०५०४३१ यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम्
०३०५०४३२ पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम्
०३०५०४४१ तान्वै ह्यसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश
०३०५०४४२ अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः
०३०५०४५१ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये
०३०५०४५२ वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम्
०३०५०४६१ तथापरे चात्मसमाधियोग बलेन जित्वा प्रकृतिं बलिष्ठाम्
०३०५०४६२ त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते
०३०५०४७१ तत्ते वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म
०३०५०४७२ सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे ते
०३०५०४८१ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र
०३०५०४८२ यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः
०३०५०४९१ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः
०३०५०४९२ त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः
०३०५०५०१ ततो वयं मत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते
०३०५०५०२ त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहाणाम्
०३०६००१० ऋषिरुवाच
०३०६००११ इति तासां स्वशक्तीनां सतीनामसमेत्य सः
०३०६००१२ प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः
०३०६००२१ कालसञ्ज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः
०३०६००२२ त्रयोविंशति तत्त्वानां गणं युगपदाविशत्
०३०६००३१ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम्
०३०६००३२ भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन्
०३०६००४१ प्रबुद्धकर्म दैवेन त्रयोविंशतिको गणः
०३०६००४२ प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषम्

०३०६००५१ परेण विशता स्वस्मिन्मात्रया विश्वसृग्गणः
०३०६००५२ चुक्षोभान्योन्यमासाद्य यस्मिन्लोकाश्चराचराः
०३०६००६१ हिरण्मयः स पुरुषः सहस्रपरिवत्सरान्
०३०६००६२ आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः
०३०६००७१ स वै विश्वसृजां गर्भो देवकर्मात्मशक्तिमान्
०३०६००७२ विबभाजात्मनात्मानमेकधा दशधा त्रिधा
०३०६००८१ एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः
०३०६००८२ आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते
०३०६००९१ साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा
०३०६००९२ विराट्प्राणो दशविध एकधा हृदयेन च
०३०६०१०१ स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः
०३०६०१०२ विराजमतपत्स्वेन तेजसैषां विवृत्तये
०३०६०१११ अथ तस्याभितप्तस्य कतिधायतनानि ह
०३०६०११२ निरभिद्यन्त देवानां तानि मे गदतः श‍ृणु
०३०६०१२१ तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम्
०३०६०१२२ वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यते
०३०६०१३१ निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः
०३०६०१३२ जिह्वयांशेन च रसं ययासौ प्रतिपद्यते
०३०६०१४१ निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम्
०३०६०१४२ घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत्
०३०६०१५१ निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशद्विभोः
०३०६०१५२ चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत्
०३०६०१६१ निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत्
०३०६०१६२ प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते
०३०६०१७१ कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः
०३०६०१७२ श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते
०३०६०१८१ त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः
०३०६०१८२ अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते
०३०६०१९१ मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत्
०३०६०१९२ रेतसांशेन येनासावानन्दं प्रतिपद्यते
०३०६०२०१ गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत्

०३०६०२०२ पायुनांशेन येनासौ विसर्गं प्रतिपद्यते
०३०६०२११ हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिराविशत्
०३०६०२१२ वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते
०३०६०२२१ पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत्
०३०६०२२२ गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते
०३०६०२३१ बुद्धिं चास्य विनिर्भिन्नां वागीशो धिष्ण्यमाविशत्
०३०६०२३२ बोधेनांशेन बोद्धव्यम्प्रतिपत्तिर्यतो भवेत्
०३०६०२४१ हृदयं चास्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत्
०३०६०२४२ मनसांशेन येनासौ विक्रियां प्रतिपद्यते
०३०६०२५१ आत्मानं चास्य निर्भिन्नमभिमानोऽविशत्पदम्
०३०६०२५२ कर्मणांशेन येनासौ कर्तव्यं प्रतिपद्यते
०३०६०२६१ सत्त्वं चास्य विनिर्भिन्नं महान्धिष्ण्यमुपाविशत्
०३०६०२६२ चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते
०३०६०२७१ शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत
०३०६०२७२ गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः
०३०६०२८१ आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे
०३०६०२८२ धरां रजःस्वभावेन पणयो ये च ताननु
०३०६०२९१ तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः
०३०६०२९२ उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः
०३०६०३०१ मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह
०३०६०३०२ यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः
०३०६०३११ बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः
०३०६०३१२ यो जातस्त्रायते वर्णान्पौरुषः कण्टकक्षतात्
०३०६०३२१ विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः
०३०६०३२२ वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत्
०३०६०३३१ पद्भ्यां भगवतो जज्ञे शुश्रूषा धर्मसिद्धये
०३०६०३३२ तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः
०३०६०३४१ एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम्
०३०६०३४२ श्रद्धयात्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः
०३०६०३५१ एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः
०३०६०३५२ कः श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम्

०३०६०३६१ तथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम्
०३०६०३६२ कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधासतीम्
०३०६०३७१ एकान्तलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः
०३०६०३७२ श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसम्प्रयोगम्
०३०६०३८१ आत्मनोऽवसितो वत्स महिमा कविनादिना
०३०६०३८२ संवत्सरसहस्रान्ते धिया योगविपक्वया
०३०६०३९१ अतो भगवतो माया मायिनामपि मोहिनी
०३०६०३९२ यत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे
०३०६०४०१ यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह
०३०६०४०२ अहं चान्य इमे देवास्तस्मै भगवते नमः
०३०७००१० श्रीशुक उवाच
०३०७००११ एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः
०३०७००१२ प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत
०३०७००२० विदुर उवाच
०३०७००२१ ब्रह्मन्कथं भगवतश्चिन्मात्रस्याविकारिणः
०३०७००२२ लीलया चापि युज्येरन्निर्गुणस्य गुणाः क्रियाः
०३०७००३१ क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषान्यतः
०३०७००३२ स्वतस्तृप्तस्य च कथं निवृत्तस्य सदान्यतः
०३०७००४१ अस्राक्षीद्भगवान्विश्वं गुणमय्यात्ममायया
०३०७००४२ तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति
०३०७००५१ देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः
०३०७००५२ अविलुप्तावबोधात्मा स युज्येताजया कथम्
०३०७००६१ भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः
०३०७००६२ अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः
०३०७००७१ एतस्मिन्मे मनो विद्वन्खिद्यतेऽज्ञानसङ्कटे
०३०७००७२ तन्नः पराणुद विभो कश्मलं मानसं महत्
०३०७००८० श्रीशुक उवाच
०३०७००८१ स इत्थं चोदितः क्षत्रा तत्त्वजिज्ञासुना मुनिः
०३०७००८२ प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः
०३०७००९० मैत्रेय उवाच
०३०७००९१ सेयं भगवतो माया यन्नयेन विरुध्यते

०३०७००९२ ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्
०३०७०१०१ यदर्थेन विनामुष्य पुंस आत्मविपर्ययः
०३०७०१०२ प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः
०३०७०१११ यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः
०३०७०११२ दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः
०३०७०१२१ स वै निवृत्तिधर्मेण वासुदेवानुकम्पया
०३०७०१२२ भगवद्भक्तियोगेन तिरोधत्ते शनैरिह
०३०७०१३१ यदेन्द्रियोपरामोऽथ द्रष्ट्रात्मनि परे हरौ
०३०७०१३२ विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः
०३०७०१४१ अशेषसङ्क्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः
०३०७०१४२ किं वा पुनस्तच्चरणारविन्द परागसेवारतिरात्मलब्धा
०३०७०१५० विदुर उवाच
०३०७०१५१ सञ्छिन्नः संशयो मह्यं तव सूक्तासिना विभो
०३०७०१५२ उभयत्रापि भगवन्मनो मे सम्प्रधावति
०३०७०१६१ साध्वेतद्व्याहृतं विद्वन्नात्ममायायनं हरेः
०३०७०१६२ आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः
०३०७०१७१ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः
०३०७०१७२ तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः
०३०७०१८१ अर्थाभावं विनिश्चित्य प्रतीतस्यापि नात्मनः
०३०७०१८२ तां चापि युष्मच्चरण सेवयाहं पराणुदे
०३०७०१९१ यत्सेवया भगवतः कूटस्थस्य मधुद्विषः
०३०७०१९२ रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः
०३०७०२०१ दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु
०३०७०२०२ यत्रोपगीयते नित्यं देवदेवो जनार्दनः
०३०७०२११ सृष्ट्वाग्रे महदादीनि सविकाराण्यनुक्रमात्
०३०७०२१२ तेभ्यो विराजमुद्धृत्य तमनु प्राविशद्विभुः
०३०७०२२१ यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम्
०३०७०२२२ यत्र विश्व इमे लोकाः सविकाशं त आसते
०३०७०२३१ यस्मिन्दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत्
०३०७०२३२ त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः
०३०७०२४१ यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः

०३०७०२४२ प्रजा विचित्राकृतय आसन्याभिरिदं ततम्
०३०७०२५१ प्रजापतीनां स पतिश्चक्लृपे कान्प्रजापतीन्
०३०७०२५२ सर्गांश्चैवानुसर्गांश्च मनून्मन्वन्तराधिपान्
०३०७०२६१ एतेषामपि वेदांश्च वंशानुचरितानि च
०३०७०२६२ उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते
०३०७०२७१ तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय
०३०७०२७२ तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम्
०३०७०२७३ वद नः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम्
०३०७०२८१ गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम्
०३०७०२८२ सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम्
०३०७०२९१ वर्णाश्रमविभागांश्च रूपशीलस्वभावतः
०३०७०२९२ ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम्
०३०७०३०१ यज्ञस्य च वितानानि योगस्य च पथः प्रभो
०३०७०३०२ नैष्कर्म्यस्य च साङ्ख्यस्य तन्त्रं वा भगवत्स्मृतम्
०३०७०३११ पाषण्डपथवैषम्यं प्रतिलोमनिवेशनम्
०३०७०३१२ जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः
०३०७०३२१ धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः
०३०७०३२२ वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक्
०३०७०३३१ श्राद्धस्य च विधिं ब्रह्मन्पितॄणां सर्गमेव च
०३०७०३३२ ग्रहनक्षत्रताराणां कालावयवसंस्थितिम्
०३०७०३४१ दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम्
०३०७०३४२ प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि
०३०७०३५१ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः
०३०७०३५२ सम्प्रसीदति वा येषामेतदाख्याहि मेऽनघ
०३०७०३६१ अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम
०३०७०३६२ अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः
०३०७०३७१ तत्त्वानां भगवंस्तेषां कतिधा प्रतिसङ्क्रमः
०३०७०३७२ तत्रेमं क उपासीरन्क उ स्विदनुशेरते
०३०७०३८१ पुरुषस्य च संस्थानं स्वरूपं वा परस्य च
०३०७०३८२ ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम्
०३०७०३९१ निमित्तानि च तस्येह प्रोक्तान्यनघसूरिभिः

०३०७०३९२ स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा
०३०७०४०१ एतान्मे पृच्छतः प्रश्नान्हरेः कर्मविवित्सया
०३०७०४०२ ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः
०३०७०४११ सर्वे वेदाश्च यज्ञाश्च तपो दानानि चानघ
०३०७०४१२ जीवाभयप्रदानस्य न कुर्वीरन्कलामपि
०३०७०४२० श्रीशुक उवाच
०३०७०४२१ स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः
०३०७०४२२ प्रवृद्धहर्षो भगवत्कथायां सञ्चोदितस्तं प्रहसन्निवाह
०३०८००१० मैत्रेय उवाच
०३०८००११ सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः
०३०८००१२ बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम्
०३०८००२१ सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य
०३०८००२२ प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः
०३०८००३१ आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठसत्त्वम्
०३०८००३२ विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन्
०३०८००४१ स्वमेव धिष्ण्यं बहु मानयन्तं यद्वासुदेवाभिधमामनन्ति
०३०८००४२ प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय
०३०८००५१ स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम्
०३०८००५२ पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्थाः
०३०८००६१ मुहुर्गृणन्तो वचसानुराग स्खलत्पदेनास्य कृतानि तज्ज्ञाः
०३०८००६२ किरीटसाहस्रमणिप्रवेक प्रद्योतितोद्दामफणासहस्रम्
०३०८००७१ प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन
०३०८००७२ सनत्कुमाराय स चाह पृष्टः साङ्ख्यायनायाङ्ग धृतव्रताय
०३०८००८१ साङ्ख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः
०३०८००८२ जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च
०३०८००९१ प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम्
०३०८००९२ सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय
०३०८०१०१ उदाप्लुतं विश्वमिदं तदासीद्यन्निद्रयामीलितदृङ्न्यमीलयत्
०३०८०१०२ अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः
०३०८०१११ सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः
०३०८०११२ उवास तस्मिन्सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्यः

०३०८०१२१ चतुर्युगानां च सहस्रमप्सु स्वपन्स्वयोदीरितया स्वशक्त्या
०३०८०१२२ कालाख्ययासादितकर्मतन्त्रो लोकानपीतान्ददृशे स्वदेहे
०३०८०१३१ तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान्
०३०८०१३२ गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभिद्यत नाभिदेशात्
०३०८०१४१ स पद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधनेन
०३०८०१४२ स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः
०३०८०१५१ तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम्
०३०८०१५२ तस्मिन्स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत्
०३०८०१६१ तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः
०३०८०१६२ परिक्रमन्व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि
०३०८०१७१ तस्माद्युगान्तश्वसनावघूर्ण जलोर्मिचक्रात्सलिलाद्विरूढम्
०३०८०१७२ उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाविददादिदेवः
०३०८०१८१ क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाब्जमनन्यदप्सु
०३०८०१८२ अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सता नु भाव्यम्
०३०८०१९१ स इत्थमुद्वीक्ष्य तदब्जनाल नाडीभिरन्तर्जलमाविवेश
०३०८०१९२ नार्वाग्गतस्तत्खरनालनाल नाभिं विचिन्वंस्तदविन्दताजः
०३०८०२०१ तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः
०३०८०२०२ यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः
०३०८०२११ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः
०३०८०२१२ शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः
०३०८०२२१ कालेन सोऽजः पुरुषायुषाभि प्रवृत्तयोगेन विरूढबोधः
०३०८०२२२ स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम्
०३०८०२३१ मृणालगौरायतशेषभोग पर्यङ्क एकं पुरुषं शयानम्
०३०८०२३२ फणातपत्रायुतमूर्धरत्न द्युभिर्हतध्वान्तयुगान्ततोये
०३०८०२४१ प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः
०३०८०२४२ रत्नोदधारौषधिसौमनस्य वनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः
०३०८०२५१ आयामतो विस्तरतः स्वमान देहेन लोकत्रयसङ्ग्रहेण
०३०८०२५२ विचित्रदिव्याभरणांशुकानां कृतश्रियापाश्रितवेषदेहम्
०३०८०२६१ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम्
०३०८०२६२ प्रदर्शयन्तं कृपया नखेन्दु मयूखभिन्नाङ्गुलिचारुपत्रम्
०३०८०२७१ मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन

०३०८०२७२ शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा
०३०८०२८१ कदम्बकिञ्जल्कपिशङ्गवाससा स्वलङ्कृतं मेखलया नितम्बे
०३०८०२८२ हारेण चानन्तधनेन वत्स श्रीवत्सवक्षःस्थलवल्लभेन
०३०८०२९१ परार्ध्यकेयूरमणिप्रवेक पर्यस्तदोर्दण्डसहस्रशाखम्
०३०८०२९२ अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम्
०३०८०३०१ चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम्
०३०८०३०२ किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम्
०३०८०३११ निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम्
०३०८०३१२ सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम्
०३०८०३२१ तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च
०३०८०३२२ ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः
०३०८०३३१ स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा
०३०८०३३२ अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा
०३०९००१० ब्रह्मोवाच
०३०९००११ ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां
०३०९००१२ न ज्ञायते भगवतो गतिरित्यवद्यम्
०३०९००१३ नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं
०३०९००१४ मायागुणव्यतिकराद्यदुरुर्विभासि
०३०९००२१ रूपं यदेतदवबोधरसोदयेन
०३०९००२२ शश्वन्निवृत्ततमसः सदनुग्रहाय
०३०९००२३ आदौ गृहीतमवतारशतैकबीजं
०३०९००२४ यन्नाभिपद्मभवनादहमाविरासम्
०३०९००३१ नातः परं परम यद्भवतः स्वरूपम्
०३०९००३२ आनन्दमात्रमविकल्पमविद्धवर्चः
०३०९००३३ पश्यामि विश्वसृजमेकमविश्वमात्मन्
०३०९००३४ भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि
०३०९००४१ तद्वा इदं भुवनमङ्गल मङ्गलाय
०३०९००४२ ध्याने स्म नो दर्शितं त उपासकानाम्
०३०९००४३ तस्मै नमो भगवतेऽनुविधेम तुभ्यं
०३०९००४४ योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः
०३०९००५१ ये तु त्वदीयचरणाम्बुजकोशगन्धं

०३०९०० ५२ जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्
०३०९००५३ भक्त्या गृहीतचरणः परया च तेषां
०३०९००५४ नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम्
०३०९००६१ तावद्भयं द्रविणदेहसुहृन्निमित्तं
०३०९००६२ शोकः स्पृहा परिभवो विपुलश्च लोभः
०३०९००६३ तावन्ममेत्यसदवग्रह आर्तिमूलं
०३०९००६४ यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः
०३०९००७१ दैवेन ते हतधियो भवतः प्रसङ्गात्
०३०९००७२ सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये
०३०९००७३ कुर्वन्ति कामसुखलेशलवाय दीना
०३०९००७४ लोभाभिभूतमनसोऽकुशलानि शश्वत्
०३०९००८१ क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः
०३०९००८२ शीतोष्णवातवरषैरितरेतराच्च
०३०९००८३ कामाग्निनाच्युतरुषा च सुदुर्भरेण
०३०९००८४ सम्पश्यतो मन उरुक्रम सीदते मे
०३०९००९१ यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थ
०३०९००९२ मायाबलं भगवतो जन ईश पश्येत्
०३०९००९३ तावन्न संसृतिरसौ प्रतिसङ्क्रमेत
०३०९००९४ व्यर्थापि दुःखनिवहं वहती क्रियार्था
०३०९०१०१ अह्न्यापृतार्तकरणा निशि निःशयाना
०३०९०१०२ नानामनोरथधिया क्षणभग्ननिद्राः
०३०९०१०३ दैवाहतार्थरचना ऋषयोऽपि देव
०३०९०१०४ युष्मत्प्रसङ्गविमुखा इह संसरन्ति
०३०९०१११ त्वं भक्तियोगपरिभावितहृत्सरोज
०३०९०११२ आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम्
०३०९०११३ यद्यद्धिया त उरुगाय विभावयन्ति
०३०९०११४ तत्तद्वपुः प्रणयसे सदनुग्रहाय
०३०९०१२१ नातिप्रसीदति तथोपचितोपचारैर्
०३०९०१२२ आराधितः सुरगणैर्हृदि बद्धकामैः
०३०९०१२३ यत्सर्वभूतदययासदलभ्ययैको
०३०९०१२४ नानाजनेष्ववहितः सुहृदन्तरात्मा

०३०९०१३१ पुंसामतो विविधकर्मभिरध्वराद्यैर्
०३०९०१३२ दानेन चोग्रतपसा परिचर्यया च
०३०९०१३३ आराधनं भगवतस्तव सत्क्रियार्थो
०३०९०१३४ धर्मोऽर्पितः कर्हिचिद्म्रियते न यत्र
०३०९०१४१ शश्वत्स्वरूपमहसैव निपीतभेद
०३०९०१४२ मोहाय बोधधिषणाय नमः परस्मै
०३०९०१४३ विश्वोद्भवस्थितिलयेषु निमित्तलीला
०३०९०१४४ रासाय ते नम इदं चकृमेश्वराय
०३०९०१५१ यस्यावतारगुणकर्मविडम्बनानि
०३०९०१५२ नामानि येऽसुविगमे विवशा गृणन्ति
०३०९०१५३ तेऽनैकजन्मशमलं सहसैव हित्वा
०३०९०१५४ संयान्त्यपावृतामृतं तमजं प्रपद्ये
०३०९०१६१ यो वा अहं च गिरिशश्च विभुः स्वयं च
०३०९०१६२ स्थित्युद्भवप्रलयहेतव आत्ममूलम्
०३०९०१६३ भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्
०३०९०१६४ तस्मै नमो भगवते भुवनद्रुमाय
०३०९०१७१ लोको विकर्मनिरतः कुशले प्रमत्तः
०३०९०१७२ कर्मण्ययं त्वदुदिते भवदर्चने स्वे
०३०९०१७३ यस्तावदस्य बलवानिह जीविताशां
०३०९०१७४ सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै
०३०९०१८१ यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यम्
०३०९०१८२ अध्यासितः सकललोकनमस्कृतं यत्
०३०९०१८३ तेपे तपो बहुसवोऽवरुरुत्समानस्
०३०९०१८४ तस्मै नमो भगवतेऽधिमखाय तुभ्यम्
०३०९०१९१ तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्व्
०३०९०१९२ आत्मेच्छयात्मकृतसेतुपरीप्सया यः
०३०९०१९३ रेमे निरस्तविषयोऽप्यवरुद्धदेहस्
०३०९०१९४ तस्मै नमो भगवते पुरुषोत्तमाय
०३०९०२०१ योऽविद्ययानुपहतोऽपि दशार्धवृत्त्या
०३०९०२०२ निद्रामुवाह जठरीकृतलोकयात्रः
०३०९०२०३ अन्तर्जलेऽहिकशिपुस्पर्शानुकूलां

०३०९०२०४ भीमोर्मिमालिनि जनस्य सुखं विवृण्वन्
०३०९०२११ यन्नाभिपद्मभवनादहमासमीड्य
०३०९०२१२ लोकत्रयोपकरणो यदनुग्रहेण
०३०९०२१३ तस्मै नमस्त उदरस्थभवाय योग
०३०९०२१४ निद्रावसानविकसन्नलिनेक्षणाय
०३०९०२२१ सोऽयं समस्तजगतां सुहृदेक आत्मा
०३०९०२२२ सत्त्वेन यन्मृडयते भगवान्भगेन
०३०९०२२३ तेनैव मे दृशमनुस्पृशताद्यथाहं
०३०९०२२४ स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ
०३०९०२३१ एष प्रपन्नवरदो रमयात्मशक्त्या
०३०९०२३२ यद्यत्करिष्यति गृहीतगुणावतारः
०३०९०२३३ तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो
०३०९०२३४ युञ्जीत कर्मशमलं च यथा विजह्याम्
०३०९०२४१ नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो
०३०९०२४२ विज्ञानशक्तिरहमासमनन्तशक्तेः
०३०९०२४३ रूपं विचित्रमिदमस्य विवृण्वतो मे
०३०९०२४४ मा रीरिषीष्ट निगमस्य गिरां विसर्गः
०३०९०२५१ सोऽसावदभ्रकरुणो भगवान्विवृद्ध
०३०९०२५२ प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन्
०३०९०२५३ उत्थाय विश्वविजयाय च नो विषादं
०३०९०२५४ माध्व्या गिरापनयतात्पुरुषः पुराणः
०३०९०२६० मैत्रेय उवाच
०३०९०२६१ स्वसम्भवं निशाम्यैवं तपोविद्यासमाधिभिः
०३०९०२६२ यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत्
०३०९०२७१ अथाभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः
०३०९०२७२ विषण्णचेतसं तेन कल्पव्यतिकराम्भसा
०३०९०२८१ लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः
०३०९०२८२ तमाहागाधया वाचा कश्मलं शमयन्निव
०३०९०२९० श्रीभगवानुवाच
०३०९०२९१ मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह
०३०९०२९२ तन्मयापादितं ह्यग्रे यन्मां प्रार्थयते भवान्

०३०९०३०१ भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम्
०३०९०३०२ ताभ्यामन्तर्हृदि ब्रह्मन्लोकान्द्रक्ष्यस्यपावृतान्
०३०९०३११ तत आत्मनि लोके च भक्तियुक्तः समाहितः
०३०९०३१२ द्रष्टासि मां ततं ब्रह्मन्मयि लोकांस्त्वमात्मनः
०३०९०३२१ यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम्
०३०९०३२२ प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम्
०३०९०३३१ यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः
०३०९०३३२ स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति
०३०९०३४१ नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः
०३०९०३४२ नात्मावसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः
०३०९०३५१ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः
०३०९०३५२ यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते
०३०९०३६१ ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम्
०३०९०३६२ यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रियगुणात्मभिः
०३०९०३७१ तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः
०३०९०३७२ नालेन सलिले मूलं पुष्करस्य विचिन्वतः
०३०९०३८१ यच्चकर्थाङ्ग मत्स्तोत्रं मत्कथाभ्युदयाङ्कितम्
०३०९०३८२ यद्वा तपसि ते निष्ठा स एष मदनुग्रहः
०३०९०३९१ प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया
०३०९०३९२ यदस्तौषीर्गुणमयं निर्गुणं मानुवर्णयन्
०३०९०४०१ य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत्
०३०९०४०२ तस्याशु सम्प्रसीदेयं सर्वकामवरेश्वरः
०३०९०४११ पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना
०३०९०४१२ राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम्
०३०९०४२१ अहमात्मात्मनां धातः प्रेष्ठः सन्प्रेयसामपि
०३०९०४२२ अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः
०३०९०४३१ सर्ववेदमयेनेदमात्मनात्मात्मयोनिना
०३०९०४३२ प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते
०३०९०४४० मैत्रेय उवाच
०३०९०४४१ तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः
०३०९०४४२ व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे

०३१०००१० विदुर उवाच
०३१०००११ अन्तर्हिते भगवति ब्रह्मा लोकपितामहः
०३१०००१२ प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः
०३१०००२१ ये च मे भगवन्पृष्टास्त्वय्यर्था बहुवित्तम
०३१०००२२ तान्वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान्
०३१०००३० सूत उवाच
०३१०००३१ एवं सञ्चोदितस्तेन क्षत्त्रा कौषारविर्मुनिः
०३१०००३२ प्रीतः प्रत्याह तान्प्रश्नान्हृदिस्थानथ भार्गव
०३१०००४० मैत्रेय उवाच
०३१०००४१ विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः
०३१०००४२ आत्मन्यात्मानमावेश्य यथाह भगवानजः
०३१०००५१ तद्विलोक्याब्जसम्भूतो वायुना यदधिष्ठितः
०३१०००५२ पद्ममम्भश्च तत्काल कृतवीर्येण कम्पितम्
०३१०००६१ तपसा ह्येधमानेन विद्यया चात्मसंस्थया
०३१०००६२ विवृद्धविज्ञानबलो न्यपाद्वायुं सहाम्भसा
०३१०००७१ तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम्
०३१०००७२ अनेन लोकान्प्राग्लीनान्कल्पितास्मीत्यचिन्तयत्
०३१०००८१ पद्मकोशं तदाविश्य भगवत्कर्मचोदितः
०३१०००८२ एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा
०३१०००९१ एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः
०३१०००९२ धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ
०३१००१०० विदुर उवाच
०३१००१०१ यथात्थ बहुरूपस्य हरेरद्भुतकर्मणः
०३१००१०२ कालाख्यं लक्षणं ब्रह्मन्यथा वर्णय नः प्रभो
०३१००११० मैत्रेय उवाच
०३१००१११ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः
०३१००११२ पुरुषस्तदुपादानमात्मानं लीलयासृजत्
०३१००१२१ विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया
०३१००१२२ ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना
०३१००१३१ यथेदानीं तथाग्रे च पश्चादप्येतदीदृशम्
०३१००१३२ सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः

०३१००१४१ कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः
०३१००१४२ आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः
०३१००१५१ द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः
०३१००१५२ भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान्
०३१००१६१ चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः
०३१००१६२ वैकारिको देवसर्गः पञ्चमो यन्मयं मनः
०३१००१७१ षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः
०३१००१७२ षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु
०३१००१८१ रजोभाजो भगवतो लीलेयं हरिमेधसः
०३१००१८२ सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः
०३१००१९१ वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः
०३१००१९२ उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः
०३१००२०१ तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः
०३१००२०२ अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः
०३१००२११ गौरजो महिषः कृष्णः सूकरो गवयो रुरुः
०३१००२१२ द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम
०३१००२२१ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा
०३१००२२२ एते चैकशफाः क्षत्तः शृणु पञ्चनखान्पशून्
०३१००२३१ श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ
०३१००२३२ सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः
०३१००२४१ कङ्कगृध्रबकश्येन भासभल्लूकबर्हिणः
०३१००२४२ हंससारसचक्राह्व काकोलूकादयः खगाः
०३१००२५१ अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम्
०३१००२५२ रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः
०३१००२६१ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम
०३१००२६२ वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः
०३१००२७१ देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः
०३१००२७२ गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः
०३१००२८१ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः
०३१००२८२ दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः
०३१००२९१ अतः परं प्रवक्ष्यामि वंशान्मन्वन्तराणि च

०३१००२९२ एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः
०३१००२९३ सृजत्यमोघसङ्कल्प आत्मैवात्मानमात्मना
०३११००१० मैत्रेय उवाच
०३११००११ चरमः सद्विशेषाणामनेकोऽसंयुतः सदा
०३११००१२ परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः
०३११००२१ सत एव पदार्थस्य स्वरूपावस्थितस्य यत्
०३११००२२ कैवल्यं परममहानविशेषो निरन्तरः
०३११००३१ एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम
०३११००३२ संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः
०३११००४१ स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्
०३११००४२ सतोऽविशेषभुग्यस्तु स कालः परमो महान्
०३११००५१ अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः
०३११००५२ जालार्करश्म्यवगतः खमेवानुपतन्नगात्
०३११००६१ त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः
०३११००६२ शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः
०३११००७१ निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः
०३११००७२ क्षणान्पञ्च विदुः काष्ठां लघु ता दश पञ्च च
०३११००८१ लघूनि वै समाम्नाता दश पञ्च च नाडिका
०३११००८२ ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम्
०३११००९१ द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः
०३११००९२ स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम्
०३११०१०१ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे
०३११०१०२ पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद
०३११०१११ तयोः समुच्चयो मासः पितॄणां तदहर्निशम्
०३११०११२ द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि
०३११०१२१ अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः
०३११०१२२ संवत्सरशतं न्णां परमायुर्निरूपितम्
०३११०१३१ ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत्
०३११०१३२ संवत्सरावसानेन पर्येत्यनिमिषो विभुः
०३११०१४१ संवत्सरः परिवत्सर इडावत्सर एव च
०३११०१४२ अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते

०३११०१५१ यः सृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्या
०३११०१५२ पुंसोऽभ्रमाय दिवि धावति भूतभेदः
०३११०१५३ कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्
०३११०१५४ तस्मै बलिं हरत वत्सरपञ्चकाय
०३११०१६० विदुर उवाच
०३११०१६१ पितृदेवमनुष्याणामायुः परमिदं स्मृतम्
०३११०१६२ परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः
०३११०१७१ भगवान्वेद कालस्य गतिं भगवतो ननु
०३११०१७२ विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा
०३११०१८० मैत्रेय उवाच
०३११०१८१ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्
०३११०१८२ दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम्
०३११०१९१ चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्
०३११०१९२ सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च
०३११०२०१ सन्ध्यासन्ध्यांशयोरन्तर्यः कालः शतसङ्ख्ययोः
०३११०२०२ तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते
०३११०२११ धर्मश्चतुष्पान्मनुजान्कृते समनुवर्तते
०३११०२१२ स एवान्येष्वधर्मेण व्येति पादेन वर्धता
०३११०२२१ त्रिलोक्या युगसाहस्रं बहिराब्रह्मणो दिनम्
०३११०२२२ तावत्येव निशा तात यन्निमीलति विश्वसृक्
०३११०२३१ निशावसान आरब्धो लोककल्पोऽनुवर्तते
०३११०२३२ यावद्दिनं भगवतो मनून्भुञ्जंश्चतुर्दश
०३११०२४१ स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम्
०३११०२४२ मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः
०३११०२४३ भवन्ति चैव युगपत्सुरेशाश्चानु ये च तान्
०३११०२५१ एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः
०३११०२५२ तिर्यङ्नृपितृदेवानां सम्भवो यत्र कर्मभिः
०३११०२६१ मन्वन्तरेषु भगवान्बिभ्रत्सत्त्वं स्वमूर्तिभिः
०३११०२६२ मन्वादिभिरिदं विश्वमवत्युदितपौरुषः
०३११०२७१ तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः
०३११०२७२ कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये

०३११०२८१ तमेवान्वपि धीयन्ते लोका भूरादयस्त्रयः

०३११०२८२ निशायामनुवृत्तायां निर्मुक्तशशिभास्करम्

०३११०२९१ त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना

०३११०२९२ यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः

०३११०३०१ तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः

०३११०३०२ प्लावयन्त्युत्कटाटोप चण्डवातेरितोर्मयः

०३११०३११ अन्तः स तस्मिन्सलिल आस्तेऽनन्तासनो हरिः

०३११०३१२ योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः

०३११०३२१ एवंविधैरहोरात्रैः कालगत्योपलक्षितैः

०३११०३२२ अपक्षितमिवास्यापि परमायुर्वयःशतम्

०३११०३३१ यदर्धमायुषस्तस्य परार्धमभिधीयते

०३११०३३२ पूर्वः परार्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्तते

०३११०३४१ पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत्

०३११०३४२ कल्पो यत्राभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः

०३११०३५१ तस्यैव चान्ते कल्पोऽभूद्यं पाद्ममभिचक्षते

०३११०३५२ यद्धरेर्नाभिसरस आसील्लोकसरोरुहम्

०३११०३६१ अयं तु कथितः कल्पो द्वितीयस्यापि भारत

०३११०३६२ वाराह इति विख्यातो यत्रासीच्छूकरो हरिः

०३११०३७१ कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते

०३११०३७२ अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः

०३११०३८१ कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः

०३११०३८२ नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम्

०३११०३९१ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः

०३११०३९२ आण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः

०३११०४०१ दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत्

०३११०४०२ लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः

०३११०४११ तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्

०३११०४१२ विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः

०३१२००१० मैत्रेय उवाच

०३१२००११ इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः

०३१२००१२ महिमा वेदगर्भोऽथ यथास्राक्षीन्निबोध मे

०३१२००२१ ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत्
०३१२००२२ महामोहं च मोहं च तमश्चाज्ञानवृत्तयः
०३१२००३१ दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत
०३१२००३२ भगवद्ध्यानपूतेन मनसान्यां ततोऽसृजत्
०३१२००४१ सनकं च सनन्दं च सनातनमथात्मभूः
०३१२००४२ सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः
०३१२००५१ तान्बभाषे स्वभूः पुत्रान्प्रजाः सृजत पुत्रकाः
०३१२००५२ तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः
०३१२००६१ सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः
०३१२००६२ क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे
०३१२००७१ धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः
०३१२००७२ सद्योऽजायत तन्मन्युः कुमारो नीललोहितः
०३१२००८१ स वै रुरोद देवानां पूर्वजो भगवान्भवः
०३१२००८२ नामानि कुरु मे धातः स्थानानि च जगद्गुरो
०३१२००९१ इति तस्य वचः पाद्मो भगवान्परिपालयन्
०३१२००९२ अभ्यधाद्भद्रया वाचा मा रोदीस्तत्करोमि ते
०३१२०१०१ यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः
०३१२०१०२ ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः
०३१२०१११ हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही
०३१२०११२ सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि ते
०३१२०१२१ मन्युर्मनुर्महिनसो महाञ्छिव ऋतध्वजः
०३१२०१२२ उग्ररेता भवः कालो वामदेवो धृतव्रतः
०३१२०१३१ धीर्धृतिरसलोमा च नियुत्सर्पिरिलाम्बिका
०३१२०१३२ इरावती स्वधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः
०३१२०१४१ गृहाणैतानि नामानि स्थानानि च सयोषणः
०३१२०१४२ एभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः
०३१२०१५१ इत्यादिष्टः स्वगुरुणा भगवान्नीललोहितः
०३१२०१५२ सत्त्वाकृतिस्वभावेन ससर्जात्मसमाः प्रजाः
०३१२०१६१ रुद्राणां रुद्रसृष्टानां समन्ताद्ग्रसतां जगत्
०३१२०१६२ निशाम्यासङ्ख्यशो यूथान्प्रजापतिरशङ्कत
०३१२०१७१ अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम

०३१२०१७२ मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः
०३१२०१८१ तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम्
०३१२०१८२ तपसैव यथा पूर्वं स्रष्टा विश्वमिदं भवान्
०३१२०१९१ तपसैव परं ज्योतिर्भगवन्तमधोक्षजम्
०३१२०१९२ सर्वभूतगुहावासमञ्जसा विन्दते पुमान्
०३१२०२०० मैत्रेय उवाच
०३१२०२०१ एवमात्मभुवादिष्टः परिक्रम्य गिरां पतिम्
०३१२०२०२ बाढमित्यमुमामन्त्र्य विवेश तपसे वनम्
०३१२०२११ अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे
०३१२०२१२ भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः
०३१२०२२१ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः
०३१२०२२२ भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः
०३१२०२३१ उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः
०३१२०२३२ प्राणाद्वसिष्ठः सञ्जातो भृगुस्त्वचि करात्क्रतुः
०३१२०२४१ पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोरृषिः
०३१२०२४२ अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत्
०३१२०२५१ धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम्
०३१२०२५२ अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः
०३१२०२६१ हृदि कामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात्
०३१२०२६२ आस्याद्वाक्सिन्धवो मेढ्रान्निरृतिः पायोरघाश्रयः
०३१२०२७१ छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः
०३१२०२७२ मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत्
०३१२०२८१ वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः
०३१२०२८२ अकामां चकमे क्षत्तः सकाम इति नः श्रुतम्
०३१२०२९१ तमधर्मे कृतमतिं विलोक्य पितरं सुताः
०३१२०२९२ मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन्
०३१२०३०१ नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति चापरे
०३१२०३०२ यस्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः
०३१२०३११ तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो
०३१२०३१२ यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते
०३१२०३२१ तस्मै नमो भगवते य इदं स्वेन रोचिषा

०३१२०३२२ आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति
०३१२०३३१ स इत्थं गृणतः पुत्रान्पुरो दृष्ट्वा प्रजापतीन्
०३१२०३३२ प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा
०३१२०३३३ तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः
०३१२०३४१ कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात्
०३१२०३४२ कथं स्रक्ष्याम्यहं लोकान्समवेतान्यथा पुरा
०३१२०३५१ चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह
०३१२०३५२ धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः
०३१२०३६० विदुर उवाच
०३१२०३६१ स वै विश्वसृजामीशो वेदादीन्मुखतोऽसृजत्
०३१२०३६२ यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन
०३१२०३७० मैत्रेय उवाच
०३१२०३७१ ऋग्यजुःसामाथर्वाख्यान्वेदान्पूर्वादिभिर्मुखैः
०३१२०३७२ शास्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात्
०३१२०३८१ आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः
०३१२०३८२ स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः
०३१२०३९१ इतिहासपुराणानि पञ्चमं वेदमीश्वरः
०३१२०३९२ सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः
०३१२०४०१ षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ
०३१२०४०२ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम्
०३१२०४११ विद्या दानं तपः सत्यं धर्मस्येति पदानि च
०३१२०४१२ आश्रमांश्च यथासङ्ख्यमसृजत्सह वृत्तिभिः
०३१२०४२१ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा
०३१२०४२२ वार्ता सञ्चयशालीन शिलोञ्छ इति वै गृहे
०३१२०४३१ वैखानसा वालखिल्यौ दुम्बराः फेनपा वने
०३१२०४३२ न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ
०३१२०४४१ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च
०३१२०४४२ एवं व्याहृतयश्चासन्प्रणवो ह्यस्य दह्रतः
०३१२०४५१ तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः
०३१२०४५२ त्रिष्टुम्मांसात्स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः
०३१२०४६१ मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत्

०३१२०४६२ स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृत
०३१२०४७१ ऊष्माणमिन्द्रियाण्याहुरन्तःस्था बलमात्मनः
०३१२०४७२ स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः
०३१२०४८१ शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः
०३१२०४८२ ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः
०३१२०४९१ ततोऽपरामुपादाय स सर्गाय मनो दधे
०३१२०४९२ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम्
०३१२०५०१ ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव
०३१२०५०२ अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा
०३१२०५११ न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम्
०३१२०५१२ एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा
०३१२०५२१ कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते
०३१२०५२२ ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत
०३१२०५३१ यस्तु तत्र पुमान्सोऽभून्मनुः स्वायम्भुवः स्वराट्
०३१२०५३२ स्त्री यासीच्छतरूपाख्या महिष्यस्य महात्मनः
०३१२०५४१ तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे
०३१२०५४२ स चापि शतरूपायां पञ्चापत्यान्यजीजनत्
०३१२०५५१ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत
०३१२०५५२ आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम
०३१२०५६१ आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम्
०३१२०५६२ दक्षायादात्प्रसूतिं च यत आपूरितं जगत्
०३१३००१० श्रीशुक उवाच
०३१३००११ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप
०३१३००१२ भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः
०३१३००२० विदुर उवाच
०३१३००२१ स वै स्वायम्भुवः सम्राट्प्रियः पुत्रः स्वयम्भुवः
०३१३००२२ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने
०३१३००३१ चरितं तस्य राजर्षेरादिराजस्य सत्तम
०३१३००३२ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ
०३१३००४१ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः
०३१३००४२ तत्तद्गुणानुश्रवणं मुकुन्द पादारविन्दं हृदयेषु येषाम्

०३१३००५० श्रीशुक उवाच
०३१३००५१ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम्
०३१३००५२ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट
०३१३००६० मैत्रेय उवाच
०३१३००६१ यदा स्वभार्यया सार्धं जातः स्वायम्भुवो मनुः
०३१३००६२ प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत
०३१३००७१ त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता
०३१३००७२ तथापि नः प्रजानां ते शुश्रूषा केन वा भवेत्
०३१३००८१ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु
०३१३००८२ यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः
०३१३००९० ब्रह्मोवाच
०३१३००९१ प्रीतस्तुभ्यमहं तात स्वस्ति स्ताद्वां क्षितीश्वर
०३१३००९२ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम्
०३१३०१०१ एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ
०३१३०१०२ शक्त्याप्रमत्तैर्गृह्येत सादरं गतमत्सरैः
०३१३०१११ स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः
०३१३०११२ उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज
०३१३०१२१ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप
०३१३०१२२ भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति
०३१३०१३१ येषां न तुष्टो भगवान्यज्ञलिङ्गो जनार्दनः
०३१३०१३२ तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम्
०३१३०१४० मनुरुवाच
०३१३०१४१ आदेशेऽहं भगवतो वर्तेयामीवसूदन
०३१३०१४२ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो
०३१३०१५१ यदोकः सर्वभूतानां मही मग्ना महाम्भसि
०३१३०१५२ अस्या उद्धरणे यत्नो देव देव्या विधीयताम्
०३१३०१६० मैत्रेय उवाच
०३१३०१६१ परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम्
०३१३०१६२ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम्
०३१३०१७१ सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता
०३१३०१७२ अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः

०३१३०१७३ यस्याहं हृदयादासं स ईशो विदधातु मे
०३१३०१८१ इत्यभिध्यायतो नासा विवरात्सहसानघ
०३१३०१८२ वराहतोको निरगादङ्गुष्ठपरिमाणकः
०३१३०१९१ तस्याभिपश्यतः खस्थः क्षणेन किल भारत
०३१३०१९२ गजमात्रः प्रववृधे तदद्भुतमभून्महत्
०३१३०२०१ मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह
०३१३०२०२ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा
०३१३०२११ किमेतत्सूकरव्याजं सत्त्वं दिव्यमवस्थितम्
०३१३०२१२ अहो बताश्चर्यमिदं नासाया मे विनिःसृतम्
०३१३०२२१ दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलासमः
०३१३०२२२ अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः
०३१३०२३१ इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः
०३१३०२३२ भगवान्यज्ञपुरुषो जगर्जागेन्द्रसन्निभः
०३१३०२४१ ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान्
०३१३०२४२ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः
०३१३०२५१ निशम्य ते घर्घरितं स्वखेद क्षयिष्णु मायामयसूकरस्य
०३१३०२५२ जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म
०३१३०२६१ तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम्
०३१३०२६२ विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश
०३१३०२७१ उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन्खररोमशत्वक्
०३१३०२७२ खुराहताभ्रः सितदंष्ट्र ईक्षा ज्योतिर्बभासे भगवान्महीध्रः
०३१३०२८१ घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्क्रोडापदेशः स्वयमध्वराङ्गः
०३१३०२८२ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम्
०३१३०२९१ स वज्रकूटाङ्गनिपातवेग विशीर्णकुक्षिः स्तनयन्नुदन्वान्
०३१३०२९२ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति
०३१३०३०१ खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारपारं त्रिपरू रसायाम्
०३१३०३०२ ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त
०३१३०३११ पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीं च बिभ्रतः
०३१३०३१२ यस्योपमानो न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिः
०३१३०३२१ स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः
०३१३०३२२ तत्रापि दैत्यं गदयापतन्तं सुनाभसन्दीपिततीव्रमन्युः

०३१३०३३१ जघान रुन्धानमसह्यविक्रमं स लीलयेभं मृगराडिवाम्भसि
०३१३०३३२ तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन्
०३१३०३४१ तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग
०३१३०३४२ प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम्
०३१३०३५० ऋषय ऊचुः
०३१३०३५१ जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः
०३१३०३५२ यद्रोमगर्तेषु निलिल्युरद्धयस्तस्मै नमः कारणसूकराय ते
०३१३०३६१ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम्
०३१३०३६२ छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम्
०३१३०३७१ स्रक्तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे
०३१३०३७२ प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम्
०३१३०३८१ दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः
०३१३०३८२ जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सत्यावसथ्यं चितयोऽसवो हि ते
०३१३०३९१ सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः
०३१३०३९२ सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः
०३१३०४०१ नमो नमस्तेऽखिलमन्त्रदेवता द्रव्याय सर्वक्रतवे क्रियात्मने
०३१३०४०२ वैराग्यभक्त्यात्मजयानुभावित ज्ञानाय विद्यागुरवे नमो नमः
०३१३०४११ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा
०३१३०४१२ यथा वनान्निःसरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी
०३१३०४२१ त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ दता धृतेन ते
०३१३०४२२ चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः
०३१३०४३१ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता
०३१३०४३२ विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः
०३१३०४४१ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम्
०३१३०४४२ न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम्
०३१३०४५१ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम्
०३१३०४५२ सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश पाविताः
०३१३०४६१ स वै बत भ्रष्टमतिस्तवैषते यः कर्मणां पारमपारकर्मणः
०३१३०४६२ यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम्
०३१३०४७० मैत्रेय उवाच
०३१३०४७१ इत्युपस्थीयमानोऽसौ मुनिभिर्ब्रह्मवादिभिः

०३१३०४७२ सलिले स्वखुराक्रान्त उपाधत्ताविताविनम्
०३१३०४८१ स इत्थं भगवानुर्वीं विष्वक्सेनः प्रजापतिः
०३१३०४८२ रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः
०३१३०४९१ य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः
०३१३०४९२ शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याशु हृदि प्रसीदति
०३१३०५०१ तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः
०३१३०५०२ अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम्
०३१३०५११ को नाम लोके पुरुषार्थसारवित्पुराकथानां भगवत्कथासुधाम्
०३१३०५१२ आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम्
०३१४००१० श्रीशुक उवाच
०३१४००११ निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः
०३१४००१२ पुनः स पप्रच्छ तमुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः
०३१४००२० विदुर उवाच
०३१४००२१ तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना
०३१४००२२ आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम
०३१४००३१ तस्य चोद्धरतः क्षौणीं स्वदंष्ट्राग्रेण लीलया
०३१४००३२ दैत्यराजस्य च ब्रह्मन्कस्माद्धेतोरभून्मृधः
०३१४००४१ श्रद्दधानाय भक्ताय ब्रूहि तज्जन्मविस्तरम्
०३१४००४२ ऋषे न तृप्यति मनः परं कौतूहलं हि मे
०३१४००५० मैत्रेय उवाच
०३१४००५१ साधु वीर त्वया पृष्टमवतारकथां हरेः
०३१४००५२ यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम्
०३१४००६१ ययोत्तानपदः पुत्रो मुनिना गीतयार्भकः
०३१४००६२ मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम्
०३१४००७१ अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा
०३१४००७२ ब्रह्मणा देवदेवेन देवानामनुपृच्छताम्
०३१४००८१ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम्
०३१४००८२ अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता
०३१४००९१ इष्ट्वाग्निजिह्वं पयसा पुरुषं यजुषां पतिम्
०३१४००९२ निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम्
०३१४०१०० दितिरुवाच

०३१४०१०१ एष मां त्वत्कृते विद्वन्काम आत्तशरासनः
०३१४०१०२ दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः
०३१४०१११ तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः
०३१४०११२ प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम्
०३१४०१२१ भर्तर्याप्तोरुमानानां लोकानाविशते यशः
०३१४०१२२ पतिर्भवद्विधो यासां प्रजया ननु जायते
०३१४०१३१ पुरा पिता नो भगवान्दक्षो दुहितृवत्सलः
०३१४०१३२ कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक्
०३१४०१४१ स विदित्वात्मजानां नो भावं सन्तानभावनः
०३१४०१४२ त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः
०३१४०१५१ अथ मे कुरु कल्याणं कामं कमललोचन
०३१४०१५२ आर्तोपसर्पणं भूमन्नमोघं हि महीयसि
०३१४०१६१ इति तां वीर मारीचः कृपणां बहुभाषिणीम्
०३१४०१६२ प्रत्याहानुनयन्वाचा प्रवृद्धानङ्गकश्मलाम्
०३१४०१७१ एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि
०३१४०१७२ तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः
०३१४०१८१ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान्
०३१४०१८२ व्यसनार्णवमत्येति जलयानैर्यथार्णवम्
०३१४०१९१ यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि
०३१४०१९२ यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः
०३१४०२०१ यामाश्रित्येन्द्रियारातीन्दुर्जयानितराश्रमैः
०३१४०२०२ वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा
०३१४०२११ न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि
०३१४०२१२ अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः
०३१४०२२१ अथापि काममेतं ते प्रजात्यै करवाण्यलम्
०३१४०२२२ यथा मां नातिरोचन्ति मुहूर्तं प्रतिपालय
०३१४०२३१ एषा घोरतमा वेला घोराणां घोरदर्शना
०३१४०२३२ चरन्ति यस्यां भूतानि भूतेशानुचराणि ह
०३१४०२४१ एतस्यां साध्वि सन्ध्यायां भगवान्भूतभावनः
०३१४०२४२ परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट्
०३१४०२५१ श्मशानचक्रानिलधूलिधूम्र विकीर्णविद्योतजटाकलापः

०३१४०२५२ भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते
०३१४०२६१ न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः
०३१४०२६२ वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम्
०३१४०२७१ यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः
०३१४०२७२ निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम्
०३१४०२८१ हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम्
०३१४०२८२ यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम्
०३१४०२९१ ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया
०३१४०२९२ आज्ञाकरी यस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम्
०३१४०३०० मैत्रेय उवाच
०३१४०३०१ सैवं संविदिते भर्त्रा मन्मथोन्मथितेन्द्रिया
०३१४०३०२ जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा
०३१४०३११ स विदित्वाथ भार्यायास्तं निर्बन्धं विकर्मणि
०३१४०३१२ नत्वा दिष्टाय रहसि तयाथोपविवेश हि
०३१४०३२१ अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः
०३१४०३२२ ध्यायञ्जजाप विरजं ब्रह्म ज्योतिः सनातनम्
०३१४०३३१ दितिस्तु व्रीडिता तेन कर्मावद्येन भारत
०३१४०३३२ उपसङ्गम्य विप्रर्षिमधोमुख्यभ्यभाषत
०३१४०३४० दितिरुवाच
०३१४०३४१ न मे गर्भमिमं ब्रह्मन्भूतानामृषभोऽवधीत्
०३१४०३४२ रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम्
०३१४०३५१ नमो रुद्राय महते देवायोग्राय मीढुषे
०३१४०३५२ शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे
०३१४०३६१ स नः प्रसीदतां भामो भगवानुर्वनुग्रहः
०३१४०३६२ व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः
०३१४०३७० मैत्रेय उवाच
०३१४०३७१ स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम्
०३१४०३७२ निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः
०३१४०३८० कश्यप उवाच
०३१४०३८१ अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत
०३१४०३८२ मन्निदेशातिचारेण देवानां चातिहेलनात्

०३१४०३९१ भविष्यतस्तवाभद्रावभद्रे जाठराधमौ

०३१४०३९२ लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः

०३१४०४०१ प्राणिनां हन्यमानानां दीनानामकृतागसाम्

०३१४०४०२ स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु

०३१४०४११ तदा विश्वेश्वरः क्रुद्धो भगवाल्लोकभावनः

०३१४०४१२ हनिष्यत्यवतीर्यासौ यथाद्रीन्शतपर्वधृक्

०३१४०४२० दितिरुवाच

०३१४०४२१ वधं भगवता साक्षात्सुनाभोदारबाहुना

०३१४०४२२ आशासे पुत्रयोर्मह्यं मा क्रुद्धाद्ब्राह्मणाद्प्रभो

०३१४०४३१ न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च

०३१४०४३२ नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः

०३१४०४४० कश्यप उवाच

०३१४०४४१ कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात्

०३१४०४४२ भगवत्युरुमानाच्च भवे मय्यपि चादरात्

०३१४०४५१ पुत्रस्यैव च पुत्राणां भवितैकः सतां मतः

०३१४०४५२ गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम्

०३१४०४६१ योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः

०३१४०४६२ निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम्

०३१४०४७१ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम्

०३१४०४७२ स स्वदृग्भगवान्यस्य तोष्यतेऽनन्यया दृशा

०३१४०४८१ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः

०३१४०४८२ प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति

०३१४०४९१ अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु

०३१४०४९१ अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः

०३१४०५०१ अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम्

०३१४०५०२ पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम्

०३१४०५१० मैत्रेय उवाच

०३१४०५११ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम्

०३१४०५१२ पुत्रयोश्च वधं कृष्णाद्विदित्वासीन्महामनाः

०३१५०๐१० मैत्रेय उवाच

०३१५००११ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः

०३१५००१२ दधार वर्षाणि शतं शङ्कमाना सुरार्दनात्
०३१५००२१ लोके तेनाहतालोके लोकपाला हतौजसः
०३१५००२२ न्यवेदयन्विश्वसृजे ध्वान्तव्यतिकरं दिशाम्
०३१५००३० देवा ऊचुः
०३१५००३१ तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम्
०३१५००३२ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः
०३१५००४१ देवदेव जगद्धातर्लोकनाथशिखामणे
०३१५००४२ परेषामपरेषां त्वं भूतानामसि भाववित्
०३१५००५१ नमो विज्ञानवीर्याय माययेदमुपेयुषे
०३१५००५२ गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये
०३१५००६१ ये त्वानन्येन भावेन भावयन्त्यात्मभावनम्
०३१५००६२ आत्मनि प्रोतभुवनं परं सदसदात्मकम्
०३१५००७१ तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम्
०३१५००७२ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः
०३१५००८१ यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः
०३१५००८२ हरन्ति बलिमायत्तास्तस्मै मुख्याय ते नमः
०३१५००९१ स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम्
०३१५००९२ अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम्
०३१५०१०१ एष देव दितेर्गर्भ ओजः काश्यपमर्पितम्
०३१५०१०२ दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि
०३१५०११० मैत्रेय उवाच
०३१५०१११ स प्रहस्य महाबाहो भगवान्शब्दगोचरः
०३१५०११२ प्रत्याचष्टात्मभूर्देवान्प्रीणन्रुचिरया गिरा
०३१५०१२० ब्रह्मोवाच
०३१५०१२१ मानसा मे सुता युष्मत् पूर्वजाः सनकादयः
०३१५०१२२ चेरुर्विहायसा लोकाल्लोकेषु विगतस्पृहाः
०३१५०१३१ त एकदा भगवतो वैकुण्ठस्यामलात्मनः
०३१५०१३२ ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम्
०३१५०१४१ वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः
०३१५०१४२ येऽनिमित्तनिमित्तेन धर्मेणाराधयन्हरिम्
०३१५०१५१ यत्र चाद्यः पुमानास्ते भगवान्शब्दगोचरः

०३१५०१५२ सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन्वृषः
०३१५०१६१ यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः
०३१५०१६२ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत्
०३१५०१७१ वैमानिकाः सललनाश्चरितानि शश्वद्
०३१५०१७२ गायन्ति यत्र शमलक्षपणानि भर्तुः
०३१५०१७३ अन्तर्जलेऽनुविकसन्मधुमाधवीनां
०३१५०१७४ गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः
०३१५०१८१ पारावतान्यभृतसारसचक्रवाक
०३१५०१८२ दात्यूहहंसशुकतित्तिरिबर्हिणां यः
०३१५०१८३ कोलाहलो विरमतेऽचिरमात्रमुच्चैर्
०३१५०१८४ भृङ्गाधिपे हरिकथामिव गायमाने
०३१५०१९१ मन्दारकुन्दकुरबोत्पलचम्पकार्ण
०३१५०१९२ पुन्नागनागबकुलाम्बुजपारिजाताः
०३१५०१९३ गन्धेऽर्चिते तुलसिकाभरणेन तस्या
०३१५०१९४ यस्मिंस्तपः सुमनसो बहु मानयन्ति
०३१५०२०१ यत्सङ्कुलं हरिपदानतिमात्रदृष्टैर्
०३१५०२०२ वैदूर्यमारकतहेममयैर्विमानैः
०३१५०२०३ येषां बृहत्कटितटाः स्मितशोभिमुख्यः
०३१५०२०४ कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः
०३१५०२११ श्री रूपिणी क्वणयती चरणारविन्दं
०३१५०२१२ लीलाम्बुजेन हरिसद्मनि मुक्तदोषा
०३१५०२१३ संलक्ष्यते स्फटिककुड्य उपेतहेम्नि
०३१५०२१४ सम्मार्जतीव यदनुग्रहणेऽन्ययत्नः
०३१५०२२१ वापीषु विद्रुमतटास्वमलामृताप्सु
०३१५०२२२ प्रेष्यान्विता निजवने तुलसीभिरीशम्
०३१५०२२३ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्रम्
०३१५०२२४ उच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः
०३१५०२३१ यन्न व्रजन्त्यघभिदो रचनानुवादाच्
०३१५०२३२ छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः
०३१५०२३३ यास्तु श्रुता हतभगैर्नृभिरात्तसारास्
०३१५०२३४ तांस्तान्क्षिपन्त्यशरणेषु तमःसु हन्त

०३१५०२४१ येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना
०३१५०२४२ ज्ञानं च तत्त्वविषयं सहधर्म यत्र
०३१५०२४३ नाराधनं भगवतो वितरन्त्यमुष्य
०३१५०२४४ सम्मोहिता विततया बत मायया ते
०३१५०२५१ यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या
०३१५०२५२ दूरे यमा ह्युपरि नः स्पृहणीयशीलाः
०३१५०२५३ भर्तुर्मिथः सुयशसः कथनानुराग
०३१५०२५४ वैक्लव्यबाष्पकलया पुलकीकृताङ्गाः
०३१५०२६१ तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं
०३१५०२६२ दिव्यं विचित्रविबुधाग्र्यविमानशोचिः
०३१५०२६३ आपुः परां मुदमपूर्वमुपेत्य योग
०३१५०२६४ मायाबलेन मुनयस्तदथो विकुण्ठम्
०३१५०२७१ तस्मिन्नतीत्य मुनयः षडसज्जमानाः
०३१५०२७२ कक्षाः समानवयसावथ सप्तमायाम्
०३१५०२७३ देवावचक्षत गृहीतगदौ परार्ध्य
०३१५०२७४ केयूरकुण्डलकिरीटविटङ्कवेषौ
०३१५०२८१ मत्तद्विरेफवनमालिकया निवीतौ
०३१५०२८२ विन्यस्तयासितचतुष्टयबाहुमध्ये
०३१५०२८३ वक्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां
०३१५०२८४ रक्तेक्षणेन च मनाग्रभसं दधानौ
०३१५०२९१ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा
०३१५०२९२ पूर्वा यथा पुरटवज्रकपाटिका याः
०३१५०२९३ सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या
०३१५०२९४ ये सञ्चरन्त्यविहता विगताभिशङ्काः
०३१५०३०१ तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्
०३१५०३०२ वृद्धान्दशार्धवयसो विदितात्मतत्त्वान्
०३१५०३०३ वेत्रेण चास्खलयतामतदर्हणांस्तौ
०३१५०३०४ तेजो विहस्य भगवत्प्रतिकूलशीलौ
०३१५०३११ ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः
०३१५०३१२ स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम्
०३१५०३१३ ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्

०३१५०३१४ कामानुजेन सहसा त उपप्लुताक्षाः
०३१५०३२० मुनय ऊचुः
०३१५०३२१ को वामिहैत्य भगवत्परिचर्ययोच्चैस्
०३१५०३२२ तद्धर्मिणां निवसतां विषमः स्वभावः
०३१५०३२३ तस्मिन्प्रशान्तपुरुषे गतविग्रहे वां
०३१५०३२४ को वात्मवत्कुहकयोः परिशङ्कनीयः
०३१५०३३१ न ह्यन्तरं भगवतीह समस्तकुक्षाव्
०३१५०३३२ आत्मानमात्मनि नभो नभसीव धीराः
०३१५०३३३ पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं
०३१५०३३४ व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य
०३१५०३४१ तद्वाममुष्य परमस्य विकुण्ठभर्तुः
०३१५०३४२ कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम्
०३१५०३४३ लोकानितो व्रजतमन्तरभावदृष्ट्या
०३१५०३४४ पापीयसस्त्रय इमे रिपवोऽस्य यत्र
०३१५०३५१ तेषामितीरितमुभाववधार्य घोरं
०३१५०३५२ तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः
०३१५०३५३ सद्यो हरेरनुचरावुरु बिभ्यतस्तत्
०३१५०३५४ पादग्रहावपततामतिकातरेण
०३१५०३६१ भूयादघोनि भगवद्भिरकारि दण्डो
०३१५०३६२ यो नौ हरेत सुरहेलनमप्यशेषम्
०३१५०३६३ मा वोऽनुतापकलया भगवत्स्मृतिघ्नो
०३१५०३६४ मोहो भवेदिह तु नौ व्रजतोरधोऽधः
०३१५०३७१ एवं तदैव भगवानरविन्दनाभः
०३१५०३७२ स्वानां विबुध्य सदतिक्रममार्यहृद्यः
०३१५०३७३ तस्मिन्ययौ परमहंसमहामुनीनाम्
०३१५०३७४ अन्वेषणीयचरणौ चलयन्सहश्रीः
०३१५०३८१ तं त्वागतं प्रतिहृतौपयिकं स्वपुम्भिस्
०३१५०३८२ तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम्
०३१५०३८३ हंसश्रियोर्व्यजनयोः शिववायुलोलच्
०३१५०३८४ छुभ्रातपत्रशशिकेसरशीकराम्बुम्
०३१५०३९१ कृत्स्नप्रसादसुमुखं स्पृहणीयधाम

०३१५०३९२ स्नेहावलोककलया हृदि संस्पृशन्तम्
०३१५०३९३ श्यामे पृथावुरसि शोभितया श्रिया स्वश्
०३१५०३९४ चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम्
०३१५०४०१ पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या
०३१५०४०२ काञ्च्यालिभिर्विरुतया वनमालया च
०३१५०४०३ वल्गुप्रकोष्ठवलयं विनतासुतांसे
०३१५०४०४ विन्यस्तहस्तमितरेण धुनानमब्जम्
०३१५०४११ विद्युत्क्षिपन्मकरकुण्डलमण्डनार्ह
०३१५०४१२ गण्डस्थलोन्नसमुखं मणिमत्किरीटम्
०३१५०४१३ दोर्दण्डषण्डविवरे हरता परार्ध्य
०३१५०४१४ हारेण कन्धरगतेन च कौस्तुभेन
०३१५०४२१ अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः
०३१५०४२२ स्वानां धिया विरचितं बहुसौष्ठवाढ्यम्
०३१५०४२३ मह्यं भवस्य भवतां च भजन्तमङ्गं
०३१५०४२४ नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः
०३१५०४३१ तस्यारविन्दनयनस्य पदारविन्द
०३१५०४३२ किञ्जल्कमिश्रतुलसीमकरन्दवायुः
०३१५०४३३ अन्तर्गतः स्वविवरेण चकार तेषां
०३१५०४३४ सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः
०३१५०४४१ ते वा अमुष्य वदनासितपद्मकोशम्
०३१५०४४२ उद्वीक्ष्य सुन्दरतराधरकुन्दहासम्
०३१५०४४३ लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रि
०३१५०४४४ द्वन्द्वं नखारुणमणिश्रयणं निदध्युः
०३१५०४५१ पुंसां गतिं मृगयतामिह योगमार्गैर्
०३१५०४५२ ध्यानास्पदं बहुमतं नयनाभिरामम्
०३१५०४५३ पौंस्नं वपुर्दर्शयानमनन्यसिद्धैर्
०३१५०४५४ औत्पत्तिकैः समगृणन्युतमष्टभोगैः
०३१५०४६० कुमारा ऊचुः
०३१५०४६१ योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं
०३१५०४६२ सोऽद्यैव नो नयनमूलमनन्त राद्धः
०३१५०४६३ यर्ह्येव कर्णविवरेण गुहां गतो नः

०३१५०४६४ पित्रानुवर्णितरहा भवदुद्भवेन
०३१५०४७१ तं त्वां विदाम भगवन्परमात्मतत्त्वं
०३१५०४७२ सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम्
०३१५०४७३ यत्तेऽनुतापविदितैर्दृढभक्तियोगैर्
०३१५०४७४ उद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः
०३१५०४८१ नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
०३१५०४८२ किम्वन्यदर्पितभयं भ्रुव उन्नयैस्ते
०३१५०४८३ येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
०३१५०४८४ कीर्तन्यतीर्थयशसः कुशला रसज्ञाः
०३१५०४९१ कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्
०३१५०४९२ चेतोऽलिवद्यदि नु ते पदयो रमेत
०३१५०४९३ वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः
०३१५०४९४ पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः
०३१५०५०१ प्रादुश्चकर्थ यदिदं पुरुहूत रूपं
०३१५०५०२ तेनेश निर्वृतिमवापुरलं दृशो नः
०३१५०५०३ तस्मा इदं भगवते नम इद्विधेम
०३१५०५०४ योऽनात्मनां दुरुदयो भगवान्प्रतीतः
०३१६००१० ब्रह्मोवाच
०३१६००११ इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम्
०३१६००१२ प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः
०३१६००२० श्रीभगवानुवाच
०३१६००२१ एतौ तौ पार्षदौ मह्यं जयो विजय एव च
०३१६००२२ कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम्
०३१६००३१ यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः
०३१६००३२ स एवानुमतोऽस्माभिर्मुनयो देवहेलनात्
०३१६००४१ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे
०३१६००४२ तद्धीत्यात्मकृतं मन्ये यत्स्वपुम्भिरसत्कृताः
०३१६००५१ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि
०३१६००५२ सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः
०३१६००६१ यस्यामृतामलयशःश्रवणावगाहः
०३१६००६२ सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः

०३१६००६३ सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्
०३१६००६४ छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम्
०३१६००७१ यत्सेवया चरणपद्मपवित्ररेणुं
०३१६००७२ सद्यः क्षताखिलमलं प्रतिलब्धशीलम्
०३१६००७३ न श्रीर्विरक्तमपि मां विजहाति यस्याः
०३१६००७४ प्रेक्षालवार्थ इतरे नियमान्वहन्ति
०३१६००८१ नाहं तथाद्मि यजमानहविर्विताने
०३१६००८२ श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन
०३१६००८३ यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं
०३१६००८४ तुष्टस्य मय्यवहितैर्निजकर्मपाकैः
०३१६००९१ येषां बिभर्म्यहमखण्डविकुण्ठयोग
०३१६००९२ मायाविभूतिरमलाङ्घ्रिरजः किरीटैः
०३१६००९३ विप्रांस्तु को न विषहेत यदर्हणाम्भः
०३१६००९४ सद्यः पुनाति सहचन्द्रललामलोकान्
०३१६०१०१ ये मे तनूर्द्विजवरान्दुहतीर्मदीया
०३१६०१०२ भूतान्यलब्धशरणानि च भेदबुद्ध्या
०३१६०१०३ द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्
०३१६०१०४ गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः
०३१६०१११ ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयन्तस्
०३१६०११२ तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः
०३१६०११३ वाण्यानुरागकलयात्मजवद्गृणन्तः
०३१६०११४ सम्बोधयन्त्यहमिवाहमुपाहृतस्तैः
०३१६०१२१ तन्मे स्वभर्तुरवसायमलक्षमाणौ
०३१६०१२२ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः
०३१६०१२३ भूयो ममान्तिकमितां तदनुग्रहो मे
०३१६०१२४ यत्कल्पतामचिरतो भृतयोर्विवासः
०३१६०१३० ब्रह्मोवाच
०३१६०१३१ अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम्
०३१६०१३२ नास्वाद्य मन्युदष्टानां तेषामात्माप्यतृप्यत
०३१६०१४१ सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम्
०३१६०१४२ विगाह्यागाधगम्भीरां न विदुस्तच्चिकीर्षितम्

०३१६०१५१ ते योगमाययारब्ध पारमेष्ठ्यमहोदयम्
०३१६०१५२ प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः
०३१६०१६० ऋषय ऊचुः
०३१६०१६१ न वयं भगवन्विद्मस्तव देव चिकीर्षितम्
०३१६०१६२ कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे
०३१६०१७१ ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो
०३१६०१७२ विप्राणां देवदेवानां भगवानात्मदैवतम्
०३१६०१८१ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव
०३१६०१८२ धर्मस्य परमो गुह्यो निर्विकारो भवान्मतः
०३१६०१९१ तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात्
०३१६०१९२ योगिनः स भवान्किं स्विदनुगृह्येत यत्परैः
०३१६०२०१ यं वै विभूतिरुपयात्यनुवेलमन्यैर्
०३१६०२०२ अर्थार्थिभिः स्वशिरसा धृतपादरेणुः
०३१६०२०३ धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो
०३१६०२०४ लोकं मधुव्रतपतेरिव कामयाना
०३१६०२११ यस्तां विविक्तचरितैरनुवर्तमानां
०३१६०२१२ नात्याद्रियत्परमभागवतप्रसङ्गः
०३१६०२१३ स त्वं द्विजानुपथपुण्यरजःपुनीतः
०३१६०२१४ श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम्
०३१६०२२१ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः
०३१६०२२२ पद्भिश्चराचरमिदं द्विजदेवतार्थम्
०३१६०२२३ नूनं भृतं तदभिघाति रजस्तमश्च
०३१६०२२४ सत्त्वेन नो वरदया तनुवा निरस्य
०३१६०२३१ न त्वं द्विजोत्तमकुलं यदि हात्मगोपं
०३१६०२३२ गोप्ता वृषः स्वर्हणेन ससूनृतेन
०३१६०२३३ तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था
०३१६०२३४ लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम्
०३१६०२४१ तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः
०३१६०२४२ क्षेमं जनाय निजशक्तिभिरुद्धृतारेः
०३१६०२४३ नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्
०३१६०२४४ तेजः क्षतं त्ववनतस्य स ते विनोदः

०३१६०२५१ यं वानयोर्दममधीश भवान्विधत्ते
०३१६०२५२ वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम्
०३१६०२५३ अस्मासु वा य उचितो ध्रियतां स दण्डो
०३१६०२५४ येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण
०३१६०२६० श्रीभगवानुवाच
०३१६०२६१ एतौ सुरेतरगतिं प्रतिपद्य सद्यः
०३१६०२६२ संरम्भसम्भृतसमाध्यनुबद्धयोगौ
०३१६०२६३ भूयः सकाशमुपयास्यत आशु यो वः
०३१६०२६४ शापो मयैव निमितस्तदवेत विप्राः
०३१६०२७० ब्रह्मोवाच
०३१६०२७१ अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम्
०३१६०२७२ वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयंप्रभम्
०३१६०२८१ भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च
०३१६०२८२ प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम्
०३१६०२९१ भगवाननुगावाह यातं मा भैष्टमस्तु शम्
०३१६०२९२ ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे
०३१६०३०१ एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा
०३१६०३०२ पुरापवारिता द्वारि विशन्ती मय्युपारते
०३१६०३११ मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम्
०३१६०३१२ प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः
०३१६०३२१ द्वाःस्थावादिश्य भगवान्विमानश्रेणिभूषणम्
०३१६०३२२ सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत्
०३१६०३३१ तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः
०३१६०३३२ हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ
०३१६०३४१ तदा विकुण्ठधिषणात्तयोर्निपतमानयोः
०३१६०३४२ हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः
०३१६०३५१ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः
०३१६०३५२ दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम्
०३१६०३६१ तयोरसुरयोरद्य तेजसा यमयोर्हि वः
०३१६०३६२ आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति
०३१६०३७१ विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो

०३१६०३७२ योगेश्वरैरपि दुरत्यययोगमायः
०३१६०३७३ क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्
०३१६०३७४ तत्रास्मदीयविमृशेन कियानिहार्थः
०३१७००१० मैत्रेय उवाच
०३१७००११ निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः
०३१७००१२ ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः
०३१७००२१ दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी
०३१७००२२ पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ
०३१७००३१ उत्पाता बहवस्तत्र निपेतुर्जायमानयोः
०३१७००३२ दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः
०३१७००४१ सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः
०३१७००४२ सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः
०३१७००५१ ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः
०३१७००५२ उन्मूलयन्नगपतीन्वात्यानीको रजोध्वजः
०३१७००६१ उद्धसत्तडिदम्भोद घटया नष्टभागणे
०३१७००६२ व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम्
०३१७००७१ चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः
०३१७००७२ सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः
०३१७००८१ मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः
०३१७००८२ निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे
०३१७००९१ अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम्
०३१७००९२ सृगालोलूकटङ्कारैः प्रणेदुरशिवं शिवाः
०३१७०१०१ सङ्गीतवद्रोदनवदुन्नमय्य शिरोधराम्
०३१७०१०२ व्यमुञ्चन्विविधा वाचो ग्रामसिंहास्ततस्ततः
०३१७०१११ खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम्
०३१७०११२ खार्काररभसा मत्ताः पर्यधावन्वरूथशः
०३१७०१२१ रुदन्तो रासभत्रस्ता नीडादुदपतन्खगाः
०३१७०१२२ घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत
०३१७०१३१ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः
०३१७०१३२ व्यरुदन्देवलिङ्गानि द्रुमाः पेतुर्विनानिलम्
०३१७०१४१ ग्रहान्पुण्यतमानन्ये भगणांश्चापि दीपिताः

०३१७०१४२ अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम्
०३१७०१५१ दृष्ट्वान्यांश्च महोत्पातानतत्तत्त्वविदः प्रजाः
०३१७०१५२ ब्रह्मपुत्रानृते भीता मेनिरे विश्वसम्प्लवम्
०३१७०१६१ तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ
०३१७०१६२ ववृधातेऽश्मसारेण कायेनाद्रिपती इव
०३१७०१७१ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ
०३१७०१७२ गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः
०३१७०१८१ प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत
०३१७०१८२ तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः
०३१७०१९१ चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च
०३१७०१९२ वशे सपालान्लोकांस्त्रीनकुतोमृत्युरुद्धतः
०३१७०२०१ हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम्
०३१७०२०२ गदापाणिर्दिवं यातो युयुत्सुर्मृगयन्रणम्
०३१७०२११ तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम्
०३१७०२१२ वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम्
०३१७०२२१ मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम्
०३१७०२२२ भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः
०३१७०२३१ स वै तिरोहितान्दृष्ट्वा महसा स्वेन दैत्यराट्
०३१७०२३२ सेन्द्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम्
०३१७०२४१ ततो निवृत्तः क्रीडिष्यन्गम्भीरं भीमनिस्वनम्
०३१७०२४२ विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः
०३१७०२५१ तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः
०३१७०२५२ अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः
०३१७०२६१ स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीञ्छ्वसनेरितान्मुहुः
०३१७०२६२ मौर्व्याभिजघ्ने गदया विभावरीमासेदिवांस्तात पुरीं प्रचेतसः
०३१७०२७१ तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम्
०३१७०२७२ स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज संयुगम्
०३१७०२८१ त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम्
०३१७०२८२ विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूयेन पुरायजत्प्रभो
०३१७०२९१ स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपां पतिः
०३१७०२९२ रोषं समुत्थं शमयन्स्वया धिया व्यवोचदङ्गोपशमं गता वयम्

०३१७०३०१ पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम्
०३१७०३०२ आराधयिष्यत्यसुरर्षभेहि तं मनस्विनो यं गृणते भवादृशाः
०३१७०३११ तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः
०३१७०३१२ यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते सदनुग्रहेच्छया
०३१८००१० मैत्रेय उवाच
०३१८००११ तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः
०३१८००१२ हरेर्विदित्वा गतिमङ्ग नारदाद्रसातलं निर्विविशे त्वरान्वितः
०३१८००२१ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया
०३१८००२२ मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः
०३१८००३१ आहैनमेह्यज्ञ महीं विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता
०३१८००३२ न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते
०३१८००४१ त्वं नः सपत्नैरभवाय किं भृतो यो मायया हन्त्यसुरान्परोक्षजित्
०३१८००४२ त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृच्छुचः
०३१८००५१ त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम्
०३१८००५२ बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः
०३१८००६१ स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम्
०३१८००६२ तोदं मृषन्निरगादम्बुमध्याद्ग्राहाहतः सकरेणुर्यथेभः
०३१८००७१ तं निःसरन्तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः
०३१८००७२ करालदंष्ट्रोऽशनिनिस्वनोऽब्रवीद्गतह्रियां किं त्वसतां विगर्हितम्
०३१८००८१ स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम्
०३१८००८२ अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः
०३१८००९१ परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम्
०३१८००९२ मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः प्रचण्डमन्युः प्रहसंस्तं बभाषे
०३१८०१०० श्रीभगवानुवाच
०३१८०१०१ सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान्
०३१८०१०२ न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र
०३१८०१११ एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताස्ते
०३१८०११२ तिष्ठामहेऽथापि कथञ्चिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम्
०३१८०१२१ त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः
०३१८०१२२ संस्थाप्य चास्मान्प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः
०३१८०१३० मैत्रेय उवाच

०३१८०१३१ सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम्
०३१८०१३२ आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव
०३१८०१४१ सृजन्नमर्षितः श्वासान्मन्युप्रचलितेन्द्रियः
०३१८०१४२ आसाद्य तरसा दैत्यो गदया न्यहनद्धरिम्
०३१८०१५१ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि
०३१८०१५२ अवञ्चयत्तिरश्चीनो योगारूढ इवान्तकम्
०३१८०१६१ पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः
०३१८०१६२ अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदम्
०३१८०१७१ ततश्च गदयारातिं दक्षिणस्यां भ्रुवि प्रभुः
०३१८०१७२ आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत्
०३१८०१८१ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च
०३१८०१८२ जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः
०३१८०१९१ तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्य्वोः
०३१८०१९२ विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः
०३१८०२०१ दैत्यस्य यज्ञावयवस्य माया गृहीतवाराहतनोर्महात्मनः
०३१८०२०२ कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट्
०३१८०२११ आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम्
०३१८०२१२ विलक्ष्य दैत्यं भगवान्सहस्रणीर्जगाद नारायणमादिसूकरम्
०३१८०२२० ब्रह्मोवाच
०३१८०२२१ एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम्
०३१८०२२२ विप्राणां सौरभेयीणां भूतानामप्यनागसाम्
०३१८०२३१ आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः
०३१८०२३२ अन्वेषन्नप्रतिरथो लोकानटति कण्टकः
०३१८०२४१ मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम्
०३१८०२४२ आक्रीड बालवद्देव यथाशीविषमुत्थितम्
०३१८०२५१ न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः
०३१८०२५२ स्वां देव मायामास्थाय तावज्जह्यघमच्युत
०३१८०२६१ एषा घोरतमा सन्ध्या लोकच्छम्बट्करी प्रभो
०३१८०२६२ उपसर्पति सर्वात्मन्सुराणां जयमावह
०३१८०२७१ अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात्
०३१८०२७२ शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम्

०३१८०२८१ दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम्
०३१८०२८२ विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि
०३१९००१० मैत्रेय उवाच
०३१९००११ अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः
०३१९००१२ प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत्
०३१९००२१ ततः सपत्नं मुखतश्चरन्तमकुतोभयम्
०३१९००२२ जघानोत्पत्य गदया हनावसुरमक्षजः
०३१९००३१ सा हता तेन गदया विहता भगवत्करात्
०३१९००३२ विघूर्णितापतद्रेजे तदद्भुतमिवाभवत्
०३१९००४१ स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम्
०३१९००४२ मानयन्स मृधे धर्मं विष्वक्सेनं प्रकोपयन्
०३१९००५१ गदायामपविद्धायां हाहाकारे विनिर्गते
०३१९००५२ मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः
०३१९००६१ तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम्
०३१९००६२ चित्रा वाचोऽतद्विदां खेचराणां तत्र स्मासन्स्वस्ति तेऽमुं जहीति
०३१९००७१ स तं निशाम्यात्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम्
०३१९००७२ विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन्
०३१९००८१ करालदंष्ट्रश्चक्षुर्भ्यां सञ्चक्षाणो दहन्निव
०३१९००८२ अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम्
०३१९००९१ पदा सव्येन तां साधो भगवान्यज्ञसूकरः
०३१९००९२ लीलया मिषतः शत्रोः प्राहरद्वातरंहसम्
०३१९०१०१ आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि
०३१९०१०२ इत्युक्तः स तदा भूयस्ताडयन्व्यनदद्भृशम्
०३१९०१११ तां स आपततीं वीक्ष्य भगवान्समवस्थितः
०३१९०११२ जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम्
०३१९०१२१ स्वपौरुषे प्रतिहते हतमानो महासुरः
०३१९०१२२ नैच्छद्गदां दीयमानां हरिणा विगतप्रभः
०३१९०१३१ जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम्
०३१९०१३२ यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा
०३१९०१४१ तदोजसा दैत्यमहाभटार्पितं चकासदन्तःख उदीर्णदीधिति
०३१९०१४२ चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम्

०३१९०१५१ वृक्णे स्वशूले बहुधारिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत्
०३१९०१५२ प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहृत्यान्तरधीयतासुरः
०३१९०१६१ तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः
०३१९०१६२ नाकम्पत मनाक्क्वापि स्रजा हत इव द्विपः
०३१९०१७१ अथोरुधासृजन्मायां योगमायेश्वरे हरौ
०३१९०१७२ यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम्
०३१९०१८१ प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन्
०३१९०१८२ दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव
०३१९०१९१ द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः
०३१९०१९२ वर्षद्भिः पूयकेशासृग् विण्मूत्रास्थीनि चासकृत्
०३१९०२०१ गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ
०३१९०२०२ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः
०३१९०२११ बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः
०३१९०२१२ आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः
०३१९०२२१ प्रादुष्कृतानां मायानामासुरीणां विनाशयत्
०३१९०२२२ सुदर्शनास्त्रं भगवान्प्रायुङ्क्त दयितं त्रिपात्
०३१९०२३१ तदा दितेः समभवत्सहसा हृदि वेपथुः
०३१९०२३२ स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक्प्रसुस्रुवे
०३१९०२४१ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम्
०३१९०२४२ रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः
०३१९०२५१ तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः
०३१९०२५२ करेण कर्णमूलेऽहन्यथा त्वाष्ट्रं मरुत्पतिः
०३१९०२६१ स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः
०३१९०२६२ विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्यथा नगेन्द्रो लुलितो नभस्वता
०३१९०२७१ क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम्
०३१९०२७२ अजादयो वीक्ष्य शशंसुरागता अहो इमं को नु लभेत संस्थितिम्
०३१९०२८१ यं योगिनो योगसमाधिना रहो ध्यायन्ति लिङ्गादसतो मुमुक्षया
०३१९०२८२ तस्यैष दैत्यऋषभः पदाहतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह
०३१९०२९१ एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम्
०३१९०२९२ पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः
०३१९०३०० देवा ऊचुः

०३१९०३०१ नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये
०३१९०३०२ दिष्ट्या हतोऽयं जगतामरुन्तुदस्त्वत्पादभक्त्या वयमीश निर्वृताः
०३१९०३१० मैत्रेय उवाच
०३१९०३११ एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः
०३१९०३१२ जगाम लोकं स्वमखण्डितोत्सवं समीडितः पुष्करविष्टरादिभिः
०३१९०३२१ मया यथानूक्तमवादि ते हरेः कृतावतारस्य सुमित्र चेष्टितम्
०३१९०३२२ यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः
०३१९०३३० सूत उवाच
०३१९०३३१ इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम्
०३१९०३३२ क्षत्तानन्दं परं लेभे महाभागवतो द्विज
०३१९०३४१ अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम्
०३१९०३४२ उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः
०३१९०३५१ यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम्
०३१९०३५२ क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम्
०३१९०३६१ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः
०३१९०३६२ कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः
०३१९०३७१ यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः
०३१९०३७२ शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः
०३१९०३८१ एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम्
०३१९०३८२ प्राणेन्द्रियाणां युधि शौर्यवर्धनं नारायणोऽन्ते गतिरङ्ग शृण्वताम्
०३२०००१० शौनक उवाच
०३२०००११ महीं प्रतिष्ठामध्यस्य सौते स्वायम्भुवो मनुः
०३२०००१२ कान्यन्वतिष्ठद्द्वाराणि मार्गायावरजन्मनाम्
०३२०००२१ क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत्
०३२०००२२ यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति
०३२०००३१ द्वैपायनादनवरो महित्वे तस्य देहजः
०३२०००३२ सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः
०३२०००४१ किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया
०३२०००४२ उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम्
०३२०००५१ तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः
०३२०००५२ आपो गाङ्गा इवाघघ्नीर्हरेः पादाम्बुजाश्रयाः

०३२०००६१ ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः

०३२०००६२ रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन्

०३२०००७१ एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः

०३२०००७२ भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति

०३२०००८० सूत उवाच

०३२०००८१ हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात्

०३२०००८२ लीलां हिरण्याक्षमवज्ञया हतं सञ्जातहर्षो मुनिमाह भारतः

०३२०००९० विदुर उवाच

०३२०००९१ प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन्

०३२०००९२ किमारभत मे ब्रह्मन्प्रब्रूह्यव्यक्तमार्गवित्

०३२००१०१ ये मरीच्यादयो विप्रा यस्तु स्वायम्भुवो मनुः

०३२००१०२ ते वै ब्रह्मण आदेशात्कथमेतदभावयन्

०३२००१११ सद्वितीयाः किमसृजन्स्वतन्त्रा उत कर्मसु

०३२००११२ आहो स्वित्संहताः सर्व इदं स्म समकल्पयन्

०३२००१२० मैत्रेय उवाच

०३२००१२१ दैवेन दुर्वितर्क्येण परेणानिमिषेण च

०३२००१२२ जातक्षोभाद्भगवतो महानासीद्गुणत्रयात्

०३२००१३१ रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात्

०३२००१३२ जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः

०३२००१४१ तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम्

०३२००१४२ संहत्य दैवयोगेन हैममण्डमवासृजन्

०३२००१५१ सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः

०३२००१५२ साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः

०३२००१६१ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति

०३२००१६२ सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट्

०३२००१७१ सोऽनुविष्टो भगवता यः शेते सलिलाशये

०३२००१७२ लोकसंस्थां यथा पूर्वं निर्ममे संस्थया स्वया

०३२००१८१ ससर्ज च्छाययाविद्यां पञ्चपर्वाणमग्रतः

०३२००१८२ तामिस्रमन्धतामिस्रं तमो मोहो महातमः

०३२००१९१ विससर्जात्मनः कायं नाभिनन्दंस्तमोमयम्

०३२००१९२ जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम्

०३२००२०१ क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः
०३२००२०२ मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः
०३२००२११ देवस्तानाह संविग्नो मा मां जक्षत रक्षत
०३२००२१२ अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ
०३२००२२१ देवताः प्रभया या या दीव्यन्प्रमुखतोऽसृजत्
०३२००२२२ ते अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः
०३२००२३१ देवोऽदेवाञ्जघनतः सृजति स्मातिलोलुपान्
०३२००२३२ त एनं लोलुपतया मैथुनायाभिपेदिरे
०३२००२४१ ततो हसन्स भगवानसुरैर्निरपत्रपैः
०३२००२४२ अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत्
०३२००२५१ स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम्
०३२००२५२ अनुग्रहाय भक्तानामनुरूपात्मदर्शनम्
०३२००२६१ पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः
०३२००२६२ ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो
०३२००२७१ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः
०३२००२७२ त्वमेकः क्लेशदस्तेषामनासन्नपदां तव
०३२००२८१ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः
०३२००२८२ विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह
०३२००२९१ तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम्
०३२००२९२ काञ्चीकलापविलसद् दुकूलच्छन्नरोधसम्
०३२००३०१ अन्योन्यश्लेषयोत्तुङ्ग निरन्तरपयोधराम्
०३२००३०२ सुनासां सुद्विजां स्निग्ध हासलीलावलोकनाम्
०३२००३११ गूहन्तीं व्रीडयात्मानं नीलालकवरूथिनीम्
०३२००३१२ उपलभ्यासुरा धर्म सर्वे सम्मुमुहुः स्त्रियम्
०३२००३२१ अहो रूपमहो धैर्यमहो अस्या नवं वयः
०३२००३२२ मध्ये कामयमानानामकामेव विसर्पति
०३२००३३१ वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम्
०३२००३३२ अभिसम्भाव्य विश्रम्भात्पर्यपृच्छन्कुमेधसः
०३२००३४१ कासि कस्यासि रम्भोरु को वार्थस्तेऽत्र भामिनि
०३२००३४२ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे
०३२००३५१ या वा काचित्त्वमबले दिष्ट्या सन्दर्शनं तव

०३२००३५२ उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः
०३२००३६१ नैकत्र ते जयति शालिनि पादपद्मं
०३२००३६२ घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम्
०३२००३६३ मध्यं विषीदति बृहत्स्तनभारभीतं
०३२००३६४ शान्तेव दृष्टिरमला सुशिखासमूहः
०३२००३७१ इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम्
०३२००३७२ प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम्
०३२००३८१ प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना
०३२००३८२ कान्त्या ससर्ज भगवान्गन्धर्वाप्सरसां गणान्
०३२००३९१ विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम्
०३२००३९२ त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः
०३२००४०१ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा
०३२००४०२ दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद्दृशौ
०३२००४११ जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः
०३२००४१२ निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते
०३२००४१३ येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते
०३२००४२१ ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः
०३२००४२२ साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः
०३२००४३१ त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे
०३२००४३२ साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते
०३२००४४१ सिद्धान्विद्याधरांश्चैव तिरोधानेन सोऽसृजत्
०३२००४४२ तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम्
०३२००४५१ स किन्नरान्किम्पुरुषान्प्रत्यात्म्येनासृजत्प्रभुः
०३२००४५२ मानयन्नात्मनात्मानमात्माभासं विलोकयन्
०३२००४६१ ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना
०३२००४६२ मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिः
०३२००४७१ देहेन वै भोगवता शयानो बहुचिन्तया
०३२००४७२ सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः
०३२००४८१ येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे
०३२००४८२ सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः
०३२००४९१ स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः

०३२००४९२ तदा मनून्ससर्जान्ते मनसा लोकभावनान्
०३२००५०१ तेभ्यः सोऽसृजत्स्वीयं पुरं पुरुषमात्मवान्
०३२००५०२ तान्दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम्
०३२००५११ अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम्
०३२००५१२ प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदाम हे
०३२००५२१ तपसा विद्यया युक्तो योगेन सुसमाधिना
०३२००५२२ ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः
०३२००५३१ तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः
०३२००५३२ यत्तत्समाधियोगर्द्धि तपोविद्याविरक्तिमत्
०३२१००१० विदुर उवाच
०३२१००११ स्वायम्भुवस्य च मनोरंशः परमसम्मतः
०३२१००१२ कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः
०३२१००२१ प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै
०३२१००२२ यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम्
०३२१००३१ तस्य वै दुहिता ब्रह्मन्देवहूतीति विश्रुता
०३२१००३२ पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयानघ
०३२१००४१ तस्यां स वै महायोगी युक्तायां योगलक्षणैः
०३२१००४२ ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद
०३२१००५१ रुचिर्यो भगवान्ब्रह्मन्दक्षो वा ब्रह्मणः सुतः
०३२१००५२ यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम्
०३२१००६० मैत्रेय उवाच
०३२१००६१ प्रजाः सृजेति भगवान्कर्दमो ब्रह्मणोदितः
०३२१००६२ सरस्वत्यां तपस्तेपे सहस्राणां समा दश
०३२१००७१ ततः समाधियुक्तेन क्रियायोगेन कर्दमः
०३२१००७२ सम्प्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम्
०३२१००८१ तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे
०३२१००८२ दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः
०३२१००९१ स तं विरजमर्काभं सितपद्मोत्पलस्रजम्
०३२१००९२ स्निग्धनीलालकव्रात वक्त्राब्जं विरजोऽम्बरम्
०३२१०१०१ किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम्
०३२१०१०२ श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम्

०३२१०१११ विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः
०३२१०११२ दृष्ट्वा खेऽवस्थितं वक्षः श्रियं कौस्तुभकन्धरम्
०३२१०१२१ जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः
०३२१०१२२ गीर्भिस्त्वभ्यगृणात्प्रीति स्वभावात्मा कृताञ्जलिः
०३२१०१३० ऋषिरुवाच
०३२१०१३१ जुष्टं बताद्याखिलसत्त्वराशेः सांसिद्ध्यमक्ष्णोस्तव दर्शनान्नः
०३२१०१३२ यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः
०३२१०१४१ ये मायया ते हतमेधसस्त्वत् पादारविन्दं भवसिन्धुपोतम्
०३२१०१४२ उपासते कामलवाय तेषां रासीश कामान्निरयेऽपि ये स्युः
०३२१०१५१ तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम्
०३२१०१५२ उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य
०३२१०१६१ प्रजापतेस्ते वचसाधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः
०३२१०१६२ अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम्
०३२१०१७१ लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते चरणातपत्रम्
०३२१०१७२ परस्परं त्वद्गुणवादसीधु पीयूषनिर्यापितदेहधर्माः
०३२१०१८१ न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व
०३२१०१८२ षण्नेम्यनन्तच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत्
०३२१०१९१ एकः स्वयं सञ्जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया
०३२१०१९२ सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवन्स्वशक्तिभिः
०३२१०२०१ नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम्
०३२१०२०२ अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या भगवान्विलक्षितः
०३२१०२११ तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम्
०३२१०२१२ नमाम्यभीक्ष्णं नमनीयपाद सरोजमल्पीयसि कामवर्षम्
०३२१०२२० ऋषिरुवाच
०३२१०२२१ इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमाबभाषे वचसामृतेन
०३२१०२२२ सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः
०३२१०२३० श्रीभगवानुवाच
०३२१०२३१ विदित्वा तव चैत्यं मे पुरैव समयोजि तत्
०३२१०२३२ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः
०३२१०२४१ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम्
०३२१०२४२ भवद्विधेष्वतितरां मयि सङ्गृभितात्मनाम्

०३२१०२५१ प्रजापतिसुतः सम्राण्मनुर्विख्यातमङ्गलः
०३२१०२५२ ब्रह्मावर्तं योऽधिवसन्शास्ति सप्तार्णवां महीम्
०३२१०२६१ स चेह विप्र राजर्षिर्महिष्या शतरूपया
०३२१०२६२ आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः
०३२१०२७१ आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम्
०३२१०२७२ मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो
०३२१०२८१ समाहितं ते हृदयं यत्रेमान्परिवत्सरान्
०३२१०२८२ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति
०३२१०२९१ या त आत्मभृतं वीर्यं नवधा प्रसविष्यति
०३२१०२९२ वीर्ये त्वदीये ऋषय आधास्यन्त्यञ्जसात्मनः
०३२१०३०१ त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः
०३२१०३०२ मयि तीर्थीकृताशेष क्रियार्थो मां प्रपत्स्यसे
०३२१०३११ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान्
०३२१०३१२ मय्यात्मानं सह जगद्द्रक्ष्यस्यात्मनि चापि माम्
०३२१०३२१ सहाहं स्वांशकलया त्वद्वीर्येण महामुने
०३२१०३२२ तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्
०३२१०३३० मैत्रेय उवाच
०३२१०३३१ एवं तमनुभाष्याथ भगवान्प्रत्यगक्षजः
०३२१०३३२ जगाम बिन्दुसरसः सरस्वत्या परिश्रितात्
०३२१०३४१ निरीक्षतस्तस्य ययावशेष सिद्धेश्वराभिष्टुतसिद्धमार्गः
०३२१०३४२ आकर्णयन्पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम
०३२१०३५१ अथ सम्प्रस्थिते शुक्ले कर्दमो भगवानृषिः
०३२१०३५२ आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन्
०३२१०३६१ मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम्
०३२१०३६२ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम्
०३२१०३७१ तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत्
०३२१०३७२ उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत्
०३२१०३८१ यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः
०३२१०३८२ कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम्
०३२१०३९१ तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम्
०३२१०३९२ पुण्यं शिवामृतजलं महर्षिगणसेवितम्

०३२१०४०१ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः
०३२१०४०२ सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम्
०३२१०४११ मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम्
०३२१०४१२ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम्
०३२१०४२१ कदम्बचम्पकाशोक करञ्जबकुलासनैः
०३२१०४२२ कुन्दमन्दारकुटजैश्चूतपोतैरलङ्कृतम्
०३२१०४३१ कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः
०३२१०४३२ सारसैश्चक्रवाकैश्च चकोरैर्वल्गु कूजितम्
०३२१०४४१ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः
०३२१०४४२ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम्
०३२१०४५१ प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः
०३२१०४५२ ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम्
०३२१०४६१ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम्
०३२१०४६२ नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात्
०३२१०४६३ तद्व्याहृतामृतकला पीयूषश्रवणेन च
०३२१०४७१ प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम्
०३२१०४७२ उपसंश्रित्य मलिनं यथार्हणमसंस्कृतम्
०३२१०४८१ अथोटजमुपायातं नृदेवं प्रणतं पुरः
०३२१०४८२ सपर्यया पर्यगृह्णात्प्रतिनन्द्यानुरूपया
०३२१०४९१ गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः
०३२१०४९२ स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा
०३२१०५०१ नूनं चङ्क्रमणं देव सतां संरक्षणाय ते
०३२१०५०२ वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी
०३२१०५११ योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम्
०३२१०५१२ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः
०३२१०५२१ न यदा रथमास्थाय जैत्रं मणिगणार्पितम्
०३२१०५२२ विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान्
०३२१०५३१ स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः
०३२१०५३२ विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव
०३२१०५४१ तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः
०३२१०५४२ भगवद्रचिता राजन्भिद्येरन्बत दस्युभिः

०३२१०५५१ अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः
०३२१०५५२ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति
०३२१०५६१ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः
०३२१०५६२ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा
०३२२००१० मैत्रेय उवाच
०३२२००११ एवमाविष्कृताशेष गुणकर्मोदयो मुनिम्
०३२२००१२ सव्रीड इव तं सम्राडुपारतमुवाच ह
०३२२००२० मनुरुवाच
०३२२००२१ ब्रह्मासृजत्स्वमुखतो युष्मानात्मपरीप्सया
०३२२००२२ छन्दोमयस्तपोविद्या योगयुक्तानलम्पटान्
०३२२००३१ तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपात्
०३२२००३२ हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते
०३२२००४१ अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः
०३२२००४२ रक्षति स्माव्ययो देवः स यः सदसदात्मकः
०३२२००५१ तव सन्दर्शनादेव च्छिन्ना मे सर्वसंशयाः
०३२२००५२ यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः
०३२२००६१ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम्
०३२२००६२ दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम्
०३२२००७१ दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान्
०३२२००७२ अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः
०३२२००८१ स भवान्दुहितृस्नेह परिक्लिष्टात्मनो मम
०३२२००८२ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने
०३२२००९१ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम
०३२२००९२ अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः
०३२२०१०१ यदा तु भवतः शील श्रुतरूपवयोगुणान्
०३२२०१०२ अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया
०३२२०१११ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया
०३२२०११२ सर्वात्मनानुरूपां ते गृहमेधिषु कर्मसु
०३२२०१२१ उद्यतस्य हि कामस्य प्रतिवादो न शस्यते
०३२२०१२२ अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः
०३२२०१३१ य उद्यतमनादृत्य कीनाशमभियाचते

०३२२०१३२ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः
०३२२०१४१ अहं त्वाश‍ृणवं विद्वन्विवाहार्थं समुद्यतम्
०३२२०१४२ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे
०३२२०१५० ऋषिरुवाच
०३२२०१५१ बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा
०३२२०१५२ आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः
०३२२०१६१ कामः स भूयान्नरदेव तेऽस्याः पुत्र्याः समाम्नायविधौ प्रतीतः
०३२२०१६२ क एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम्
०३२२०१७१ यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम्
०३२२०१७२ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य सम्मोहविमूढचेताः
०३२२०१८१ तां प्रार्थयन्तीं ललनाललामम सेवितश्रीचरणैरदृष्टाम्
०३२२०१८२ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम्
०३२२०१९१ अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे
०३२२०१९२ अतो धर्मान्पारमहंस्यमुख्यान्शुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान्
०३२२०२०१ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते
०३२२०२०२ प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः
०३२२०२१० मैत्रेय उवाच
०३२२०२११ स उग्रधन्वन्नियदेवाबभाषे आसीच्च तूष्णीमरविन्दनाभम्
०३२२०२१२ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः
०३२२०२२१ सोऽनु ज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम्
०३२२०२२२ तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः
०३२२०२३१ शतरूपा महाराज्ञी पारिबर्हान्महाधनान्
०३२२०२३२ दम्पत्योः पर्यदात्प्रीत्या भूषावासः परिच्छदान्
०३२२०२४१ प्रत्तां दुहितरं सम्राड्सदृक्षाय गतव्यथः
०३२२०२४२ उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः
०३२२०२५१ अशक्नुवंस्तद्विरहं मुञ्चन्बाष्पकलां मुहुः
०३२२०२५२ आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः
०३२२०२६१ आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः
०३२२०२६२ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः
०३२२०२७१ उभयोरृषिकुल्यायाः सरस्वत्याः सुरोधसोः
०३२२०२७२ ऋषीणामुपशान्तानां पश्यन्नाश्रमसम्पदः

०३२२०२८१ तमायान्तमभिप्रेत्य ब्रह्मावर्तात्प्रजाः पतिम्
०३२२०२८२ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः
०३२२०२९१ बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता
०३२२०२९२ न्यपतन्यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः
०३२२०३०१ कुशाः काशास्त एवासन्शश्वद्धरितवर्चसः
०३२२०३०२ ऋषयो यैः पराभाव्य यज्ञघ्नान्यज्ञमीजिरे
०३२२०३११ कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः
०३२२०३१२ अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम्
०३२२०३२१ बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत्
०३२२०३२२ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम्
०३२२०३३१ सभार्यः सप्रजः कामान्बुभुजेऽन्याविरोधतः
०३२२०३३२ सङ्गीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः
०३२२०३३३ प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः
०३२२०३४१ निष्णातं योगमायासु मुनिं स्वायम्भुवं मनुम्
०३२२०३४२ यदाभ्रंशयितुं भोगा न शेकुर्भगवत्परम्
०३२२०३५१ अयातयामास्तस्यासन्यामाः स्वान्तरयापनाः
०३२२०३५२ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः
०३२२०३६१ स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम्
०३२२०३६२ वासुदेवप्रसङ्गेन परिभूतगतित्रयः
०३२२०३७१ शारीरा मानसा दिव्या वैयासे ये च मानुषाः
०३२२०३७२ भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम्
०३२२०३८१ यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधान्छुभान्
०३२२०३८२ नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा
०३२२०३९१ एतत्त आदिराजस्य मनोश्चरितमद्भुतम्
०३२२०३९२ वर्णितं वर्णनीयस्य तदपत्योदयं शृणु
०३२३००१० मैत्रेय उवाच
०३२३००११ पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा
०३२३००१२ नित्यं पर्यचरत्प्रीत्या भवानीव भवं प्रभुम्
०३२३००२१ विश्रम्भेणात्मशौचेन गौरवेण दमेन च
०३२३००२२ शुश्रूषया सौहृदेन वाचा मधुरया च भोः
०३२३००३१ विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम्

०३२३००३२ अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत्
०३२३००४१ स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम्
०३२३००४२ दैवाद्गरीयसः पत्युराशासानां महाशिषः
०३२३००५१ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया
०३२३००५२ प्रेमगद्गदया वाचा पीडितः कृपयाब्रवीत्
०३२३००६० कर्दम उवाच
०३२३००६१ तुष्टोऽहमद्य तव मानवि मानदायाः
०३२३००६२ शुश्रूषया परमया परया च भक्त्या
०३२३००६३ यो देहिनामयमतीव सुहृत्स देहो
०३२३००६४ नावेक्षितः समुचितः क्षपितुं मदर्थे
०३२३००७१ ये मे स्वधर्मनिरतस्य तपःसमाधि
०३२३००७२ विद्यात्मयोगविजिता भगवत्प्रसादाः
०३२३००७३ तानेव ते मदनुसेवनयावरुद्धान्
०३२३००७४ दृष्टिं प्रपश्य वितराम्यभयानशोकान्
०३२३००८१ अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भ
०३२३००८२ विभ्रंशितार्थरचनाः किमुरुक्रमस्य
०३२३००८३ सिद्धासि भुङ्क्ष्व विभवान्निजधर्मदोहान्
०३२३००८४ दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः
०३२३००९१ एवं ब्रुवाणमबलाखिलयोगमाया
०३२३००९२ विद्याविचक्षणमवेक्ष्य गताधिरासीत्
०३२३००९३ सम्प्रश्रयप्रणयविह्वलया गिरेषद्
०३२३००९४ व्रीडावलोकविलसद्धसिताननाह
०३२३०१०० देवहूतिरुवाच
०३२३०१०१ राद्धं बत द्विजवृषैतदमोघयोग
०३२३०१०२ मायाधिपे त्वयि विभो तदवैमि भर्तः
०३२३०१०३ यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो
०३२३०१०४ भूयाद्गरीयसि गुणः प्रसवः सतीनाम्
०३२३०१११ तत्रेतिकृत्यमुपशिक्ष यथोपदेशं
०३२३०११२ येनैष मे कर्शितोऽतिरिरंसयात्मा
०३२३०११३ सिध्येत ते कृतमनोभवधर्षिताया
०३२३०११४ दीनस्तदीश भवनं सदृशं विचक्ष्व

०३२३०१२० मैत्रेय उवाच
०३२३०१२१ प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः
०३२३०१२२ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत्
०३२३०१३१ सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम्
०३२३०१३२ सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम्
०३२३०१४१ दिव्योपकरणोपेतं सर्वकालसुखावहम्
०३२३०१४२ पट्टिकाभिः पताकाभिर्विचित्राभिरलङ्कृतम्
०३२३०१५१ स्रग्भिर्विचित्रमाल्याभिर्मञ्जुशिञ्जत्षडङ्घ्रिभिः
०३२३०१५२ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम्
०३२३०१६१ उपर्युपरि विन्यस्त निलयेषु पृथक्पृथक्
०३२३०१६२ क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः
०३२३०१७१ तत्र तत्र विनिक्षिप्त नानाशिल्पोपशोभितम्
०३२३०१७२ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः
०३२३०१८१ द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटवत्
०३२३०१८२ शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम्
०३२३०१९१ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः
०३२३०१९२ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः
०३२३०२०१ हंसपारावतव्रातैस्तत्र तत्र निकूजितम्
०३२३०२०२ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च
०३२३०२११ विहारस्थानविश्राम संवेशप्राङ्गणाजिरैः
०३२३०२१२ यथोपजोषं रचितैर्विस्मापनमिवात्मनः
०३२३०२२१ ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा
०३२३०२२२ सर्वभूताशयाभिज्ञः प्रावोचत्कर्दमः स्वयम्
०३२३०२३१ निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह
०३२३०२३२ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम्
०३२३०२४१ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा
०३२३०२४२ सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान्
०३२३०२५१ अङ्गं च मलपङ्केन सञ्छन्नं शबलस्तनम्
०३२३०२५२ आविवेश सरस्वत्याः सरः शिवजलाशयम्
०३२३०२६१ सान्तः सरसि वेश्मस्थाः शतानि दश कन्यकाः
०३२३०२६२ सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः

०३२३०२७१ तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः
०३२३०२७२ वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम्
०३२३०२८१ स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम्
०३२३०२८२ दुकूले निर्मले नूत्ने ददुरस्यै च मानदाः
०३२३०२९१ भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च
०३२३०२९२ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम्
०३२३०३०१ अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम्
०३२३०३०२ विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम्
०३२३०३११ स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम्
०३२३०३१२ निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम्
०३२३०३२१ श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया
०३२३०३२२ हारेण च महार्हेण रुचकेन च भूषितम्
०३२३०३३१ सुदता सुभ्रुवा श्लक्ष्ण स्निग्धापाङ्गेन चक्षुषा
०३२३०३३२ पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम्
०३२३०३४१ यदा सस्मार ऋषभमृषीणां दयितं पतिम्
०३२३०३४२ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः
०३२३०३५१ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा
०३२३०३५२ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत
०३२३०३६१ स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत्
०३२३०३६२ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम्
०३२३०३७१ विद्याधरीसहस्रेण सेव्यमानां सुवाससम्
०३२३०३७२ जातभावो विमानं तदारोहयदमित्रहन्
०३२३०३८१ तस्मिन्नलुप्तमहिमा प्रिययानुरक्तो
०३२३०३८२ विद्याधरीभिरुपचीर्णवपुर्विमाने
०३२३०३८३ बभ्राज उत्कचकुमुद्गणवानपीच्यस्
०३२३०३८४ ताराभिरावृत इवोडुपतिर्नभःस्थः
०३२३०३९१ तेनाष्टलोकपविहारकुलाचलेन्द्र
०३२३०३९२ द्रोणीष्वनङ्गसखमारुतसौभगासु
०३२३०३९३ सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु
०३२३०३९४ रेमे चिरं धनदवल्ललनावरूथी
०३२३०४०१ वैश्रम्भके सुरसने नन्दने पुष्पभद्रके

०३२३०४०२ मानसे चैत्ररथ्ये च स रेमे रामया रतः
०३२३०४११ भ्राजिष्णुना विमानेन कामगेन महीयसा
०३२३०४१२ वैमानिकानत्यशेत चरल्लोकान्यथानिलः
०३२३०४२१ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्
०३२३०४२२ यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः
०३२३०४३१ प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्स्वसंस्थया
०३२३०४३२ बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत
०३२३०४४१ विभज्य नवधात्मानं मानवीं सुरतोत्सुकाम्
०३२३०४४२ रामां निरमयन्रेमे वर्षपूगान्मुहूर्तवत्
०३२३०४५१ तस्मिन्विमान उत्कृष्टां शय्यां रतिकरीं श्रिता
०३२३०४५२ न चाबुध्यत तं कालं पत्यापीच्येन सङ्गता
०३२३०४६१ एवं योगानुभावेन दम्पत्यो रममाणयोः
०३२३०४६२ शतं व्यतीयुः शरदः कामलालसयोर्मनाक्
०३२३०४७१ तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित्
०३२३०४७२ नोधा विधाय रूपं स्वं सर्वसङ्कल्पविद्विभुः
०३२३०४८१ अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः
०३२३०४८२ सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः
०३२३०४९१ पतिं सा प्रव्रजिष्यन्तं तदालक्ष्योशती बहिः
०३२३०४९२ स्मयमाना विक्लवेन हृदयेन विदूयता
०३२३०५०१ लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया
०३२३०५०२ उवाच ललितां वाचं निरुध्याश्रुकलां शनैः
०३२३०५१० देवहूतिरुवाच
०३२३०५११ सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम्
०३२३०५१२ अथापि मे प्रपन्नाया अभयं दातुमर्हसि
०३२३०५२१ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः
०३२३०५२२ कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम्
०३२३०५३१ एतावतालं कालेन व्यतिक्रान्तेन मे प्रभो
०३२३०५३२ इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः
०३२३०५४१ इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः
०३२३०५४२ अजानन्त्या परं भावं तथाप्यस्त्वभयाय मे
०३२३०५५१ सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया

०३२३०५५२ स एव साधुषु कृतो निःसङ्गत्वाय कल्पते
०३२३०५६१ नेह यत्कर्म धर्माय न विरागाय कल्पते
०३२३०५६२ न तीर्थपदसेवायै जीवन्नपि मृतो हि सः
०३२३०५७१ साहं भगवतो नूनं वञ्चिता मायया दृढम्
०३२३०५७२ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात्
०३२४००१० मैत्रेय उवाच
०३२४००११ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः
०३२४००१२ दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन्
०३२४००२० ऋषिरुवाच
०३२४००२१ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते
०३२४००२२ भगवांस्तेऽक्षरो गर्भमदूरात्सम्प्रपत्स्यते
०३२४००३१ धृतव्रतासि भद्रं ते दमेन नियमेन च
०३२४००३२ तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज
०३२४००४१ स त्वयाराधितः शुक्लो वितन्वन्मामकं यशः
०३२४००४२ छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः
०३२४००५० मैत्रेय उवाच
०३२४००५१ देवहूत्यपि सन्देशं गौरवेण प्रजापतेः
०३२४००५२ सम्यक्श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम्
०३२४००६१ तस्यां बहुतिथे काले भगवान्मधुसूदनः
०३२४००६२ कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि
०३२४००७१ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः
०३२४००७२ गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा
०३२४००८१ पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः
०३२४००८२ प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च
०३२४००९१ तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम्
०३२४००९२ स्वयम्भूः साकमृषिभिर्मरीच्यादिभिरभ्ययात्
०३२४०१०१ भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन्
०३२४०१०२ तत्त्वसङ्ख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट्
०३२४०१११ सभाजयन्विशुद्धेन चेतसा तच्चिकीर्षितम्
०३२४०११२ प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात्
०३२४०१२० ब्रह्मोवाच

०३२४०१२१ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः
०३२४०१२२ यन्मे सञ्जगृहे वाक्यं भवान्मानद मानयन्
०३२४०१३१ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः
०३२४०१३२ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः
०३२४०१४१ इमा दुहितरः सत्यस्तव वत्स सुमध्यमाः
०३२४०१४२ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा
०३२४०१५१ अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि
०३२४०१५२ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि
०३२४०१६१ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया
०३२४०१६२ भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने
०३२४०१७१ ज्ञानविज्ञानयोगेन कर्मणामुद्धरञ्जटाः
०३२४०१७२ हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः
०३२४०१८१ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः
०३२४०१८२ अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति
०३२४०१९१ अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः
०३२४०१९२ लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः
०३२४०२०० मैत्रेय उवाच
०३२४०२०१ तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः
०३२४०२०२ हंसो हंसेन यानेन त्रिधामपरमं ययौ
०३२४०२११ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः
०३२४०२१२ यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः
०३२४०२२१ मरीचये कलां प्रादादनसूयामथात्रये
०३२४०२२२ श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम्
०३२४०२३१ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम्
०३२४०२३२ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम्
०३२४०२४१ अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते
०३२४०२४२ विप्रर्षभान्कृतोद्वाहान्सदारान्समलालयत्
०३२४०२५१ ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम्
०३२४०२५२ प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम्
०३२४०२६१ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम्
०३२४०२६२ विविक्त उपसङ्गम्य प्रणम्य समभाषत

०३२४०२७१ अहो पापच्यमानानां निरये स्वैरमङ्गलैः
०३२४०२७२ कालेन भूयसा नूनं प्रसीदन्तीह देवताः
०३२४०२८१ बहुजन्मविपक्वेन सम्यग्योगसमाधिना
०३२४०२८२ द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम्
०३२४०२९१ स एव भगवानद्य हेलनं न गणय्य नः
०३२४०२९२ गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः
०३२४०३०१ स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे
०३२४०३०२ चिकीर्षुर्भगवान्ज्ञानं भक्तानां मानवर्धनः
०३२४०३११ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव
०३२४०३१२ यानि यानि च रोचन्ते स्वजनानामरूपिणः
०३२४०३२१ त्वां सूरिभिस्तत्त्वबुभुत्सयाद्धा सदाभिवादार्हणपादपीठम्
०३२४०३२२ ऐश्वर्यवैराग्ययशोऽवबोध वीर्यश्रिया पूर्तमहं प्रपद्ये
०३२४०३३१ परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम्
०३२४०३३२ आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये
०३२४०३४१ अ स्माभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णर्ण उताप्तकामः
०३२४०३४२ परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्विशोकः
०३२४०३५० श्रीभगवानुवाच
०३२४०३५१ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके
०३२४०३५२ अथाजनि मया तुभ्यं यदवोचमृतं मुने
०३२४०३६१ एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात्
०३२४०३६२ प्रसङ्ख्यानाय तत्त्वानां सम्मतायात्मदर्शने
०३२४०३७१ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा
०३२४०३७२ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम्
०३२४०३८१ गच्छ कामं मयापृष्टो मयि सन्न्यस्तकर्मणा
०३२४०३८२ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज
०३२४०३९१ मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम्
०३२४०३९२ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि
०३२४०४०१ मात्र आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम्
०३२४०४०२ वितरिष्ये यया चासौ भयं चातितरिष्यति
०३२४०४१० मैत्रेय उवाच
०३२४०४११ एवं समुदितस्तेन कपिलेन प्रजापतिः

०३२४०४१२ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह
०३२४०४२१ व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः
०३२४०४२२ निःसङ्गो व्यचरत्क्षोणीमनग्निरनिकेतनः
०३२४०४३१ मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम्
०३२४०४३२ गुणावभासे विगुण एकभक्त्यानुभाविते
०३२४०४४१ निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक्स्वदृक्
०३२४०४४२ प्रत्यक्प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः
०३२४०४५१ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि
०३२४०४५२ परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः
०३२४०४६१ आत्मानं सर्वभूतेषु भगवन्तमवस्थितम्
०३२४०४६२ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि
०३२४०४७१ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा
०३२४०४७२ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः
०३२५००१० शौनक उवाच
०३२५००११ कपिलस्तत्त्वसङ्ख्याता भगवानात्ममायया
०३२५००१२ जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्
०३२५००२१ न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम्
०३२५००२२ विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः
०३२५००३१ यद्यद्विधत्ते भगवान्स्वच्छन्दात्मात्ममायया
०३२५००३२ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय
०३२५००४० सूत उवाच
०३२५००४१ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा
०३२५००४२ प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः
०३२५००५० मैत्रेय उवाच
०३२५००५१ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया
०३२५००५२ तस्मिन्बिन्दुसरेऽवात्सीद्भगवान्कपिलः किल
०३२५००६१ तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम्
०३२५००६२ स्वसुतं देवहूत्याह धातुः संस्मरती वचः
०३२५००७० देवहूतिरुवाच
०३२५००७१ निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात्
०३२५००७२ येन सम्भाव्यमानेन प्रपन्नान्धं तमः प्रभो

०३२५००८१ तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम्
०३२५००८२ सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात्
०३२५००९१ य आद्यो भगवान्पुंसामीश्वरो वै भवान्किल
०३२५००९२ लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः
०३२५०१०१ अथ मे देव सम्मोहमपाक्रष्टुं त्वमर्हसि
०३२५०१०२ योऽवग्रहोऽहं ममेतीत्येतस्मिन्योजितस्त्वया
०३२५०१११ तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम्
०३२५०११२ जिज्ञासयाहं प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम्
०३२५०१२० मैत्रेय उवाच
०३२५०१२१ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम्
०३२५०१२२ धियाभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः
०३२५०१३० श्रीभगवानुवाच
०३२५०१३१ योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे
०३२५०१३२ अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च
०३२५०१४१ तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे
०३२५०१४२ ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम्
०३२५०१५१ चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्
०३२५०१५२ गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये
०३२५०१६१ अहं ममाभिमानोत्थैः कामलोभादिभिर्मलैः
०३२५०१६२ वीतं यदा मनः शुद्धमदुःखमसुखं समम्
०३२५०१७१ तदा पुरुष आत्मानं केवलं प्रकृतेः परम्
०३२५०१७२ निरन्तरं स्वयंज्योतिरणिमानमखण्डितम्
०३२५०१८१ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना
०३२५०१८२ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम्
०३२५०१९१ न युज्यमानया भक्त्या भगवत्यखिलात्मनि
०३२५०१९२ सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये
०३२५०२०१ प्रसङ्गमजरं पाशमात्मनः कवयो विदुः
०३२५०२०२ स एव साधुषु कृतो मोक्षद्वारमपावृतम्
०३२५०२११ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम्
०३२५०२१२ अजातशत्रवः शान्ताः साधवः साधुभूषणाः
०३२५०२२१ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्

०३२५०२२२ मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः
०३२५०२३१ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च
०३२५०२३२ तपन्ति विविधास्तापा नैतान्मद्गतचेतसः
०३२५०२४१ त एते साधवः साध्वि सर्वसङ्गविवर्जिताः
०३२५०२४२ सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते
०३२५०२५१ सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः
०३२५०२५२ तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति
०३२५०२६१ भक्त्या पुमाञ्जातविराग ऐन्द्रियाद्दृष्टश्रुतान्मद्रचनानुचिन्तया
०३२५०२६२ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः
०३२५०२७१ असेवयायं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन
०३२५०२७२ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे
०३२५०२८० देवहूतिरुवाच
०३२५०२८१ काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा
०३२५०२८२ यया पदं ते निर्वाणमञ्जसान्वाश्नवा अहम्
०३२५०२९१ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः
०३२५०२९२ कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम्
०३२५०३०१ तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे
०३२५०३०२ सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात्
०३२५०३१० मैत्रेय उवाच
०३२५०३११ विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः
०३२५०३१२ तत्त्वाम्नायं यत्प्रवदन्ति साङ्ख्यं प्रोवाच वै भक्तिवितानयोगम्
०३२५०३२० श्रीभगवानुवाच
०३२५०३२१ देवानां गुणलिङ्गानामानुश्रविककर्मणाम्
०३२५०३२२ सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या
०३२५०३४१ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी
०३२५०३४२ जरयत्याशु या कोशं निगीर्णमनलो यथा
०३२५०३५१ नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः
०३२५०३५२ येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि
०३२५०३६१ पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि
०३२५०३६२ रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति
०३२५०३७१ तैर्दर्शनीयावयवैरुदार विलासहासेक्षितवामसूक्तैः

०३२५०३७२ हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते
०३२५०३८१ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम्
०३२५०३८२ श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके
०३२५०३९१ न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः
०३२५०३९२ येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्
०३२५०४०१ इमं लोकं तथैवामुमात्मानमुभयायिनम्
०३२५०४०२ आत्मानमनु ये चेह ये रायः पशवो गृहाः
०३२५०४११ विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम्
०३२५०४१२ भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये
०३२५०४२१ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्
०३२५०४२२ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते
०३२५०४३१ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात्
०३२५०४३२ वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात्
०३२५०४४१ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः
०३२५०४४२ क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम्
०३२५०४५१ एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः
०३२५०४५२ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम्
०३२६००१० श्रीभगवानुवाच
०३२६००११ अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक्
०३२६००१२ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः
०३२६००२१ ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम्
०३२६००२२ यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम्
०३२६००३१ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः
०३२६००३२ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम्
०३२६००४१ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः
०३२६००४२ यदृच्छयैवोपगतामभ्यपद्यत लीलया
०३२६००५१ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः
०३२६००५२ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया
०३२६००६१ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान्
०३२६००६२ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते
०३२६००७१ तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम्

०३२६००७२ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः
०३२६००८१ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः
०३२६००८२ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्
०३२६००९० देवहूतिरुवाच
०३२६००९१ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम
०३२६००९२ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम्
०३२६०१०० श्रीभगवानुवाच
०३२६०१०१ यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्
०३२६०१०२ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्
०३२६०१११ पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा
०३२६०११२ एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः
०३२६०१२१ महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः
०३२६०१२२ तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे
०३२६०१३१ इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः
०३२६०१३२ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते
०३२६०१४१ मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्
०३२६०१४२ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया
०३२६०१५१ एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य ह
०३२६०१५२ सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः
०३२६०१६१ प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्
०३२६०१६२ अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः
०३२६०१७१ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि
०३२६०१७२ चेष्टा यतः स भगवान्काल इत्युपलक्षितः
०३२६०१८१ अन्तः पुरुषरूपेण कालरूपेण यो बहिः
०३२६०१८२ समन्वेत्येष सत्त्वानां भगवानात्ममायया
०३२६०१९१ दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्
०३२६०१९२ आधत्त वीर्यं सासूत महत्तत्त्वं हिरण्मयम्
०३२६०२०१ विश्वमात्मगतं व्यञ्जन्कूटस्थो जगदङ्कुरः
०३२६०२०२ स्वतेजसापिबत्तीव्रमात्मप्रस्वापनं तमः
०३२६०२११ यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम्
०३२६०२१२ यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्

०३२६०२२१ स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः
०३२६०२२२ वृत्तिभिर्लक्षणं प्रोक्तं यथापां प्रकृतिः परा
०३२६०२३१ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसम्भवात्
०३२६०२३२ क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत
०३२६०२४१ वैकारिकस्तैजसश्च तामसश्च यतो भवः
०३२६०२४२ मनसश्चेन्द्रियाणां च भूतानां महतामपि
०३२६०२५१ सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते
०३२६०२५२ सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम्
०३२६०२६१ कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम्
०३२६०२६२ शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः
०३२६०२७१ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत
०३२६०२७२ यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः
०३२६०२८१ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम्
०३२६०२८२ शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः
०३२६०२९१ तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति
०३२६०२९२ द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः
०३२६०३०१ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च
०३२६०३०२ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्
०३२६०३११ तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः
०३२६०३१२ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता
०३२६०३२१ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात्
०३२६०३२२ शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम्
०३२६०३३१ अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च
०३२६०३३२ तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः
०३२६०३४१ भूतानां छिद्रदातृत्वं बहिरन्तरमेव च
०३२६०३४२ प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम्
०३२६०३५१ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः
०३२६०३५२ स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च सङ्ग्रहः
०३२६०३६१ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च
०३२६०३६२ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः
०३२६०३७१ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः

०३२६०३७२ सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम्
०३२६०३८१ वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत्
०३२६०३८२ समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम्
०३२६०३९१ द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च
०३२६०३९२ तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः
०३२६०४०१ द्योतनं पचनं पानमदनं हिममर्दनम्
०३२६०४०२ तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च
०३२६०४११ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात्
०३२६०४१२ रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः
०३२६०४२१ कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा
०३२६०४२२ भौतिकानां विकारेण रस एको विभिद्यते
०३२६०४३१ क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम्
०३२६०४३२ तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः
०३२६०४४१ रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात्
०३२६०४४२ गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः
०३२६०४५१ करम्भपूतिसौरभ्य शान्तोग्राम्लादिभिः पृथक्
०३२६०४५२ द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते
०३२६०४६१ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम्
०३२६०४६२ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम्
०३२६०४७१ नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते
०३२६०४७२ वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः
०३२६०४८१ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते
०३२६०४८२ अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः
०३२६०४८३ भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते
०३२६०४९१ परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात्
०३२६०४९२ अतो विशेषो भावानां भूमावेवोपलक्ष्यते
०३२६०५०१ एतान्यसंहत्य यदा महदादीनि सप्त वै
०३२६०५०२ कालकर्मगुणोपेतो जगदादिरुपाविशत्
०३२६०५११ ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम्
०३२६०५१२ उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट्
०३२६०५२१ एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः

०३२६०५२२ तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः
०३२६०५२३ यत्र लोकवितानोऽयं रूपं भगवतो हरेः
०३२६०५३१ हिरण्मयादण्डकोशादुत्थाय सलिले शयात्
०३२६०५३२ तमाविश्य महादेवो बहुधा निर्बिभेद खम्
०३२६०५४१ निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत्
०३२६०५४२ वाण्या वह्निरथो नासे प्राणोतो घ्राण एतयोः
०३२६०५५१ घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः
०३२६०५५२ तस्मात्सूर्यो न्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः
०३२६०५६१ निर्बिभेद विराजस्त्वग् रोमश्मश्र्वादयस्ततः
०३२६०५६२ तत ओषधयश्चासन्शिश्नं निर्बिभिदे ततः
०३२६०५७१ रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम्
०३२६०५७२ गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः
०३२६०५८१ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट्
०३२६०५८२ पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः
०३२६०५९१ नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम्
०३२६०५९२ नद्यस्ततः समभवन्नुदरं निरभिद्यत
०३२६०६०१ क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत्
०३२६०६०२ अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम्
०३२६०६११ मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः
०३२६०६१२ अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत्
०३२६०६२१ एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन्
०३२६०६२२ पुनराविविशुः खानि तमुत्थापयितुं क्रमात्
०३२६०६३१ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट्
०३२६०६३२ घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट्
०३२६०६४१ अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट्
०३२६०६४२ श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट्
०३२६०६५१ त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट्
०३२६०६५२ रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट्
०३२६०६६१ गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट्
०३२६०६६२ हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट्
०३२६०६७१ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट्

०३२६०६७२ नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट्
०३२६०६८१ क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट्
०३२६०६८२ हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट्
०३२६०६९१ बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट्
०३२६०६९२ रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट्
०३२६०७०१ चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा
०३२६०७०२ विराट्तदैव पुरुषः सलिलादुदतिष्ठत
०३२६०७११ यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः
०३२६०७१२ प्रभवन्ति विना येन नोत्थापयितुमोजसा
०३२६०७२१ तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया
०३२६०७२२ भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्
०३२७००१० श्रीभगवानुवाच
०३२७००११ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः
०३२७००१२ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत्
०३२७००२१ स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते
०३२७००२२ अहङ्क्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते
०३२७००३१ तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः
०३२७००३२ प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु
०३२७००४१ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते
०३२७००४२ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा
०३२७००५१ अत एव शनैश्चित्तं प्रसक्तमसतां पथि
०३२७००५२ भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम्
०३२७००६१ यमादिभिर्योगपथैरभ्यसञ्श्रद्धयान्वितः
०३२७००६२ मयि भावेन सत्येन मत्कथाश्रवणेन च
०३२७००७१ सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः
०३२७००७२ ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा
०३२७००८१ यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ्मुनिः
०३२७००८२ विविक्तशरणः शान्तो मैत्रः करुण आत्मवान्
०३२७००९१ सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम्
०३२७००९२ ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च
०३२७०१०१ निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः

०३२७०१०२ उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक्
०३२७०१११ मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते
०३२७०११२ सतो बन्धुमसच्चक्षुः सर्वानुस्यूतमद्वयम्
०३२७०१२१ यथा जलस्थ आभासः स्थलस्थेनावदृश्यते
०३२७०१२२ स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः
०३२७०१३१ एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः
०३२७०१३२ स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक्
०३२७०१४१ भूतसूक्ष्मेन्द्रियमनो बुद्ध्यादिष्विह निद्रया
०३२७०१४२ लीनेष्वसति यस्तत्र विनिद्रो निरहङ्क्रियः
०३२७०१५१ मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा
०३२७०१५२ नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवातुरः
०३२७०१६१ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते
०३२७०१६२ साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः
०३२७०१७० देवहूतिरुवाच
०३२७०१७१ पुरुषं प्रकृतिर्ब्रह्मन्न विमुञ्चति कर्हिचित्
०३२७०१७२ अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो
०३२७०१८१ यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः
०३२७०१८२ अपां रसस्य च यथा तथा बुद्धेः परस्य च
०३२७०१९१ अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः
०३२७०१९२ गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम्
०३२७०२०१ क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम्
०३२७०२०२ अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते
०३२७०२१० श्रीभगवानुवाच
०३२७०२११ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना
०३२७०२१२ तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम्
०३२७०२२१ ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा
०३२७०२२२ तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना
०३२७०२३१ प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्
०३२७०२३२ तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः
०३२७०२४१ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः
०३२७०२४२ नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च

०३२७०२५१ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत्
०३२७०२५२ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते
०३२७०२६१ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम्
०३२७०२६२ युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित्
०३२७०२७१ यदैवमध्यात्मरतः कालेन बहुजन्मना
०३२७०२७२ सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः
०३२७०२८१ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा
०३२७०२८२ निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम्
०३२७०२९१ प्राप्नोतीहाञ्जसा धीरः स्वदृशा च्छिन्नसंशयः
०३२७०२९२ यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे
०३२७०३०१ यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग
०३२७०३०२ अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः
०३२८००१० श्रीभगवानुवाच
०३२८००११ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे
०३२८००१२ मनो येनैव विधिना प्रसन्नं याति सत्पथम्
०३२८००२१ स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम्
०३२८००२२ दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्चनम्
०३२८००३१ ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा
०३२८००३२ मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम्
०३२८००४१ अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः
०३२८००४२ ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम्
०३२८००५१ मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः
०३२८००५२ प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि
०३२८००६१ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम्
०३२८००६२ वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः
०३२८००७१ एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम्
०३२८००७२ बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः
०३२८००८१ शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम्
०३२८००८२ तस्मिन्स्वस्ति समासीन ऋजुकायः समभ्यसेत्
०३२८००९१ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः
०३२८००९२ प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम्

०३२८०१०१ मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः
०३२८०१०२ वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम्
०३२८०१११ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान्
०३२८०११२ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान्
०३२८०१२१ यदा मनः स्वं विरजं योगेन सुसमाहितम्
०३२८०१२२ काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः
०३२८०१३१ प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम्
०३२८०१३२ नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम्
०३२८०१४१ लसत्पङ्कजकिञ्जल्क पीतकौशेयवाससम्
०३२८०१४२ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम्
०३२८०१५१ मत्तद्विरेफकलया परीतं वनमालया
०३२८०१५२ परार्ध्यहारवलय किरीटाङ्गदनूपुरम्
०३२८०१६१ काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम्
०३२८०१६२ दर्शनीयतमं शान्तं मनोनयनवर्धनम्
०३२८०१७१ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम्
०३२८०१७२ सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम्
०३२८०१८१ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम्
०३२८०१८२ ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः
०३२८०१९१ स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम्
०३२८०१९२ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा
०३२८०२०१ तस्मिन्लब्धपदं चित्तं सर्वावयवसंस्थितम्
०३२८०२०२ विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः
०३२८०२११ सञ्चिन्तयेद्भगवतश्चरणारविन्दं
०३२८०२१२ वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम्
०३२८०२१३ उत्तुङ्गरक्तविलसन्नखचक्रवाल
०३२८०२१४ ज्योत्स्नाभिराहतमहद्धृदयान्धकारम्
०३२८०२२१ यच्छौचनिःसृतसरित्प्रवरोदकेन
०३२८०२२२ तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्
०३२८०२२३ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं
०३२८०२२४ ध्यायेच्चिरं भगवतश्चरणारविन्दम्
०३२८०२३१ जानुद्वयं जलजलोचनया जनन्या

०३२८०२३२ लक्ष्म्याखिलस्य सुरवन्दितया विधातुः
०३२८०२३३ ऊर्वोर्निधाय करपल्लवरोचिषा यत्
०३२८०२३४ संलालितं हृदि विभोरभवस्य कुर्यात्
०३२८०२४१ ऊरू सुपर्णभुजयोरधि शोभमानाव्
०३२८०२४२ ओजोनिधी अतसिकाकुसुमावभासौ
०३२८०२४३ व्यालम्बिपीतवरवाससि वर्तमान
०३२८०२४४ काञ्चीकलापपरिरम्भि नितम्बबिम्बम्
०३२८०२५१ नाभिह्रदं भुवनकोशगुहोदरस्थं
०३२८०२५२ यत्रात्मयोनिधिषणाखिललोकपद्मम्
०३२८०२५३ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य
०३२८०२५४ ध्यायेद्द्वयं विशदहारमयूखगौरम्
०३२८०२६१ वक्षोऽधिवासमृषभस्य महाविभूतेः
०३२८०२६२ पुंसां मनोनयननिर्वृतिमादधानम्
०३२८०२६३ कण्ठं च कौस्तुभमणेरधिभूषणार्थं
०३२८०२६४ कुर्यान्मनस्यखिललोकनमस्कृतस्य
०३२८०२७१ बाहूंश्च मन्दरगिरेः परिवर्तनेन
०३२८०२७२ निर्णिक्तबाहुवलयानधिलोकपालान्
०३२८०२७३ सञ्चिन्तयेद्दशशतारमसह्यतेजः
०३२८०२७४ शङ्खं च तत्करसरोरुहराजहंसम्
०३२८०२८१ कौमोदकीं भगवतो दयितां स्मरेत
०३२८०२८२ दिग्धामरातिभटशोणितकर्दमेन
०३२८०२८३ मालां मधुव्रतवरूथगिरोपघुष्टां
०३२८०२८४ चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे
०३२८०२९१ भृत्यानुकम्पितधियेह गृहीतमूर्तेः
०३२८०२९२ सञ्चिन्तयेद्भगवतो वदनारविन्दम्
०३२८०२९३ यद्विस्फुरन्मकरकुण्डलवल्गितेन
०३२८०२९४ विद्योतितामलकपोलमुदारनासम्
०३२८०३०१ यच्छ्रीनिकेतमलिभिः परिसेव्यमानं
०३२८०३०२ भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम्
०३२८०३०३ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं
०३२८०३०४ ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु

०३२८०३११ तस्यावलोकमधिकं कृपयातिघोर
०३२८०३१२ तापत्रयोपशमनाय निसृष्टमक्ष्णोः
०३२८०३१३ स्निग्धस्मितानुगुणितं विपुलप्रसादं
०३२८०३१४ ध्यायेच्चिरं विपुलभावनया गुहायाम्
०३२८०३२१ हासं हरेरवनताखिललोकतीव्र
०३२८०३२२ शोकाश्रुसागरविशोषणमत्युदारम्
०३२८०३२३ सम्मोहनाय रचितं निजमाययास्य
०३२८०३२४ भ्रूमण्डलं मुनिकृते मकरध्वजस्य
०३२८०३३१ ध्यानायनं प्रहसितं बहुलाधरोष्ठ
०३२८०३३२ भासारुणायिततनुद्विजकुन्दपङ्क्ति
०३२८०३३३ ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णोर्
०३२८०३३४ भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत्
०३२८०३४१ एवं हरौ भगवति प्रतिलब्धभावो
०३२८०३४२ भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात्
०३२८०३४३ औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्
०३२८०३४४ तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते
०३२८०३५१ मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
०३२८०३५२ निर्वाणमृच्छति मनः सहसा यथार्चिः
०३२८०३५३ आत्मानमत्र पुरुषोऽव्यवधानमेकम्
०३२८०३५४ अन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः
०३२८०३६१ सोऽप्येतया चरमया मनसो निवृत्त्या
०३२८०३६२ तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये
०३२८०३६३ हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्
०३२८०३६४ स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः
०३२८०३७१ देहं च तं न चरमः स्थितमुत्थितं वा
०३२८०३७२ सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम्
०३२८०३७३ दैवादुपेतमथ दैववशादपेतं
०३२८०३७४ वासो यथा परिकृतं मदिरामदान्धः
०३२८०३८१ देहोऽपि दैववशगः खलु कर्म यावत्
०३२८०३८२ स्वारम्भकं प्रतिसमीक्षत एव सासुः
०३२८०३८३ तं सप्रपञ्चमधिरूढसमाधियोगः

०३२८०३८४ स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः
०३२८०३९१ यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते
०३२८०३९२ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा
०३२८०४०१ यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात्
०३२८०४०२ अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात्
०३२८०४११ भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसंज्ञितात्
०३२८०४१२ आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसंज्ञितः
०३२८०४२१ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि
०३२८०४२२ ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम्
०३२८०४३१ स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते
०३२८०४३२ योनीनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः
०३२८०४४१ तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम्
०३२८०४४२ दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते
०३२९००१० देवहूतिरुवाच
०३२९००११ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च
०३२९००१२ स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम्
०३२९००२१ यथा साङ्ख्येषु कथितं यन्मूलं तत्प्रचक्षते
०३२९००२२ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो
०३२९००३१ विरागो येन पुरुषो भगवन्सर्वतो भवेत्
०३२९००३२ आचक्ष्व जीवलोकस्य विविधा मम संसृतीः
०३२९००४१ कालस्येश्वररूपस्य परेषां च परस्य ते
०३२९००४२ स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः
०३२९००५१ लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये
०३२९००५२ श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः
०३२९००६० मैत्रेय उवाच
०३२९००६१ इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः
०३२९००६२ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः
०३२९००७० श्रीभगवानुवाच
०३२९००७१ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते
०३२९००७२ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते
०३२९००८१ अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा

०३२९००८२ संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः
०३२९००९१ विषयानभिसन्धाय यश ऐश्वर्यमेव वा
०३२९००९२ अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः
०३२९०१०१ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम्
०३२९०१०२ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः
०३२९०१११ मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये
०३२९०११२ मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ
०३२९०१२१ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्
०३२९०१२२ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे
०३२९०१३१ सालोक्यसार्ष्टिसामीप्य सारूप्यैकत्वमप्युत
०३२९०१३२ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः
०३२९०१४१ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः
०३२९०१४२ येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते
०३२९०१५१ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा
०३२९०१५२ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः
०३२९०१६१ मद्धिष्ण्यदर्शनस्पर्श पूजास्तुत्यभिवन्दनैः
०३२९०१६२ भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च
०३२९०१७१ महतां बहुमानेन दीनानामनुकम्पया
०३२९०१७२ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च
०३२९०१८१ आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे
०३२९०१८२ आर्जवेनार्यसङ्गेन निरहङ्क्रियया तथा
०३२९०१९१ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः
०३२९०१९२ पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम्
०३२९०२०१ यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात्
०३२९०२०२ एवं योगरतं चेत आत्मानमविकारि यत्
०३२९०२११ अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा
०३२९०२१२ तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम्
०३२९०२२१ यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्
०३२९०२२२ हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः
०३२९०२३१ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः
०३२९०२३२ भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति

०३२९०२४१ अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे
०३२९०२४२ नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः
०३२९०२५१ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत्
०३२९०२५२ यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम्
०३२९०२६१ आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्
०३२९०२६२ तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम्
०३२९०२७१ अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्
०३२९०२७२ अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा
०३२९०२८१ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे
०३२९०२८२ ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः
०३२९०२९१ तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः
०३२९०२९२ तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः
०३२९०३०१ रूपभेदविदस्तत्र ततश्चोभयतोदतः
०३२९०३०२ तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात्
०३२९०३११ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः
०३२९०३१२ ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः
०३२९०३२१ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत्
०३२९०३२२ मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः
०३२९०३३१ तस्मान्मय्यर्पिताशेष क्रियार्थात्मा निरन्तरः
०३२९०३३२ मय्यर्पितात्मनः पुंसो मयि सन्न्यस्तकर्मणः
०३२९०३३३ न पश्यामि परं भूतमकर्तुः समदर्शनात्
०३२९०३४१ मनसैतानि भूतानि प्रणमेद्बहुमानयन्
०३२९०३४२ ईश्वरो जीवकलया प्रविष्टो भगवानिति
०३२९०३५१ भक्तियोगश्च योगश्च मया मानव्युदीरितः
०३२९०३५२ ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत्
०३२९०३६१ एतद्भगवतो रूपं ब्रह्मणः परमात्मनः
०३२९०३६२ परं प्रधानं पुरुषं दैवं कर्मविचेष्टितम्
०३२९०३७१ रूपभेदास्पदं दिव्यं काल इत्यभिधीयते
०३२९०३७२ भूतानां महदादीनां यतो भिन्नदृशां भयम्
०३२९०३८१ योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः
०३२९०३८२ स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः

०३२९०३९१ न चास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः
०३२९०३९२ आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत्
०३२९०४०१ यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात्
०३२९०४०२ यद्भयाद्वर्षते देवो भगणो भाति यद्भयात्
०३२९०४११ यद्वनस्पतयो भीता लताश्चौषधिभिः सह
०३२९०४१२ स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च
०३२९०४२१ स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः
०३२९०४२२ अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात्
०३२९०४३१ नभो ददाति श्वसतां पदं यन्नियमाददः
०३२९०४३२ लोकं स्वदेहं तनुते महान्सप्तभिरावृतम्
०३२९०४४१ गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात्
०३२९०४४२ वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम्
०३२९०४५१ सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः
०३२९०४५२ जनं जनेन जनयन्मारयन्मृत्युनान्तकम्
०३३०००१० कपिल उवाच
०३३०००११ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम्
०३३०००१२ काल्यमानोऽपि बलिनो वायोरिव घनावलिः
०३३०००२१ यं यमर्थमुपादत्ते दुःखेन सुखहेतवे
०३३०००२२ तं तं धुनोति भगवान्पुमान्छोचति यत्कृते
०३३०००३१ यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः
०३३०००३२ ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च
०३३०००४१ जन्तुर्वै भव एतस्मिन्यां यां योनिमनुव्रजेत्
०३३०००४२ तस्यां तस्यां स लभते निर्वृतिं न विरज्यते
०३३०००५१ नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति
०३३०००५२ नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः
०३३०००६१ आत्मजायासुतागार पशुद्रविणबन्धुषु
०३३०००६२ निरूढमूलहृदय आत्मानं बहु मन्यते
०३३०००७१ सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना
०३३०००७२ करोत्यविरतं मूढो दुरितानि दुराशयः
०३३०००८१ आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया
०३३०००८२ रहो रचितयालापैः शिशूनां कलभाषिणाम्

०३३०००९१ गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः
०३३०००९२ कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही
०३३००१०१ अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान्
०३३००१०२ पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम्
०३३००१११ वार्तायां लुप्यमानायामारब्धायां पुनः पुनः
०३३००११२ लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम्
०३३००१२१ कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः
०३३००१२२ श्रिया विहीनः कृपणो ध्यायन्छ्वसिति मूढधीः
०३३००१३१ एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा
०३३००१३२ नाद्रियन्ते यथा पूर्वं कीनाशा इव गोजरम्
०३३००१४१ तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयम्भृतैः
०३३००१४२ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे
०३३००१५१ आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन्
०३३००१५२ आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः
०३३००१६१ वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः
०३३००१६२ कासश्वासकृतायासः कण्ठे घुरघुरायते
०३३००१७१ शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः
०३३००१७२ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः
०३३००१८१ एवं कुटुम्बभरणे व्यापृतात्माजितेन्द्रियः
०३३००१८२ म्रियते रुदतां स्वानामुरुवेदनयास्तधीः
०३३००१९१ यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ
०३३००१९२ स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति
०३३००२०१ यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात्
०३३००२०२ नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा
०३३००२११ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः
०३३००२१२ पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन्
०३३००२२१ क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके
०३३००२२२ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके
०३३००२३१ तत्र तत्र पतन्छ्रान्तो मूर्च्छितः पुनरुत्थितः
०३३००२३२ पथा पापीयसा नीतस्तरसा यमसादनम्
०३३००२४१ योजनानां सहस्राणि नवतिं नव चाध्वनः

०३३००२४२ त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः
०३३००२५१ आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः
०३३००२५२ आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा
०३३००२६१ जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने
०३३००२६२ सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम्
०३३००२७१ कृन्तनं चावयवशो गजादिभ्यो भिदापनम्
०३३००२७२ पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्तयोः
०३३००२८१ यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः
०३३००२८२ भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः
०३३००२९१ अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते
०३३००२९२ या यातना वै नारक्यस्ता इहाप्युपलक्षिताः
०३३००३०१ एवं कुटुम्बं बिभ्राण उदरम्भर एव वा
०३३००३०२ विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम्
०३३००३११ एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम्
०३३००३१२ कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम्
०३३००३२१ दैवेनासादितं तस्य शमलं निरये पुमान्
०३३००३२२ भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः
०३३००३३१ केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः
०३३००३३२ याति जीवोऽन्धतामिस्रं चरमं तमसः पदम्
०३३००३४१ अधस्तान्नरलोकस्य यावतीर्यातनादयः
०३३००३४२ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः
०३३१००१० श्रीभगवानुवाच
०३३१००११ कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये
०३३१००१२ स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः
०३३१००२१ कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्
०३३१००२२ दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम्
०३३१००३१ मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः
०३३१००३२ नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः
०३३१००४१ चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः
०३३१००४२ षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे
०३३१००५१ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसम्मते

०३३१००५२ शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसम्भवे
०३३१००६१ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम्
०३३१००६२ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः
०३३१००७१ कटुतीक्ष्णोष्णलवण रूक्षाम्लादिभिरुल्बणैः
०३३१००७२ मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः
०३३१००८१ उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः
०३३१००८२ आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः
०३३१००९१ अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे
०३३१००९२ तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम्
०३३१००९३ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते
०३३१०१०१ आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः
०३३१०१०२ नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः
०३३१०१११ नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः
०३३१०११२ स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः
०३३१०१२० जन्तुरुवाच
०३३१०१२१ तस्योपसन्नमवितुं जगदिच्छयात्त
०३३१०१२२ नानातनोर्भुवि चलच्चरणारविन्दम्
०३३१०१२३ सोऽहं व्रजामि शरणं ह्यकुतोभयं मे
०३३१०१२४ येनेदृशी गतिरदर्श्यसतोऽनुरूपा
०३३१०१३१ यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा
०३३१०१३२ भूतेन्द्रियाशयमयीमवलम्ब्य मायाम्
०३३१०१३३ आस्ते विशुद्धमविकारमखण्डबोधम्
०३३१०१३४ आतप्यमानहृदयेऽवसितं नमामि
०३३१०१४१ यः पञ्चभूतरचिते रहितः शरीरे
०३३१०१४२ च्छन्नोऽयथेन्द्रियगुणार्थचिदात्मकोऽहम्
०३३१०१४३ तेनाविकुण्ठमहिमानमृषिं तमेनं
०३३१०१४४ वन्दे परं प्रकृतिपूरुषयोः पुमांसम्
०३३१०१५१ यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्
०३३१०१५२ सांसारिके पथि चरंस्तदभिश्रमेण
०३३१०१५३ नष्टस्मृतिः पुनरयं प्रवृणीत लोकं
०३३१०१५४ युक्त्या कया महदनुग्रहमन्तरेण

०३३१०१६१ ज्ञानं यदेतददधात्कतमः स देवस्
०३३१०१६२ त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः
०३३१०१६३ तं जीवकर्मपदवीमनुवर्तमानास्
०३३१०१६४ तापत्रयोपशमनाय वयं भजेम
०३३१०१७१ देह्यन्यदेहविवरे जठराग्निनासृग्
०३३१०१७२ विण्मूत्रकूपपतितो भृशतप्तदेहः
०३३१०१७३ इच्छन्नितो विवसितुं गणयन्स्वमासान्
०३३१०१७४ निर्वास्यते कृपणधीर्भगवन्कदा नु
०३३१०१८१ येनेदृशीं गतिमसौ दशमास्य ईश
०३३१०१८२ सङ्ग्राहितः पुरुदयेन भवादृशेन
०३३१०१८३ स्वेनैव तुष्यतु कृतेन स दीननाथः
०३३१०१८४ को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात्
०३३१०१९१ पश्यत्ययं धिषणया ननु सप्तवध्रिः
०३३१०१९२ शारीरके दमशरीर्यपरः स्वदेहे
०३३१०१९३ यत्सृष्टयासं तमहं पुरुषं पुराणं
०३३१०१९४ पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम्
०३३१०२०१ सोऽहं वसन्नपि विभो बहुदुःखवासं
०३३१०२०२ गर्भान्न निर्जिगमिषे बहिरन्धकूपे
०३३१०२०३ यत्रोपयातमुपसर्पति देवमाया
०३३१०२०४ मिथ्या मतिर्यदनु संसृतिचक्रमेतत्
०३३१०२११ तस्मादहं विगतविक्लव उद्धरिष्य
०३३१०२१२ आत्मानमाशु तमसः सुहृदात्मनैव
०३३१०२१३ भूयो यथा व्यसनमेतदनेकरन्ध्रं
०३३१०२१४ मा मे भविष्यदुपसादितविष्णुपादः
०३३१०२२० कपिल उवाच
०३३१०२२१ एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः
०३३१०२२२ सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः
०३३१०२३१ तेनावसृष्टः सहसा कृत्वावाक्शिर आतुरः
०३३१०२३२ विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः
०३३१०२४१ पतितो भुव्यसृङ्मिश्रः विष्ठाभूरिव चेष्टते
०३३१०२४२ रोरूयति गते ज्ञाने विपरीतां गतिं गतः

०३३१०२५१ परच्छन्दं न विदुषा पुष्यमाणो जनेन सः
०३३१०२५२ अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः
०३३१०२६१ शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते
०३३१०२६२ नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने
०३३१०२७१ तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः
०३३१०२७२ रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा
०३३१०२८१ इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च
०३३१०२८२ अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः
०३३१०२९१ सह देहेन मानेन वर्धमानेन मन्युना
०३३१०२९२ करोति विग्रहं कामी कामिष्वन्ताय चात्मनः
०३३१०३०१ भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत्
०३३१०३०२ अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम्
०३३१०३११ तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम्
०३३१०३१२ योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धनः
०३३१०३२१ यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः
०३३१०३२२ आस्थितो रमते जन्तुस्तमो विशति पूर्ववत्
०३३१०३३१ सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा
०३३१०३३२ शमो दमो भगश्चेति यत्सङ्गाद्याति सङ्क्षयम्
०३३१०३४१ तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु
०३३१०३४२ सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च
०३३१०३५१ न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः
०३३१०३५२ योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः
०३३१०३६१ प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः
०३३१०३६२ रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः
०३३१०३७१ तत्सृष्टसृष्टसृष्टेषु को न्वखण्डितधीः पुमान्
०३३१०३७२ ऋषिं नारायणमृते योषिन्मय्येह मायया
०३३१०३८१ बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम्
०३३१०३८२ या करोति पदाक्रान्तान्भ्रूविजृम्भेण केवलम्
०३३१०३९१ सङ्गं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः
०३३१०३९२ मत्सेवया प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य
०३३१०४०१ योपयाति शनैर्माया योषिद्देवविनिर्मिता

०३३१०४०२ तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम्
०३३१०४११ यां मन्यते पतिं मोहान्मन्मायामृषभायतीम्
०३३१०४१२ स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम्
०३३१०४२१ तामात्मनो विजानीयात्पत्यपत्यगृहात्मकम्
०३३१०४२२ दैवोपसादितं मृत्युं मृगयोर्गायनं यथा
०३३१०४३१ देहेन जीवभूतेन लोकाल्लोकमनुव्रजन्
०३३१०४३२ भुञ्जान एव कर्माणि करोत्यविरतं पुमान्
०३३१०४४१ जीवो ह्यस्यानुगो देहो भूतेन्द्रियमनोमयः
०३३१०४४२ तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः
०३३१०४५१ द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यदा
०३३१०४५२ तत्पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम्
०३३१०४६१ यथाक्ष्णोर्द्रव्यावयव दर्शनायोग्यता यदा
०३३१०४६२ तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोः
०३३१०४७१ तस्मान्न कार्यः सन्त्रासो न कार्पण्यं न सम्भ्रमः
०३३१०४७२ बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह
०३३१०४८१ सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया
०३३१०४८२ मायाविरचिते लोके चरेन्न्यस्य कलेवरम्
०३३२००१० कपिल उवाच
०३३२००११ अथ यो गृहमेधीयान्धर्मानेवावसन्गृहे
०३३२००१२ काममर्थं च धर्मान्स्वान्दोग्धि भूयः पिपर्ति तान्
०३३२००२१ स चापि भगवद्धर्मात्काममूढः पराङ्मुखः
०३३२००२२ यजते क्रतुभिर्देवान्पितॄंश्च श्रद्धयान्वितः
०३३२००३१ तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान्
०३३२००३२ गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति
०३३२००४१ यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः
०३३२००४२ तदा लोका लयं यान्ति त एते गृहमेधिनाम्
०३३२००५१ ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे
०३३२००५२ निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः
०३३२००६१ निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः
०३३२००६२ स्वधर्माप्तेन सत्त्वेन परिशुद्धेन चेतसा
०३३२००७१ सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम्

०३३२००७२ परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम्
०३३२००८१ द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते
०३३२००८२ तावदध्यासते लोकं परस्य परचिन्तकाः
०३३२००९१ क्ष्माम्भोऽनलानिलवियन्मनैन्द्रियार्थ
०३३२००९२ भूतादिभिः परिवृतं प्रतिसञ्जिहीर्षुः
०३३२००९३ अव्याकृतं विशति यर्हि गुणत्रयात्माकालं
०३३२००९४ पराख्यमनुभूय परः स्वयम्भूः
०३३२०१०१ एवं परेत्य भगवन्तमनुप्रविष्टाये
०३३२०१०२ योगिनो जितमरुन्मनसो विरागाः
०३३२०१०३ तेनैव साकममृतं पुरुषं पुराणं
०३३२०१०४ ब्रह्म प्रधानमुपयान्त्यगताभिमानाः
०३३२०१११ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम्
०३३२०११२ श्रुतानुभावं शरणं व्रज भावेन भामिनि
०३३२०१२१ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः
०३३२०१२२ योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः
०३३२०१३१ भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा
०३३२०१३२ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्
०३३२०१४१ स संसृत्य पुनः काले कालेनेश्वरमूर्तिना
०३३२०१४२ जाते गुणव्यतिकरे यथापूर्वं प्रजायते
०३३२०१५१ ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम्
०३३२०१५२ निषेव्य पुनरायान्ति गुणव्यतिकरे सति
०३३२०१६१ ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः
०३३२०१६२ कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः
०३३२०१७१ रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः
०३३२०१७२ पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः
०३३२०१८१ त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः
०३३२०१८२ कथायां कथनीयोरु विक्रमस्य मधुद्विषः
०३३२०१९१ नूनं दैवेन विहता ये चाच्युतकथासुधाम्
०३३२०१९२ हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः
०३३२०२०१ दक्षिणेन पथार्यम्णः पितृलोकं व्रजन्ति ते
०३३२०२०२ प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः

०३३२०२११ ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति
०३३२०२११ पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः
०३३२०२२१ तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्
०३३२०२२२ तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम्
०३३२०२३१ वासुदेवे भगवति भक्तियोगः प्रयोजितः
०३३२०२३२ जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम्
०३३२०२४१ यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः
०३३२०२४२ न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत
०३३२०२५१ स तदैवात्मनात्मानं निःसङ्गं समदर्शनम्
०३३२०२५२ हेयोपादेयरहितमारूढं पदमीक्षते
०३३२०२६१ ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्
०३३२०२६२ दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते
०३३२०२७१ एतावानेव योगेन समग्रेणेह योगिनः
०३३२०२७२ युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः
०३३२०२८१ ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्
०३३२०२८२ अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा
०३३२०२९१ यथा महानहंरूपस्त्रिवृत्पञ्चविधः स्वराट्
०३३२०२९२ एकादशविधस्तस्य वपुरण्डं जगद्यतः
०३३२०३०१ एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः
०३३२०३०२ समाहितात्मा निःसङ्गो विरक्त्या परिपश्यति
०३३२०३११ इत्येतत्कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम्
०३३२०३१२ येनानुबुद्ध्यते तत्त्वं प्रकृतेः पुरुषस्य च
०३३२०३२१ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः
०३३२०३२२ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः
०३३२०३३१ यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः
०३३२०३३२ एको नानेयते तद्वद्भगवान्शास्त्रवर्त्मभिः
०३३२०३४१ क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः
०३३२०३४२ आत्मेन्द्रियजयेनापि सन्न्यासेन च कर्मणाम्
०३३२०३५१ योगेन विविधाङ्गेन भक्तियोगेन चैव हि
०३३२०३५२ धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान्
०३३२०३६१ आत्मतत्त्वावबोधेन वैराग्येण दृढेन च

०३३२०३६२ ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक्
०३३२०३७१ प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम्
०३३२०३७२ कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु
०३३२०३८१ जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः
०३३२०३८२ यास्वङ्ग प्रविशन्नात्मा न वेद गतिमात्मनः
०३३२०३९१ नैतत्खलायोपदिशेन्नाविनीताय कर्हिचित्
०३३२०३९२ न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च
०३३२०४०१ न लोलुपायोपदिशेन्न गृहारूढचेतसे
०३३२०४०२ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि
०३३२०४११ श्रद्दधानाय भक्ताय विनीतायानसूयवे
०३३२०४१२ भूतेषु कृतमैत्राय शुश्रूषाभिरताय च
०३३२०४२१ बहिर्जातविरागाय शान्तचित्ताय दीयताम्
०३३२०४२२ निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः
०३३२०४३१ य इदं श‍ृणुयादम्ब श्रद्धया पुरुषः सकृत्
०३३२०४३२ यो वाभिधत्ते मच्चित्तः स ह्येति पदवीं च मे
०३३३००१० मैत्रेय उवाच
०३३३००११ एवं निशम्य कपिलस्य वचो जनित्रीसा कर्दमस्य दयिता किल देवहूतिः
०३३३००१२ विस्रस्तमोहपटला तमभिप्रणम्यतुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम्
०३३३००२० देवहूतिरुवाच
०३३३००२१ अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते
०३३३००२२ गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः
०३३३००३१ स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः
०३३३००३२ सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः
०३३३००४१ स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत्
०३३३००४२ विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः
०३३३००५१ त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये
०३३३००५२ यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये
०३३३००६१ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित्
०३३३००६२ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात्
०३३३००७१ अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम्
०३३३००७२ तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते

०३३३००८१ तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम्
०३३३००८२ स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम्
०३३३००९० मैत्रेय उवाच
०३३३००९१ ईडितो भगवानेवं कपिलाख्यः परः पुमान्
०३३३००९२ वाचाविक्लवयेत्याह मातरं मातृवत्सलः
०३३३०१०० कपिल उवाच
०३३३०१०१ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे
०३३३०१०२ आस्थितेन परां काष्ठामचिरादवरोत्स्यसि
०३३३०१११ श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः
०३३३०११२ येन मामभयं याया मृत्युमृच्छन्त्यतद्विदः
०३३३०१२० मैत्रेय उवाच
०३३३०१२१ इति प्रदर्श्य भगवान्सतीं तामात्मनो गतिम्
०३३३०१२२ स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ
०३३३०१३१ सा चापि तनयोक्तेन योगादेशेन योगयुक्
०३३३०१३२ तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता
०३३३०१४१ अभीक्ष्णावगाहकपिशाञ्जटिलान्कुटिलालकान्
०३३३०१४२ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम्
०३३३०१५१ प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम्
०३३३०१५२ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि
०३३३०१६१ पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः
०३३३०१६२ आसनानि च हैमानि सुस्पर्शास्तरणानि च
०३३३०१७१ स्वच्छस्फटिककुड्येषु महामारकतेषु च
०३३३०१७२ रत्नप्रदीपा आभान्ति ललना रत्नसंयुताः
०३३३०१८१ गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः
०३३३०१८२ कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम्
०३३३०१९१ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः
०३३३०१९२ वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम्
०३३३०२०१ हित्वा तदीप्सिततममप्याखण्डलयोषिताम्
०३३३०२०२ किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा
०३३३०२११ वनं प्रव्रजिते पत्यावपत्यविरहातुरा
०३३३०२१२ ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला

०३३३०२२१ तमेव ध्यायती देवमपत्यं कपिलं हरिम्
०३३३०२२२ बभूवाचिरतो वत्स निःस्पृहा तादृशे गृहे
०३३३०२३१ ध्यायती भगवद्रूपं यदाह ध्यानगोचरम्
०३३३०२३२ सुतः प्रसन्नवदनं समस्तव्यस्तचिन्तया
०३३३०२४१ भक्तिप्रवाहयोगेन वैराग्येण बलीयसा
०३३३०२४२ युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना
०३३३०२५१ विशुद्धेन तदात्मानमात्मना विश्वतोमुखम्
०३३३०२५२ स्वानुभूत्या तिरोभूत मायागुणविशेषणम्
०३३३०२६१ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये
०३३३०२६२ निवृत्तजीवापत्तित्वात्क्षीणक्लेशाप्तनिर्वृतिः
०३३३०२७१ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा
०३३३०२७२ न सस्मार तदात्मानं स्वप्ने दृष्टमिवोत्थितः
०३३३०२८१ तद्देहः परतः पोषोऽप्यकृशश्चाध्यसम्भवात्
०३३३०२८२ बभौ मलैरवच्छन्नः सधूम इव पावकः
०३३३०२९१ स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम्
०३३३०२९२ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः
०३३३०३०१ एवं सा कपिलोक्तेन मार्गेणाचिरतः परम्
०३३३०३०२ आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप ह
०३३३०३११ तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम्
०३३३०३१२ नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी
०३३३०३२१ तस्यास्तद्योगविधुत मार्त्यं मर्त्यमभूत्सरित्
०३३३०३२२ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता
०३३३०३३१ कपिलोऽपि महायोगी भगवान्पितुराश्रमात्
०३३३०३३२ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ
०३३३०३४१ सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः
०३३३०३४२ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः
०३३३०३५१ आस्ते योगं समास्थाय साङ्ख्याचार्यैरभिष्टुतः
०३३३०३५२ त्रयाणामपि लोकानामुपशान्त्यै समाहितः
०३३३०३६१ एतन्निगदितं तात यत्पृष्टोऽहं तवानघ
०३३३०३६२ कपिलस्य च संवादो देवहूत्याश्च पावनः
०३३३०३७१ य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम्

०३३३०३७२ भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम्
०४०१००१० मैत्रेय उवाच
०४०१००११ मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे
०४०१००१२ आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः
०४०१००२१ आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः
०४०१००२२ पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः
०४०१००३१ प्रजापतिः स भगवान्रुचिस्तस्यामजीजनत्
०४०१००३२ मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना
०४०१००४१ यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक्
०४०१००४२ या स्त्री सा दक्षिणा भूतेरंशभूतानपायिनी
०४०१००५१ आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम्
०४०१००५२ स्वायम्भुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम्
०४०१००६१ तां कामयानां भगवानुवाह यजुषां पतिः
०४०१००६२ तुष्टायां तोषमापन्नोऽ जनयद्द्वादशात्मजान्
०४०१००७१ तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः
०४०१००७२ इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट्
०४०१००८१ तुषिता नाम ते देवा आसन्स्वायम्भुवान्तरे
०४०१००८२ मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः
०४०१००९१ प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ
०४०१००९२ तत्पुत्रपौत्रनप्तॄणामनुवृत्तं तदन्तरम्
०४०१०१०१ देवहूतिमदात्तात कर्दमायात्मजां मनुः
०४०१०१०२ तत्सम्बन्धि श्रुतप्रायं भवता गदतो मम
०४०१०१११ दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान्मनुः
०४०१०११२ प्रायच्छद्यत्कृतः सर्गस्त्रिलोक्यां विततो महान्
०४०१०१२१ याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः
०४०१०१२२ तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे
०४०१०१३१ पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा
०४०१०१३२ कश्यपं पूर्णिमानं च ययोरापूरितं जगत्
०४०१०१४१ पूर्णिमासूत विरजं विश्वगं च परन्तप
०४०१०१४२ देवकुल्यां हरेः पाद शौचाद्याभूत्सरिद्दिवः
०४०१०१५१ अत्रेः पत्न्यनसूया त्रीञ्जज्ञे सुयशसः सुतान्

०४०१०१५२ दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्
०४०१०१६० विदुर उवाच
०४०१०१६१ अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः
०४०१०१६२ किञ्चिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो
०४०१०१७० मैत्रेय उवाच
०४०१०१७१ ब्रह्मणा चोदितः सृष्टावत्रिर्ब्रह्मविदां वरः
०४०१०१७२ सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः
०४०१०१८१ तस्मिन्प्रसूनस्तबक पलाशाशोककानने
०४०१०१८२ वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः
०४०१०१९१ प्राणायामेन संयम्य मनो वर्षशतं मुनिः
०४०१०१९२ अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः
०४०१०२०१ शरणं तं प्रपद्येऽहं य एव जगदीश्वरः
०४०१०२०२ प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्
०४०१०२११ तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना
०४०१०२१२ निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः
०४०१०२२१ अप्सरोमुनिगन्धर्व सिद्धविद्याधरोरगैः
०४०१०२२२ वितायमानयशसस्तदाश्रमपदं ययुः
०४०१०२३१ तत्प्रादुर्भावसंयोग विद्योतितमना मुनिः
०४०१०२३२ उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान्
०४०१०२४१ प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः
०४०१०२४२ वृषहंससुपर्णस्थान्स्वैः स्वैश्चिह्नैश्च चिह्नितान्
०४०१०२५१ कृपावलोकेन हसद् वदनेनोपलम्भितान्
०४०१०२५२ तद्रोचिषा प्रतिहते निमील्य मुनिरक्षिणी
०४०१०२६१ चेतस्तत्प्रवणं युञ्जन्नस्तावीत्संहताञ्जलिः
०४०१०२६२ श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः
०४०१०२७० अत्रिरुवाच
०४०१०२७१ विश्वोद्भवस्थितिलयेषु विभज्यमानैर्
०४०१०२७२ मायागुणैरनुयुगं विगृहीतदेहाः
०४०१०२७३ ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्
०४०१०२७४ तेभ्यः क एव भवतां म इहोपहूतः
०४०१०२८१ एको मयेह भगवान्विविधप्रधानैश्

०४०१०२८२ चित्तीकृतः प्रजननाय कथं नु यूयम्
०४०१०२८३ अत्रागतास्तनुभृतां मनसोऽपि दूराद्
०४०१०२८४ ब्रूत प्रसीदत महानिह विस्मयो मे
०४०१०२९० मैत्रेय उवाच
०४०१०२९१ इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः
०४०१०२९२ प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो
०४०१०३०० देवा ऊचुः
०४०१०३०१ यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा
०४०१०३०२ सत्सङ्कल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम्
०४०१०३११ अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः
०४०१०३१२ भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति च ते यशः
०४०१०३२१ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः
०४०१०३२२ सभाजितास्तयोः सम्यग्दम्पत्योर्मिषतोस्ततः
०४०१०३३१ सोमोऽभूद्ब्रह्मणोऽंशेन दत्तो विष्णोस्तु योगवित्
०४०१०३३२ दुर्वासाः शङ्करस्यांशो निबोधाङ्गिरसः प्रजाः
०४०१०३४१ श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः
०४०१०३४२ सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा
०४०१०३५१ तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषेऽन्तरे
०४०१०३५२ उतथ्यो भगवान्साक्षाद्ब्रह्मिष्ठश्च बृहस्पतिः
०४०१०३६१ पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि
०४०१०३६२ सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः
०४०१०३७१ तस्य यक्षपतिर्देवः कुबेरस्त्विडविडासुतः
०४०१०३७२ रावणः कुम्भकर्णश्च तथान्यस्यां विभीषणः
०४०१०३८१ पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान्
०४०१०३८२ कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते
०४०१०३९१ क्रतोरपि क्रिया भार्या वालखिल्यानसूयत
०४०१०३९२ ऋषीन्षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा
०४०१०४०१ ऊर्जायां जज्ञिरे पुत्रा वसिष्ठस्य परन्तप
०४०१०४०२ चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः
०४०१०४११ चित्रकेतुः सुरोचिश्च विरजा मित्र एव च
०४०१०४१२ उल्बणो वसुभृद्यानो द्युमान्शक्त्यादयोऽपरे

०४०१०४२१ चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम्
०४०१०४२२ दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे
०४०१०४३१ भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत्
०४०१०४३२ धातारं च विधातारं श्रियं च भगवत्पराम्
०४०१०४४१ आयतिं नियतिं चैव सुते मेरुस्तयोरदात्
०४०१०४४२ ताभ्यां तयोरभवतां मृकण्डः प्राण एव च
०४०१०४५१ मार्कण्डेयो मृकण्डस्य प्राणाद्वेदशिरा मुनिः
०४०१०४५२ कविश्च भार्गवो यस्य भगवानुशना सुतः
०४०१०४६१ त एते मुनयः क्षत्तर्लोकान्सर्गैरभावयन्
०४०१०४६२ एष कर्दमदौहित्र सन्तानः कथितस्तव
०४०१०४६३ शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः
०४०१०४७१ प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः
०४०१०४७२ तस्यां ससर्ज दुहितॄः षोडशामललोचनाः
०४०१०४८१ त्रयोदशादाद्धर्माय तथैकामग्नये विभुः
०४०१०४८२ पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे
०४०१०४९१ श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः
०४०१०४९२ बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः
०४०१०५०१ श्रद्धासूत शुभं मैत्री प्रसादमभयं दया
०४०१०५०२ शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत
०४०१०५११ योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत
०४०१०५१२ मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम्
०४०१०५२१ मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी
०४०१०५३१ ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम्
०४०१०५३२ मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः
०४०१०५४१ दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः
०४०१०५४२ मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः
०४०१०५५१ नृत्यन्ति स्म स्त्रियो देव्य आसीत्परममङ्गलम्
०४०१०५५२ देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः
०४०१०५६० देवा ऊचुः
०४०१०५६१ यो मायया विरचितं निजयात्मनीदं
०४०१०५६२ खे रूपभेदमिव तत्प्रतिचक्षणाय

०४०१०५६३ एतेन धर्मसदने ऋषिमूर्तिनाद्य
०४०१०५६४ प्रादुश्चकार पुरुषाय नमः परस्मै
०४०१०५७१ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्
०४०१०५७२ सत्त्वेन नः सुरगणाननुमेयतत्त्वः
०४०१०५७३ दृश्याददभ्रकरुणेन विलोकनेन
०४०१०५७४ यच्छ्रीनिकेतममलं क्षिपतारविन्दम्
०४०१०५८१ एवं सुरगणैस्तात भगवन्तावभिष्टुतौ
०४०१०५८२ लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम्
०४०१०५९१ ताविमौ वै भगवतो हरेरंशाविहागतौ
०४०१०५९२ भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ
०४०१०६०१ स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत्
०४०१०६०२ पावकं पवमानं च शुचिं च हुतभोजनम्
०४०१०६११ तेभ्योऽग्नयः समभवन्चत्वारिंशच्च पञ्च च
०४०१०६१२ त एवैकोनपञ्चाशत्साकं पितृपितामहैः
०४०१०६२१ वैतानिके कर्मणि यन् नामभिर्ब्रह्मवादिभिः
०४०१०६२२ आग्नेय्य इष्टयो यज्ञे निरूप्यन्तेऽग्नयस्तु ते
०४०१०६३१ अग्निष्वात्ता बर्हिषदः सौम्याः पितर आज्यपाः
०४०१०६३२ साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा
०४०१०६४१ तेभ्यो दधार कन्ये द्वे वयुनां धारिणीं स्वधा
०४०१०६४२ उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे
०४०१०६५१ भवस्य पत्नी तु सती भवं देवमनुव्रता
०४०१०६५२ आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः
०४०१०६६१ पितर्यप्रतिरूपे स्वे भवायानागसे रुषा
०४०१०६६२ अप्रौढैवात्मनात्मानमजहाद्योगसंयुता
०४०२००१० विदुर उवाच
०४०२००११ भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः
०४०२००१२ विद्वेषमकरोत्कस्मादनादृत्यात्मजां सतीम्
०४०२००२१ कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम्
०४०२००२२ आत्मारामं कथं द्वेष्टि जगतो दैवतं महत्
०४०२००३१ एतदाख्याहि मे ब्रह्मञ्जामातुः श्वशुरस्य च
०४०२००३२ विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान्सती

०४०२००४० मैत्रेय उवाच
०४०२००४१ पुरा विश्वसृजां सत्रे समेताः परमर्षयः
०४०२००४२ तथामरगणाः सर्वे सानुगा मुनयोऽग्नयः
०४०२००५१ तत्र प्रविष्टमृषयो दृष्ट्वार्कमिव रोचिषा
०४०२००५२ भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः
०४०२००६१ उदतिष्ठन्सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः
०४०२००६२ ऋते विरिञ्चां शर्वं च तद्भासाक्षिप्तचेतसः
०४०२००७१ सदसस्पतिभिर्दक्षो भगवान्साधु सत्कृतः
०४०२००७२ अजं लोकगुरुं नत्वा निषसाद तदाज्ञया
०४०२००८१ प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः
०४०२००८२ उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव
०४०२००९१ श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः
०४०२००९२ साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात्
०४०२०१०१ अयं तु लोकपालानां यशोघ्नो निरपत्रपः
०४०२०१०२ सद्भिराचरितः पन्था येन स्तब्धेन दूषितः
०४०२०१११ एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत्
०४०२०११२ पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत्
०४०२०१२१ गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः
०४०२०१२२ प्रत्युत्थानाभिवादार्हे वाचाप्यकृत नोचितम्
०४०२०१३१ लुप्तक्रियायाशुचये मानिने भिन्नसेतवे
०४०२०१३२ अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम्
०४०२०१४१ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः
०४०२०१४२ अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन्रुदन्
०४०२०१५१ चिताभस्मकृतस्नानः प्रेतस्रङ्नस्थिभूषणः
०४०२०१५२ शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः
०४०२०१५३ पतिः प्रमथनाथानां तमोमात्रात्मकात्मनाम्
०४०२०१६१ तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे
०४०२०१६२ दत्ता बत मया साध्वी चोदिते परमेष्ठिना
०४०२०१७० मैत्रेय उवाच
०४०२०१७१ विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम्
०४०२०१७२ दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे

०४०२०१८१ अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः
०४०२०१८२ सह भागं न लभतां देवैर्देवगणाधमः
०४०२०१९१ निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम्
०४०२०१९२ तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम्
०४०२०२०१ विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः
०४०२०२०२ दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः
०४०२०२११ य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि
०४०२०२१२ द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत्
०४०२०२२१ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया
०४०२०२२२ कर्मतन्त्रं वितनुते वेदवादविपन्नधीः
०४०२०२३१ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः
०४०२०२३२ स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात्
०४०२०२४१ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः
०४०२०२४२ संसरन्त्विह ये चामुमनु शर्वावमानिनम्
०४०२०२५१ गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा
०४०२०२५२ मथ्ना चोन्मथितात्मानः सम्मुह्यन्तु हरद्विषः
०४०२०२६१ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः
०४०२०२६२ वित्तदेहेन्द्रियारामा याचका विचरन्त्विह
०४०२०२७१ तस्यैवं वदतः शापं श्रुत्वा द्विजकुलाय वै
०४०२०२७२ भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम्
०४०२०२८१ भवव्रतधरा ये च ये च तान्समनुव्रताः
०४०२०२८२ पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः
०४०२०२९१ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः
०४०२०२९२ विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम्
०४०२०३०१ ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ
०४०२०३०२ सेतुं विधारणं पुंसामतः पाषण्डमाश्रिताः
०४०२०३११ एष एव हि लोकानां शिवः पन्थाः सनातनः
०४०२०३१२ यं पूर्वे चानुसन्तस्थुर्यत्प्रमाणं जनार्दनः
०४०२०३२१ तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम्
०४०२०३२२ विगर्ह्य यात पाषण्डं दैवं वो यत्र भूतराट्
०४०२०३३० मैत्रेय उवाच

०४०२०३३१ तस्यैवं वदतः शापं भृगोः स भगवान्भवः
०४०२०३३२ निश्चक्राम ततः किञ्चिद्विमना इव सानुगः
०४०२०३४१ तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान्
०४०२०३४२ संविधाय महेष्वास यत्रेज्य ऋषभो हरिः
०४०२०३५१ आप्लुत्यावभृथं यत्र गङ्गा यमुनयान्विता
०४०२०३५२ विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः
०४०३००१० मैत्रेय उवाच
०४०३००११ सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः
०४०३००१२ जामातुः श्वशुरस्यापि सुमहानतिचक्रमे
०४०३००२१ यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना
०४०३००२२ प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत्
०४०३००३१ इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च
०४०३००३२ बृहस्पतिसवं नाम समारेभे क्रतूत्तमम्
०४०३००४१ तस्मिन्ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः
०४०३००४२ आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः
०४०३००५१ तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम्
०४०३००५२ सती दाक्षायणी देवी पितृयज्ञमहोत्सवम्
०४०३००६१ व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः
०४०३००६२ विमानयानाः सप्रेष्ठा निष्ककण्ठीः सुवाससः
०४०३००७१ दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः
०४०३००७२ पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत
०४०३००८० सत्युवाच
०४०३००८१ प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल
०४०३००८२ वयं च तत्राभिसराम वाम ते यद्यर्थितामी विबुधा व्रजन्ति हि
०४०३००९१ तस्मिन्भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः
०४०३००९२ अहं च तस्मिन्भवताभिकामये सहोपनीतं परिबर्हमर्हितुम्
०४०३०१०१ तत्र स्वसॄर्मे ननु भर्तृसम्मिता मातृष्वसॄः क्लिन्नधियं च मातरम्
०४०३०१०२ द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम्
०४०३०१११ त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम्
०४०३०११२ तथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम्
०४०३०१२१ पश्य प्रयान्तीरभवान्ययोषितोऽप्यलङ्कृताः कान्तसखा वरूथशः

०४०३०१२२ यासां व्रजद्भिः शितिकण्ठ मण्डितं नभो विमानैः कलहंसपाण्डुभिः
०४०३०१३१ कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते
०४०३०१३२ अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम्
०४०३०१४१ तन्मे प्रसीदेदममर्त्य वाञ्छितं कर्तुं भवान्कारुणिको बतार्हति
०४०३०१४२ त्वयात्मनोऽर्धेऽहमदभ्रचक्षुषा निरूपिता मानुगृहाण याचितः
०४०३०१५० ऋषिरुवाच
०४०३०१५१ एवं गिरित्रः प्रिययाभिभाषितः प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रियः
०४०३०१५२ संस्मारितो मर्मभिदः कुवागिषून्यानाह को विश्वसृजां समक्षतः
०४०३०१६० श्रीभगवानुवाच
०४०३०१६१ त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियन्ति बन्धुषु
०४०३०१६२ ते यद्यनुत्पादितदोषदृष्टयो बलीयसानात्म्यमदेन मन्युना
०४०३०१७१ विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भिरसत्तमेतरैः
०४०३०१७२ स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम्
०४०३०१८१ नैतादृशानां स्वजनव्यपेक्षया गृहान्प्रतीयादनवस्थितात्मनाम्
०४०३०१८२ येऽभ्यागतान्वक्रधियाभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः
०४०३०१९१ तथारिभिर्न व्यथते शिलीमुखैः शेतेऽर्दिताङ्गो हृदयेन दूयता
०४०३०१९२ स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः
०४०३०२०१ व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु मे मता
०४०३०२०२ तथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः
०४०३०२११ पापच्यमानेन हृदातुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम्
०४०३०२१२ अकल्प एषामधिरोढुमञ्जसा परं पदं द्वेष्टि यथासुरा हरिम्
०४०३०२२१ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे
०४०३०२२२ प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने
०४०३०२३१ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः
०४०३०२३२ सत्त्वे च तस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे नमसा विधीयते
०४०३०२४१ तत्ते निरीक्ष्यो न पितापि देहकृद्दक्षो मम द्विट्तदनुव्रताश्च ये
०४०३०२४२ यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाकरोत्तिरः
०४०३०२५१ यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति
०४०३०२५२ सम्भावितस्य स्वजनात्पराभवो यदा स सद्यो मरणाय कल्पते
०४०४००१० मैत्रेय उवाच
०४०४००११ एतावदुक्त्वा विरराम शङ्करः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन्

०४०४००१२ सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती द्विधास सा
०४०४००२१ सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदत्यश्रुकलातिविह्वला
०४०४००२२ भवं भवान्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः
०४०४००३१ ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा
०४०४००३२ पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णात्मनो योऽर्धमदात्सतां प्रियः
०४०४००४१ तामन्वगच्छन्द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः
०४०४००४२ सपार्षदयक्षा मणिमन्मदादयः पुरोवृषेन्द्रास्तरसा गतव्यथाः
०४०४००५१ तां सारिकाकन्दुकदर्पणाम्बुज श्वेतातपत्रव्यजनस्रगादिभिः
०४०४००५२ गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य विटङ्किता ययुः
०४०४००६१ आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः
०४०४००६२ मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं यजनं समाविशत्
०४०४००७१ तामागतां तत्र न कश्चनाद्रियद्विमानितां यज्ञकृतो भयाज्जनः
०४०४००७२ ऋते स्वसॄर्वै जननीं च सादराः प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा
०४०४००८१ सौदर्यसम्प्रश्नसमर्थवार्तया मात्रा च मातृष्वसृभिश्च सादरम्
०४०४००८२ दत्तां सपर्यां वरमासनं च सा नादत्त पित्राप्रतिनन्दिता सती
०४०४००९१ अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ
०४०४००९२ अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा
०४०४०१०१ जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम्
०४०४०१०२ स्वतेजसा भूतगणान्समुत्थितान्निगृह्य देवी जगतोऽभिशृण्वतः
०४०४०११० देव्युवाच
०४०४०१११ न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाप्रियो देहभृतां प्रियात्मनः
०४०४०११२ तस्मिन्समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत्
०४०४०१२१ दोषान्परेषां हि गुणेषु साधवो गृह्णन्ति केचिन्न भवादृशो द्विज
०४०४०१२२ गुणांश्च फल्गून्बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम्
०४०४०१३१ नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु
०४०४०१३२ सेर्ष्यं महापूरुषपादपांसुभिर्निरस्ततेजःसु तदेव शोभनम्
०४०४०१४१ यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्
०४०४०१४२ पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः
०४०४०१५१ यत्पादपद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः
०४०४०१५२ लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान्द्रुह्यति विश्वबन्धवे
०४०४०१६१ किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने

०४०४०१६२ तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम्
०४०४०१७१ कर्णौ पिधाय निरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने
०४०४०१७२ छिन्द्यात्प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः
०४०४०१८१ अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः
०४०४०१८२ जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते
०४०४०१९१ न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः
०४०४०१९२ यथा गतिर्देवमनुष्ययोः पृथक्स्व एव धर्मे न परं क्षिपेत्स्थितः
०४०४०२०१ कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिङ्गमाश्रितम्
०४०४०२०२ विरोधि तद्यौगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति
०४०४०२११ मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासु न धूमवर्त्मभिः
०४०४०२१२ तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः
०४०४०२२१ नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना
०४०४०२२२ व्रीडा ममाभूत्कुजनप्रसङ्गतस्तज्जन्म धिग्यो महतामवद्यकृत्
०४०४०२३१ गोत्रं त्वदीयं भगवान्वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः
०४०४०२३२ व्यपेतनर्मस्मितमाशु तदाहं व्युत्स्रक्ष्य एतत्कुणपं त्वदङ्गजम्
०४०४०२४० मैत्रेय उवाच
०४०४०२४१ इत्यध्वरे दक्षमनूद्य शत्रुहन्क्षितावुदीचीं निषसाद शान्तवाक्
०४०४०२४२ स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत्
०४०४०२५१ कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः
०४०४०२५२ शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद्भ्रुवोर्मध्यमनिन्दितानयत्
०४०४०२६१ एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात्
०४०४०२६२ जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम्
०४०४०२७१ ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम्
०४०४०२७२ ददर्श देहो हतकल्मषः सती सद्यः प्रजज्वाल समाधिजाग्निना
०४०४०२८१ तत्पश्यतां खे भुवि चाद्भुतं महधा हेति वादः सुमहानजायत
०४०४०२८२ हन्त प्रिया दैवतमस्य देवी जहावसून्केन सती प्रकोपिता
०४०४०२९१ अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः
०४०४०२९२ जहावसून्यद्विमतात्मजा सती मनस्विनी मानमभीक्ष्णमर्हति
०४०४०३०१ सोऽयं दुर्मर्षहृदयो ब्रह्मध्रुक्च लोकेऽपकीर्तिं महतीमवाप्स्यति
०४०४०३०२ यदङ्गजां स्वां पुरुषद्विड्डुद्यतां न प्रत्यषेधन्मृतयेऽपराधतः
०४०४०३११ वदत्येवं जने सत्या दृष्ट्वासुत्यागमद्भुतम्

०४०४०३१२ दक्षं तत्पार्षदा हन्तुमुदतिष्ठन्नुदायुधाः
०४०४०३२१ तेषामापततां वेगं निशाम्य भगवान्भृगुः
०४०४०३२२ यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह
०४०४०३३१ अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा
०४०४०३३२ ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः
०४०४०३४१ तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः
०४०४०३४२ हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा
०४०५००१० मैत्रेय उवाच
०४०५००११ भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात्
०४०५००१२ स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे
०४०५००२१ क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम्
०४०५००२२ उत्कृत्य रुद्रः सहसोत्थितो हसन्गम्भीरनादो विससर्ज तां भुवि
०४०५००३१ ततोऽतिकायस्तनुवा स्पृशन्दिवं सहस्रबाहुर्घनरुक्त्रिसूर्यदृक्
०४०५००३२ करालदंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः
०४०५००४१ तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान्भूतनाथः
०४०५००४२ दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्र भटांशको मे
०४०५००५१ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम्
०४०५००५२ मेनेतदात्मानमसङ्गरंहसा महीयसां तात सहः सहिष्णुम्
०४०५००६१ अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम्
०४०५००६२ उद्यम्य शूलं जगदन्तकान्तकं सम्प्राद्रवद्घोषणभूषणाङ्घ्रिः
०४०५००७१ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम्
०४०५००७२ तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः
०४०५००८१ वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः
०४०५००८२ गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते
०४०५००९१ प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैव तस्य
०४०५००९२ यत्पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम्
०४०५०१०१ यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः
०४०५०१०२ वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक्
०४०५०१११ अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्निरीक्ष्यं भ्रुकुट्या
०४०५०११२ करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः
०४०५०१२१ बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुहुर्महात्मनः

०४०५०१२२ उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक्
०४०५०१३१ तावत्स रुद्रानुचरैर्महामखो नानायुधैर्वामनकैरुदायुधैः
०४०५०१३२ पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत
०४०५०१४१ केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथापरे
०४०५०१४२ सद आग्नीध्रशालां च तद्विहारं महानसम्
०४०५०१५१ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन्
०४०५०१५२ कुण्डेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः
०४०५०१६१ अबाधन्त मुनीनन्ये एके पत्नीरतर्जयन्
०४०५०१६२ अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान्
०४०५०१७१ भृगुं बबन्ध मणिमान्वीरभद्रः प्रजापतिम्
०४०५०१७२ चण्डेशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत्
०४०५०१८१ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः
०४०५०१८२ तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन्
०४०५०१९१ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः
०४०५०१९२ भृगोर्लुलुञ्चे सदसि योऽहसच्छ्मश्रु दर्शयन्
०४०५०२०१ भगस्य नेत्रे भगवान्पातितस्य रुषा भुवि
०४०५०२०२ उज्जहार सदस्थोऽक्ष्णा यः शपन्तमसूसुचत्
०४०५०२११ पूष्णो ह्यपातयद्दन्तान्कालिङ्गस्य यथा बलः
०४०५०२१२ शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः
०४०५०२२१ आक्रम्योरसि दक्षस्य शितधारेण हेतिना
०४०५०२२२ छिन्दन्नपि तदुद्धर्तुं नाशक्नोत्त्र्यम्बकस्तदा
०४०५०२३१ शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः
०४०५०२३२ विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम्
०४०५०२४१ दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे
०४०५०२४२ यजमानपशोः कस्य कायात्तेनाहरच्छिरः
०४०५०२५१ साधुवादस्तदा तेषां कर्म तत्तस्य पश्यताम्
०४०५०२५२ भूतप्रेतपिशाचानां अन्येषां तद्विपर्ययः
०४०५०२६१ जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः
०४०५०२६२ तद्देवयजनं दग्ध्वा प्रातिष्ठद्गुह्यकालयम्
०४०६००१० मैत्रेय उवाच
०४०६००११ अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः

०४०६००१२ शूलपट्टिशनिस्त्रिंश गदापरिघमुद्गरैः
०४०६००२१ सञ्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः
०४०६००२२ स्वयम्भुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन्
०४०६००३१ उपलभ्य पुरैवैतद्भगवानब्जसम्भवः
०४०६००३२ नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः
०४०६००४१ तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि
०४०६००४२ क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम्
०४०६००५१ अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः
०४०६००५२ प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम्
०४०६००६१ आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन्
०४०६००६२ तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः
०४०६००७१ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम्
०४०६००७२ विदुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत्
०४०६००८१ स इत्थमादिश्य सुरानजस्तु तैः समन्वितः पितृभिः सप्रजेशैः
०४०६००८२ ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः
०४०६००९१ जन्मौषधितपोमन्त्र योगसिद्धैर्नरेतरैः
०४०६००९२ जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा
०४०६०१०१ नानामणिमयैः श‍ृङ्गैर्नानाधातुविचित्रितैः
०४०६०१०२ नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः
०४०६०१११ नानामलप्रस्रवणैर्नानाकन्दरसानुभिः
०४०६०११२ रमणं विहरन्तीनां रमणैः सिद्धयोषिताम्
०४०६०१२१ मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम्
०४०६०१२२ प्लाविते रक्तकण्ठानां कूजितैश्च पतत्रिणाम्
०४०६०१३१ आह्वयन्तमिवोद्धस्तैर्द्विजान्कामदुघैर्द्रुमैः
०४०६०१३२ व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः
०४०६०१४१ मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम्
०४०६०१४२ तमालैः शालतालैश्च कोविदारासनार्जुनैः
०४०६०१५१ चूतैः कदम्बैर्नीपैश्च नागपुन्नागचम्पकैः
०४०६०१५२ पाटलाशोकबकुलैः कुन्दैः कुरबकैरपि
०४०६०१६१ स्वर्णार्णशतपत्रैश्च वररेणुकजातिभिः
०४०६०१६२ कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम्

०४०६०१७१ पनसोदुम्बराश्वत्थ प्लक्षन्यग्रोधहिङ्गुभिः
०४०६०१७२ भूर्जैरोषधिभिः पूगै राजपूगैश्च जम्बुभिः
०४०६०१८१ खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः
०४०६०१८२ द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः
०४०६०१९१ कुमुदोत्पलकह्लार शतपत्रवनर्द्धिभिः
०४०६०१९२ नलिनीषु कलं कूजत् खगवृन्दोपशोभितम्
०४०६०२०१ मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः
०४०६०२०२ गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः
०४०६०२११ कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं वृकनाभिभिः
०४०६०२१२ कदलीखण्डसंरुद्ध नलिनीपुलिनश्रियम्
०४०६०२२१ पर्यस्तं नन्दया सत्याः स्नानपुण्यतरोदया
०४०६०२२२ विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः
०४०६०२३१ ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम्
०४०६०२३२ वनं सौगन्धिकं चापि यत्र तन्नाम पङ्कजम्
०४०६०२४१ नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः
०४०६०२४२ तीर्थपादपदाम्भोज रजसातीव पावने
०४०६०२५१ ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः
०४०६०२५२ क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः
०४०६०२६१ ययोस्तत्स्नानविभ्रष्ट नवकुङ्कुमपिञ्जरम्
०४०६०२६२ वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः
०४०६०२७१ तारहेममहारत्न विमानशतसङ्कुलाम्
०४०६०२७२ जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम्
०४०६०२८१ हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत्
०४०६०२८२ द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः
०४०६०२९१ रक्तकण्ठखगानीक स्वरमण्डितषट्पदम्
०४०६०२९२ कलहंसकुलप्रेष्ठं खरदण्डजलाशयम्
०४०६०३०१ वनकुञ्जरसङ्घृष्ट हरिचन्दनवायुना
०४०६०३०२ अधि पुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः
०४०६०३११ वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः
०४०६०३१२ प्राप्तं किम्पुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम्
०४०६०३२१ स योजनशतोत्सेधः पादोनविटपायतः

०४०६०३२२ पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः
०४०६०३३१ तस्मिन्महायोगमये मुमुक्षुशरणे सुराः
०४०६०३३२ ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम्
०४०६०३४१ सनन्दनाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम्
०४०६०३४२ उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम्
०४०६०३५१ विद्यातपोयोगपथमास्थितं तमधीश्वरम्
०४०६०३५२ चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम्
०४०६०३६१ लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम्
०४०६०३६२ अङ्गेन सन्ध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम्
०४०६०३७१ उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्
०४०६०३७२ नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम्
०४०६०३८१ कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि
०४०६०३८२ बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया
०४०६०३९१ तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम्
०४०६०३९२ सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः
०४०६०४०१ स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः
०४०६०४०२ उत्थाय चक्रे शिरसाभिवन्दनमर्हत्तमः कस्य यथैव विष्णुः
०४०६०४११ तथापरे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम्
०४०६०४१२ नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः
०४०६०४२० ब्रह्मोवाच
०४०६०४२१ आने त्वामीशं विश्वस्य जगतो योनिबीजयोः
०४०६०४२२ शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम्
०४०६०४३१ त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः
०४०६०४३२ विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा
०४०६०४४१ त्वमेव धर्मार्थदुघाभिपत्तये दक्षेण सूत्रेण ससर्जिथाध्वरम्
०४०६०४४२ त्वयैव लोकेऽवसिताश्च सेतवो यान्ब्राह्मणाः श्रद्दधते धृतव्रताः
०४०६०४५१ त्वं कर्मणां मङ्गल मङ्गलानां कर्तुः स्वलोकं तनुषे स्वः परं वा
०४०६०४५२ अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केन तदेव कस्यचित्
०४०६०४६१ न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव
०४०६०४६२ भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम्
०४०६०४७१ पृथग्धियः कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम्

०४०६०४७२ परान्दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान्मावधीद्दैववधान्भवद्विधः
०४०६०४८१ यस्मिन्यदा पुष्करनाभमायया दुरन्तया स्पृष्टधियः पृथग्दृशः
०४०६०४८२ कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम्
०४०६०४९१ भवांस्तु पुंसः परमस्य मायया दुरन्तयास्पृष्टमतिः समस्तदृक्
०४०६०४९२ तया हतात्मस्वनुकर्मचेतःस्वनुग्रहं कर्तुमिहार्हसि प्रभो
०४०६०५०१ कुर्वध्वरस्योद्धरणं हतस्य भोः त्वयासमाप्तस्य मनो प्रजापतेः
०४०६०५०२ न यत्र भागं तव भागिनो ददुः कुयाजिनो येन मखो निनीयते
०४०६०५११ जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः
०४०६०५१२ भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत्
०४०६०५२१ देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः
०४०६०५२२ भवतानुगृहीतानामाशु मन्योऽस्त्वनातुरम्
०४०६०५३१ एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै
०४०६०५३२ यज्ञस्ते रुद्र भागेन कल्पतामद्य यज्ञहन्
०४०७००१० मैत्रेय उवाच
०४०७००११ इत्यजेनानुनीतेन भवेन परितुष्यता
०४०७००१२ अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति
०४०७००२० महादेव उवाच
०४०७००२१ नाघं प्रजेश बालानां वर्णये नानुचिन्तये
०४०७००२२ देवमायाभिभूतानां दण्डस्तत्र धृतो मया
०४०७००३१ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः
०४०७००३२ मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः
०४०७००४१ पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक्
०४०७००४२ देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः
०४०७००५१ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः
०४०७००५२ भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत्
०४०७००६० मैत्रेय उवाच
०४०७००६१ तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम्
०४०७००६२ परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन्
०४०७००७१ ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः
०४०७००७२ भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः
०४०७००८१ विधाय कार्त्स्न्येन च तद्यदाह भगवान्भवः

०४०७००८२ सन्दधुः कस्य कायेन सवनीयपशोः शिरः
०४०७००९१ सन्धीयमाने शिरसि दक्षो रुद्राभिवीक्षितः
०४०७००९२ सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम्
०४०७०१०१ तदा वृषध्वजद्वेष कलिलात्मा प्रजापतिः
०४०७०१०२ शिवावलोकादभवच्छरद्ध्रद इवामलः
०४०७०१११ भवस्तवाय कृतधीर्नाशक्नोदनुरागतः
०४०७०११२ औत्कण्ठ्याद्बाष्पकलया सम्परेतां सुतां स्मरन्
०४०७०१२१ कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः
०४०७०१२२ शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः
०४०७०१३० दक्ष उवाच
०४०७०१३१ भूयाननुग्रह अहो भवता कृतो मे
०४०७०१३२ दण्डस्त्वया मयि भृतो यदपि प्रलब्धः
०४०७०१३३ न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा
०४०७०१३४ तुभ्यं हरेश्च कुत एव धृतव्रतेषु
०४०७०१४१ विद्यातपोव्रतधरान्मुखतः स्म विप्रान्
०४०७०१४२ ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक्
०४०७०१४३ तद्ब्राह्मणान्परम सर्वविपत्सु पासि
०४०७०१४४ पालः पशूनिव विभो प्रगृहीतदण्डः
०४०७०१५१ योऽसौ मयाविदिततत्त्वदृशा सभायां
०४०७०१५२ क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्माम्
०४०७०१५३ अर्वाक्पतन्तमर्हत्तमनिन्दयापाद्
०४०७०१५४ दृष्ट्यार्द्रया स भगवान्स्वकृतेन तुष्येत्
०४०७०१६० मैत्रेय उवाच
०४०७०१६१ क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः
०४०७०१६२ कर्म सन्तानयामास सोपाध्यायर्त्विगादिभिः
०४०७०१७१ वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः
०४०७०१७२ पुरोडाशं निरवपन्वीरसंसर्गशुद्धये
०४०७०१८१ अध्वर्युणात्तहविषा यजमानो विशाम्पते
०४०७०१८२ धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः
०४०७०१९१ तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश
०४०७०१९२ मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना

०४०७०२०१ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो
०४०७०२०२ नीलालकभ्रमरमण्डितकुण्डलास्यः
०४०७०२०३ शङ्खाब्जचक्रशरचापगदासिचर्म
०४०७०२०४ व्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः
०४०७०२११ वक्षस्यधिश्रितवधूर्वनमाल्युदार
०४०७०२१२ हासावलोककलया रमयंश्च विश्वम्
०४०७०२१३ पार्श्वभ्रमद्व्यजनचामरराजहंसः
०४०७०२१४ श्वेतातपत्रशशिनोपरि रज्यमानः
०४०७०२२१ तमुपागतमालक्ष्य सर्वे सुरगणादयः
०४०७०२२२ प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः
०४०७०२३१ तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः
०४०७०२३२ मूर्ध्ना धृताञ्जलिपुटा उपतस्थुरधोक्षजम्
०४०७०२४१ अप्यर्वाग्वृत्तयो यस्य महि त्वात्मभुवादयः
०४०७०२४२ यथामति गृणन्ति स्म कृतानुग्रहविग्रहम्
०४०७०२५१ दक्षो गृहीतार्हणसादनोत्तमं
०४०७०२५२ यज्ञेश्वरं विश्वसृजां परं गुरुम्
०४०७०२५३ सुनन्दनन्दाद्यनुगैर्वृतं मुदा
०४०७०२५४ गृणन्प्रपेदे प्रयतः कृताञ्जलिः
०४०७०२६० दक्ष उवाच
०४०७०२६१ शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं
०४०७०२६२ चिन्मात्रमेकमभयं प्रतिषिध्य मायाम्
०४०७०२६३ तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्याम्
०४०७०२६४ आस्ते भवानपरिशुद्ध इवात्मतन्त्रः
०४०७०२७० ऋत्विज ऊचुः
०४०७०२७१ तत्त्वं न ते वयमनञ्जन रुद्रशापात्
०४०७०२७२ कर्मण्यवग्रहधियो भगवन्विदामः
०४०७०२७३ धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं
०४०७०२७४ ज्ञातं यदर्थमधिदैवमदो व्यवस्थाः
०४०७०२८० सदस्या ऊचुः
०४०७०२८१ उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेऽन्तकोग्र
०४०७०२८२ व्यालान्विष्टे विषयमृगतृष्यात्मगेहोरुभारः

०४०७०२८३ द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः
०४०७०२८४ पादौकस्ते शरणद कदा याति कामोपसृष्टः
०४०७०२९० रुद्र उवाच
०४०७०२९१ तव वरद वराङ्घ्रावाशिषेहाखिलार्थे
०४०७०२९२ ह्यपि मुनिभिरसक्तैरादरेणार्हणीये
०४०७०२९३ यदि रचितधियं माविद्यलोकोऽपविद्धं
०४०७०२९४ जपति न गणये तत्त्वत्परानुग्रहेण
०४०७०३०० भृगुरुवाच
०४०७०३०१ यन्मायया गहनयापहृतात्मबोधा
०४०७०३०२ ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः
०४०७०३०३ नात्मन्श्रितं तव विदन्त्यधुनापि तत्त्वं
०४०७०३०४ सोऽयं प्रसीदतु भवान्प्रणतात्मबन्धुः
०४०७०३१० ब्रह्मोवाच
०४०७०३११ नैतत्स्वरूपं भवतोऽसौ पदार्थ भेदग्रहैः पुरुषो यावदीक्षेत्
०४०७०३१२ ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद्व्यतिरिक्तो मतस्त्वम्
०४०७०३२० इन्द्र उवाच
०४०७०३२१ इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम्
०४०७०३२२ सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः
०४०७०३३० पत्न्य ऊचुः
०४०७०३३१ यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाद्य दक्षकोपात्
०४०७०३३२ तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन्नलिनरुचा दृशा पुनीहि
०४०७०३४० ऋषय ऊचुः
०४०७०३४१ अनन्वितं ते भगवन्विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे
०४०७०३४२ विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवान्
०४०७०३५० सिद्धा ऊचुः
०४०७०३५१ अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः
०४०७०३५२ तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः
०४०७०३६० यजमान्युवाच
०४०७०३६१ स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः
०४०७०३६२ त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पुरुषः
०४०७०३७० लोकपाला ऊचुः

०४०७०३७१ दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन विश्वम्
०४०७०३७२ माया ह्येषा भवदीया हि भूमन्यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः
०४०७०३८० योगेश्वरा ऊचुः
०४०७०३८१ प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः
०४०७०३८२ अथापि भक्त्येश तयोपधावतामनन्यवृत्त्यानुगृहाण वत्सल
०४०७०३९१ जगदुद्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयात्ममायया
०४०७०३९२ रचितात्मभेदमतये स्वसंस्थया विनिवर्तितभ्रमगुणात्मने नमः
०४०७०४०० ब्रह्मोवाच
०४०७०४०१ नमस्ते श्रितसत्त्वाय धर्मादीनां च सूतये
०४०७०४०२ निर्गुणाय च यत्काष्ठां नाहं वेदापरेऽपि च
०४०७०४१० अग्निरुवाच
०४०७०४११ यत्तेजसाहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम्
०४०७०४१२ तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम्
०४०७०४२० देवा ऊचुः
०४०७०४२१ पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं
०४०७०४२२ त्वमेवाद्यस्तस्मिन्सलिल उरगेन्द्राधिशयने
०४०७०४२३ पुमान्शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः
०४०७०४२४ स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः
०४०७०४३० गन्धर्वा ऊचुः
०४०७०४३१ अंशांशास्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः
०४०७०४३२ क्रीडाभाण्डं विश्वमिदं यस्य विभूमन्तस्मै नित्यं नाथ नमस्ते करवाम
०४०७०४४० विद्याधरा ऊचुः
०४०७०४४१ त्वन्माययार्थमभिपद्य कलेवरेऽस्मिन्
०४०७०४४२ कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः
०४०७०४४३ क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं
०४०७०४४४ युष्मत्कथामृतनिषेवक उद्व्युदस्येत्
०४०७०४५० ब्राह्मणा ऊचुः
०४०७०४५१ त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च
०४०७०४५२ त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः
०४०७०४६१ त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा
०४०७०४६२ स्तूयमानो नदल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः

०४०७०४७१ स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम्
०४०७०४७२ कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः
०४०७०४८० मैत्रेय उवाच
०४०७०४८१ इति दक्षः कविर्यज्ञं भद्र रुद्राभिमर्शितम्
०४०७०४८२ कीर्त्यमाने हृषीकेशे सन्निन्ये यज्ञभावने
०४०७०४९१ भगवान्स्वेन भागेन सर्वात्मा सर्वभागभुक्
०४०७०४९२ दक्षं बभाष आभाष्य प्रीयमाण इवानघ
०४०७०५०० श्रीभगवानुवाच
०४०७०५०१ अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्
०४०७०५०२ आत्मेश्वर उपद्रष्टा स्वयन्दृगविशेषणः
०४०७०५११ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज
०४०७०५१२ सृजन्रक्षन्हरन्विश्वं दध्रे संज्ञां क्रियोचिताम्
०४०७०५२१ तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि
०४०७०५२२ ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति
०४०७०५३१ यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित्
०४०७०५३२ पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः
०४०७०५४१ त्रयाणामेकभावानां यो न पश्यति वै भिदाम्
०४०७०५४२ सर्वभूतात्मनां ब्रह्मन्स शान्तिमधिगच्छति
०४०७०५५० मैत्रेय उवाच
०४०७०५५१ एवं भगवतादिष्टः प्रजापतिपतिर्हरिम्
०४०७०५५२ अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत्
०४०७०५६१ रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः
०४०७०५६२ कर्मणोदवसानेन सोमपानितरानपि
०४०७०५६३ उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः
०४०७०५७१ तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे
०४०७०५७२ धर्म एव मतिं दत्त्वा त्रिदशास्ते दिवं ययुः
०४०७०५८१ एवं दाक्षायणी हित्वा सती पूर्वकलेवरम्
०४०७०५८२ जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम
०४०७०५९१ तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका
०४०७०५९२ अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम्
०४०७०६०१ एतद्भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः

०४०७०६०२ श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः
०४०७०६११ इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम्
०४०७०६१२ यो नित्यदाकर्ण्य नरोऽनुकीर्तयेद्धुनोत्यघं कौरव भक्तिभावतः
०४०८००१० मैत्रेय उवाच
०४०८००११ सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः
०४०८००१२ नैते गृहान्ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः
०४०८००२१ मृषाधर्मस्य भार्यासीद्दम्भं मायां च शत्रुहन्
०४०८००२२ असूत मिथुनं तत्तु निरृतिर्जगृहेऽप्रजः
०४०८००३१ तयोः समभवल्लोभो निकृतिश्च महामते
०४०८००३२ ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः
०४०८००४१ दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम
०४०८००४२ तयोश्च मिथुनं जज्ञे यातना निरयस्तथा
०४०८००५१ सङ्ग्रहेण मयाख्यातः प्रतिसर्गस्तवानघ
०४०८००५२ त्रिः श्रुत्वैतत्पुमान्पुण्यं विधुनोत्यात्मनो मलम्
०४०८००६१ अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह
०४०८००६२ स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः
०४०८००७१ प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ
०४०८००७२ वासुदेवस्य कलया रक्षायां जगतः स्थितौ
०४०८००८१ जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः
०४०८००८२ सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः
०४०८००९१ एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन्
०४०८००९२ उत्तमं नारुरुक्षन्तं ध्रुवं राजाभ्यनन्दत
०४०८०१०१ तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम्
०४०८०१०२ सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता
०४०८०१११ न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति
०४०८०११२ न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः
०४०८०१२१ बालोऽसि बत नात्मानमन्यस्त्रीगर्भसम्भृतम्
०४०८०१२२ नूनं वेद भवान्यस्य दुर्लभेऽर्थे मनोरथः
०४०८०१३१ तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे
०४०८०१३२ गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्
०४०८०१४० मैत्रेय उवाच

०४०८०१४१ मातुः सपत्न्याः स दुरुक्तिविद्धः श्वसन्रुषा दण्डहतो यथाहिः
०४०८०१४२ हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन्सकाशम्
०४०८०१५१ तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य बालम्
०४०८०१५२ निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्या
०४०८०१६१ सोत्सृज्य धैर्यं विललाप शोक दावाग्निना दावलतेव बाला
०४०८०१६२ वाक्यं सपत्न्याः स्मरती सरोज श्रिया दृशा बाष्पकलामुवाह
०४०८०१७१ दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला
०४०८०१७२ मामङ्गलं तात परेषु मंस्था भुङ्क्ते जनो यत्परदुःखदस्तत्
०४०८०१८१ सत्यं सुरुच्याभिहितं भवान्मे यद्दुर्भगाया उदरे गृहीतः
०४०८०१८२ स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम्
०४०८०१९१ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्रापि यदव्यलीकम्
०४०८०१९२ आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा
०४०८०२०१ यस्याङ्घ्रिपद्मं परिचर्य विश्व विभावनायात्तगुणाभिपत्तेः
०४०८०२०२ अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवन्द्यम्
०४०८०२११ तथा मनुर्वो भगवान्पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः
०४०८०२१२ इष्ट्वाभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम्
०४०८०२२१ तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम्
०४०८०२२२ अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम्
०४०८०२३१ नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कञ्चन
०४०८०२३२ यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया
०४०८०२४० मैत्रेय उवाच
०४०८०२४१ एवं सञ्जल्पितं मातुराकर्ण्यार्थागमं वचः
०४०८०२४२ सन्नियम्यात्मनात्मानं निश्चक्राम पितुः पुरात्
०४०८०२५१ नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम्
०४०८०२५२ स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः
०४०८०२६१ अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम्
०४०८०२६२ बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः
०४०८०२७० नारद उवाच
०४०८०२७१ नाधुनाप्यवमानं ते सम्मानं वापि पुत्रक
०४०८०२७२ लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु
०४०८०२८१ विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतवः

०४०८०२८२ पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः
०४०८०२९१ परितुष्येत्ततस्तात तावन्मात्रेण पूरुषः
०४०८०२९२ दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः
०४०८०३०१ अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि
०४०८०३०२ यत्प्रसादं स वै पुंसां दुराराध्यो मतो मम
०४०८०३११ मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः
०४०८०३१२ न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना
०४०८०३२१ अतो निवर्ततामेष निर्बन्धस्तव निष्फलः
०४०८०३२२ यतिष्यति भवान्काले श्रेयसां समुपस्थिते
०४०८०३३१ यस्य यद्दैवविहितं स तेन सुखदुःखयोः
०४०८०३३२ आत्मानं तोषयन्देही तमसः पारमृच्छति
०४०८०३४१ गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात्
०४०८०३४२ मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते
०४०८०३५० ध्रुव उवाच
०४०८०३५१ सोऽयं शमो भगवता सुखदुःखहतात्मनाम्
०४०८०३५२ दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः
०४०८०३६१ अथापि मेऽविनीतस्य क्षात्रं घोरमुपेयुषः
०४०८०३६२ सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि
०४०८०३७१ पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे
०४०८०३७२ ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम्
०४०८०३८१ नूनं भवान्भगवतो योऽङ्गजः परमेष्ठिनः
०४०८०३८२ वितुदन्नटते वीणां हिताय जगतोऽर्कवत्
०४०८०३९० मैत्रेय उवाच
०४०८०३९१ इत्युदाहृतमाकर्ण्य भगवान्नारदस्तदा
०४०८०३९२ प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया
०४०८०४०० नारद उवाच
०४०८०४०१ जनन्याभिहितः पन्थाः स वै निःश्रेयसस्य ते
०४०८०४०२ भगवान्वासुदेवस्तं भज तं प्रवणात्मना
०४०८०४११ धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः
०४०८०४१२ एकं ह्येव हरेस्तत्र कारणं पादसेवनम्
०४०८०४२१ तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि

०४०८०४२२ पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः
०४०८०४३१ स्नात्वानुसवनं तस्मिन्कालिन्द्याः सलिले शिवे
०४०८०४३२ कृत्वोचितानि निवसन्नात्मनः कल्पितासनः
०४०८०४४१ प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम्
०४०८०४४२ शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम्
०४०८०४५१ प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम्
०४०८०४५२ सुनासं सुभ्रुवं चारु कपोलं सुरसुन्दरम्
०४०८०४६१ तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम्
०४०८०४६२ प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम्
०४०८०४७१ श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम्
०४०८०४७२ शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम्
०४०८०४८१ किरीटिनं कुण्डलिनं केयूरवलयान्वितम्
०४०८०४८२ कौस्तुभाभरणग्रीवं पीतकौशेयवाससम्
०४०८०४९१ काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम्
०४०८०४९२ दर्शनीयतमं शान्तं मनोनयनवर्धनम्
०४०८०५०१ पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम्
०४०८०५०२ हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम्
०४०८०५११ स्मयमानमभिध्यायेत्सानुरागावलोकनम्
०४०८०५१२ नियतेनैकभूतेन मनसा वरदर्षभम्
०४०८०५२१ एवं भगवतो रूपं सुभद्रं ध्यायतो मनः
०४०८०५२२ निर्वृत्या परया तूर्णं सम्पन्नं न निवर्तते
०४०८०५३१ जपश्च परमो गुह्यः श्रूयतां मे नृपात्मज
०४०८०५३२ यं सप्तरात्रं प्रपठन्पुमान्पश्यति खेचरान्
०४०८०५४० ओं नमो भगवते वासुदेवाय
०४०८०५४१ मन्त्रेणानेन देवस्य कुर्याद्द्रव्यमयीं बुधः
०४०८०५४२ सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित्
०४०८०५५१ सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः
०४०८०५५२ शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम्
०४०८०५६१ लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु वार्चयेत्
०४०८०५६२ आभृतात्मा मुनिः शान्तो यतवाङ्मितवन्यभुक्
०४०८०५७१ स्वेच्छावतारचरितैरचिन्त्यनिजमायया

०४०८०५७२ करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयङ्गमम्
०४०८०५८१ परिचर्या भगवतो यावत्यः पूर्वसेविताः
०४०८०५८२ ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये
०४०८०५९१ एवं कायेन मनसा वचसा च मनोगतम्
०४०८०५९२ परिचर्यमाणो भगवान्भक्तिमत्परिचर्यया
०४०८०६०१ पुंसाममायिनां सम्यग्भजतां भाववर्धनः
०४०८०६०२ श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनाम्
०४०८०६११ विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा
०४०८०६१२ तं निरन्तरभावेन भजेताद्धा विमुक्तये
०४०८०६२१ इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः
०४०८०६२२ ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम्
०४०८०६३१ तपोवनं गते तस्मिन्प्रविष्टोऽन्तःपुरं मुनिः
०४०८०६३२ अर्हितार्हणको राज्ञा सुखासीन उवाच तम्
०४०८०६४० नारद उवाच
०४०८०६४१ राजन्किं ध्यायसे दीर्घं मुखेन परिशुष्यता
०४०८०६४२ किं वा न रिष्यते कामो धर्मो वार्थेन संयुतः
०४०८०६५० राजोवाच
०४०८०६५१ सुतो मे बालको ब्रह्मन्स्त्रैणेनाकरुणात्मना
०४०८०६५२ निर्वासितः पञ्चवर्षः सह मात्रा महान्कविः
०४०८०६६१ अप्यनाथं वने ब्रह्मन्मा स्मादन्त्यर्भकं वृकाः
०४०८०६६२ श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम्
०४०८०६७१ अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय
०४०८०६७२ योऽङ्कं प्रेम्णारुरुक्षन्तं नाभ्यनन्दमसत्तमः
०४०८०६८० नारद उवाच
०४०८०६८१ मा मा शुचः स्वतनयं देवगुप्तं विशाम्पते
०४०८०६८२ तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत्
०४०८०६९१ सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः
०४०८०६९२ ऐष्यत्यचिरतो राजन्यशो विपुलयंस्तव
०४०८०७०० मैत्रेय उवाच
०४०८०७०१ इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः
०४०८०७०२ राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत्

०४०८०७११ तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम्
०४०८०७१२ समाहितः पर्यचरदृष्यादेशेन पूरुषम्
०४०८०७२१ त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः
०४०८०७२२ आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन्हरिम्
०४०८०७३१ द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने
०४०८०७३२ तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयन्विभुम्
०४०८०७४१ तृतीयं चानयन्मासं नवमे नवमेऽहनि
०४०८०७४२ अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना
०४०८०७५१ चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि
०४०८०७५२ वायुभक्षो जितश्वासो ध्यायन्देवमधारयत्
०४०८०७६१ पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः
०४०८०७६२ ध्यायन्ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः
०४०८०७७१ सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम्
०४०८०७७२ ध्यायन्भगवतो रूपं नाद्राक्षीत्किञ्चनापरम्
०४०८०७८१ आधारं महदादीनां प्रधानपुरुषेश्वरम्
०४०८०७८२ ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे
०४०८०७९१ यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही
०४०८०७९२ ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे
०४०८०८०१ तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया
०४०८०८०२ लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम्
०४०८०८१० देवा ऊचुः
०४०८०८११ नैवं विदामो भगवन्प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः
०४०८०८१२ विधेहि तन्नो वृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम्
०४०८०८२० श्रीभगवानुवाच
०४०८०८२१ मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम
०४०८०८२२ यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि सङ्गतात्मा
०४०९००१० मैत्रेय उवाच
०४०९००११ त एवमुत्सन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम्
०४०९००१२ सहस्रशीर्षापि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः
०४०९००२१ स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम्
०४०९००२२ तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श

०४०९००३१ तद्दर्शनेनागतसाध्वसः क्षितावववन्दताङ्गं विनमय्य दण्डवत्
०४०९००३२ दृग्भ्यां प्रपश्यन्प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन्
०४०९००४१ स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वास्य सर्वस्य च हृद्यवस्थितः
०४०९००४२ कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले
०४०९००५१ स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः
०४०९००५२ तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः
०४०९००६० ध्रुव उवाच
०४०९००६१ योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
०४०९००६२ सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना
०४०९००६३ अन्यांश्च हस्तचरणश्रवणत्वगादीन्
०४०९००६४ प्राणान्नमो भगवते पुरुषाय तुभ्यम्
०४०९००७१ एकस्त्वमेव भगवन्निदमात्मशक्त्या
०४०९००७२ मायाख्ययोरुगुणया महदाद्यशेषम्
०४०९००७३ सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु
०४०९००७४ नानेव दारुषु विभावसुवद्विभासि
०४०९००८१ त्वद्दत्तया वयुनयेदमचष्ट विश्वं
०४०९००८२ सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः
०४०९००८३ तस्यापवर्ग्यशरणं तव पादमूलं
०४०९००८४ विस्मर्यते कृतविदा कथमार्तबन्धो
०४०९००९१ नूनं विमुष्टमतयस्तव मायया ते
०४०९००९२ ये त्वां भवाप्ययविमोक्षणमन्यहेतोः
०४०९००९३ अर्चन्ति कल्पकतरुं कुणपोपभोग्यम्
०४०९००९४ इच्छन्ति यत्स्पर्शजं निरयेऽपि न्णाम्
०४०९०१०१ या निर्वृतिस्तनुभृतां तव पादपद्म
०४०९०१०२ ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्
०४०९०१०३ सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
०४०९०१०४ किं त्वन्तकासिलुलितात्पततां विमानात्
०४०९०१११ भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
०४०९०११२ भूयादनन्त महताममलाशयानाम्
०४०९०११३ येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं
०४०९०११४ नेष्ये भवद्गुणकथामृतपानमत्तः

०४०९०१२१ ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं
०४०९०१२२ ये चान्वदः सुतसुहृद्गृहवित्तदाराः
०४०९०१२३ ये त्वब्जनाभ भवदीयपदारविन्द
०४०९०१२४ सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः
०४०९०१३१ तिर्यङ्गगद्विजसरीसृपदेवदैत्य
०४०९०१३२ मर्त्यादिभिः परिचितं सदसद्विशेषम्
०४०९०१३३ रूपं स्थविष्ठमज ते महदाद्यनेकं
०४०९०१३४ नातः परं परम वेद्मि न यत्र वादः
०४०९०१४१ कल्पान्त एतदखिलं जठरेण गृह्णन्
०४०९०१४२ शेते पुमान्स्वदृगनन्तसखस्तदङ्के
०४०९०१४३ यन्नाभिसिन्धुरुहकाञ्चनलोकपद्म
०४०९०१४४ गर्भे द्युमान्भगवते प्रणतोऽस्मि तस्मै
०४०९०१५१ त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा
०४०९०१५२ कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः
०४०९०१५३ यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या
०४०९०१५४ द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से
०४०९०१६१ यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति
०४०९०१६२ विद्यादयो विविधशक्तय आनुपूर्व्यात्
०४०९०१६३ तद्ब्रह्म विश्वभवमेकमनन्तमाद्यम्
०४०९०१६४ आनन्दमात्रमविकारमहं प्रपद्ये
०४०९०१७१ सत्याशिषो हि भगवंस्तव पादपद्मम्
०४०९०१७२ आशीस्तथानुभजतः पुरुषार्थमूर्तेः
०४०९०१७३ अप्येवमर्य भगवान्परिपाति दीनान्
०४०९०१७४ वाश्रेव वत्सकमनुग्रहकातरोऽस्मान्
०४०९०१८० मैत्रेय उवाच
०४०९०१८१ अथाभिष्टुत एवं वै सत्सङ्कल्पेन धीमता
०४०९०१८२ भृत्यानुरक्तो भगवान्प्रतिनन्द्येदमब्रवीत्
०४०९०१९० श्रीभगवानुवाच
०४०९०१९१ वेदाहं ते व्यवसितं हृदि राजन्यबालक
०४०९०१९२ तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत
०४०९०२०१ नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति

०४०९०२०२ यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम्
०४०९०२११ मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम्
०४०९०२१२ धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः
०४०९०२१३ चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः
०४०९०२२१ प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः
०४०९०२२२ षट्त्रिंशद्वर्षसाहस्रं रक्षिताव्याहतेन्द्रियः
०४०९०२३१ त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः
०४०९०२३२ अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति
०४०९०२४१ इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः
०४०९०२४२ भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि
०४०९०२५१ ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम्
०४०९०२५२ उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः
०४०९०२६० मैत्रेय उवाच
०४०९०२६१ इत्यर्चितः स भगवानतिदिश्यात्मनः पदम्
०४०९०२६२ बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः
०४०९०२७१ सोऽपि सङ्कल्पजं विष्णोः पादसेवोपसादितम्
०४०९०२७२ प्राप्य सङ्कल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम्
०४०९०२८० विदुर उवाच
०४०९०२८१ सुदुर्लभं यत्परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम्
०४०९०२८२ लब्ध्वाप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित्
०४०९०२९० मैत्रेय उवाच
०४०९०२९१ मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान्स्मरन्
०४०९०२९२ नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान्
०४०९०३०० ध्रुव उवाच
०४०९०३०१ समाधिना नैकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः
०४०९०३०२ मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः
०४०९०३११ अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत
०४०९०३१२ भवच्छिदः पादमूलं गत्वा याचे यदन्तवत्
०४०९०३२१ मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः
०४०९०३२२ यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः
०४०९०३३१ दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक्

०४०९०३३२ तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा
०४०९०३४१ मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि
०४०९०३४२ प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम्
०४०९०३४३ भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः
०४०९०३५१ स्वाराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो बत
०४०९०३५२ ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः
०४०९०३६० मैत्रेय उवाच
०४०९०३६१ न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः
०४०९०३६२ वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनःसमृद्धयः
०४०९०३७१ आकर्ण्यात्मजमायान्तं सम्परेत्य यथागतम्
०४०९०३७२ राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम
०४०९०३८१ श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः
०४०९०३८२ वार्ताहर्तुरतिप्रीतो हारं प्रादान्महाधनम्
०४०९०३९१ सदश्वं रथमारुह्य कार्तस्वरपरिष्कृतम्
०४०९०३९२ ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः
०४०९०४०१ शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः
०४०९०४०२ निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः
०४०९०४११ सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते
०४०९०४१२ आरुह्य शिबिकां सार्धमुत्तमेनाभिजग्मतुः
०४०९०४२१ तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात्
०४०९०४२२ अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः
०४०९०४३१ परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन्
०४०९०४३२ विष्वक्सेनाङ्घ्रिसंस्पर्श हताशेषाघबन्धनम्
०४०९०४४१ अथाजिघ्रन्मुहुर्मूर्ध्नि शीतैर्नयनवारिभिः
०४०९०४४२ स्नापयामास तनयं जातोद्दाममनोरथः
०४०९०४५१ अभिवन्द्य पितुः पादावाशीर्भिश्चाभिमन्त्रितः
०४०९०४५२ ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः
०४०९०४६१ सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम्
०४०९०४६२ परिष्वज्याह जीवेति बाष्पगद्गदया गिरा
०४०९०४७१ यस्य प्रसन्नो भगवान्गुणैर्मैत्र्यादिभिर्हरिः
०४०९०४७२ तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम्

०४०९०४८१ उत्तमश्च ध्रुवश्चोभावन्योन्यं प्रेमविह्वलौ
०४०९०४८२ अङ्गसङ्गादुत्पुलकावस्रौघं मुहुरूहतुः
०४०९०४९१ सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम्
०४०९०४९२ उपगुह्य जहावाधिं तदङ्गस्पर्शनिर्वृता
०४०९०५०१ पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः
०४०९०५०२ तदाभिषिच्यमानाभ्यां वीर वीरसुवो मुहुः
०४०९०५११ तां शशंसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा
०४०९०५१२ प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः
०४०९०५२१ अभ्यर्चितस्त्वया नूनं भगवान्प्रणतार्तिहा
०४०९०५२२ यदनुध्यायिनो धीरा मृत्युं जिग्युः सुदुर्जयम्
०४०९०५३१ लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः
०४०९०५३२ आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम्
०४०९०५४१ तत्र तत्रोपसङ्कॢप्तैर्लसन्मकरतोरणैः
०४०९०५४२ सवृन्दैः कदलीस्तम्भैः पूगपोतैश्च तद्विधैः
०४०९०५५१ चूतपल्लववासःस्रङ् मुक्तादामविलम्बिभिः
०४०९०५५२ उपस्कृतं प्रतिद्वारमपां कुम्भैः सदीपकैः
०४०९०५६१ प्राकारैर्गोपुरागारैः शातकुम्भपरिच्छदैः
०४०९०५६२ सर्वतोऽलङ्कृतं श्रीमद् विमानशिखरद्युभिः
०४०९०५७१ मृष्टचत्वररथ्याट्ट मार्गं चन्दनचर्चितम्
०४०९०५७२ लाजाक्षतैः पुष्पफलैस्तण्डुलैर्बलिभिर्युतम्
०४०९०५८१ ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः
०४०९०५८२ सिद्धार्थाक्षतदध्यम्बु दूर्वापुष्पफलानि च
०४०९०५९१ उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः
०४०९०५९२ शृण्वंस्तद्वल्गुगीतानि प्राविशद्भवनं पितुः
०४०९०६०१ महामणिव्रातमये स तस्मिन्भवनोत्तमे
०४०९०६०२ लालितो नितरां पित्रा न्यवसद्दिवि देववत्
०४०९०६११ पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः
०४०९०६१२ आसनानि महार्हाणि यत्र रौक्मा उपस्कराः
०४०९०६२१ यत्र स्फटिककुड्येषु महामारकतेषु च
०४०९०६२२ मणिप्रदीपा आभान्ति ललनारत्नसंयुताः
०४०९०६३१ उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः

०४०९०६३२ कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः
०४०९०६४१ वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमुद्वतीः
०४०९०६४२ हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः
०४०९०६५१ उत्तानपादो राजर्षिः प्रभावं तनयस्य तम्
०४०९०६५२ श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम्
०४०९०६६१ वीक्ष्योढवयसं तं च प्रकृतीनां च सम्मतम्
०४०९०६६२ अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम्
०४०९०६७१ आत्मानं च प्रवयसमाकलय्य विशाम्पतिः
०४०९०६७२ वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम्
०४१०००१० मैत्रेय उवाच
०४१०००११ प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः
०४१०००१२ उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ
०४१०००२१ इलायामपि भार्यायां वायोः पुत्र्यां महाबलः
०४१०००२२ पुत्रमुत्कलनामानं योषिद्रत्नमजीजनत्
०४१०००३१ उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा
०४१०००३२ हतः पुण्यजनेनाद्रौ तन्मातास्य गतिं गता
०४१०००४१ ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः
०४१०००४२ जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम्
०४१०००५१ गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम्
०४१०००५२ ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसङ्कुलाम्
०४१०००६१ दध्मौ शङ्खं बृहद्बाहुः खं दिशश्चानुनादयन्
०४१०००६२ येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम्
०४१०००७१ ततो निष्क्रम्य बलिन उपदेवमहाभटाः
०४१०००७२ असहन्तस्तन्निनादमभिपेतुरुदायुधाः
०४१०००८१ स तानापततो वीर उग्रधन्वा महारथः
०४१०००८२ एकैकं युगपत्सर्वानहन्बाणैस्त्रिभिस्त्रिभिः
०४१०००९१ ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि
०४१०००९२ मत्वा निरस्तमात्मानमाशंसन्कर्म तस्य तत्
०४१००१०१ तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः
०४१००१०२ शरैरविध्यन्युगपद्द्विगुणं प्रचिकीर्षवः
०४१००१११ ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः

०४१००११२ शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः शरैरपि
०४१००१२१ अभ्यवर्षन्प्रकुपिताः सरथं सहसारथिम्
०४१००१२२ इच्छन्तस्तत्प्रतीकर्तुमयुतानां त्रयोदश
०४१००१३१ औत्तानपादिः स तदा शस्त्रवर्षेण भूरिणा
०४१००१३२ न एवादृश्यताच्छन्न आसारेण यथा गिरिः
०४१००१४१ हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम्
०४१००१४२ हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे
०४१००१५१ नदत्सु यातुधानेषु जयकाशिष्वथो मृधे
०४१००१५२ उदतिष्ठद्रथस्तस्य नीहारादिव भास्करः
०४१००१६१ धनुर्विस्फूर्जयन्दिव्यं द्विषतां खेदमुद्वहन्
०४१००१६२ अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः
०४१००१७१ तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम्
०४१००१७२ कायानाविविशुस्तिग्मा गिरीनशनयो यथा
०४१००१८१ भल्लैः सञ्छिद्यमानानां शिरोभिश्चारुकुण्डलैः
०४१००१८२ ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः
०४१००१९१ हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः
०४१००१९२ आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः
०४१००२०१ हतावशिष्टा इतरे रणाजिराद्रक्षोगणाः क्षत्रियवर्यसायकैः
०४१००२०२ प्रायो विवृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव
०४१००२११ अपश्यमानः स तदाततायिनं महामृधे कञ्चन मानवोत्तमः
०४१००२१२ पुरीं दिदृक्षन्नपि नाविशद्द्विषां न मायिनां वेद चिकीर्षितं जनः
०४१००२२१ इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः
०४१००२२२ शुश्राव शब्दं जलधेरिवेरितं नभस्वतो दिक्षु रजोऽन्वदृश्यत
०४१००२३१ क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः
०४१००२३२ विस्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना
०४१००२४१ ववृषू रुधिरौघासृक् पूयविण्मूत्रमेदसः
०४१००२४२ निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ
०४१००२५१ ततः खेऽदृश्यत गिरिर्निपेतुः सर्वतोदिशम्
०४१००२५२ गदापरिघनिस्त्रिंश मुसलाः साश्मवर्षिणः
०४१००२६१ अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषाक्षिभिः
०४१००२६२ अभ्यधावन्गजा मत्ताः सिंहव्याघ्राश्च यूथशः

०४१००२७१ समुद्र ऊर्मिभिर्भीमः प्लावयन्सर्वतो भुवम्
०४१००२७२ आससाद महाह्लादः कल्पान्त इव भीषणः
०४१००२८१ एवंविधान्यनेकानि त्रासनान्यमनस्विनाम्
०४१००२८२ ससृजुस्तिग्मगतय आसुर्या माययासुराः
०४१००२९१ ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम्
०४१००२९२ निशम्य तस्य मुनयः शमाशंसन्समागताः
०४१००३०० मुनय ऊचुः
०४१००३०१ औत्तानपाद भगवांस्तव शार्ङ्गधन्वा
०४१००३०२ देवः क्षिणोत्ववनतार्तिहरो विपक्षान्
०४१००३०३ यन्नामधेयमभिधाय निशम्य चाद्धा
०४१००३०४ लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम्
०४११००१० मैत्रेय उवाच
०४११००११ निशम्य गदतामेवमृषीणां धनुषि ध्रुवः
०४११००१२ सन्दधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम्
०४११००२१ सन्धीयमान एतस्मिन्माया गुह्यकनिर्मिताः
०४११००२२ क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा
०४११००३१ तस्यार्षास्त्रं धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कलहंसवाससः
०४११००३२ विनिःसृता आविविशुर्द्विषद्बलं यथा वनं भीमरवाः शिखण्डिनः
०४११००४१ तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः
०४११००४२ तमभ्यधावन्कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः
०४११००५१ स तान्पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान्
०४११००५२ निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः
०४११००६१ तान्हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः
०४११००६२ औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्षिभिः
०४११००७० मनुरुवाच
०४११००७१ अलं वत्सातिरोषेण तमोद्वारेण पाप्मना
०४११००७२ येन पुण्यजनानेतानवधीस्त्वमनागसः
०४११००८१ नास्मत्कुलोचितं तात कर्मैतत्सद्विगर्हितम्
०४११००८२ वधो यदुपदेवानामारब्धस्तेऽकृतैनसाम्
०४११००९१ नन्वेकस्यापराधेन प्रसङ्गाद्बहवो हताः
०४११००९२ भ्रातुर्वधाभितप्तेन त्वयाङ्ग भ्रातृवत्सल

०४११०१०१ नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम्
०४११०१०२ यदात्मानं पराग्गृह्य पशुवद्भूतवैशसम्
०४११०१११ सर्वभूतात्मभावेन भूतावासं हरिं भवान्
०४११०११२ आराध्याप दुराराध्यं विष्णोस्तत्परमं पदम्
०४११०१२१ स त्वं हरेरनुध्यातस्तत्पुंसामपि सम्मतः
०४११०१२२ कथं त्ववद्यं कृतवाननुशिक्षन्सतां व्रतम्
०४११०१३१ तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु
०४११०१३२ समत्वेन च सर्वात्मा भगवान्सम्प्रसीदति
०४११०१४१ सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः
०४११०१४२ विमुक्तो जीवनिर्मुक्तो ब्रह्म निर्वाणमृच्छति
०४११०१५१ भूतैः पञ्चभिरारब्धैर्योषित्पुरुष एव हि
०४११०१५२ तयोर्व्यवायात्सम्भूतिर्योषित्पुरुषयोरिह
०४११०१६१ एवं प्रवर्तते सर्गः स्थितिः संयम एव च
०४११०१६२ गुणव्यतिकराद्राजन्मायया परमात्मनः
०४११०१७१ निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः
०४११०१७२ व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत्
०४११०१८१ स खल्विदं भगवान्कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः
०४११०१८२ करोत्यकर्तैव निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या
०४११०१९१ सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः
०४११०१९२ जनं जनेन जनयन्मारयन्मृत्युनान्तकम्
०४११०२०१ न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः
०४११०२०२ तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः
०४११०२११ आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः
०४११०२१२ उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ
०४११०२२१ केचित्कर्म वदन्त्येनं स्वभावमपरे नृप
०४११०२२२ एके कालं परे दैवं पुंसः काममुतापरे
०४११०२३१ अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च
०४११०२३२ न वै चिकीर्षितं तात को वेदाथ स्वसम्भवम्
०४११०२४१ न चैते पुत्रक भ्रातुर्हन्तारो धनदानुगाः
०४११०२४२ विसर्गादानयोस्तात पुंसो दैवं हि कारणम्
०४११०२५१ स एव विश्वं सृजति स एवावति हन्ति च

०४११०२५२ अथापि ह्यनहङ्कारान्नाज्यते गुणकर्मभिः
०४११०२६१ एष भूतानि भूतात्मा भूतेशो भूतभावनः
०४११०२६२ स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च
०४११०२७१ तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि जगत्परायणम्
०४११०२७२ यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः
०४११०२८१ यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा
०४११०२८२ वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः
०४११०२९१ तमेनमङ्गात्मनि मुक्तविग्रहे व्यपाश्रितं निर्गुणमेकमक्षरम्
०४११०२९२ आत्मानमन्विच्छ विमुक्तमात्मदृग्यस्मिन्निदं भेदमसत्प्रतीयते
०४११०३०१ त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ
०४११०३०२ भक्तिं विधाय परमां शनकैरविद्या ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढम्
०४११०३११ संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम्
०४११०३१२ श्रुतेन भूयसा राजन्नगदेन यथामयम्
०४११०३२१ येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम्
०४११०३२२ न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः
०४११०३३१ हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम्
०४११०३३२ यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यमर्षितः
०४११०३४१ तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः
०४११०३४२ न यावन्महतां तेजः कुलं नोऽभिभविष्यति
०४११०३५१ एवं स्वायम्भुवः पौत्रमनुशास्य मनुर्ध्रुवम्
०४११०३५२ तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ
०४१२००१० मैत्रेय उवाच
०४१२००११ ध्रुवं निवृत्तं प्रतिबुद्ध्य वैशसादपेतमन्युं भगवान्धनेश्वरः
०४१२००१२ तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानो न्यवदत्कृताञ्जलिम्
०४१२००२० धनद उवाच
०४१२००२१ भो भोः क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ
०४१२००२२ यत्त्वं पितामहादेशाद्वैरं दुस्त्यजमत्यजः
०४१२००३१ न भवानवधीद्यक्षान्न यक्षा भ्रातरं तव
०४१२००३२ काल एव हि भूतानां प्रभुरप्ययभावयोः
०४१२००४१ अहं त्वमित्यपार्था धीरज्ञानात्पुरुषस्य हि
०४१२००४२ स्वाप्नीवाभात्यतद्ध्यानाद्यया बन्धविपर्ययौ

०४१२००५१ तद्गच्छ ध्रुव भद्रं ते भगवन्तमधोक्षजम्
०४१२००५२ सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम्
०४१२००६१ भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम्
०४१२००६२ युक्तं विरहितं शक्त्या गुणमय्यात्ममायया
०४१२००७१ वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः
०४१२००७२ वरं वरार्होऽम्बुजनाभपादयोरनन्तरं त्वां वयमङ्ग शुश्रुम
०४१२००८० मैत्रेय उवाच
०४१२००८१ स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः
०४१२००८२ हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः
०४१२००९१ तस्य प्रीतेन मनसा तां दत्त्वैडविडस्ततः
०४१२००९२ पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत
०४१२०१०१ अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः
०४१२०१०२ द्रव्यक्रियादेवतानां कर्म कर्मफलप्रदम्
०४१२०१११ सर्वात्मन्यच्युतेऽसर्वे तीव्रौघां भक्तिमुद्वहन्
०४१२०११२ ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम्
०४१२०१२१ तमेवं शीलसम्पन्नं ब्रह्मण्यं दीनवत्सलम्
०४१२०१२२ गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः
०४१२०१३१ षड्विंशद्वर्षसाहस्रं शशास क्षितिमण्डलम्
०४१२०१३२ भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम्
०४१२०१४१ एवं बहुसवं कालं महात्माविचलेन्द्रियः
०४१२०१४२ त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम्
०४१२०१५१ मन्यमान इदं विश्वं मायारचितमात्मनि
०४१२०१५२ अविद्यारचितस्वप्नगन्धर्वनगरोपमम्
०४१२०१६१ आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोशम्
०४१२०१६२ अन्तःपुरं परिविहारभुवश्च रम्याः
०४१२०१६३ भूमण्डलं जलधिमेखलमाकलय्य
०४१२०१६४ कालोपसृष्टमिति स प्रययौ विशालाम्
०४१२०१७१ तस्यां विशुद्धकरणः शिववार्विगाह्य
०४१२०१७२ बद्ध्वासनं जितमरुन्मनसाहृताक्षः
०४१२०१७३ स्थूले दधार भगवत्प्रतिरूप एतद्
०४१२०१७४ ध्यायंस्तदव्यवहितो व्यसृजत्समाधौ

०४१२०१८१ भक्तिं हरौ भगवति प्रवहन्नजस्रम्
०४१२०१८२ आनन्दबाष्पकलया मुहुरर्द्यमानः
०४१२०१८३ विक्लिद्यमानहृदयः पुलकाचिताङ्गो
०४१२०१८४ नात्मानमस्मरदसाविति मुक्तलिङ्गः
०४१२०१९१ स ददर्श विमानाग्र्यं नभसोऽवतरद्ध्रुवः
०४१२०१९२ विभ्राजयद्दश दिशो राकापतिमिवोदितम्
०४१२०२०१ तत्रानु देवप्रवरौ चतुर्भुजौ
०४१२०२०२ श्यामौ किशोरावरुणाम्बुजेक्षणौ
०४१२०२०३ स्थिताववष्टभ्य गदां सुवाससौ
०४१२०२०४ किरीटहाराङ्गदचारुकुण्डलौ
०४१२०२११ विज्ञाय तावुत्तमगायकिङ्कराव्
०४१२०२१२ अभ्युत्थितः साध्वसविस्मृतक्रमः
०४१२०२१३ ननाम नामानि गृणन्मधुद्विषः
०४१२०२१४ पार्षत्प्रधानाविति संहताञ्जलिः
०४१२०२२१ तं कृष्णपादाभिनिविष्टचेतसं
०४१२०२२२ बद्धाञ्जलिं प्रश्रयनम्रकन्धरम्
०४१२०२२३ सुनन्दनन्दावुपसृत्य सस्मितं
०४१२०२२४ प्रत्यूचतुः पुष्करनाभसम्मतौ
०४१२०२३० सुनन्दनन्दावूचतुः
०४१२०२३१ भो भो राजन्सुभद्रं ते वाचं नोऽवहितः शृणु
०४१२०२३२ यः पञ्चवर्षस्तपसा भवान्देवमतीतृपत्
०४१२०२४१ तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः
०४१२०२४२ पार्षदाविह सम्प्राप्तौ नेतुं त्वां भगवत्पदम्
०४१२०२५१ सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम्
०४१२०२५२ आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षताराः परियन्ति दक्षिणम्
०४१२०२६१ अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित्
०४१२०२६२ आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम्
०४१२०२७१ एतद्विमानप्रवरमुत्तमश्लोकमौलिना
०४१२०२७२ उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि
०४१२०२८० मैत्रेय उवाच
०४१२०२८१ निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतं वाचमुरुक्रमप्रियः

०४१२०२८२ कृताभिषेकः कृतनित्यमङ्गलो मुनीन्प्रणम्याशिषमभ्यवादयत्
०४१२०२९१ परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च
०४१२०२९२ इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम्
०४१२०३०१ तदोत्तानपदः पुत्रो ददर्शान्तकमागतम्
०४१२०३०२ मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम्
०४१२०३११ तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः
०४१२०३१२ गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः
०४१२०३२१ स च स्वर्लोकमारोक्ष्यन्सुनीतिं जननीं ध्रुवः
०४१२०३२२ अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम्
०४१२०३३१ इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ
०४१२०३३२ दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम्
०४१२०३४१ तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः
०४१२०३४२ अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान्
०४१२०३५१ त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि
०४१२०३५२ परस्ताद्यद्ध्रुवगतिर्विष्णोः पदमथाभ्यगात्
०४१२०३६१ यद्भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनु विभ्राजन्त एते
०४१२०३६२ यन्नाव्रजञ्जन्तुषु येऽननुग्रहा व्रजन्ति भद्राणि चरन्ति येऽनिशम्
०४१२०३७१ शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः
०४१२०३७२ यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः
०४१२०३८१ इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः
०४१२०३८२ अभूत्त्रयाणां लोकानां चूडामणिरिवामलः
०४१२०३९१ गम्भीरवेगोऽनिमिषं ज्योतिषां चक्रमाहितम्
०४१२०३९२ यस्मिन्भ्रमति कौरव्य मेढ्यामिव गवां गणः
०४१२०४०१ महिमानं विलोक्यास्य नारदो भगवानृषिः
०४१२०४०२ आतोद्यं वितुदञ्श्लोकान्सत्रेऽगायत्प्रचेतसाम्
०४१२०४१० नारद उवाच
०४१२०४११ नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम्
०४१२०४१२ दृष्ट्वाभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः
०४१२०४२१ यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता
०४१२०४२२ वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तगुणैः पराजितम्
०४१२०४३१ यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः

०४१२०४३२ षड्वर्षवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम्
०४१२०४४० मैत्रेय उवाच
०४१२०४४१ एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया
०४१२०४४२ ध्रुवस्योद्दामयशसश्चरितं सम्मतं सताम्
०४१२०४५१ धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत्
०४१२०४५२ स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम्
०४१२०४६१ श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम्
०४१२०४६२ भवेद्भक्तिर्भगवति यया स्यात्क्लेशसङ्क्षयः
०४१२०४७१ महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः
०४१२०४७२ यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम्
०४१२०४८१ प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम्
०४१२०४८२ सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत्
०४१२०४९१ पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा
०४१२०४९२ दिनक्षये व्यतीपाते सङ्क्रमेऽर्कदिनेऽपि वा
०४१२०५०१ श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः
०४१२०५०२ नेच्छंस्तत्रात्मनात्मानं सन्तुष्ट इति सिध्यति
०४१२०५११ ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृतम्
०४१२०५१२ कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते
०४१२०५२१ इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः
०४१२०५२२ हित्वार्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम
०४१३००१० सूत उवाच
०४१३००११ निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम्
०४१३००१२ प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे
०४१३००२० विदुर उवाच
०४१३००२१ के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत
०४१३००२२ कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत
०४१३००३१ मन्ये महाभागवतं नारदं देवदर्शनम्
०४१३००३२ येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः
०४१३००४१ स्वधर्मशीलैः पुरुषैर्भगवान्यज्ञपूरुषः
०४१३००४२ इज्यमानो भक्तिमता नारदेनेरितः किल
०४१३००५१ यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः

०४१३००५२ मह्यं शुश्रूषवे ब्रह्मन्कार्त्स्न्येनाचष्टुमर्हसि
०४१३००६० मैत्रेय उवाच
०४१३००६१ ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम्
०४१३००६२ सार्वभौमश्रियं नैच्छदधिराजासनं पितुः
०४१३००७१ स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः
०४१३००७२ ददर्श लोके विततमात्मानं लोकमात्मनि
०४१३००८१ आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम्
०४१३००८२ अवबोधरसैकात्म्यमानन्दमनुसन्ततम्
०४१३००९१ अव्यवच्छिन्नयोगाग्नि दग्धकर्ममलाशयः
०४१३००९२ स्वरूपमवरुन्धानो नात्मनोऽन्यं तदैक्षत
०४१३०१०१ जडान्धबधिरोन्मत्त मूकाकृतिरतन्मतिः
०४१३०१०२ लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः
०४१३०१११ मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः
०४१३०११२ वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम्
०४१३०१२१ स्वर्वीथिर्वत्सरस्येष्टा भार्यासूत षडात्मजान्
०४१३०१२२ पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम्
०४१३०१३१ पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः
०४१३०१३२ प्रातर्मध्यन्दिनं सायमिति ह्यासन्प्रभासुताः
०४१३०१४१ प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः
०४१३०१४२ व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे
०४१३०१५१ स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह
०४१३०१५२ मनोरसूत महिषी विरजान्नड्वला सुतान्
०४१३०१६१ पुरुं कुत्सं त्रितं द्युम्नं सत्यवन्तमृतं व्रतम्
०४१३०१६२ अग्निष्टोममतीरात्रं प्रद्युम्नं शिबिमुल्मुकम्
०४१३०१७१ उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान्
०४१३०१७२ अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम्
०४१३०१८१ सुनीथाङ्गस्य या पत्नी सुषुवे वेनमुल्बणम्
०४१३०१८२ यद्दौःशील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात्
०४१३०१९१ यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल
०४१३०१९२ गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम्
०४१३०२०१ अराजके तदा लोके दस्युभिः पीडिताः प्रजाः

०४१३०२०२ जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः
०४१३०२१० विदुर उवाच
०४१३०२११ तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः
०४१३०२१२ राज्ञः कथमभूद्दुष्टा प्रजा यद्विमना ययौ
०४१३०२२१ किं वांहो वेन उद्दिश्य ब्रह्मदण्डमयूयुजन्
०४१३०२२२ दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः
०४१३०२३१ नावध्येयः प्रजापालः प्रजाभिरघवानपि
०४१३०२३२ यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा
०४१३०२४१ एतदाख्याहि मे ब्रह्मन्सुनीथात्मजचेष्टितम्
०४१३०२४२ श्रद्दधानाय भक्ताय त्वं परावरवित्तमः
०४१३०२५० मैत्रेय उवाच
०४१३०२५१ अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम्
०४१३०२५२ नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः
०४१३०२६१ तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः
०४१३०२६२ हवींषि हूयमानानि न ते गृह्णन्ति देवताः
०४१३०२७१ राजन्हवींष्यदुष्टानि श्रद्धयासादितानि ते
०४१३०२७२ छन्दांस्ययातयामानि योजितानि धृतव्रतैः
०४१३०२८१ न विदामेह देवानां हेलनं वयमण्वपि
०४१३०२८२ यन्न गृह्णन्ति भागान्स्वान्ये देवाः कर्मसाक्षिणः
०४१३०२९० मैत्रेय उवाच
०४१३०२९१ अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः
०४१३०२९२ तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया
०४१३०३०१ नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह
०४१३०३०२ सदसस्पतयो ब्रूत किमवद्यं मया कृतम्
०४१३०३१० सदसस्पतय ऊचुः
०४१३०३११ नरदेवेह भवतो नाघं तावन्मनाक्स्थितम्
०४१३०३१२ अस्त्येकं प्राक्तनमघं यदिहेदृक्त्वमप्रजः
०४१३०३२१ तथा साधय भद्रं ते आत्मानं सुप्रजं नृप
०४१३०३२२ इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक्
०४१३०३३१ तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः
०४१३०३३२ यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः

०४१३०३४१ तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः
०४१३०३४२ आराधितो यथैवैष तथा पुंसां फलोदयः
०४१३०३५१ इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये
०४१३०३५२ पुरोडाशं निरवपन्शिपिविष्टाय विष्णवे
०४१३०३६१ तस्मात्पुरुष उत्तस्थौ हेममाल्यमलाम्बरः
०४१३०३६२ हिरण्मयेन पात्रेण सिद्धमादाय पायसम्
०४१३०३७१ स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम्
०४१३०३७२ अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः
०४१३०३८१ सा तत्पुंसवनं राज्ञी प्राश्य वै पत्युरादधे
०४१३०३८२ गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा
०४१३०३९१ स बाल एव पुरुषो मातामहमनुव्रतः
०४१३०३९२ अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः
०४१३०४०१ स शरासनमुद्यम्य मृगयुर्वनगोचरः
०४१३०४०२ हन्त्यसाधुर्मृगान्दीनान्वेनोऽसावित्यरौज्जनः
०४१३०४११ आक्रीडे क्रीडतो बालान्वयस्यानतिदारुणः
०४१३०४१२ प्रसह्य निरनुक्रोशः पशुमारममारयत्
०४१३०४२१ तं विचक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः
०४१३०४२२ यदा न शासितुं कल्पो भृशमासीत्सुदुर्मनाः
०४१३०४३१ प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः
०४१३०४३२ कदपत्यभृतं दुःखं ये न विन्दन्ति दुर्भरम्
०४१३०४४१ यतः पापीयसी कीर्तिरधर्मश्च महान्नृणाम्
०४१३०४४२ यतो विरोधः सर्वेषां यत आधिरनन्तकः
०४१३०४५१ कस्तं प्रजापदेशं वै मोहबन्धनमात्मनः
०४१३०४५२ पण्डितो बहु मन्येत यदर्थाः क्लेशदा गृहाः
०४१३०४६१ कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात्
०४१३०४६२ निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः
०४१३०४७१ एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात्
०४१३०४७२ अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम्
०४१३०४८१ विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः
०४१३०४८२ विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः
०४१३०४९१ अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम्

०४१३०४९२ ऋषीन्समेतानभिवन्द्य साश्रवो न्यवेदयन्पौरव भर्तृविप्लवम्
०४१४००१० मैत्रेय उवाच
०४१४००११ भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः
०४१४००१२ गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम्
०४१४००२१ वीरमातरमाहूय सुनीथां ब्रह्मवादिनः
०४१४००२२ प्रकृत्यसम्मतं वेनमभ्यषिञ्चन्पतिं भुवः
०४१४००३१ श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम्
०४१४००३२ निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः
०४१४००४१ स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः
०४१४००४२ अवमेने महाभागान्स्तब्धः सम्भावितः स्वतः
०४१४००५१ एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः
०४१४००५२ पर्यटन्रथमास्थाय कम्पयन्निव रोदसी
०४१४००६१ न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित्
०४१४००६२ इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः
०४१४००७१ वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम्
०४१४००७२ विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः
०४१४००८१ अहो उभयतः प्राप्तं लोकस्य व्यसनं महत्
०४१४००८२ दारुण्युभयतो दीप्ते इव तस्करपालयोः
०४१४००९१ अराजकभयादेष कृतो राजातदर्हणः
०४१४००९२ ततोऽप्यासीद्भयं त्वद्य कथं स्यात्स्वस्ति देहिनाम्
०४१४०१०१ अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत्
०४१४०१०२ वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः
०४१४०१११ निरूपितः प्रजापालः स जिघांसति वै प्रजाः
०४१४०११२ तथापि सान्त्वयेमामुं नास्मांस्तत्पातकं स्पृशेत्
०४१४०१२१ तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः
०४१४०१२२ सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत्
०४१४०१३१ लोकधिक्कारसन्दग्धं दहिष्यामः स्वतेजसा
०४१४०१३२ एवमध्यवसायैनं मुनयो गूढमन्यवः
०४१४०१३३ उपव्रज्याब्रुवन्वेनं सान्त्वयित्वा च सामभिः
०४१४०१४० मुनय ऊचुः
०४१४०१४१ नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः

०४१४०१४२ आयुःश्रीबलकीर्तीनां तव तात विवर्धनम्
०४१४०१५१ धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः
०४१४०१५२ लोकान्विशोकान्वितरत्यथानन्त्यमसङ्गिनाम्
०४१४०१६१ स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः
०४१४०१६२ यस्मिन्विनष्टे नृपतिरैश्वर्यादवरोहति
०४१४०१७१ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः
०४१४०१७२ रक्षन्यथा बलिं गृह्णन्निह प्रेत्य च मोदते
०४१४०१८१ यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः
०४१४०१८२ इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः
०४१४०१९१ तस्य राज्ञो महाभाग भगवान्भूतभावनः
०४१४०१९२ परितुष्यति विश्वात्मा तिष्ठतो निजशासने
०४१४०२०१ तस्मिंस्तुष्टे किमप्राप्यंजगतामीश्वरेश्वरे
०४१४०२०२ लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः
०४१४०२११ तं सर्वलोकामरयज्ञसङ्ग्रहं त्रयीमयं द्रव्यमयं तपोमयम्
०४१४०२१२ यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्स्वदेशाननुरोद्धुमर्हसि
०४१४०२२१ यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः
०४१४०२२२ स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम्
०४१४०२३० वेन उवाच
०४१४०२३१ बालिशा बत यूयं वा अधर्मे धर्ममानिनः
०४१४०२३२ ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते
०४१४०२४१ अवजानन्त्यमी मूढा नृपरूपिणमीश्वरम्
०४१४०२४२ नानुविन्दन्ति ते भद्रमिह लोके परत्र च
०४१४०२५१ को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी
०४१४०२५२ भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम्
०४१४०२६१ विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः
०४१४०२६२ पर्जन्यो धनदः सोमः क्षितिरग्निरपाम्पतिः
०४१४०२७१ एते चान्ये च विबुधाः प्रभवो वरशापयोः
०४१४०२७२ देहे भवन्ति नृपतेः सर्वदेवमयो नृपः
०४१४०२८१ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः
०४१४०२८२ बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक्पुमान्
०४१४०२९० मैत्रेय उवाच

०४१४०२९१ इत्थं विपर्ययमतिः पापीयानुत्पथं गतः
०४१४०२९२ अनुनीयमानस्तद्याञ्ञां न चक्रे भ्रष्टमङ्गलः
०४१४०३०१ इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना
०४१४०३०२ भग्नायां भव्ययाञ्ञायां तस्मै विदुर चुक्रुधुः
०४१४०३११ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः
०४१४०३१२ जीवञ्जगदसावाशु कुरुते भस्मसाद्ध्रुवम्
०४१४०३२१ नायमर्हत्यसद्वृत्तो नरदेववरासनम्
०४१४०३२२ योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः
०४१४०३३१ को वैनं परिचक्षीत वेनमेकमृतेऽशुभम्
०४१४०३३२ प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः
०४१४०३४१ इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः
०४१४०३४२ निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया
०४१४०३५१ ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम्
०४१४०३५२ सुनीथा पालयामास विद्यायोगेन शोचती
०४१४०३६१ एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः
०४१४०३६२ हुत्वाग्नीन्सत्कथाश्चक्रुरुपविष्टाः सरित्तटे
०४१४०३७१ वीक्ष्योत्थितांस्तदोत्पातानाहुर्लोकभयङ्करान्
०४१४०३७२ अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः
०४१४०३८१ एवं मृशन्त ऋषयो धावतां सर्वतोदिशम्
०४१४०३८२ पांसुः समुत्थितो भूरिश्चोराणामभिलुम्पताम्
०४१४०३९१ तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम्
०४१४०३९२ भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम्
०४१४०४०१ चोरप्रायं जनपदं हीनसत्त्वमराजकम्
०४१४०४०२ लोकान्नावारयञ्छक्ता अपि तद्दोषदर्शिनः
०४१४०४११ ब्राह्मणः समदृक्षान्तो दीनानां समुपेक्षकः
०४१४०४१२ स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा
०४१४०४२१ नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति
०४१४०४२२ अमोघवीर्या हि नृपा वंशेऽस्मिन्केशवाश्रयाः
०४१४०४३१ विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः
०४१४०४३२ ममन्थुरूरुं तरसा तत्रासीद्बाहुको नरः
०४१४०४४१ काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः

०४१४०४४२ ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः
०४१४०४५१ तं तु तेऽवनतं दीनं किं करोमीति वादिनम्
०४१४०४५२ निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत्
०४१४०४६१ तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः
०४१४०४६२ येनाहरञ्जायमानो वेनकल्मषमुल्बणम्
०४१५००१० मैत्रेय उवाच
०४१५००११ अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः
०४१५००१२ बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत
०४१५००२१ तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः
०४१५००२२ ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम्
०४१५००३० ऋषय ऊचुः
०४१५००३१ एष विष्णोर्भगवतः कला भुवनपालिनी
०४१५००३२ इयं च लक्ष्म्याः सम्भूतिः पुरुषस्यानपायिनी
०४१५००४१ अयं तु प्रथमो राज्ञां पुमान्प्रथयिता यशः
०४१५००४२ पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः
०४१५००५१ इयं च सुदती देवी गुणभूषणभूषणा
०४१५००५२ अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती
०४१५००६१ एष साक्षाद्धरेरंशोजातो लोकरिरक्षया
०४१५००६२ इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी
०४१५००७० मैत्रेय उवाच
०४१५००७१ प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः
०४१५००७२ मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति स्वःस्त्रियः
०४१५००८१ शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि
०४१५००८२ तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः
०४१५००९१ ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः
०४१५००९२ वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः
०४१५०१०१ पादयोररविन्दं च तं वै मेने हरेः कलाम्
०४१५०१०२ यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः
०४१५०१११ तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः
०४१५०११२ आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः
०४१५०१२१ सरित्समुद्रा गिरयो नागा गावः खगा मृगाः

०४१५०१२२ द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम्
०४१५०१३१ सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः
०४१५०१३२ पत्न्यार्चिषालङ्कृतया विरेजेऽग्निरिवापरः
०४१५०१४१ तस्मै जहार धनदो हैमं वीर वरासनम्
०४१५०१४२ वरुणः सलिलस्रावमातपत्रं शशिप्रभम्
०४१५०१५१ वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम्
०४१५०१५२ इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः
०४१५०१६१ ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम्
०४१५०१६२ हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम्
०४१५०१७१ दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका
०४१५०१७२ सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम्
०४१५०१८१ अग्निराजगवं चापं सूर्यो रश्मिमयानिषून्
०४१५०१८२ भूः पादुके योगमय्यौ द्यौः पुष्पावलिमन्वहम्
०४१५०१९१ नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः
०४१५०१९२ ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम्
०४१५०२०१ सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः
०४१५०२०२ सूतोऽथ मागधो वन्दी तं स्तोतुमुपतस्थिरे
०४१५०२११ स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान्
०४१५०२१२ मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत्
०४१५०२२० पृथुरुवाच
०४१५०२२१ भोः सूत हे मागध सौम्य वन्दिन्लोकेऽधुनास्पष्टगुणस्य मे स्यात्
०४१५०२२२ किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन्वितथा गिरो वः
०४१५०२३१ तस्मात्परोक्षेऽस्मदुपश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः
०४१५०२३२ सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः
०४१५०२४१ महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि
०४१५०२४२ तेऽस्याभविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद
०४१५०२५१ प्रभवो ह्यात्मनः स्तोत्रंजुगुप्सन्त्यपि विश्रुताः
०४१५०२५२ ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम्
०४१५०२६१ वयं त्वविदिता लोके सूताद्यापि वरीमभिः
०४१५०२६२ कर्मभिः कथमात्मानं गापयिष्याम बालवत्
०४१६००१० मैत्रेय उवाच

०४१६००११ इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः

०४१६००१२ तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया

०४१६००२१ नालं वयं ते महिमानुवर्णने यो देववर्योऽवततार मायया

०४१६००२२ वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः

०४१६००३१ अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः

०४१६००३२ यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि

०४१६००४१ एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन्

०४१६००४२ गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम्

०४१६००५१ एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः

०४१६००५२ काले काले यथाभागं लोकयोरुभयोर्हितम्

०४१६००६१ वसु काल उपादत्ते काले चायं विमुञ्चति

०४१६००६२ समः सर्वेषु भूतेषु प्रतपन्सूर्यवद्विभुः

०४१६००७१ तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि

०४१६००७२ भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान्

०४१६००८१ देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः

०४१६००८२ कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत्

०४१६००९१ आप्याययत्यसौ लोकं वदनामृतमूर्तिना

०४१६००९२ सानुरागावलोकेन विशदस्मितचारुणा

०४१६०१०१ अव्यक्तवर्त्मैष निगूढकार्यो गम्भीरवेधा उपगुप्तवित्तः

०४१६०१०२ अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा

०४१६०१११ दुरासदो दुर्विषह आसन्नोऽपि विदूरवत्

०४१६०११२ नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः

०४१६०१२१ अन्तर्बहिश्च भूतानां पश्यन्कर्माणि चारणैः

०४१६०१२२ उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम्

०४१६०१३१ नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि

०४१६०१३२ दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः

०४१६०१४१ अस्याप्रतिहतं चक्रं पृथोरामानसाचलात्

०४१६०१४२ वर्तते भगवानर्को यावत्तपति गोगणैः

०४१६०१५१ रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः

०४१६०१५२ अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः

०४१६०१६१ दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः

०४१६०१६२ शरण्यः सर्वभूतानां मानदो दीनवत्सलः
०४१६०१७१ मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः
०४१६०१७२ प्रजासु पितृवत्स्निग्धः किङ्करो ब्रह्मवादिनाम्
०४१६०१८१ देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः
०४१६०१८२ मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु
०४१६०१९१ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयावतीर्णः
०४१६०१९२ यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतम्
०४१६०२०१ अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः
०४१६०२०२ आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः
०४१६०२११ अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः
०४१६०२१२ मंस्यन्त एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः
०४१६०२२१ अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम्
०४१६०२२२ यो लीलयाद्रीन्स्वशरासकोट्या भिन्दन्समां गामकरोद्यथेन्द्रः
०४१६०२३१ विस्फूर्जयन्नाजगवं धनुः स्वयं यदाचरत्क्ष्मामविषह्यमाजौ
०४१६०२३२ तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः
०४१६०२४१ एषोऽश्वमेधाञ्शतमाजहार सरस्वती प्रादुरभावि यत्र
०४१६०२४२ अहार्षीद्यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने
०४१६०२५१ एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम्
०४१६०२५२ आराध्य भक्त्यालभतामलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति
०४१६०२६१ तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः
०४१६०२६२ श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः
०४१६०२७१ दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः
०४१६०२७२ सुरासुरेन्द्रैरुपगीयमान महानुभावो भविता पतिर्भुवः
०४१७००१० मैत्रेय उवाच
०४१७००११ एवं स भगवान्वैन्यः ख्यापितो गुणकर्मभिः
०४१७००१२ छन्दयामास तान्कामैः प्रतिपूज्याभिनन्द्य च
०४१७००२१ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः
०४१७००२२ पौराञ्जानपदाञ्श्रेणीः प्रकृतीः समपूजयत्
०४१७००३० विदुर उवाच
०४१७००३१ कस्माद्दधार गोरूपं धरित्री बहुरूपिणी
०४१७००३२ यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम्

०४१७००४१ प्रकृत्या विषमा देवी कृता तेन समा कथम्
०४१७००४२ तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत्
०४१७००५१ सनत्कुमाराद्भगवतो ब्रह्मन्ब्रह्मविदुत्तमात्
०४१७००५२ लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः
०४१७००६१ यच्चान्यदपि कृष्णस्य भवान्भगवतः प्रभोः
०४१७००६२ श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम्
०४१७००७१ भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च
०४१७००७२ वक्तुमर्हसि योऽदुह्यद्वैन्यरूपेण गामिमाम्
०४१७००८० सूत उवाच
०४१७००८१ चोदितो विदुरेणैवं वासुदेवकथां प्रति
०४१७००८२ प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत
०४१७००९० मैत्रेय उवाच
०४१७००९१ यदाभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः
०४१७००९२ प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन्
०४१७०१०१ वयं राजञ्जाठरेणाभितप्ता यथाग्निना कोटरस्थेन वृक्षाः
०४१७०१०२ त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः
०४१७०१११ तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेवदेव
०४१७०११२ यावन्न नङ्क्ष्यामह उज्झितोर्जा वार्तापतिस्त्वं किल लोकपालः
०४१७०१२० मैत्रेय उवाच
०४१७०१२१ पृथुः प्रजानां करुणं निशम्य परिदेवितम्
०४१७०१२२ दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत
०४१७०१३१ इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः
०४१७०१३२ सन्दधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा
०४१७०१४१ प्रवेपमाना धरणी निशाम्योदायुधं च तम्
०४१७०१४२ गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता
०४१७०१५१ तामन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः
०४१७०१५२ शरं धनुषि सन्धाय यत्र यत्र पलायते
०४१७०१६१ सा दिशो विदिशो देवी रोदसी चान्तरं तयोः
०४१७०१६२ धावन्ती तत्र तत्रैनं ददर्शानूद्यतायुधम्
०४१७०१७१ लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः
०४१७०१७२ त्रस्ता तदा निववृते हृदयेन विदूयता

०४१७०१८१ उवाच च महाभागं धर्मज्ञापन्नवत्सल
०४१७०१८२ त्राहि मामपि भूतानां पालनेऽवस्थितो भवान्
०४१७०१९१ स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम्
०४१७०१९२ अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः
०४१७०२०१ प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः
०४१७०२०२ किमुत त्वद्विधा राजन्करुणा दीनवत्सलाः
०४१७०२११ मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम्
०४१७०२१२ आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि
०४१७०२२० पृथुरुवाच
०४१७०२२१ वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम्
०४१७०२२२ भागं बर्हिषि या वृङ्क्ते न तनोति च नो वसु
०४१७०२३१ यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः
०४१७०२३२ तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते
०४१७०२४१ त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयम्भुवा
०४१७०२४२ न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः
०४१७०२५१ अमूषां क्षुत्परीतानामार्तानां परिदेवितम्
०४१७०२५२ शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा
०४१७०२६१ पुमान्योषिदुत क्लीब आत्मसम्भावनोऽधमः
०४१७०२६२ भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः
०४१७०२७१ त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः
०४१७०२७२ आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः
०४१७०२८१ एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम्
०४१७०२८२ प्रणता प्राञ्जलिः प्राह मही सञ्जातवेपथुः
०४१७०२९० धरोवाच
०४१७०२९१ नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने
०४१७०२९२ नमः स्वरूपानुभवेन निर्धुत द्रव्यक्रियाकारकविभ्रमोर्मये
०४१७०३०१ येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसङ्ग्रहः
०४१७०३०२ स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये
०४१७०३११ य एतदादावसृजच्चराचरं स्वमाययात्माश्रययावितर्क्यया
०४१७०३१२ तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति
०४१७०३२१ नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जययाकृतात्मभिः

०४१७०३२२ न लक्ष्यते यस्त्वकरोदकारयद्योऽनेक एकः परतश्च ईश्वरः
०४१७०३३१ सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः
०४१७०३३२ तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे
०४१७०३४१ स वै भवानात्मविनिर्मितं जगद्भूतेन्द्रियान्तःकरणात्मकं विभो
०४१७०३४२ संस्थापयिष्यन्नज मां रसातलादभ्युज्जहाराम्भस आदिसूकरः
०४१७०३५१ अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल
०४१७०३५२ स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि
०४१७०३६१ नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया
०४१७०३६२ न ज्ञायते मोहितचित्तवर्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः
०४१८००१० मैत्रेय उवाच
०४१८००११ इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम्
०४१८००१२ पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना
०४१८००२१ सन्नियच्छाभिभो मन्युं निबोध श्रावितं च मे
०४१८००२२ सर्वतः सारमादत्ते यथा मधुकरो बुधः
०४१८००३१ अस्मिन्लोकेऽथवामुष्मिन्मुनिभिस्तत्त्वदर्शिभिः
०४१८००३२ दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये
०४१८००४१ तानातिष्ठति यः सम्यगुपायान्पूर्वदर्शितान्
०४१८००४२ अवरः श्रद्धयोपेत उपेयान्विन्दतेऽञ्जसा
०४१८००५१ ताननादृत्य योऽविद्वानर्थानारभते स्वयम्
०४१८००५२ तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनः
०४१८००६१ पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशाम्पते
०४१८००६२ भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः
०४१८००७१ अपालितानादृता च भवद्भिर्लोकपालकैः
०४१८००७२ चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः
०४१८००८१ नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा
०४१८००८२ तत्र योगेन दृष्टेन भवानादातुमर्हति
०४१८००९१ वत्सं कल्पय मे वीर येनाहं वत्सला तव
०४१८००९२ धोक्ष्ये क्षीरमयान्कामाननुरूपं च दोहनम्
०४१८०१०१ दोग्धारं च महाबाहो भूतानां भूतभावन
०४१८०१०२ अन्नमीप्सितमूर्जस्वद्भगवान्वाञ्छते यदि
०४१८०१११ समां च कुरु मां राजन्देववृष्टं यथा पयः

०४१८०११२ अपर्तावपि भद्रं ते उपावर्तेत मे विभो
०४१८०१२१ इति प्रियं हितं वाक्यं भुव आदाय भूपतिः
०४१८०१२२ वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः
०४१८०१३१ तथापरे च सर्वत्र सारमाददते बुधाः
०४१८०१३२ ततोऽन्ये च यथाकामं दुदुहुः पृथुभाविताम्
०४१८०१४१ ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम
०४१८०१४२ वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि
०४१८०१५१ कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन्
०४१८०१५२ हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः
०४१८०१६१ दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम्
०४१८०१६२ विधायादूदुहन्क्षीरमयःपात्रे सुरासवम्
०४१८०१७१ गन्धर्वाप्सरसोऽधुक्षन्पात्रे पद्ममये पयः
०४१८०१७२ वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम्
०४१८०१८१ वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत
०४१८०१८२ आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः
०४१८०१९१ प्रकल्प्य वत्सं कपिलं सिद्धाः सङ्कल्पनामयीम्
०४१८०१९२ सिद्धिं नभसि विद्यां च ये च विद्याधरादयः
०४१८०२०१ अन्ये च मायिनो मायामन्तर्धानाद्भुतात्मनाम्
०४१८०२०२ मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम्
०४१८०२११ यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः
०४१८०२१२ भूतेशवत्सा दुदुहुः कपाले क्षतजासवम्
०४१८०२२१ तथाहयो दन्दशूकाः सर्पा नागाश्च तक्षकम्
०४१८०२२२ विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः
०४१८०२३१ पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम्
०४१८०२३२ अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः
०४१८०२४१ क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे
०४१८०२४२ सुपर्णवत्सा विहगाश्चरं चाचरमेव च
०४१८०२५१ वटवत्सा वनस्पतयः पृथग्रसमयं पयः
०४१८०२५२ गिरयो हिमवद्वत्सा नानाधातून्स्वसानुषु
०४१८०२६१ सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक्पयः
०४१८०२६२ सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम्

०४१८०२७१ एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः
०४१८०२७२ दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह
०४१८०२८१ ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः
०४१८०२८२ दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः
०४१८०२९१ चूर्णयन्स्वधनुष्कोट्या गिरिकूटानि राजराट्
०४१८०२९२ भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः
०४१८०३०१ अथास्मिन्भगवान्वैन्यः प्रजानां वृत्तिदः पिता
०४१८०३०२ निवासान्कल्पयां चक्रे तत्र तत्र यथार्हतः
०४१८०३११ ग्रामान्पुरः पत्तनानि दुर्गाणि विविधानि च
०४१८०३१२ घोषान्व्रजान्सशिबिरानाकरान्खेटखर्वटान्
०४१८०३२१ प्राक्पृथोरिह नैवैषा पुरग्रामादिकल्पना
०४१८०३२२ यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः
०४१९००१० मैत्रेय उवाच
०४१९००११ अथादीक्षत राजा तु हयमेधशतेन सः
०४१९००१२ ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती
०४१९००२१ तदभिप्रेत्य भगवान्कर्मातिशयमात्मनः
०४१९००२२ शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम्
०४१९००३१ यत्र यज्ञपतिः साक्षाद्भगवान्हरिरीश्वरः
०४१९००३२ अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः
०४१९००४१ अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः
०४१९००४२ उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः
०४१९००५१ सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः
०४१९००५२ सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः
०४१९००६१ कपिलो नारदो दत्तो योगेशाः सनकादयः
०४१९००६२ तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः
०४१९००७१ यत्र धर्मदुघा भूमिः सर्वकामदुघा सती
०४१९००७२ दोग्धि स्माभीप्सितानर्थान्यजमानस्य भारत
०४१९००८१ ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान्
०४१९००८२ तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः
०४१९००९१ सिन्धवो रत्ननिकरान्गिरयोऽन्नं चतुर्विधम्
०४१९००९२ उपायनमुपाजह्रुः सर्वे लोकाः सपालकाः

०४१९०१०१ इति चाधोक्षजेशस्य पृथोस्तु परमोदयम्
०४१९०१०२ असूयन्भगवानिन्द्रः प्रतिघातमचीकरत्
०४१९०१११ चरमेणाश्वमेधेन यजमाने यजुष्पतिम्
०४१९०११२ वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः
०४१९०१२१ तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा
०४१९०१२२ आमुक्तमिव पाखण्डं योऽधर्मे धर्मविभ्रमः
०४१९०१३१ अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः
०४१९०१३२ अन्वधावत सङ्क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत्
०४१९०१४१ तं तादृशाकृतिं वीक्ष्य मेने धर्मं शरीरिणम्
०४१९०१४२ जटिलं भस्मनाच्छन्नं तस्मै बाणं न मुञ्चति
०४१९०१५१ वधान्निवृत्तं तं भूयो हन्तवेऽत्रिरचोदयत्
०४१९०१५२ जहि यज्ञहनं तात महेन्द्रं विबुधाधमम्
०४१९०१६१ एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा
०४१९०१६२ अन्वद्रवदभिक्रुद्धो रावणं गृध्रराडिव
०४१९०१७१ सोऽश्वं रूपं च तद्धित्वा तस्मा अन्तर्हितः स्वराट्
०४१९०१७२ वीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान्
०४१९०१८१ तत्तस्य चाद्भुतं कर्म विचक्ष्य परमर्षयः
०४१९०१८२ नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो
०४१९०१९१ उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः
०४१९०१९२ चषालयूपतश्छन्नो हिरण्यरशनं विभुः
०४१९०२०१ अत्रिः सन्दर्शयामास त्वरमाणं विहायसा
०४१९०२०२ कपालखट्वाङ्गधरं वीरो नैनमबाधत
०४१९०२११ अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा
०४१९०२१२ सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट्
०४१९०२२१ वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत्
०४१९०२२२ तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः
०४१९०२३१ यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया
०४१९०२३२ तानि पापस्य खण्डानि लिङ्गं खण्डमिहोच्यते
०४१९०२४१ एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया
०४१९०२४२ तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम्
०४१९०२५१ धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु

०४१९०२५२ प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु
०४१९०२६१ तदभिज्ञाय भगवान्पृथुः पृथुपराक्रमः
०४१९०२६२ इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः
०४१९०२७१ तमृत्विजः शक्रवधाभिसन्धितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम्
०४१९०२७२ निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात्
०४१९०२८१ वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम्
०४१९०२८२ अयातयामोपहवैरनन्तरं प्रसह्य राजञ्जुहवाम तेऽहितम्
०४१९०२९१ इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा
०४१९०२९२ स्रुग्घस्ताञ्जुह्वतोऽभ्येत्य स्वयम्भूः प्रत्यषेधत
०४१९०३०१ न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः
०४१९०३०२ यं जिघांसथ यज्ञेन यस्येष्टास्तनवः सुराः
०४१९०३११ तदिदं पश्यत महद् धर्मव्यतिकरं द्विजाः
०४१९०३१२ इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता
०४१९०३२१ पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः
०४१९०३२२ अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित्
०४१९०३३१ नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि
०४१९०३३२ उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ
०४१९०३४१ मास्मिन्महाराज कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा
०४१९०३४२ यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोऽन्धम्
०४१९०३५१ क्रतुर्विरमतामेष देवेषु दुरवग्रहः
०४१९०३५२ धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः
०४१९०३६१ एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम्
०४१९०३६२ ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट्
०४१९०३७१ भवान्परित्रातुमिहावतीर्णो धर्मं जनानां समयानुरूपम्
०४१९०३७२ वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलासि वैन्य
०४१९०३८१ स त्वं विमृश्यास्य भवं प्रजापते सङ्कल्पनं विश्वसृजां पिपीपृहि
०४१९०३८२ ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो जहि
०४१९०३९० मैत्रेय उवाच
०४१९०३९१ इत्थं स लोकगुरुणा समादिष्टो विशाम्पतिः
०४१९०३९२ तथा च कृत्वा वात्सल्यं मघोनापि च सन्दधे
०४१९०४०१ कृतावभृथस्नानाय पृथवे भूरिकर्मणे

०४१९०४०२ वरान्ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः
०४१९०४११ विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः
०४१९०४१२ आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः
०४१९०४२१ त्वयाहूता महाबाहो सर्व एव समागताः
०४१९०४२२ पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः
०४२०००१० मैत्रेय उवाच
०४२०००११ भगवानपि वैकुण्ठः साकं मघवता विभुः
०४२०००१२ यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक्तमभाषत
०४२०००२० श्रीभगवानुवाच
०४२०००२१ एष तेऽकार्षीद्भङ्गं हयमेधशतस्य ह
०४२०००२२ क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि
०४२०००३१ सुधियः साधवो लोके नरदेव नरोत्तमाः
०४२०००३२ नाभिद्रुह्यन्ति भूतेभ्यो यर्हि नात्मा कलेवरम्
०४२०००४१ पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया
०४२०००४२ श्रम एव परं जातो दीर्घया वृद्धसेवया
०४२०००५१ अतः कायमिमं विद्वानविद्याकामकर्मभिः
०४२०००५२ आरब्ध इति नैवास्मिन्प्रतिबुद्धोऽनुषज्जते
०४२०००६१ असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे
०४२०००६२ अपत्ये द्रविणे वापि कः कुर्यान्ममतां बुधः
०४२०००७१ एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः
०४२०००७२ सर्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः
०४२०००८१ य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः
०४२०००८२ नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः
०४२०००९१ यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयान्वितः
०४२०००९२ भजते शनकैस्तस्य मनो राजन्प्रसीदति
०४२००१०१ परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः
०४२००१०२ शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते
०४२००१११ उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम्
०४२००११२ कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम्
०४२००१२१ भिन्नस्य लिङ्गस्य गुणप्रवाहो द्रव्यक्रियाकारकचेतनात्मनः
०४२००१२२ दृष्टासु सम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः

०४२००१३१ समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः
०४२००१३२ मयोपक्लृप्ताखिललोकसंयुतो विधत्स्व वीराखिललोकरक्षणम्
०४२००१४१ श्रेयः प्रजापालनमेव राज्ञो यत्साम्पराये सुकृतात्षष्ठमंशम्
०४२००१४२ हर्तान्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति
०४२००१५१ एवं द्विजाग्र्यानुमतानुवृत्त धर्मप्रधानोऽन्यतमोऽवितास्याः
०४२००१५२ ह्रस्वेन कालेन गृहोपयातान्द्रष्टासि सिद्धाननुरक्तलोकः
०४२००१६१ वरं च मत्कञ्चन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः
०४२००१६२ नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती
०४२००१७० मैत्रेय उवाच
०४२००१७१ स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित्
०४२००१७२ अनुशासित आदेशं शिरसा जगृहे हरेः
०४२००१८१ स्पृशन्तं पादयोः प्रेम्णा व्रीडितं स्वेन कर्मणा
०४२००१८२ शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह
०४२००१९१ भगवानथ विश्वात्मा पृथुनोपहृतार्हणः
०४२००१९२ समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः
०४२००२०१ प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः
०४२००२०२ पश्यन्पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम्
०४२००२११ स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः
०४२००२१२ न किञ्चनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः
०४२००२२१ अथावमृज्याश्रुकला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम्
०४२००२२२ पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः
०४२००२३० पृथुरुवाच
०४२००२३१ वरान्विभो त्वद्वरदेश्वराद्बुधः कथं वृणीते गुणविक्रियात्मनाम्
०४२००२३२ ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च
०४२००२४१ न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः
०४२००२४२ महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः
०४२००२५१ स उत्तमश्लोक महन्मुखच्युतो भवत्पदाम्भोजसुधा कणानिलः
०४२००२५२ स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः
०४२००२६१ यशः शिवं सुश्रव आर्यसङ्गमे यदृच्छया चोपश्र‍ृणोति ते सकृत्
०४२००२६२ कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसङ्ग्रहेच्छया
०४२००२७१ अथाभजे त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः

०४२००२७२ अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः
०४२००२८१ जगज्जनन्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम्
०४२००२८२ करोषि फल्ग्वप्युरु दीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किं तया
०४२००२९१ भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम्
०४२००२९२ भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे
०४२००३०१ मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत्
०४२००३०२ वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः
०४२००३११ त्वन्माययाद्धा जन ईश खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः
०४२००३१२ यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितुम्
०४२००३२० मैत्रेय उवाच
०४२००३२१ इत्यादिराजेन नुतः स विश्वदृक्तमाह राजन्मयि भक्तिरस्तु ते
०४२००३२२ दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम्
०४२००३३१ तत्त्वं कुरु मयादिष्टमप्रमत्तः प्रजापते
०४२००३३२ मदादेशकरो लोकः सर्वत्राप्नोति शोभनम्
०४२००३४० मैत्रेय उवाच
०४२००३४१ इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद्वचः
०४२००३४२ पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम्
०४२००३५१ देवर्षिपितृगन्धर्व सिद्धचारणपन्नगाः
०४२००३५२ किन्नराप्सरसो मर्त्याः खगा भूतान्यनेकशः
०४२००३६१ यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः
०४२००३६२ सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः
०४२००३७१ भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः
०४२००३७२ हरन्निव मनोऽमुष्य स्वधाम प्रत्यपद्यत
०४२००३८१ अदृष्टाय नमस्कृत्य नृपः सन्दर्शितात्मने
०४२००३८२ अव्यक्ताय च देवानां देवाय स्वपुरं ययौ
०४२१००१० मैत्रेय उवाच
०४२१००११ मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः
०४२१००१२ महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै
०४२१००२१ चन्दनागुरुतोयार्द्र रथ्याचत्वरमार्गवत्
०४२१००२२ पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिर्भिरर्चितम्
०४२१००३१ सवृन्दैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम्

०४२१००३२ तरुपल्लवमालाभिः सर्वतः समलङ्कृतम्
०४२१००४१ प्रजास्तं दीपबलिभिः सम्भृताशेषमङ्गलैः
०४२१००४२ अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः
०४२१००५१ शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम्
०४२१००५२ विवेश भवनं वीरः स्तूयमानो गतस्मयः
०४२१००६१ पूजितः पूजयामास तत्र तत्र महायशाः
०४२१००६२ पौराञ्जानपदांस्तांस्तान्प्रीतः प्रियवरप्रदः
०४२१००७१ स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान्महत्तमः
०४२१००७२ कुर्वन्शशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम्
०४२१००८० सूत उवाच
०४२१००८१ तदादिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम्
०४२१००८२ क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह गृणन्तमर्चयन्
०४२१००९० विदुर उवाच
०४२१००९१ सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः
०४२१००९२ बिभ्रत्स वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम्
०४२१०१०१ को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः
०४२१०१०२ लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम्
०४२१०११० मैत्रेय उवाच
०४२१०१११ गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन्
०४२१०११२ आरब्धानेव बुभुजे भोगान्पुण्यजिहासया
०४२१०१२१ सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक्
०४२१०१२२ अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः
०४२१०१३१ एकदासीन्महासत्र दीक्षा तत्र दिवौकसाम्
०४२१०१३२ समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम
०४२१०१४१ तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः
०४२१०१४२ उत्थितः सदसो मध्ये ताराणामुडुराडिव
०४२१०१५१ प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः
०४२१०१५२ सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः
०४२१०१६१ व्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः
०४२१०१६२ आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रपात्
०४२१०१७१ सूक्ष्मवक्रासितस्निग्ध मूर्धजः कम्बुकन्धरः

०४२१०१७२ महाधने दुकूलाग्र्ये परिधायोपवीय च
०४२१०१८१ व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः
०४२१०१८२ कृष्णाजिनधरः श्रीमान्कुशपाणिः कृतोचितः
०४२१०१९१ शिशिरस्निग्धताराक्षः समैक्षत समन्ततः
०४२१०१९२ ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव
०४२१०२०१ चारु चित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम्
०४२१०२०२ सर्वेषामुपकारार्थं तदा अनुवदन्निव
०४२१०२१० राजोवाच
०४२१०२११ सभ्याः श्रृणुत भद्रं वः साधवो य इहागताः
०४२१०२१२ सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम्
०४२१०२२१ अहं दण्डधरो राजा प्रजानामिह योजितः
०४२१०२२२ रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक्
०४२१०२३१ तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः
०४२१०२३२ लोकाः स्युः कामसन्दोहा यस्य तुष्यति दिष्टदृक्
०४२१०२४१ य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन्
०४२१०२४२ प्रजानां शमलं भुङ्क्ते भगं च स्वं जहाति सः
०४२१०२५१ तत्प्रजा भर्तृपिण्डार्थं स्वार्थमेवानसूयवः
०४२१०२५२ कुरुताधोक्षजधियस्तर्हि मेऽनुग्रहः कृतः
०४२१०२६१ यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः
०४२१०२६२ कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम्
०४२१०२७१ अस्ति यज्ञपतिर्नाम केषाञ्चिदर्हसत्तमाः
०४२१०२७२ इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद्भुवः
०४२१०२८१ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः
०४२१०२८२ प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः
०४२१०२९१ ईदृशानामथान्येषामजस्य च भवस्य च
०४२१०२९२ प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता
०४२१०३०१ दौहित्रादीनृते मृत्योः शोच्यान्धर्मविमोहितान्
०४२१०३०२ वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना
०४२१०३११ यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः
०४२१०३१२ सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित्
०४२१०३२१ विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान्

०४२१०३२२ यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते
०४२१०३३१ तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः
०४२१०३३२ अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धयः
०४२१०३४१ असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः
०४२१०३४२ सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः
०४२१०३५१ प्रधानकालाशयधर्मसङ्ग्रहे शरीर एष प्रतिपद्य चेतनाम्
०४२१०३५२ क्रियाफलत्वेन विभुर्विभाव्यते यथानलो दारुषु तद्गुणात्मकः
०४२१०३६१ अहो ममामी वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम्
०४२१०३६२ स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रताः
०४२१०३७१ मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च
०४२१०३७२ देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद्द्विजानाम्
०४२१०३८१ ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात्
०४२१०३८२ अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः
०४२१०३९१ यत्सेवयाशेषगुहाशयः स्वराड्विप्रप्रियस्तुष्यति काममीश्वरः
०४२१०३९२ तदेव तद्धर्मपरैर्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम्
०४२१०४०१ पुमान्लभेतानतिवेलमात्मनः प्रसीदतोऽत्यन्तशमं स्वतः स्वयम्
०४२१०४०२ यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति मुखं हविर्भुजाम्
०४२१०४११ अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः
०४२१०४१२ न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः
०४२१०४२१ यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गलमौनसंयमैः
०४२१०४२२ समाधिना बिभ्रति हार्थदृष्टये यत्रेदमादर्श इवावभासते
०४२१०४३१ तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः
०४२१०४३२ यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति
०४२१०४४१ गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणतेऽनु सम्पदः
०४२१०४४२ प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम्
०४२१०४५० मैत्रेय उवाच
०४२१०४६१ इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः
०४२१०४६२ तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः
०४२१०४७१ पुत्रेण जयते लोकानिति सत्यवती श्रुतिः
०४२१०४७२ ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः
०४२१०४८१ हिरण्यकशिपुश्चापि भगवन्निन्दया तमः

०४२१०४८२ विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः
०४२१०४९१ वीरवर्य पितः पृथ्व्याः समाः सञ्जीव शाश्वतीः
०४२१०४९२ यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि
०४२१०५०१ अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः
०४२१०५०२ य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति
०४२१०५११ नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम्
०४२१०५१२ प्रजानुरागो महतां प्रकृतिः करुणात्मनाम्
०४२१०५२१ अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो
०४२१०५२२ भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः
०४२१०५३१ नमो विवृद्धसत्त्वाय पुरुषाय महीयसे
०४२१०५३२ यो ब्रह्म क्षत्रमाविश्य बिभर्तीदं स्वतेजसा
०४२२००१० मैत्रेय उवाच
०४२२००११ जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम्
०४२२००१२ तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः
०४२२००२१ तांस्तु सिद्धेश्वरान्राजा व्योम्नोऽवतरतोऽर्चिषा
०४२२००२२ लोकानपापान्कुर्वाणान्सानुगोऽचष्ट लक्षितान्
०४२२००३१ तद्दर्शनोद्गतान्प्राणान्प्रत्यादित्सुरिवोत्थितः
०४२२००३२ ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव
०४२२००४१ गौरवाद्यन्त्रितः सभ्यः प्रश्रयानतकन्धरः
०४२२००४२ विधिवत्पूजयां चक्रे गृहीताध्यर्हणासनान्
०४२२००५१ तत्पादशौचसलिलैर्मार्जितालकबन्धनः
०४२२००५२ तत्र शीलवतां वृत्तमाचरन्मानयन्निव
०४२२००६१ हाटकासन आसीनान्स्वधिष्ण्येष्विव पावकान्
०४२२००६२ श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान्
०४२२००७० पृथुरुवाच
०४२२००७१ अहो आचरितं किं मे मङ्गलं मङ्गलायनाः
०४२२००७२ यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः
०४२२००८१ किं तस्य दुर्लभतरमिह लोके परत्र च
०४२२००८२ यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः
०४२२००९१ नैव लक्षयते लोको लोकान्पर्यटतोऽपि यान्
०४२२००९२ यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः

०४२२०१०१ अधना अपि ते धन्याः साधवो गृहमेधिनः
०४२२०१०२ यद्गृहा ह्यर्हवर्याम्बु तृणभूमीश्वरावराः
०४२२०१११ व्यालालयद्रुमा वै तेष्वरिक्ताखिलसम्पदः
०४२२०११२ यद्गृहास्तीर्थपादीय पादतीर्थविवर्जिताः
०४२२०१२१ स्वागतं वो द्विजश्रेष्ठा यद्व्रतानि मुमुक्षवः
०४२२०१२२ चरन्ति श्रद्धया धीरा बाला एव बृहन्ति च
०४२२०१३१ कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम्
०४२२०१३२ व्यसनावाप एतस्मिन्पतितानां स्वकर्मभिः
०४२२०१४१ भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते
०४२२०१४२ कुशलाकुशला यत्र न सन्ति मतिवृत्तयः
०४२२०१५१ तदहं कृतविश्रम्भः सुहृदो वस्तपस्विनाम्
०४२२०१५२ सम्पृच्छे भव एतस्मिन्क्षेमः केनाञ्जसा भवेत्
०४२२०१६१ व्यक्तमात्मवतामात्मा भगवानात्मभावनः
०४२२०१६२ स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः
०४२२०१७० मैत्रेय उवाच
०४२२०१७१ पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु
०४२२०१७२ स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह
०४२२०१८० सनत्कुमार उवाच
०४२२०१८१ साधु पृष्टं महाराज सर्वभूतहितात्मना
०४२२०१८२ भवता विदुषा चापि साधूनां मतिरीदृशी
०४२२०१९१ सङ्गमः खलु साधूनामुभयेषां च सम्मतः
०४२२०१९२ यत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम्
०४२२०२०१ अस्त्येव राजन्भवतो मधुद्विषः पादारविन्दस्य गुणानुवादने
०४२२०२०२ रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः
०४२२०२११ शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः
०४२२०२१२ असङ्ग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे च या
०४२२०२२१ सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाध्यात्मिकयोगनिष्ठया
०४२२०२२२ योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च
०४२२०२३१ अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण च
०४२२०२३२ विविक्तरुच्या परितोष आत्मनि विना हरेर्गुणपीयूषपानात्
०४२२०२४१ अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना

०४२२०२४२ यमैरकामैर्नियमैश्चाप्यनिन्दया निरीहया द्वन्द्वतितिक्षया च
०४२२०२५१ हरेर्मुहुस्तत्परकर्णपूर गुणाभिधानेन विजृम्भमाणया
०४२२०२५२ भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः
०४२२०२६१ यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान्ज्ञानविरागरंहसा
०४२२०२६२ दहत्यवीर्यं हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः
०४२२०२७१ दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे
०४२२०२७२ परात्मनोर्यद्व्यवधानं पुरस्तात्स्वप्ने यथा पुरुषस्तद्विनाशे
०४२२०२८१ आत्मानमिन्द्रियार्थं च परं यदुभयोरपि
०४२२०२८२ सत्याशय उपाधौ वै पुमान्पश्यति नान्यदा
०४२२०२९१ निमित्ते सति सर्वत्र जलादावपि पूरुषः
०४२२०२९२ आत्मनश्च परस्यापि भिदां पश्यति नान्यदा
०४२२०३०१ इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः
०४२२०३०२ चेतनां हरते बुद्धेः स्तम्बस्तोयमिव ह्रदात्
०४२२०३११ भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये
०४२२०३१२ तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः
०४२२०३२१ नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः
०४२२०३२२ यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात्
०४२२०३३१ अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम्
०४२२०३३२ भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम्
०४२२०३४१ न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः
०४२२०३४२ धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्
०४२२०३५१ तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते
०४२२०३५२ त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः
०४२२०३६१ परेऽवरे च ये भावा गुणव्यतिकरादनु
०४२२०३६२ न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम्
०४२२०३७१ तत्त्वं नरेन्द्र जगतामथ तस्थूषां च
०४२२०३७२ देहेन्द्रियासुधिषणात्मभिरावृतानाम्
०४२२०३७३ यः क्षेत्रवित्तपतया हृदि विश्वगाविः
०४२२०३७४ प्रत्यक्चकास्ति भगवांस्तमवेहि सोऽस्मि
०४२२०३८१ यस्मिन्निदं सदसदात्मतया विभाति
०४२२०३८२ माया विवेकविधुति स्रजि वाहिबुद्धिः

०४२२०३८३ तं नित्यमुक्तपरिशुद्धविशुद्धतत्त्वं
०४२२०३८४ प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये
०४२२०३९१ यत्पादपङ्कजपलाशविलासभक्त्या
०४२२०३९२ कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः
०४२२०३९३ तद्वन्न रिक्तमतयो यतयोऽपि रुद्ध
०४२२०३९४ स्रोतोगणास्तमरणं भज वासुदेवम्
०४२२०४०१ कृच्छ्रो महानिह भवार्णवमप्लवेशां
०४२२०४०२ षड्वर्गनक्रमसुखेन तितीर्षन्ति
०४२२०४०३ तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रिं
०४२२०४०४ कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम्
०४२२०४१० मैत्रेय उवाच
०४२२०४११ स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा
०४२२०४१२ दर्शितात्मगतिः सम्यक्प्रशस्योवाच तं नृपः
०४२२०४२० राजोवाच
०४२२०४२१ कृतो मेऽनुग्रहः पूर्वं हरिणार्तानुकम्पिना
०४२२०४२२ तमापादयितुं ब्रह्मन्भगवन्यूयमागताः
०४२२०४३१ निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः
०४२२०४३२ साधूच्छिष्टं हि मे सर्वमात्मना सह किं ददे
०४२२०४४१ प्राणा दाराः सुता ब्रह्मन्गृहाश्च सपरिच्छदाः
०४२२०४४२ राज्यं बलं मही कोश इति सर्वं निवेदितम्
०४२२०४५१ सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च
०४२२०४५२ सर्व लोकाधिपत्यं च वेदशास्त्रविदर्हति
०४२२०४६१ स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च
०४२२०४६२ तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः
०४२२०४७१ यैरीदृशी भगवतो गतिरात्मवाद
०४२२०४७२ एकान्ततो निगमिभिः प्रतिपादिता नः
०४२२०४७३ तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं
०४२२०४७४ को नाम तत्प्रतिकरोति विनोदपात्रम्
०४२२०४८० मैत्रेय उवाच
०४२२०४८१ त आत्मयोगपतय आदिराजेन पूजिताः
०४२२०४८२ शीलं तदीयं शंसन्तः खेऽभवन्मिषतां नृणाम्

०४२२०४९१ वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया
०४२२०४९२ आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः
०४२२०५०१ कर्माणि च यथाकालं यथादेशं यथाबलम्
०४२२०५०२ यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम्
०४२२०५११ फलं ब्रह्मणि सन्न्यस्य निर्विषङ्गः समाहितः
०४२२०५१२ कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम्
०४२२०५२१ गृहेषु वर्तमानोऽपि स साम्राज्यश्रियान्वितः
०४२२०५२२ नासज्जतेन्द्रियार्थेषु निरहम्मतिरर्कवत्
०४२२०५३१ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन्
०४२२०५३२ पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान्
०४२२०५४१ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम्
०४२२०५४२ सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान्
०४२२०५५१ गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः
०४२२०५५२ मनोवाग्वृत्तिभिः सौम्यैर्गुणैः संरञ्जयन्प्रजाः
०४२२०५६१ राजेत्यधान्नामधेयं सोमराज इवापरः
०४२२०५६२ सूर्यवद्विसृजन्गृह्णन्प्रतपंश्च भुवो वसु
०४२२०५७१ दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः
०४२२०५७२ तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम्
०४२२०५८१ वर्षति स्म यथाकामं पर्जन्य इव तर्पयन्
०४२२०५८२ समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव
०४२२०५९१ धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव
०४२२०५९२ कुवेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा
०४२२०६०१ मातरिश्वेव सर्वात्मा बलेन महसौजसा
०४२२०६०२ अविषह्यतया देवो भगवान्भूतराडिव
०४२२०६११ कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव
०४२२०६१२ वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः
०४२२०६२१ बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः
०४२२०६२२ भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु
०४२२०६२३ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे
०४२२०६३१ कीर्त्योर्ध्वगीतया पुम्भिस्त्रैलोक्ये तत्र तत्र ह
०४२२०६३२ प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव

०४२३००१० मैत्रेय उवाच
०४२३००११ दृष्ट्वात्मानं प्रवयसमेकदा वैन्य आत्मवान्
०४२३००१२ आत्मना वर्धिताशेष स्वानुसर्गः प्रजापतिः
०४२३००२१ जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम्
०४२३००२२ निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान्
०४२३००३१ आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव
०४२३००३२ प्रजासु विमनःस्वेकः सदारोऽगात्तपोवनम्
०४२३००४१ तत्राप्यदाभ्यनियमो वैखानससुसम्मते
०४२३००४२ आरब्ध उग्रतपसि यथा स्वविजये पुरा
०४२३००५१ कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित्
०४२३००५२ अब्भक्षः कतिचित्पक्षान्वायुभक्षस्ततः परम्
०४२३००६१ ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः
०४२३००६२ आकण्ठमग्नः शिशिरे उदके स्थण्डिलेशयः
०४२३००७१ तितिक्षुर्यतवाग्दान्त ऊर्ध्वरेता जितानिलः
०४२३००७२ आरिराधयिषुः कृष्णमचरत्तप उत्तमम्
०४२३००८१ तेन क्रमानुसिद्धेन ध्वस्तकर्ममलाशयः
०४२३००८२ प्राणायामैः सन्निरुद्ध षड्वर्गश्छिन्नबन्धनः
०४२३००९१ सनत्कुमारो भगवान्यदाहाध्यात्मिकं परम्
०४२३००९२ योगं तेनैव पुरुषमभजत्पुरुषर्षभः
०४२३०१०१ भगवद्धर्मिणः साधोः श्रद्धया यततः सदा
०४२३०१०२ भक्तिर्भगवति ब्रह्मण्यनन्यविषयाभवत्
०४२३०१११ तस्यानया भगवतः परिकर्मशुद्ध
०४२३०११२ सत्त्वात्मनस्तदनुसंस्मरणानुपूर्त्या
०४२३०११३ ज्ञानं विरक्तिमदभून्निशितेन येन
०४२३०११४ चिच्छेद संशयपदं निजजीवकोशम्
०४२३०१२१ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्
०४२३०१२२ तत्तत्यजेऽच्छिनदिदं वयुनेन येन
०४२३०१२३ तावन्न योगगतिभिर्यतिरप्रमत्तो
०४२३०१२४ यावद्गदाग्रजकथासु रतिं न कुर्यात्
०४२३०१३१ एवं स वीरप्रवरः संयोज्यात्मानमात्मनि
०४२३०१३२ ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम्

०४२३०१४१ सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयञ्छनैः
०४२३०१४२ नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि
०४२३०१५१ उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निःस्पृहः
०४२३०१५२ वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत्
०४२३०१६१ खान्याकाशे द्रवं तोये यथास्थानं विभागशः
०४२३०१६२ क्षितिमम्भसि तत्तेजस्यदो वायौ नभस्यमुम्
०४२३०१७१ इन्द्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम्
०४२३०१७२ भूतादिनामून्युत्कृष्य महत्यात्मनि सन्दधे
०४२३०१८१ तं सर्वगुणविन्यासं जीवे मायामये न्यधात्
०४२३०१८२ तं चानुशयमात्मस्थमसावनुशयी पुमान्
०४२३०१८३ नानवैराग्यवीर्येण स्वरूपस्थोऽजहात्प्रभुः
०४२३०१९१ अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम्
०४२३०१९२ सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः
०४२३०२०१ अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चार्षदेहयात्रया
०४२३०२०२ नाविन्दतार्तिं परिकर्शितापि सा प्रेयस्करस्पर्शनमाननिर्वृतिः
०४२३०२११ देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः
०४२३०२१२ आलक्ष्य किञ्चिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि
०४२३०२२१ विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः
०४२३०२२२ नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादौ
०४२३०२३१ विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम्
०४२३०२३२ तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः
०४२३०२४१ कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि
०४२३०२४२ नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम्
०४२३०२५० देव्य ऊचुः
०४२३०२५१ अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम्
०४२३०२५२ सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव
०४२३०२६१ सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती
०४२३०२६२ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा
०४२३०२७१ तेषां दुरापं किं त्वन्यन्मर्त्यानां भगवत्पदम्
०४२३०२७२ भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत
०४२३०२८१ स वञ्चितो बतात्मध्रुक्कृच्छ्रेण महता भुवि

०४२३०२८२ लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते
०४२३०२९० मैत्रेय उवाच
०४२३०२९१ स्तुवतीष्वमरस्त्रीषु पतिलोकं गता वधूः
०४२३०२९२ यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताश्रयः
०४२३०३०१ इत्थम्भूतानुभावोऽसौ पृथुः स भगवत्तमः
०४२३०३०२ कीर्तितं तस्य चरितमुद्दामचरितस्य ते
०४२३०३११ य इदं सुमहत्पुण्यं श्रद्धयावहितः पठेत्
०४२३०३१२ श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात्
०४२३०३२१ ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः
०४२३०३२२ वैश्यः पठन्विट्पतिः स्याच्छूद्रः सत्तमतामियात्
०४२३०३३१ त्रिः कृत्व इदमाकर्ण्य नरो नार्यथवादृता
०४२३०३३२ अप्रजः सुप्रजतमो निर्धनो धनवत्तमः
०४२३०३४१ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः
०४२३०३४२ इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम्
०४२३०३५१ धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम्
०४२३०३५२ धर्मार्थकाममोक्षाणां सम्यक्सिद्धिमभीप्सुभिः
०४२३०३५३ श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम्
०४२३०३६१ विजयाभिमुखो राजा श्रुत्वैतदभियाति यान्
०४२३०३६२ बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा
०४२३०३७१ मुक्तान्यसङ्गो भगवत्यमलां भक्तिमुद्वहन्
०४२३०३७२ वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत्पठेत्
०४२३०३८१ वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम्
०४२३०३८२ अस्मिन्कृतमतिमर्त्यं पार्थवीं गतिमाप्नुयात्
०४२३०३९१ अनुदिनमिदमादरेण शृण्वन्पृथुचरितं प्रथयन्विमुक्तसङ्गः
०४२३०३९२ भगवति भवसिन्धुपोतपादे स च निपुणां लभते रतिं मनुष्यः
०४२४००१० मैत्रेय उवाच
०४२४००११ विजिताश्वोऽधिराजासीत्पृथुपुत्रः पृथुश्रवाः
०४२४००१२ यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः
०४२४००२१ हर्यक्षायादिशत्प्राचीं धूम्रकेशाय दक्षिणाम्
०४२४००२२ प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः
०४२४००३१ अन्तर्धानगतिं शक्राल्लब्ध्वान्तर्धानसंज्ञितः

०४२४००३२ अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मतम्
०४२४००४१ पावकः पवमानश्च शुचिरित्यग्नयः पुरा
०४२४००४२ वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः
०४२४००५१ अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत
०४२४००५२ य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान्
०४२४००६१ राज्ञां वृत्तिं करादान दण्डशुल्कादिदारुणाम्
०४२४००६२ मन्यमानो दीर्घसत्र व्याजेन विससर्ज ह
०४२४००७१ तत्रापि हंसं पुरुषं परमात्मानमात्मदृक्
०४२४००७२ यजंस्तल्लोकतामाप कुशलेन समाधिना
०४२४००८१ हविर्धानाद्धविर्धानी विदुरासूत षट्सुतान्
०४२४००८२ बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम्
०४२४००९१ बर्हिषत्सुमहाभागो हाविर्धानिः प्रजापतिः
०४२४००९२ क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह
०४२४०१०१ यस्येदं देवयजनमनुयज्ञं वितन्वतः
०४२४०१०२ प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम्
०४२४०१११ सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम्
०४२४०११२ यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलङ्कृताम्
०४२४०११३ परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव
०४२४०१२१ विबुधासुरगन्धर्व मुनिसिद्धनरोरगाः
०४२४०१२२ विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः
०४२४०१३१ प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन्
०४२४०१३२ तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः
०४२४०१४१ पित्रादिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन्
०४२४०१४२ दशवर्षसहस्राणि तपसार्चंस्तपस्पतिम्
०४२४०१५१ यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता
०४२४०१५२ तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः
०४२४०१६० विदुर उवाच
०४२४०१६१ प्रचेतसां गिरित्रेण यथासीत्पथि सङ्गमः
०४२४०१६२ यदुताह हरः प्रीतस्तन्नो ब्रह्मन्वदार्थवत्
०४२४०१७१ सङ्गमः खलु विप्रर्षे शिवेनेह शरीरिणाम्
०४२४०१७२ दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम्

०४२४०१८१ आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे
०४२४०१८२ शक्त्या युक्तो विचरति घोरया भगवान्भवः
०४२४०१९० मैत्रेय उवाच
०४२४०१९१ प्रचेतसः पितुर्वाक्यं शिरसादाय साधवः
०४२४०१९२ दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः
०४२४०२०१ ससमुद्रमुप विस्तीर्णमपश्यन्सुमहत्सरः
०४२४०२०२ महन्मन इव स्वच्छं प्रसन्नसलिलाशयम्
०४२४०२११ नीलरक्तोत्पलाम्भोज कह्लारेन्दीवराकरम्
०४२४०२१२ हंससारसचक्राह्व कारण्डवनिकूजितम्
०४२४०२२१ मत्तभ्रमरसौस्वर्य हृष्टरोमलताङ्घ्रिपम्
०४२४०२२२ पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम्
०४२४०२३१ तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम्
०४२४०२३२ विसिस्म्यू राजपुत्रास्ते मृदङ्गपणवाद्यनु
०४२४०२४१ तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम्
०४२४०२४२ उपगीयमानममर प्रवरं विबुधानुगैः
०४२४०२५१ तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम्
०४२४०२५२ प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः
०४२४०२६१ स तान्प्रपन्नार्तिहरो भगवान्धर्मवत्सलः
०४२४०२६२ धर्मज्ञान्शीलसम्पन्नान्प्रीतः प्रीतानुवाच ह
०४२४०२७० श्रीरुद्र उवाच
०४२४०२७१ यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम्
०४२४०२७२ अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम्
०४२४०२८१ यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात्
०४२४०२८२ भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे
०४२४०२९१ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेति ततः परं हि माम्
०४२४०२९२ अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये
०४२४०३०१ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा
०४२४०३०२ न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित्
०४२४०३११ इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम्
०४२४०३१२ निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः
०४२४०३२० मैत्रेय उवाच

०४२४०३२१ इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः
०४२४०३२२ बद्धाञ्जलीन्राजपुत्रान्नारायणपरो वचः
०४२४०३३० श्रीरुद्र उवाच
०४२४०३३१ जितं त आत्मविद्वर्य स्वस्तये स्वस्तिरस्तु मे
०४२४०३३२ भवताराधसा राद्धं सर्वस्मा आत्मने नमः
०४२४०३४१ नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने
०४२४०३४२ वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे
०४२४०३५१ सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च
०४२४०३५२ नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने
०४२४०३६१ नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने
०४२४०३६२ नमः परमहंसाय पूर्णाय निभृतात्मने
०४२४०३७१ स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः
०४२४०३७२ नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे
०४२४०३८१ नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे
०४२४०३८२ तृप्तिदाय च जीवानां नमः सर्वरसात्मने
०४२४०३९१ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे
०४२४०३९२ नमस्त्रैलोक्यपालाय सह ओजोबलाय च
०४२४०४०१ अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने
०४२४०४०२ नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे
०४२४०४११ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे
०४२४०४१२ नमोऽधर्मविपाकाय मृत्यवे दुःखदाय च
०४२४०४२१ नमस्त आशिषामीश मनवे कारणात्मने
०४२४०४२२ नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे
०४२४०४२३ पुरुषाय पुराणाय साङ्ख्ययोगेश्वराय च
०४२४०४३१ शक्तित्रयसमेताय मीढुषेऽहङ्कृतात्मने
०४२४०४३२ चेतआकूतिरूपाय नमो वाचो विभूतये
०४२४०४४१ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम्
०४२४०४४२ रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम्
०४२४०४५१ स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसङ्ग्रहम्
०४२४०४५२ चार्वायतचतुर्बाहु सुजातरुचिराननम्
०४२४०४६१ पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम्

०४२४०४६२ सुद्विजं सुकपोलास्यं समकर्णविभूषणम्
०४२४०४७१ प्रीतिप्रहसितापाङ्गमलकै रूपशोभितम्
०४२४०४७२ लसत्पङ्कजकिञ्जल्क दुकूलं मृष्टकुण्डलम्
०४२४०४८१ स्फुरत्किरीटवलय हारनूपुरमेखलम्
०४२४०४८२ शङ्खचक्रगदापद्म मालामण्युत्तमर्द्धिमत्
०४२४०४९१ सिंहस्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम्
०४२४०४९२ श्रियानपायिन्या क्षिप्त निकषाश्मोरसोल्लसत्
०४२४०५०१ पूररेचकसंविग्न वलिवल्गुदलोदरम्
०४२४०५०२ प्रतिसङ्क्रामयद्विश्वं नाभ्यावर्तगभीरया
०४२४०५११ श्यामश्रोण्यधिरोचिष्णु दुकूलस्वर्णमेखलम्
०४२४०५१२ समचार्वङ्घ्रिजङ्घोरु निम्नजानुसुदर्शनम्
०४२४०५२१ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता
०४२४०५२२ प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम्
०४२४०५३१ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम्
०४२४०५३२ यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम्
०४२४०५४१ भवान्भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम्
०४२४०५४२ स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः
०४२४०५५१ तं दुराराध्यमाराध्य सतामपि दुरापया
०४२४०५५२ एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः
०४२४०५६१ यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते
०४२४०५६२ विश्वं विध्वंसयन्वीर्य शौर्यविस्फूर्जितभ्रुवा
०४२४०५७१ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम्
०४२४०५७२ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः
०४२४०५८१ अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम्
०४२४०५८२ भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव
०४२४०५९१ न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत्
०४२४०५९२ यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम्
०४२४०६०१ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत्
०४२४०६०२ तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम्
०४२४०६११ यो माययेदं पुरुरूपयासृजद्बिभर्ति भूयः क्षपयत्यविक्रियः
०४२४०६१२ यद्भेदबुद्धिः सदिवात्मदुःस्थया त्वमात्मतन्त्रं भगवन्प्रतीमहि

०४२४०६२१ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये
०४२४०६२२ भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः
०४२४०६३१ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते
०४२४०६३२ महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः
०४२४०६४१ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन
०४२४०६४२ अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं यः
०४२४०६५१ स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः
०४२४०६५२ भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः
०४२४०६६१ प्रमत्तमुच्चैरिति कृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्
०४२४०६६२ त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः
०४२४०६७१ कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः
०४२४०६७२ विशङ्कयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश
०४२४०६८१ अथ त्वमसि नो ब्रह्मन्परमात्मन्विपश्चिताम्
०४२४०६८२ विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः
०४२४०६९१ इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः
०४२४०६९२ स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः
०४२४०७०१ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम्
०४२४०७०२ पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम्
०४२४०७११ योगादेशमुपासाद्य धारयन्तो मुनिव्रताः
०४२४०७१२ समाहितधियः सर्व एतदभ्यसतादृताः
०४२४०७२१ इदमाह पुरास्माकं भगवान्विश्वसृक्पतिः
०४२४०७२२ भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम्
०४२४०७३१ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः
०४२४०७३२ अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः
०४२४०७४१ अथेदं नित्यदा युक्तो जपन्नवहितः पुमान्
०४२४०७४२ अचिराच्छ्रेय आप्नोति वासुदेवपरायणः
०४२४०७५१ श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम्
०४२४०७५२ सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम्
०४२४०७६१ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम्
०४२४०७६२ अधीयानो दुराराध्यं हरिमाराधयत्यसौ
०४२४०७७१ विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम्

०४२४०७७२ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात्
०४२४०७८१ इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः
०४२४०७८२ शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः
०४२४०७९१ गीतं मयेदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम्
०४२४०७९२ जपन्त एकाग्रधियस्तपो महत्चरध्वमन्ते तत आप्स्यथेप्सितम्
०४२५००१० मैत्रेय उवाच
०४२५००११ इति सन्दिश्य भगवान्बार्हिषदैरभिपूजितः
०४२५००१२ पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः
०४२५००२१ रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः
०४२५००२२ जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले
०४२५००३१ प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम्
०४२५००३२ नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत्
०४२५००४१ श्रेयस्त्वं कतमद्राजन्कर्मणात्मन ईहसे
०४२५००४२ दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते
०४२५००५० राजोवाच
०४२५००५१ न जानामि महाभाग परं कर्मापविद्धधीः
०४२५००५२ ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः
०४२५००६१ गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः
०४२५००६२ न परं विन्दते मूढो भ्राम्यन्संसारवर्त्मसु
०४२५००७० नारद उवाच
०४२५००७१ भो भोः प्रजापते राजन्पशून्पश्य त्वयाध्वरे
०४२५००७२ संज्ञापिताञ्जीवसङ्घान्निर्घृणेन सहस्रशः
०४२५००८१ एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव
०४२५००८२ सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः
०४२५००९१ अत्र ते कथयिष्येऽमुमितिहासं पुरातनम्
०४२५००९२ पुरञ्जनस्य चरितं निबोध गदतो मम
०४२५०१०१ आसीत्पुरञ्जनो नाम राजा राजन्बृहच्छ्रवाः
०४२५०१०२ तस्याविज्ञातनामासीत्सखाविज्ञातचेष्टितः
०४२५०१११ सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः
०४२५०११२ नानुरूपं यदाविन्ददभूत्स विमना इव
०४२५०१२१ न साधु मेने ताः सर्वा भूतले यावतीः पुरः

०४२५०१२२ कामान्कामयमानोऽसौ तस्य तस्योपपत्तये
०४२५०१३१ स एकदा हिमवतो दक्षिणेष्वथ सानुषु
०४२५०१३२ ददर्श नवभिर्द्वार्भिः पुरं लक्षितलक्षणाम्
०४२५०१४१ प्राकारोपवनाट्टाल परिखैरक्षतोरणैः
०४२५०१४२ स्वर्णरौप्यायसैः शृङ्गैः सङ्कुलां सर्वतो गृहैः
०४२५०१५१ नीलस्फटिकवैदूर्य मुक्तामरकतारुणैः
०४२५०१५२ क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव
०४२५०१६१ सभाचत्वररथ्याभिराक्रीडायतनापणैः
०४२५०१६२ चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः
०४२५०१७१ पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले
०४२५०१७२ नदद्विहङ्गालिकुल कोलाहलजलाशये
०४२५०१८१ हिमनिर्झरविप्रुष्मत् कुसुमाकरवायुना
०४२५०१८२ चलत्प्रवालविटप नलिनीतटसम्पदि
०४२५०१९१ नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः
०४२५०१९२ आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः
०४२५०२०१ यदृच्छयागतां तत्र ददर्श प्रमदोत्तमाम्
०४२५०२०२ भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः
०४२५०२११ अश्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः
०४२५०२१२ अन्वेषमाणामृषभमप्रौढां कामरूपिणीम्
०४२५०२२१ सुनासां सुदतीं बालां सुकपोलां वराननाम्
०४२५०२२२ समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियम्
०४२५०२३१ पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम्
०४२५०२३२ पद्भ्यां क्वणद्भ्यां चलन्तीं नूपुरैर्देवतामिव
०४२५०२४१ स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ
०४२५०२४२ वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम्
०४२५०२५१ तामाह ललितं वीरः सव्रीडस्मितशोभनाम्
०४२५०२५२ स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा
०४२५०२६१ का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति
०४२५०२६२ इमामुप पुरीं भीरु किं चिकीर्षसि शंस मे
०४२५०२७१ क एतेऽनुपथा ये त एकादश महाभटाः
०४२५०२७२ एता वा ललनाः सुभ्रु कोऽयं तेऽहिः पुरःसरः

०४२५०२८१ त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने
०४२५०२८२ त्वदङ्घ्रिकामाप्तसमस्तकामं क्व पद्मकोशः पतितः कराग्रात्
०४२५०२९१ नासां वरोर्वन्यतमा भुविस्पृक्पुरीमिमां वीरवरेण साकम्
०४२५०२९२ अर्हस्यलङ्कर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा
०४२५०३०१ यदेष मापाङ्गविखण्डितेन्द्रियं सव्रीडभावस्मितविभ्रमद्भ्रुवा
०४२५०३०२ त्वयोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथानुगृहाण शोभने
०४२५०३११ त्वदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकवृन्दसंवृतम्
०४२५०३१२ उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाभिमुखं शुचिस्मिते
०४२५०३२० नारद उवाच
०४२५०३२१ इत्थं पुरञ्जनं नारी याचमानमधीरवत्
०४२५०३२२ अभ्यनन्दत तं वीरं हसन्ती वीर मोहिता
०४२५०३३१ न विदाम वयं सम्यक्कर्तारं पुरुषर्षभ
०४२५०३३२ आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम्
०४२५०३४१ इहाद्य सन्तमात्मानं विदाम न ततः परम्
०४२५०३४२ येनेयं निर्मिता वीर पुरी शरणमात्मनः
०४२५०३५१ एते सखायः सख्यो मे नरा नार्यश्च मानद
०४२५०३५२ सुप्तायां मयि जागर्ति नागोऽयं पालयन्पुरीम्
०४२५०३६१ दिष्ट्यागतोऽसि भद्रं ते ग्राम्यान्कामानभीप्ससे
०४२५०३६२ उद्वहिष्यामि तांस्तेऽहं स्वबन्धुभिररिन्दम
०४२५०३७१ इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो
०४२५०३७२ मयोपनीतान्गृह्णानः कामभोगान्शतं समाः
०४२५०३८१ कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम्
०४२५०३८२ असम्परायाभिमुखमश्वस्तनविदं पशुम्
०४२५०३९१ धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः
०४२५०३९२ लोका विशोका विरजा यान्न केवलिनो विदुः
०४२५०४०१ पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह
०४२५०४०२ क्षेम्यं वदन्ति शरणं भवेऽस्मिन्यद्गृहाश्रमः
०४२५०४११ का नाम वीर विख्यातं वदान्यं प्रियदर्शनम्
०४२५०४१२ न वृणीत प्रियं प्राप्तं मादृशी त्वादृशं पतिम्
०४२५०४२१ कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज
०४२५०४२२ योऽनाथवर्गाधिमलं घृणोद्धत स्मितावलोकेन चरत्यपोहितुम्

०४२५०४३० नारद उवाच
०४२५०४३१ इति तौ दम्पती तत्र समुद्य समयं मिथः
०४२५०४३२ तां प्रविश्य पुरीं राजन्मुमुदाते शतं समाः
०४२५०४४१ उपगीयमानो ललितं तत्र तत्र च गायकैः
०४२५०४४२ क्रीडन्परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ
०४२५०४५१ सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः
०४२५०४५२ पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः
०४२५०४६१ पञ्च द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा
०४२५०४६२ पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये
०४२५०४७१ खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते
०४२५०४७२ विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः
०४२५०४८१ नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते
०४२५०४८२ अवधूतसखस्ताभ्यां विषयं याति सौरभम्
०४२५०४९१ मुख्या नाम पुरस्ताद्द्वास्तयापणबहूदनौ
०४२५०४९२ विषयौ याति पुरराड्रसज्ञविपणान्वितः
०४२५०५०१ पितृहूर्नृप पुर्या द्वार्दक्षिणेन पुरञ्जनः
०४२५०५०२ राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः
०४२५०५११ देवहूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः
०४२५०५१२ राष्ट्रमुत्तरपञ्चालं याति श्रुतधरान्वितः
०४२५०५२१ आसुरी नाम पश्चाद्द्वास्तया याति पुरञ्जनः
०४२५०५२२ ग्रामकं नाम विषयं दुर्मदेन समन्वितः
०४२५०५३१ निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः
०४२५०५३२ वैशसं नाम विषयं लुब्धकेन समन्वितः
०४२५०५४१ अन्धावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ
०४२५०५४२ अक्षण्वतामधिपतिस्ताभ्यां याति करोति च
०४२५०५५१ स यर्ह्यन्तःपुरगतो विषूचीनसमन्वितः
०४२५०५५२ मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम्
०४२५०५६१ एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः
०४२५०५६२ महिषी यद्यदीहेत तत्तदेवान्ववर्तत
०४२५०५७१ क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः
०४२५०५७२ अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षिति

०४२५०५८१ क्वचिद्गायति गायन्त्यां रुदत्यां रुदति क्वचित्
०४२५०५८२ क्वचिद्धसन्त्यां हसति जल्पन्त्यामनु जल्पति
०४२५०५९१ क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनु तिष्ठति
०४२५०५९२ अनु शेते शयानायामन्वास्ते क्वचिदासतीम्
०४२५०६०१ क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनु पश्यति
०४२५०६०२ क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित्
०४२५०६११ क्वचिच्च शोचतीं जायामनु शोचति दीनवत्
०४२५०६१२ अनु हृष्यति हृष्यन्त्यां मुदितामनु मोदते
०४२५०६२१ विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः
०४२५०६२२ नेच्छन्ननुकरोत्यज्ञः क्लैब्यात्क्रीडामृगो यथा
०४२६००१० नारद उवाच
०४२६००११ स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम्
०४२६००१२ द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम्
०४२६००२१ एकरश्म्येकदमनमेकनीडं द्विकूबरम्
०४२६००२२ पञ्चप्रहरणं सप्त वरूथं पञ्चविक्रमम्
०४२६००३१ हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः
०४२६००३२ एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम्
०४२६००४१ चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः
०४२६००४२ विहाय जायामतदर्हां मृगव्यसनलालसः
०४२६००५१ आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः
०४२६००५२ न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान्
०४२६००६१ तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्पशून्वने
०४२६००६२ यावदर्थमलं लुब्धो हन्यादिति नियम्यते
०४२६००७१ य एवं कर्म नियतं विद्वान्कुर्वीत मानवः
०४२६००७२ कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते
०४२६००८१ अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते
०४२६००८२ गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः
०४२६००९१ तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः
०४२६००९२ विप्लवोऽभूद्दुःखितानां दुःसहः करुणात्मनाम्
०४२६०१०१ शशान्वराहान्महिषान्गवयान्रुरुशल्यकान्
०४२६०१०२ मेध्यानन्यांश्च विविधान्विनिघ्नन्श्रममध्यगात्

०४२६०१११ ततः क्षुत्तृड्परिश्रान्तो निवृत्तो गृहमेयिवान्
०४२६०११२ कृतस्नानोचिताहारः संविवेश गतक्लमः
०४२६०१२१ आत्मानमर्हयां चक्रे धूपालेपस्रगादिभिः
०४२६०१२२ साध्वलङ्कृतसर्वाङ्गो महिष्यामादधे मनः
०४२६०१३१ तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः
०४२६०१३२ न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम्
०४२६०१४१ अन्तःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत्
०४२६०१४२ अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा
०४२६०१५१ न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः
०४२६०१५२ यदि न स्याद्गृहे माता पत्नी वा पतिदेवता
०४२६०१५३ व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत्
०४२६०१६१ क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे
०४२६०१६२ या मामुद्धरते प्रज्ञां दीपयन्ती पदे पदे
०४२६०१७० रामा ऊचुः
०४२६०१७१ नरनाथ न जानीमस्त्वत्प्रिया यद्व्यवस्यति
०४२६०१७२ भूतले निरवस्तारे शयानां पश्य शत्रुहन्
०४२६०१८० नारद उवाच
०४२६०१८१ पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि
०४२६०१८२ तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ
०४२६०१९१ सान्त्वयन्श्लक्ष्णया वाचा हृदयेन विदूयता
०४२६०१९२ प्रेयस्याः स्नेहसंरम्भ लिङ्गमात्मनि नाभ्यगात्
०४२६०२०१ अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः
०४२६०२०२ पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम्
०४२६०२१० पुरञ्जन उवाच
०४२६०२११ नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे
०४२६०२१२ कृतागःस्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते
०४२६०२२१ परमोऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः
०४२६०२२२ बालो न वेद तत्तन्वि बन्धुकृत्यममर्षणः
०४२६०२३१ सा त्वं मुखं सुदति सुभ्र्वनुरागभार व्रीडाविलम्बविलसद्धसितावलोकम्
०४२६०२३२ नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम्
०४२६०२४१ तस्मिन्दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम्

०४२६०२४२ पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात्
०४२६०२५१ वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम्
०४२६०२५२ पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम्
०४२६०२६१ तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य
०४२६०२६२ का देवरं वशगतं कुसुमास्त्रवेग विस्रस्तपौंस्नमुशती न भजेत कृत्ये
०४२७००१० नारद उवाच
०४२७००११ इत्थं पुरञ्जनं सध्र्यग्वशमानीय विभ्रमैः
०४२७००१२ पुरञ्जनी महाराज रेमे रमयती पतिम्
०४२७००२१ स राजा महिषीं राजन्सुस्नातां रुचिराननाम्
०४२७००२२ कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम्
०४२७००३१ तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः
०४२७००३२ न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः
०४२७००४१ शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः
०४२७००४२ तामेव वीरो मनुते परं यतस्तमोऽभिभूतो न निजं परं च यत्
०४२७००५१ तयैवं रममाणस्य कामकश्मलचेतसः
०४२७००५२ क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः
०४२७००६१ तस्यामजनयत्पुत्रान्पुरञ्जन्यां पुरञ्जनः
०४२७००६२ शतान्येकादश विराडायुषोऽर्धमथात्यगात्
०४२७००७१ दुहितृर्दशोत्तरशतं पितृमातृयशस्करीः
०४२७००७२ शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते
०४२७००८१ स पञ्चालपतिः पुत्रान्पितृवंशविवर्धनान्
०४२७००८२ दारैः संयोजयामास दुहितृः सदृशैर्वरैः
०४२७००९१ पुत्राणां चाभवन्पुत्रा एकैकस्य शतं शतम्
०४२७००९२ यैर्वै पौरञ्जनो वंशः पञ्चालेषु समेधितः
०४२७०१०१ तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु
०४२७०१०२ निरूढेन ममत्वेन विषयेष्वन्वबध्यत
०४२७०१११ ईजे च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः
०४२७०११२ देवान्पितृन्भूतपतीन्नानाकामो यथा भवान्
०४२७०१२१ युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः
०४२७०१२२ आससाद स वै कालो योऽप्रियः प्रिययोषिताम्
०४२७०१३१ चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप

०४२७०१३२ गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम्
०४२७०१४१ गन्धर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः
०४२७०१४२ परिवृत्त्या विलुम्पन्ति सर्वकामविनिर्मिताम्
०४२७०१५१ ते चण्डवेगानुचराः पुरञ्जनपुरं यदा
०४२७०१५२ हर्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः
०४२७०१६१ स सप्तभिः शतैरेको विंशत्या च शतं समाः
०४२७०१६२ पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली
०४२७०१७१ क्षीयमाणे स्वसम्बन्धे एकस्मिन्बहुभिर्युधा
०४२७०१७२ चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः
०४२७०१८१ स एव पुर्यां मधुभुक्पञ्चालेषु स्वपार्षदैः
०४२७०१८२ उपनीतं बलिं गृह्णन्स्त्रीजितो नाविदद्भयम्
०४२७०१९१ कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती
०४२७०१९२ पर्यटन्ती न बर्हिष्मन्प्रत्यनन्दत कश्चन
०४२७०२०१ दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा
०४२७०२०२ या तुष्टा राजर्षये तु वृतादात्पूरवे वरम्
०४२७०२११ कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम्
०४२७०२१२ वव्रे बृहद्व्रतं मां तु जानती काममोहिता
०४२७०२२१ मयि संरभ्य विपुल मदाच्छापं सुदुःसहम्
०४२७०२२२ स्थातुमर्हसि नैकत्र मद्याञ्चाविमुखो मुने
०४२७०२३१ ततो विहतसङ्कल्पा कन्यका यवनेश्वरम्
०४२७०२३२ मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम्
०४२७०२४१ ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम्
०४२७०२४२ सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति
०४२७०२५१ द्वाविमावनुशोचन्ति बालावसदवग्रहौ
०४२७०२५२ यल्लोकशास्त्रोपनतं न राति न तदिच्छति
०४२७०२६१ अथो भजस्व मां भद्र भजन्तीं मे दयां कुरु
०४२७०२६२ एतावान्पौरुषो धर्मो यदार्ताननुकम्पते
०४२७०२७१ कालकन्योदितवचो निशम्य यवनेश्वरः
०४२७०२७२ चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत
०४२७०२८१ मया निरूपितस्तुभ्यं पतिरात्मसमाधिना
०४२७०२८२ नाभिनन्दति लोकोऽयं त्वामभद्रामसम्मताम्

०४२७०२९१ त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम्
०४२७०२९२ या हि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि
०४२७०३०१ प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव
०४२७०३०२ चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः
०४२८००१० नारद उवाच
०४२८००११ सैनिका भयनाम्नो ये बर्हिष्मन्दिष्टकारिणः
०४२८००१२ प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम्
०४२८००२१ त एकदा तु रभसा पुरञ्जनपुरीं नृप
०४२८००२२ रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम्
०४२८००३१ कालकन्यापि बुभुजे पुरञ्जनपुरं बलात्
०४२८००३२ ययाभिभूतः पुरुषः सद्यो निःसारतामियात्
०४२८००४१ तयोपभुज्यमानां वै यवनाः सर्वतोदिशम्
०४२८००४२ द्वार्भिः प्रविश्य सुभृशं प्रार्दयन्सकलां पुरीम्
०४२८००५१ तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः
०४२८००५२ अवापोरुविधांस्तापान्कुटुम्बी ममताकुलः
०४२८००६१ कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः
०४२८००६२ नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात्
०४२८००७१ विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान्
०४२८००७२ पुत्रान्पौत्रानुगामात्याञ्जायां च गतसौहृदाम्
०४२८००८१ आत्मानं कन्यया ग्रस्तं पञ्चालानरिदूषितान्
०४२८००८२ दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम्
०४२८००९१ कामानभिलषन्दीनो यातयामांश्च कन्यया
०४२८००९२ विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन्
०४२८०१०१ गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम्
०४२८०१०२ हातुं प्रचक्रमे राजा तां पुरीमनिकामतः
०४२८०१११ भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः
०४२८०११२ ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया
०४२८०१२१ तस्यां सन्दह्यमानायां सपौरः सपरिच्छदः
०४२८०१२२ कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः
०४२८०१३१ यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया
०४२८०१३२ पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत

०४२८०१४१ न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः
०४२८०१४२ गन्तुमैच्छत्ततो वृक्ष कोटरादिव सानलात्
०४२८०१५१ शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः
०४२८०१५२ यवनैररिभी राजन्नुपरुद्धो रुरोद ह
०४२८०१६१ दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान्
०४२८०१६२ स्वत्वावशिष्टं यत्किञ्चिद्गृहकोशपरिच्छदम्
०४२८०१७१ अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही
०४२८०१७२ दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते
०४२८०१८१ लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी
०४२८०१८२ वर्तिष्यते कथं त्वेषा बालकाननुशोचती
०४२८०१९१ न मय्यनाशिते भुङ्क्ते नास्नाते स्नाति मत्परा
०४२८०१९२ मयि रुष्टे सुसन्त्रस्ता भर्त्सिते यतवाग्भयात्
०४२८०२०१ प्रबोधयति माविज्ञं व्युषिते शोककर्शिता
०४२८०२०२ वर्त्मैतद्गृहमेधीयं वीरसूरपि नेष्यति
०४२८०२११ कथं नु दारका दीना दारकीर्वापरायणाः
०४२८०२१२ वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ
०४२८०२२१ एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम्
०४२८०२२२ ग्रहीतुं कृतधीरेनं भयनामाभ्यपद्यत
०४२८०२३१ पशुवद्यवनैरेष नीयमानः स्वकं क्षयम्
०४२८०२३२ अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः
०४२८०२४१ पुरीं विहायोपगत उपरुद्धो भुजङ्गमः
०४२८०२४२ यदा तमेवानु पुरी विशीर्णा प्रकृतिं गता
०४२८०२५१ विकृष्यमाणः प्रसभं यवनेन बलीयसा
०४२८०२५२ नाविन्दत्तमसाविष्टः सखायं सुहृदं पुरः
०४२८०२६१ तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना
०४२८०२६२ कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य तत्
०४२८०२७१ अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः
०४२८०२७२ शाश्वतीरनुभूयार्तिं प्रमदासङ्गदूषितः
०४२८०२८१ तामेव मनसा गृह्णन्बभूव प्रमदोत्तमा
०४२८०२८२ अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि
०४२८०२९१ उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः

०४२८०२९२ युधि निर्जित्य राजन्यान्पाण्ड्यः परपुरञ्जयः
०४२८०३०१ तस्यां स जनयां चक्र आत्मजामसितेक्षणाम्
०४२८०३०२ यवीयसः सप्त सुतान्सप्त द्रविडभूभृतः
०४२८०३११ एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम्
०४२८०३१२ भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम्
०४२८०३२१ अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम्
०४२८०३२२ यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः
०४२८०३३१ विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः
०४२८०३३२ आरिराधयिषुः कृष्णं स जगाम कुलाचलम्
०४२८०३४१ हित्वा गृहान्सुतान्भोगान्वैदर्भी मदिरेक्षणा
०४२८०३४२ अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम्
०४२८०३५१ तत्र चन्द्रवसा नाम ताम्रपर्णी वटोदका
०४२८०३५२ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन्
०४२८०३६१ कन्दाष्टिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः
०४२८०३६२ वर्तमानः शनैर्गात्र कर्शनं तप आस्थितः
०४२८०३७१ शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये
०४२८०३७२ सुखदुःखे इति द्वन्द्वान्यजयत्समदर्शनः
०४२८०३८१ तपसा विद्यया पक्व कषायो नियमैर्यमैः
०४२८०३८२ युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः
०४२८०३९१ आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः
०४२८०३९२ वासुदेवे भगवति नान्यद्वेदोद्वहन्रतिम्
०४२८०४०१ स व्यापकतयात्मानं व्यतिरिक्ततयात्मनि
०४२८०४०२ विद्वान्स्वप्न इवामर्श साक्षिणं विरराम ह
०४२८०४११ साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप
०४२८०४१२ विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम्
०४२८०४२१ परे ब्रह्मणि चात्मानं परं ब्रह्म तथात्मनि
०४२८०४२२ वीक्षमाणो विहायेक्षामस्मादुपरराम ह
०४२८०४३१ पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम्
०४२८०४३२ प्रेम्णा पर्यचरद्धित्वा भोगान्सा पतिदेवता
०४२८०४४१ चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा
०४२८०४४२ बभावुप पतिं शान्ता शिखा शान्तमिवानलम्

०४२८०४५१ अजानती प्रियतमं यदोपरतमङ्गना
०४२८०४५२ सुस्थिरासनमासाद्य यथापूर्वमुपाचरत्
०४२८०४६१ यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती
०४२८०४६२ आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा
०४२८०४७१ आत्मानं शोचती दीनमबन्धुं विक्लवाश्रुभिः
०४२८०४७२ स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा
०४२८०४८१ उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम्
०४२८०४८२ दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि
०४२८०४९१ एवं विलपन्ती बाला विपिनेऽनुगता पतिम्
०४२८०४९२ पतिता पादयोर्भर्तू रुदत्यश्रूण्यवर्तयत्
०४२८०५०१ चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम्
०४२८०५०२ आदीप्य चानुमरणे विलपन्ती मनो दधे
०४२८०५११ तत्र पूर्वतरः कश्चित्सखा ब्राह्मण आत्मवान्
०४२८०५१२ सान्त्वयन्वल्गुना साम्ना तामाह रुदतीं प्रभो
०४२८०५२० ब्राह्मण उवाच
०४२८०५२१ का त्वं कस्यासि को वायं शयानो यस्य शोचसि
०४२८०५२२ जानासि किं सखायं मां येनाग्रे विचचर्थ ह
०४२८०५३१ अपि स्मरसि चात्मानमविज्ञातसखं सखे
०४२८०५३२ हित्वा मां पदमन्विच्छन्भौमभोगरतो गतः
०४२८०५४१ हंसावहं च त्वं चार्य सखायौ मानसायनौ
०४२८०५४२ अभूतामन्तरा वौकः सहस्रपरिवत्सरान्
०४२८०५५१ स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम्
०४२८०५५२ विचरन्पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया
०४२८०५६१ पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम्
०४२८०५६२ षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम्
०४२८०५७१ पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो
०४२८०५७२ तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसङ्ग्रहः
०४२८०५८१ विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया
०४२८०५८२ शक्त्यधीशः पुमांस्त्वत्र प्रविष्टो नावबुध्यते
०४२८०५९१ तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः
०४२८०५९२ तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं प्रभो

०४२८०६०१ न त्वं विदर्भदुहिता नायं वीरः सुहृत्तव
०४२८०६०२ न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया
०४२८०६११ माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम्
०४२८०६१२ मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम्
०४२८०६२१ अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः
०४२८०६२२ न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि
०४२८०६३१ यथा पुरुष आत्मानमेकमादर्शचक्षुषोः
०४२८०६३२ द्विधाभूतमवेक्षेत तथैवान्तरमावयोः
०४२८०६४१ एवं स मानसो हंसो हंसेन प्रतिबोधितः
०४२८०६४२ स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम्
०४२८०६५१ बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम्
०४२८०६५२ यत्परोक्षप्रियो देवो भगवान्विश्वभावनः
०४२९००१० प्राचीनबर्हिरुवाच
०४२९००११ भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते
०४२९००१२ कवयस्तद्विजानन्ति न वयं कर्ममोहिताः
०४२९००२० नारद उवाच
०४२९००२१ पुरुषं पुरञ्जनं विद्याद्यद्व्यनक्त्यात्मनः पुरम्
०४२९००२२ एकद्वित्रिचतुष्पादं बहुपादमपादकम्
०४२९००३१ योऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः
०४२९००३२ यन्न विज्ञायते पुम्भिर्नामभिर्वा क्रियागुणैः
०४२९००४१ यदा जिघृक्षन्पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान्
०४२९००४२ नवद्वारं द्विहस्ताङ्घ्रि तत्रामनुत साध्विति
०४२९००५१ बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम्
०४२९००५२ यामधिष्ठाय देहेऽस्मिन्पुमान्भुङ्क्तेऽक्षभिर्गुणान्
०४२९००६१ सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम्
०४२९००६२ सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः
०४२९००७१ बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम्
०४२९००७२ पञ्चालाः पञ्च विषया यन्मध्ये नवखं पुरम्
०४२९००८१ अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति
०४२९००८२ द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः
०४२९००९१ अक्षिणी नासिके आस्यमिति पञ्च पुरः कृताः

०४२९००९२ दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः
०४२९०१०१ पश्चिमे इत्यधो द्वारौ गुदं शिश्नमिहोच्यते
०४२९०१०२ खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते
०४२९०१०३ रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः
०४२९०१११ नलिनी नालिनी नासे गन्धः सौरभ उच्यते
०४२९०११२ घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः
०४२९०१२१ आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम्
०४२९०१२२ पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः
०४२९०१३१ प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम्
०४२९०१३२ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत्
०४२९०१४१ आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः
०४२९०१४२ उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते
०४२९०१५१ वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु
०४२९०१५२ हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च
०४२९०१६१ अन्तःपुरं च हृदयं विषूचिर्मन उच्यते
०४२९०१६२ तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः
०४२९०१७१ यथा यथा विक्रियते गुणाक्तो विकरोति वा
०४२९०१७२ तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते
०४२९०१८१ देहो रथस्त्विन्द्रियाश्वः संवत्सररयोऽगतिः
०४२९०१८२ द्विकर्मचक्रस्त्रिगुण ध्वजः पञ्चासुबन्धुरः
०४२९०१९१ मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः
०४२९०१९२ पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः
०४२९०२०१ आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति
०४२९०२०२ एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत्
०४२९०२११ संवत्सरश्चण्डवेगः कालो येनोपलक्षितः
०४२९०२१२ तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः
०४२९०२१३ हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम्
०४२९०२२१ कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति
०४२९०२२२ स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः
०४२९०२३१ आधयो व्याधयस्तस्य सैनिका यवनाश्चराः
०४२९०२३२ भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः

०४२९०२४१ एवं बहुविधैर्दुःखैर्दैवभूतात्मसम्भवैः
०४२९०२४२ क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः
०४२९०२५१ प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः
०४२९०२५२ शेते कामलवान्ध्यायन्ममाहमिति कर्मकृत्
०४२९०२६१ यदात्मानमविज्ञाय भगवन्तं परं गुरुम्
०४२९०२६२ पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक्
०४२९०२७१ गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः
०४२९०२७२ शुक्लं कृष्णं लोहितं वा यथाकर्माभिजायते
०४२९०२८१ शुक्लात्प्रकाशभूयिष्ठा लोकानाप्नोति कर्हिचित्
०४२९०२८२ दुःखोदर्कान्क्रियायासांस्तमःशोकोत्कटान्क्वचित्
०४२९०२९१ क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः
०४२९०२९२ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः
०४२९०३०१ क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम्
०४२९०३०२ चरन्विन्दति यद्दिष्टं दण्डमोदनमेव वा
०४२९०३११ तथा कामाशयो जीव उच्चावचपथा भ्रमन्
०४२९०३१२ उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम्
०४२९०३२१ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु
०४२९०३२२ जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया
०४२९०३३१ यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन्
०४२९०३३२ तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः
०४२९०३४१ नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम्
०४२९०३४२ द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ
०४२९०३५१ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते
०४२९०३५२ मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा
०४२९०३६१ अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा
०४२९०३६२ संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ
०४२९०३७१ वासुदेवे भगवति भक्तियोगः समाहितः
०४२९०३७२ सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति
०४२९०३८१ सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः
०४२९०३८२ शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः
०४२९०३९१ यत्र भागवता राजन्साधवो विशदाशयाः

०४२९०३९२ भगवद्गुणानुकथन श्रवणव्यग्रचेतसः
०४२९०४०१ तस्मिन्महन्मुखरिता मधुभिच् चरित्रपीयूषशेषसरितः परितः स्रवन्ति
०४२९०४०२ ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः
०४२९०४११ एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः
०४२९०४१२ न करोति हरेर्नूनं कथामृतनिधौ रतिम्
०४२९०४२१ प्रजापतिपतिः साक्षाद्भगवान्गिरिशो मनुः
०४२९०४२२ दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः
०४२९०४३१ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः
०४२९०४३२ भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः
०४२९०४४१ अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः
०४२९०४४२ पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम्
०४२९०४५१ शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे
०४२९०४५२ मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम्
०४२९०४६१ सर्वेषामेव जन्तूनां सततं देहपोषणे vedabase 4.29.1a)
०४२९०४६२ अस्ति प्रज्ञा समायत्ता को विशेषस्तदा नृणाम् vedabase 4.29.1a)
०४२९०४७१ लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम् vedabase 4.29.2a)
०४२९०४७२ आत्मसृत्या विहायेदं जीवात्मा स विशिष्यते vedabase 4.29.2a)
०४२९०४६१ यदा यस्यानुगृह्णाति भगवानात्मभावितः
०४२९०४६२ स जहाति मतिं लोके वेदे च परिनिष्ठिताम्
०४२९०४७१ तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु
०४२९०४७२ मार्थदृष्टिं कृथाः श्रोत्र स्पर्शिष्वस्पृष्टवस्तुषु
०४२९०४८१ स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः
०४२९०४८२ आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः
०४२९०४९१ आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम्
०४२९०४९२ स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम्
०४२९०४९३ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया
०४२९०५०१ हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः
०४२९०५०२ तत्पादमूलं शरणं यतः क्षेमो नृणामिह
०४२९०५११ स वै प्रियतमश्चात्मा यतो न भयमण्वपि
०४२९०५१२ इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः
०४२९०५२० नारद उवाच

०४२९०५२१ प्रश्न एवं हि सञ्छिन्नो भवतः पुरुषर्षभ
०४२९०५२२ अत्र मे वदतो गुह्यं निशामय सुनिश्चितम्
०४२९०५३१ क्षुद्रं चरं सुमनसां शरणे मिथित्वा
०४२९०५३२ रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम्
०४२९०५३३ अग्रे वृकानसुतृपोऽविगणय्य यान्तं
०४२९०५३४ पृष्ठे मृगं मृगय लुब्धकबाणभिन्नम्
०४२९०५४१ अस्यार्थः सुमनःसमधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्व्यौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशित मनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान्काललवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तः शरेण यमिह पराविध्यति तमिममात्मानमहो राजन्भिन्नहृदयं द्रष्टुमर्हसीति
०४२९०५५१ स त्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्तश्
०४२९०५५२ चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते
०४२९०५५३ जह्यङ्गनाश्रममसत्तमयूथगाथं
०४२९०५५४ प्रीणीहि हंसशरणं विरम क्रमेण
०४२९०५६० राजोवाच
०४२९०५६१ श्रुतमन्वीक्षितं ब्रह्मन्भगवान्यदभाषत
०४२९०५६२ नैतज्जानन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि
०४२९०५७१ संशयोऽत्र तु मे विप्र सञ्छिन्नस्तत्कृतो महान्
०४२९०५७२ ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः
०४२९०५८१ कर्माण्यारभते येन पुमानिह विहाय तम्
०४२९०५८२ अमुत्रान्येन देहेन जुष्टानि स यदश्नुते
०४२९०५९१ इति वेदविदां वादः श्रूयते तत्र तत्र ह
०४२९०५९२ कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते
०४२९०६०० नारद उवाच
०४२९०६०१ येनैवारभते कर्म तेनैवामुत्र तत्पुमान्
०४२९०६०२ भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम्
०४२९०६११ शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा
०४२९०६१२ कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा
०४२९०६२१ ममैते मनसा यद्यदसावहमिति ब्रुवन्

०४२९०६२२ गृह्णीयात्तत्पुमान्राद्धं कर्म येन पुनर्भवः
०४२९०६३१ यथानुमीयते चित्तमुभयैरिन्द्रियेहितैः
०४२९०६३२ एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः
०४२९०६४१ नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम्
०४२९०६४२ कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि
०४२९०६५१ तेनास्य तादृशं राज लिङ्गिनो देहसम्भवम्
०४२९०६५२ श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति
०४२९०६६१ मन एव मनुष्यस्य पूर्वरूपाणि शंसति
०४२९०६६२ भविष्यतश्च भद्रं ते तथैव न भविष्यतः
०४२९०६७१ अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते
०४२९०६७२ यथा तथानुमन्तव्यं देशकालक्रियाश्रयम्
०४२९०६८१ सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः
०४२९०६८२ आयान्ति बहुशो यान्ति सर्वे समनसो जनाः
०४२९०६९१ सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि
०४२९०६९२ तमश्चन्द्रमसीवेदमुपरज्यावभासते
०४२९०७०१ नाहं ममेति भावोऽयं पुरुषे व्यवधीयते
०४२९०७०२ यावद्बुद्धिमनोऽक्षार्थ गुणव्यूहो ह्यनादिमान्
०४२९०७११ सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः
०४२९०७१२ नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि
०४२९०७२१ गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा
०४२९०७२२ लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा
०४२९०७३१ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते
०४२९०७३२ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा
०४२९०७४१ एवं पञ्चविधं लिङ्गं त्रिवृत्षोडश विस्तृतम्
०४२९०७४२ एष चेतनया युक्तो जीव इत्यभिधीयते
०४२९०७५१ अनेन पुरुषो देहानुपादत्ते विमुञ्चति
०४२९०७५२ हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति
०४२९०७६१ भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि vedabase 4.29.1b)
०४२९०७६२ यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः vedabase 4.29.1b)
०४२९०७६१ यथा तृणजलूकेयं नापयात्यपयाति च
०४२९०७६२ न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः

०४२९०७७१ अदृष्टं दृष्टवन्नङ्क्षेद्भूतं स्वप्नवदन्यथा vedabase 4.29.2b)
०४२९०७७२ भूतं भवद्भविष्यच्च सुप्तं सर्वरहोरहः vedabase 4.29.2b)
०४२९०७७१ यावदन्यं न विन्देत व्यवधानेन कर्मणाम्
०४२९०७७२ मन एव मनुष्येन्द्र भूतानां भवभावनम्
०४२९०७८१ यदाक्षैश्चरितान्ध्यायन्कर्माण्याचिनुतेऽसकृत्
०४२९०७८२ सति कर्मण्यविद्यायां बन्धः कर्मण्यनात्मनः
०४२९०७९१ अतस्तदपवादार्थं भज सर्वात्मना हरिम्
०४२९०७९२ पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः
०४२९०८०० मैत्रेय उवाच
०४२९०८०१ भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम्
०४२९०८०२ प्रदर्श्य ह्यमुमामन्त्र्य सिद्धलोकं ततोऽगमत्
०४२९०८११ प्राचीनबर्ही राजर्षिः प्रजासर्गाभिरक्षणे
०४२९०८१२ आदिश्य पुत्रानगमत्तपसे कपिलाश्रमम्
०४२९०८२१ तत्रैकाग्रमना धीरो गोविन्दचरणाम्बुजम्
०४२९०८२२ विमुक्तसङ्गोऽनुभजन्भक्त्या तत्साम्यतामगात्
०४२९०८३१ एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणानघ
०४२९०८३२ यः श्रावयेद्यः शृणुयात्स लिङ्गेन विमुच्यते
०४२९०८४१ एतन्मुकुन्दयशसा भुवनं पुनानं
०४२९०८४२ देवर्षिवर्यमुखनिःसृतमात्मशौचम्
०४२९०८४३ यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं
०४२९०८४४ नास्मिन्भवे भ्रमति मुक्तसमस्तबन्धः
०४२९०८५१ अध्यात्मपारोक्ष्यमिदं मयाधिगतमद्भुतम्
०४२९०८५२ एवं स्त्रियाश्रमः पुंसश्छिन्नोऽमुत्र च संशयः
०४३०००१० विदुर उवाच
०४३०००११ ये त्वयाभिहिता ब्रह्मन्सुताः प्राचीनबर्हिषः
०४३०००१२ ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम्
०४३०००२१ किं बार्हस्पत्येह परत्र वाथ कैवल्यनाथप्रियपार्श्ववर्तिनः
०४३०००२२ आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः
०४३०००३० मैत्रेय उवाच
०४३०००३१ प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः
०४३०००३२ अपयज्ञेन तपसा पुरञ्जनमतोषयन्

०४३०००४१ दशवर्षसहस्रान्ते पुरुषस्तु सनातनः
०४३०००४२ तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन्रुचा
०४३०००५१ सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः
०४३०००५२ पीतवासा मणिग्रीवः कुर्वन्वितिमिरा दिशः
०४३०००६१ काशिष्णुना कनकवर्णविभूषणेन
०४३०००६२ भ्राजत्कपोलवदनो विलसत्किरीटः
०४३०००६३ अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैर्
०४३०००६४ आसेवितो गरुडकिन्नरगीतकीर्तिः
०४३०००७१ पीनायताष्टभुजमण्डलमध्यलक्ष्म्या
०४३०००७२ स्पर्धच्छ्रिया परिवृतो वनमालयाद्यः
०४३०००७३ बर्हिष्मतः पुरुष आह सुतान्प्रपन्नान्
०४३०००७४ पर्जन्यनादरुतया सघृणावलोकः
०४३०००८० श्रीभगवानुवाच
०४३०००८१ वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः
०४३०००८२ सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः
०४३०००९१ योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः
०४३०००९२ तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम्
०४३००१०१ ये तु मां रुद्रगीतेन सायं प्रातः समाहिताः
०४३००१०२ स्तुवन्त्यहं कामवरान्दास्ये प्रज्ञां च शोभनाम्
०४३००१११ यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः
०४३००११२ अथो व उशती कीर्तिर्लोकाननु भविष्यति
०४३००१२१ भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः
०४३००१२२ य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति
०४३००१३१ कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना
०४३००१३२ तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः
०४३००१४१ क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम्
०४३००१४२ देशिनीं रोदमानाया निदधे स दयान्वितः
०४३००१५१ प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता
०४३००१५२ तत्र कन्यां वरारोहां तामुद्वहत मा चिरम्
०४३००१६१ अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा
०४३००१६२ अपृथग्धर्मशीलेयं भूयात्पत्न्यर्पिताशया

०४३००१७१ दिव्यवर्षसहस्राणां सहस्रमहतौजसः
०४३००१७२ भौमान्भोक्ष्यथ भोगान्वै दिव्यांश्चानुग्रहान्मम
०४३००१८१ अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः
०४३००१८२ उपयास्यथ मद्धाम निर्विद्य निरयादतः
०४३००१९१ गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम्
०४३००१९२ मद्वार्तायातयामानां न बन्धाय गृहा मताः
०४३००२०१ नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः
०४३००२०२ न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः
०४३००२१० मैत्रेय उवाच
०४३००२११ एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः
०४३००२१२ तद्दर्शनध्वस्ततमोरजोमला गिरागृणन्गद्गदया सुहृत्तमम्
०४३००२२० प्रचेतस ऊचुः
०४३००२२१ नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय
०४३००२२२ मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः
०४३००२३१ शुद्धाय शान्ताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्वयाय
०४३००२३२ नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय
०४३००२४१ नमो विशुद्धसत्त्वाय हरये हरिमेधसे
०४३००२४२ वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम्
०४३००२५१ नमः कमलनाभाय नमः कमलमालिने
०४३००२५२ नमः कमलपादाय नमस्ते कमलेक्षण
०४३००२६१ नमः कमलकिञ्जल्क पिशङ्गामलवाससे
०४३००२६२ सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे
०४३००२७१ रूपं भगवता त्वेतदशेषक्लेशसङ्क्षयम्
०४३००२७२ आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पितम्
०४३००२८१ एतावत्त्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः
०४३००२८२ यदनुस्मर्यते काले स्वबुद्ध्याभद्ररन्धन
०४३००२९१ येनोपशान्तिर्भूतानां क्षुल्लकानामपीहताम्
०४३००२९२ अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः
०४३००३०१ असावेव वरोऽस्माकमीप्सितो जगतः पते
०४३००३०२ प्रसन्नो भगवान्येषामपवर्गः गुरुर्गतिः
०४३००३११ वरं वृणीमहेऽथापि नाथ त्वत्परतः परात्

०४३००३१२ न ह्यन्तस्त्वद्विभूतीनां सोऽनन्त इति गीयसे
०४३००३२१ पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते
०४३००३२२ त्वदङ्घ्रिमूलमासाद्य साक्षात्किं किं वृणीमहि
०४३००३३१ यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः
०४३००३३२ तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे
०४३००३४१ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्
०४३००३४२ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः
०४३००३५१ यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः
०४३००३५२ निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन
०४३००३६१ यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः
०४३००३६२ संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः
०४३००३७१ तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया
०४३००३७२ भीतस्य किं न रोचेत तावकानां समागमः
०४३००३८१ वयं तु साक्षाद्भगवन्भवस्य प्रियस्य सख्युः क्षणसङ्गमेन
०४३००३८२ सुदुश्चिकित्स्यस्य भवस्य मृत्योर्भिषक्तमं त्वाद्य गतिं गताः स्म
०४३००३९१ यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदानुवृत्त्या
०४३००३९२ आर्या नताः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव
०४३००४०१ यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु
०४३००४०२ सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय
०४३००४११ मनुः स्वयम्भूर्भगवान्भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः
०४३००४१२ अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वात्मसमं गृणीमः
०४३००४२१ नमः समाय शुद्धाय पुरुषाय पराय च
०४३००४२२ वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः
०४३००४३० मैत्रेय उवाच
०४३००४३१ इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः
०४३००४३२ अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः
०४३००४४१ अथ निर्याय सलिलात्प्रचेतस उदन्वतः
०४३००४४२ वीक्ष्याकुप्यन्द्रुमैश्छन्नां गां गां रोद्धुमिवोच्छ्रितैः
०४३००४५१ ततोऽग्निमारुतौ राजन्नमुञ्चन्मुखतो रुषा
०४३००४५२ महीं निर्वीरुधं कर्तुं संवर्तक इवात्यये
०४३००४६१ भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्य पितामहः

०४३००४६२ आगतः शमयामास पुत्रान्बर्हिष्मतो नयैः
०४३००४७१ तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा
०४३००४७२ उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयम्भुवा
०४३००४८१ ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे
०४३००४८२ यस्यां महदवज्ञानादजन्यजनयोनिजः
०४३००४९१ चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते
०४३००४९२ यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः
०४३००५०१ यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा
०४३००५०२ स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन्
०४३००५११ तं प्रजासर्गरक्षायामनादिरभिषिच्य च
०४३००५१२ युयोज युयुजेऽन्यांश्च स वै सर्वप्रजापतीन्
०४३१००१० मैत्रेय उवाच
०४३१००११ तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम्
०४३१००१२ स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन्गृहात्
०४३१००२१ दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा
०४३१००२२ प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः
०४३१००३१ तान्निर्जितप्राणमनोवचोदृशो जितासनान्शान्तसमानविग्रहान्
०४३१००३२ परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः
०४३१००४१ तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च
०४३१००४२ पूजयित्वा यथादेशं सुखासीनमथाब्रुवन्
०४३१००५० प्रचेतस ऊचुः
०४३१००५१ स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः
०४३१००५२ तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः
०४३१००६१ यदादिष्टं भगवता शिवेनाधोक्षजेन च
०४३१००६२ तद्गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो
०४३१००७१ तन्नः प्रद्योतयाध्यात्म ज्ञानं तत्त्वार्थदर्शनम्
०४३१००७२ येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम्
०४३१००८० मैत्रेय उवाच
०४३१००८१ इति प्रचेतसां पृष्टो भगवान्नारदो मुनिः
०४३१००८२ भगवत्युत्तमश्लोक आविष्टात्माब्रवीन्नृपान्
०४३१००९० नारद उवाच

०४३१००९१ तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः
०४३१००९२ नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः
०४३१०१०१ किं जन्मभिस्त्रिभिर्वेह शौक्रसावित्रयाज्ञिकैः
०४३१०१०२ कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा
०४३१०१११ श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः
०४३१०११२ बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा
०४३१०१२१ किं वा योगेन साङ्ख्येन न्यासस्वाध्याययोरपि
०४३१०१२२ किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः
०४३१०१३१ श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः
०४३१०१३२ सर्वेषामपि भूतानां हरिरात्मात्मदः प्रियः
०४३१०१४१ यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः
०४३१०१४२ प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या
०४३१०१५१ यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन्प्रविशन्ति काले
०४३१०१५२ भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः
०४३१०१६१ एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा
०४३१०१६२ यथासवो जाग्रति सुप्तशक्तयो द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः
०४३१०१७१ यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूपा न भवन्त्यनुक्रमात्
०४३१०१७२ एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमः सत्त्वमिति प्रवाहः
०४३१०१८१ तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम्
०४३१०१८२ स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा
०४३१०१९१ दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा
०४३१०१९२ सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः
०४३१०२०१ अपहतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः
०४३१०२०२ निजजनवशगत्वमात्मनोऽयन्न सरति छिद्रवदक्षरः सतां हि
०४३१०२११ न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः
०४३१०२१२ श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु
०४३१०२२१ श्रियमनुचरतीं तदर्थिनश्च द्विपदपतीन्विबुधांश्च यत्स्वपूर्णः
०४३१०२२२ न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत्पुमान्कृतज्ञः
०४३१०२३० मैत्रेय उवाच
०४३१०२३१ इति प्रचेतसो राजन्नन्याश्च भगवत्कथाः
०४३१०२३२ श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः

०४३१०२४१ तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम्
०४३१०२४२ हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः
०४३१०२५१ एतत्तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान्
०४३१०२५२ प्रचेतसां नारदस्य संवादं हरिकीर्तनम्
०४३१०२६० श्रीशुक उवाच
०४३१०२६१ य एष उत्तानपदो मानवस्यानुवर्णितः
०४३१०२६२ वंशः प्रियव्रतस्यापि निबोध नृपसत्तम
०४३१०२७१ यो नारदादात्मविद्यामधिगम्य पुनर्महीम्
०४३१०२७२ भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम्
०४३१०२८१ इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम्
०४३१०२८२ प्रवृद्धभावोऽश्रुकलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः
०४३१०२९० विदुर उवाच
०४३१०२९१ सोऽयमद्य महायोगिन्भवता करुणात्मना
०४३१०२९२ दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः
०४३१०३०० श्रीशुक उवाच
०४३१०३०१ इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम्
०४३१०३०२ स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः
०४३१०३११ एतद्यः शृणुयाद्राजन्राज्ञां हर्यर्पितात्मनाम्
०४३१०३१२ आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात्
०५०१००१० राजोवाच
०५०१००११ प्रियव्रतो भागवताअत्मारामः कथं मुने
०५०१००१२ गृहेऽरमत यन्मूलः कर्मबन्धः पराभवः
०५०१००२१ न नूनं मुक्तसङ्गानां तादृशानां द्विजर्षभ
०५०१००२२ गृहेष्वभिनिवेशोऽयं पुंसां भवितुमर्हति
०५०१००३१ महतां खलु विप्रर्षे उत्तमश्लोकपादयोः
०५०१००३२ छायानिर्वृतचित्तानां न कुटुम्बे स्पृहामतिः
०५०१००४१ संशयोऽयं महान्ब्रह्मन्दारागारसुतादिषु
०५०१००४२ सक्तस्य यत्सिद्धिरभूत्कृष्णे च मतिरच्युता
०५०१००५० श्रीशुक उवाच
०५०१००५१ बाढमुक्तं भगवत उत्तमश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस आवेशितचेतसो
भागवतपरमहंसदयितकथां किञ्चिदन्तरायविहतां स्वां शिवतमां पदवीं न प्रायेण हिन्वन्ति

०५०१००६१ यर्हि वाव ह राजन्स राजपुत्रः प्रियव्रतः परमभागवतो नारदस्य
चरणोपसेवयाञ्जसावगतपरमार्थसतत्त्वो ब्रह्मसत्रेण दीक्षिष्यमाणोऽवनितलपरिपालनायाम्नात
प्रवरगुणगणैकान्तभाजनतया स्वपित्रोपामन्त्रितो भगवति वासुदेव एवाव्यवधानसमाधियोगेन
समावेशितसकलकारकक्रियाकलापो नैवाभ्यनन्दद्यद्यपि तदप्रत्याम्नातव्यं तदधिकरण
आत्मनोऽन्यस्मादसतोऽपि पराभवमन्वीक्षमाणः
०५०१००७१ अथ ह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानव्यवसितसकलजगद्
अभिप्राय आत्मयोनिरखिलनिगमनिजगणपरिवेष्टितः स्वभवनादवततार
०५०१००८१ स तत्र तत्र गगनतल उडुपतिरिव विमानावलिभिरनुपथममर
परिवृढैरभिपूज्यमानः पथि पथि च वरूथशः सिद्धगन्धर्वसाध्यचारणमुनि
गणैरुपगीयमानो गन्धमादनद्रोणीमवभासयन्नुपससर्प
०५०१००९१ तत्र ह वा एनं देवर्षिर्हंसयानेन पितरं भगवन्तं हिरण्यगर्भमुपलभमानः
सहसैवोत्थायार्हणेन सह पितापुत्राभ्यामवहिताञ्जलिरुपतस्थे
०५०१०१०१ भगवानपि भारत तदुपनीतार्हणः सूक्तवाकेनातितरामुदितगुणगणावतारसुजयः
प्रियव्रतमादिपुरुषस्तं सदयहासावलोक इति होवाच
०५०१०११० श्रीभगवानुवाच
०५०१०१११ निबोध तातेदमृतं ब्रवीमि मासूयितुं देवमर्हस्यप्रमेयम्
०५०१०११२ वयं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम्
०५०१०१२१ न तस्य कश्चित्तपसा विद्यया वा न योगवीर्येण मनीषया वा
०५०१०१२२ नैवार्थधर्मैः परतः स्वतो वा कृतं विहन्तुं तनुभृद्विभूयात्
०५०१०१३१ भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदा भयाय
०५०१०१३२ सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताङ्ग धत्ते
०५०१०१४१ यद्वाचि तन्त्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स वयं सुयोजिताः
०५०१०१४२ सर्वे वहामो बलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः
०५०१०१५१ ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग दुःखं सुखं वा गुणकर्मसङ्गात्
०५०१०१५२ आस्थाय तत्तद्यदयुङ्क्त नाथश्चक्षुष्मतान्धा इव नीयमानाः
०५०१०१६१ मुक्तोऽपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः
०५०१०१६२ यथानुभूतं प्रतियातनिद्रः किं त्वन्यदेहाय गुणान्न वृङ्क्ते
०५०१०१७१ भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सहषट्सपत्नः
०५०१०१७२ जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम्
०५०१०१८१ यः षट्सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम्
०५०१०१८२ अत्येति दुर्गाश्रित ऊर्जितारीन्क्षीणेषु कामं विचरेद्विपश्चित्

०५०१०१९१ त्वं त्वब्जनाभाङ्घ्रिसरोजकोश दुर्गाश्रितो निर्जितषट्सपत्नः

०५०१०१९२ भुङ्क्ष्वेह भोगान्पुरुषातिदिष्टान्विमुक्तसङ्गः प्रकृतिं भजस्व

०५०१०२०० श्रीशुक उवाच

०५०१०२०१ इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयावनत शिरोधरो बाढमिति सबहुमानमुवाह

०५०१०२११ भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रत नारदयोरविषममभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनसं क्षयमव्यवहृतं प्रवर्तयन्नगमत्

०५०१०२२१ मनुरपि परेणैवं प्रतिसन्धितमनोरथः सुरर्षिवरानुमतेनात्मजमखिलधरामण्डल स्थितिगुप्तय आस्थाप्य स्वयमतिविषमविषयविषजलाशयाशाया उपरराम

०५०१०२३१ इति ह वाव स जगतीपतिरीश्वरेच्छयाधिनिवेशितकर्माधिकारोऽखिलजगद्बन्धध्वंसन परानुभावस्य भगवत आदिपुरुषस्याङ्घ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशयो ऽवदातोऽपि मानवर्धनो महतां महीतलमनुशशास

०५०१०२४१ अथ च दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम तस्यामु ह वाव आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान्दश भावयाम्बभूव कन्यां च यवीयसीमूर्जस्वतीं नाम

०५०१०२५१ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व एवाग्निनामानः

०५०१०२६१ एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसस्त आत्मविद्यायामर्भ भावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन्

०५०१०२७१ तस्मिन्नु ह वा उपशमशीलाः परमर्षयः सकलजीवनिकायावासस्य भगवतो वासुदेवस्य भीतानां शरणभूतस्य श्रीमच्चरणारविन्दाविरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यग् आत्मन्येवात्मनस्तादात्म्यमविशेषेण समीयुः

०५०१०२८१ अन्यस्यामपि जायायां त्रयः पुत्रा आसन्नुत्तमस्तामसो रैवत इति मन्वन्तराधिपतयः

०५०१०२९१ एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादश परिवत्सराणामव्याहताखिलपुरुषकारसारसम्भृतदोर्दण्डयुगलापीडितमौर्वीगुणस्तनितविरमित धर्मप्रतिपक्षो बर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषित हासावलोकरुचिरक्ष्वेल्यादिभिः पराभूयमानविवेक इवानवबुध्यमान इव महामना बुभुजे

०५०१०३०१ यावदवभासयति सुरगिरिमनुपरिक्रामन्भगवानादित्यो वसुधातलमर्धेनैव

प्रतपत्यर्धेनावच्छादयति तदा हि भगवदुपासनोपचितातिपुरुष
प्रभावस्तदनभिनन्दन्समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्त
कृत्वस्तरणिमनुपर्यक्रामद्द्वितीय इव पतङ्गः
०५०१०३११ ये वा उ ह तद्रथचरणनेमिकृतपरिखातास्ते सप्त सिन्धव आसन्यत एव कृताः सप्त भुवो
द्वीपाः
०५०१०३२१ जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञास्तेषां परिमाणं
पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो यथासङ्ख्यं द्विगुणमानेन बहिः समन्तत उपक्लृप्ताः
०५०१०३३१ दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद्देवयानी नाम काव्यसुता
०५०१०३४१ नैवंविधः पुरुषकार उरुक्रमस्य
०५०१०३४२ पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम्
०५०१०३४३ चित्रं विदूरविगतः सकृदाददीत
०५०१०३४४ यन्नामधेयमधुना स जहाति बन्धम्
०५०१०३५१ स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्ग
संसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह
०५०१०३६१ अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्यारचितविषमविषयान्धकूपे
तदलमलममुष्या वनिताया विनोदमृगं मां धिग्धिगिति गर्हयां चकार
०५०१०३७१ परदेवताप्रसादाधिगतात्मप्रत्यवमर्शेनानुप्रवृत्तेभ्यः पुत्रेभ्य इमां यथादायं
विभज्य भुक्तभोगां च महिषीं मृतकमिव सह महाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि
गृहीतहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार
०५०१०३८० तस्य ह वा एते श्लोकाः
०५०१०३८१ प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम्
०५०१०३८२ यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्त वारिधीन्
०५०१०३९१ भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः
०५०१०३९२ सीमा च भूतनिर्वृत्यै द्वीपे द्वीपे विभागशः
०५०१०४०१ भौमं दिव्यं मानुषं च महित्वं कर्मयोगजम्
०५०१०४०२ यश्चक्रे निरयौपम्यं पुरुषानुजनप्रियः
०५०२००१० श्रीशुक उवाच
०५०२००११ एवं पितरि सम्प्रवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बूद्वीपौकसः प्रजा
औरसवद्धर्मावेक्षमाणः पर्यगोपायत्
०५०२००२१ स च कदाचित्पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां

पतिमाभृतपरिचर्योपकरण आत्म इकाग्र्येण तपस्व्याराधयां बभूव
०५०२००३१ तदुपलभ्य भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास
०५०२००४१ सा च तदाश्रमोपवनमतिरमणीयं विविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरट
लतारूढस्थलविहङ्गममिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डव
कलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम
०५०२००५१ तस्याः सुललितगमनपदविन्यासगतिविलासायाश्चानुपदं खणखणायमानरुचिर
चरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुल
युगलमीषद्विकचय्य व्यचष्ट
०५०२००६१ तामेवाविदूरे मधुकरीमिव सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाद
दुघैर्गतिविहारव्रीडाविनयावलोकसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं
विवरं निजमुखविगलितामृतासवसहासभाषणामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपद
विन्यासेन वल्गुस्पन्दनस्तनकलशकबरभाररशनां देवीं तदवलोकनेन विवृतावसरस्य
भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच
०५०२००७१ का त्वं चिकीर्षसि च किं मुनिवर्य शैले
०५०२००७२ मायासि कापि भगवत्परदेवतायाः
०५०२००७३ विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे
०५०२००७४ किं वा मृगान्मृगयसे विपिने प्रमत्तान्
०५०२००८१ बाणाविमौ भगवतः शतपत्रपत्रौ
०५०२००८२ शान्तावपुङ्खरुचिरावतितिग्मदन्तौ
०५०२००८३ कस्मै युयुङ्क्षसि वने विचरन्न विद्मः
०५०२००८४ क्षेमाय नो जडधियां तव विक्रमोऽस्तु
०५०२००९१ शिष्या इमे भगवतः परितः पठन्ति
०५०२००९२ गायन्ति साम सरहस्यमजस्रमीशम्
०५०२००९३ युष्मच्छिखाविलुलिताः सुमनोऽभिवृष्टीः
०५०२००९४ सर्वे भजन्त्यृषिगणा इव वेदशाखाः
०५०२०१०१ वाचं परं चरणपञ्जरतित्तिरीणां
०५०२०१०२ ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम्
०५०२०१०३ लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे
०५०२०१०४ यस्यामलातपरिधिः क्व च वल्कलं ते
०५०२०१११ किं सम्भृतं रुचिरयोर्द्विज शृङ्गयोस्ते
०५०२०११२ मध्ये कृशो वहसि यत्र दृशिः श्रिता मे

०५०२०११३ पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग्
०५०२०११४ येनाश्रमं सुभग मे सुरभीकरोषि
०५०२०१२१ लोकं प्रदर्शय सुहृत्तम तावकं मे
०५०२०१२२ यत्रत्य इत्थमुरसावयवावपूर्वौ
०५०२०१२३ अस्मद्विधस्य मनौन्नयनौ बिभर्ति
०५०२०१२४ बह्वद्भुतं सरसराससुधादि वक्त्रे
०५०२०१३१ का वात्मवृत्तिरदनाद्धविरङ्ग वाति
०५०२०१३२ विष्णोः कलास्यनिमिषोन्मकरौ च कर्णौ
०५०२०१३३ उद्विग्नमीनयुगलं द्विजपङ्क्तिशोचिर्
०५०२०१३४ आसन्नभृङ्गनिकरं सर इन्मुखं ते
०५०२०१४१ योऽसौ त्वया करसरोजहतः पतङ्गो
०५०२०१४२ दिक्षु भ्रमन्भ्रमत एजयतेऽक्षिणी मे
०५०२०१४३ मुक्तं न ते स्मरसि वक्रजटावरूथं
०५०२०१४४ कष्टोऽनिलो हरति लम्पट एष नीवीम्
०५०२०१५१ रूपं तपोधन तपश्चरतां तपोघ्नं
०५०२०१५२ ह्येतत्तु केन तपसा भवतोपलब्धम्
०५०२०१५३ चर्तुं तपोऽर्हसि मया सह मित्र मह्यं
०५०२०१५४ किं वा प्रसीदति स वै भवभावनो मे
०५०२०१६१ न त्वां त्यजामि दयितं द्विजदेवदत्तं
०५०२०१६२ यस्मिन्मनो दृगपि नो न वियाति लग्नम्
०५०२०१६३ मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते
०५०२०१६४ चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः
०५०२०१७० श्रीशुक उवाच
०५०२०१७१ इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुध मतिरधिसभाजयामास
०५०२०१८१ सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येण पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जम्बूद्वीपपतिना भौमस्वर्गभोगान्बुभुजे
०५०२०१९१ तस्यामु ह वा आत्मजान्स राजवर आग्नीध्रो नाभिकिम्पुरुषहरिवर्षेलावृतरम्यकहिरण्मय कुरुभद्राश्वकेतुमालसंज्ञान्नव पुत्रानजनयत्
०५०२०२०१ सा सूत्वाथ सुतान्नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे
०५०२०२११ आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्य

नामानि यथाभागं जम्बूद्वीपवर्षाणि बुभुजुः
०५०२०२२१ आग्नीध्रो राजातृप्तः कामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवारुन्ध यत्र पितरो मादयन्ते
०५०२०२३१ सम्परेते पितरि नव भ्रातरो मेरुदुहित्र्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रम्यां श्यामां नारीं भद्रां देववीतिमिति संज्ञा नवोदवहन्
०५०३००१० श्रीशुक उवाच
०५०३००११ नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्मायजत
०५०३००२१ तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकाल मन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान्भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेतार्थविधित्सया गृहीतहृदयो हृदयङ्गमं मनो नयनानन्दनावयवाभिराममाविश्चकार
०५०३००३१ अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बर धरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालाच्छूर्यमृतमणि गदादिभिरुपलक्षितं स्फुटकिरणप्रवरमुकुटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्ग भूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहु मानमर्हणेनावनतशीर्षाण उपतस्थुः
०५०३००४० ऋत्विज ऊचुः
०५०३००४१ अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमो नम इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान्प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नाम रूपाकृतिभी रूपनिरूपणम्सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेश कथनादृते
०५०३००५१ परिजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम परितुष्यसि
०५०३००६१ अथानयापि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे
०५०३००७१ आत्मन एवानुसवनमञ्जसाव्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किन्तु नाथाशिष आशासानानामेतदभिसंराधनमात्रं भवितुमर्हति
०५०३००८१ तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपरमपुरुष प्रकर्ष करुणया स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन्स्वयं नापचित एवेतरवदिहोपलक्षितः
०५०३००९१ अथायमेव वरो ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत्

०५०३०१०१ असङ्गनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां
मुनीनामनवरतपरिगुणितगुणगण परममङ्गलायनगुणगणकथनोऽसि
०५०३०१११ अथ कथञ्चित्स्खलनक्षुत्पतनजृम्भणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वर
मरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु
०५०३०१२१ किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि
भवन्तमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम्
०५०३०१३१ को वा इह तेऽपराजितोऽपराजितया माययानवसितपदव्यानावृतमतिर्विषयविषरयानावृत
प्रकृतिरनुपासितमहच्चरणः
०५०३०१४१ यदु ह वाव तव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मन्दानां
नस्तद्यद्देवहेलनं देवदेवार्हसि साम्येन सर्वान्प्रतिवोढुमविदुषाम्
०५०३०१५० श्रीशुक उवाच
०५०३०१५१ इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवन्दितचरणः
सदयमिदमाह
०५०३०१६० श्रीभगवानुवाच
०५०३०१६१ अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्यात्मजो मया
सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि
मुखं यद्द्विजदेवकुलम्
०५०३०१७१ तत आग्नीध्रीयेऽंशकलयावतरिष्याम्यात्मतुल्यमनुपलभमानः
०५०३०१८० श्रीशुक उवाच
०५०३०१८१ इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान्
०५०४००१० श्रीशुक उवाच
०५०४००११ अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहा
विभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां
जगृधुः
०५०४००२१ तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन चौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां
च पिता ऋषभ इतीदं नाम चकार
०५०४००३१ यस्य हीन्द्रः स्पर्धमानो भगवान्वर्षे न ववर्ष तदवधार्य भगवानृषभदेवो
योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षत्
०५०४००४१ नाभिस्तु यथाभिलषितं सुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा
स्वैरं गृहीतनरलोकसधर्मं भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्स तातेति

सानुरागमुपलालयन्परां निर्वृतिमुपगतः
०५०४००५१ विदितानुरागमापौरप्रकृति जनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नर नारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमानमवाप
०५०४००६० यस्य ह पाण्डवेय श्लोकावुदाहरन्ति
०५०४००६१ को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान्
०५०४००६२ अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा
०५०४००७१ ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः
०५०४००७२ यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा
०५०४००८१ अथ ह भगवानृषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभय लक्षणं कर्म समाम्नायाम्नातमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास
०५०४००९१ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति
०५०४०१०१ तमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इन्द्रस्पृग्विदर्भः कीकट इति
नव नवति प्रधानाः
०५०४०१११ कविर्हविरन्तरिक्षः प्रबुद्धः पिप्पलायनः
०५०४०११२ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः
०५०४०१२१ इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं
वसुदेवनारदसंवादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः
०५०४०१३१ यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः
०५०४०१४१ भगवानृषभसंज्ञ आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवलानन्दानुभव ईश्वर एव विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचरणेनोपशिक्षयन्नतद्विदां सम उपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृतावरोधेन गृहेषु लोकं नियमयत्
०५०४०१५१ यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः
०५०४०१६१ यद्यपि स्वविदितं सकलधर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास
०५०४०१७१ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शत

कृत्व इयाज
०५०४०१८१ भगवतर्षभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽन्यस्मात्कथञ्चन किमपि कर्हिचिदवेक्षते भर्तर्यनुसवनं विजृम्भितस्नेहातिशयमन्तरेण
०५०४०१९१ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयन्त्रितानप्युपशिक्षयन्निति होवाच
०५०५००१० ऋषभ उवाच
०५०५००११ नायं देहो देहभाजां नृलोके कष्टान्कामानर्हते विड्भुजां ये
०५०५००१२ तपो दिव्यं पुत्रका येन सत्त्वं शुद्ध्येद्यस्माद्ब्रह्मसौख्यं त्वनन्तम्
०५०५००२१ महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम्
०५०५००२२ महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये
०५०५००३१ ये वा मयीशे कृतसौहृदार्था जनेषु देहम्भरवार्तिकेषु
०५०५००३२ गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके
०५०५००४१ नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति
०५०५००४२ न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः
०५०५००५१ पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम्
०५०५००५२ यावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः
०५०५००६१ एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युपधीयमाने
०५०५००६२ प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्
०५०५००७१ यदा न पश्यत्ययथा गुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित्
०५०५००७२ गतस्मृतिर्विन्दति तत्र तापानासाद्य मैथुन्यमगारमज्ञः
०५०५००८१ पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो हृदयग्रन्थिमाहुः
०५०५००८२ अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति
०५०५००९१ यदा मनोहृदयग्रन्थिरस्य कर्मानुबद्धो दृढ आश्लथेत
०५०५००९२ तदा जनः सम्परिवर्ततेऽस्माद्मुक्तः परं यात्यतिहाय हेतुम्
०५०५०१०१ हंसे गुरौ मयि भक्त्यानुवृत्या वितृष्णया द्वन्द्वतितिक्षया च
०५०५०१०२ सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या
०५०५०१११ मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद्गुणकीर्तनान्मे
०५०५०११२ निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः
०५०५०१२१ अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सध्र्यक्
०५०५०१२२ सच्छ्रद्धया ब्रह्मचर्येण शश्वदसम्प्रमादेन यमेन वाचाम्

०५०५०१३१ सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन
०५०५०१३२ योगेन धृत्युद्यमसत्त्वयुक्तो लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम्
०५०५०१४१ कर्माशयं हृदयग्रन्थिबन्धमविद्ययासादितमप्रमत्तः
०५०५०१४२ अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात्
०५०५०१५१ पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः
०५०५०१५२ इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत्कर्मसु कर्ममूढान्
०५०५०१५३ कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते
०५०५०१६१ लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकामः
०५०५०१६२ अन्योन्यवैरः सुखलेशहेतोरनन्तदुःखं च न वेद मूढः
०५०५०१७१ कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम्
०५०५०१७२ दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथान्धम्
०५०५०१८१ गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात्
०५०५०१८२ दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम्
०५०५०१९१ इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः
०५०५०१९२ पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः
०५०५०२०१ तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सनाभम्
०५०५०२०२ अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम्
०५०५०२११ भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः
०५०५०२१२ ततो मनुष्याः प्रमथास्ततोऽपि गन्धर्वसिद्धा विबुधानुगा ये
०५०५०२२१ देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुतास्तु तेषाम्
०५०५०२२२ भवः परः सोऽथ विरिञ्चवीर्यः स मत्परोऽहं द्विजदेवदेवः
०५०५०२३१ न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परं तु
०५०५०२३२ यस्मिन्नृभिः प्रहुतं श्रद्धयाहमश्नामि कामं न तथाग्निहोत्रे
०५०५०२४१ धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम्
०५०५०२४२ शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र
०५०५०२५१ मत्तोऽप्यनन्तात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किञ्चित्
०५०५०२५२ येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजाम्
०५०५०२६१ सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि
०५०५०२६२ सम्भावितव्यानि पदे पदे वो विविक्तदृग्भिस्तदु हार्हणं मे
०५०५०२७१ मनोवचोदृक्करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि
०५०५०२७२ विना पुमान्येन महाविमोहात्कृतान्तपाशान्न विमोक्तुमीशेत्

०५०५०२८० श्रीशुक उवाच

०५०५०२८१ एवमनुशास्यात्मजान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परम
सुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्य
लक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्
जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त
इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज

०५०५०२९१ जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौन
व्रतस्तूष्णीं बभूव

०५०५०३०१ तत्र तत्र पुरग्रामाकरखेटवाटखर्वटशिबिरव्रजघोषसार्थगिरि
वनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जन
ताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान
एतस्मिन्देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहं
ममाभिमानत्वादविखण्डितमनाः पृथिवीमेकचरः परिबभ्राम

०५०५०३११ अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृति
सुन्दरस्वभावहाससुमुखो नवनलिनदलायमानशिशिरतारारुणायतनयनरुचिरः सदृशसुभग
कपोलकर्णकण्ठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुम
शरासनमुपदधानः परागवलम्बमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिननिज
शरीरेण ग्रहगृहीत इवादृश्यत

०५०५०३२१ यर्हि वाव स भगवान्लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म
बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म
चेष्टमान
उच्चरित आदिग्धोद्देशः

०५०५०३३१ तस्य ह यः पुरीषसुरभिसौगन्ध्यवायुस्तं देशं दशयोजनं समन्तात्सुरभिं चकार

०५०५०३४१ एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोचरितः पिबति
खादत्यवमेहति स्म

०५०५०३५१ इति नानायोगचर्याचरणो भगवान्कैवल्यपतिरृषभोऽविरतपरममहानन्दानुभव
आत्मनि
सर्वेषां भूतानामात्मभूते भगवति वासुदेव आत्मनोऽव्यवधानानन्तरोदरभावेन सिद्ध
समस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि
यदृच्छयोपगतानि नाञ्जसा नृप हृदयेनाभ्यनन्दत्

०५०६००१० राजोवाच

०५०६००११ न नूनं भगव आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः
क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि
०५०६००२० ऋषिरुवाच
०५०६००२१ सत्यमुक्तं किन्त्विह वा एके न मनसोऽद्धा विश्रम्भमनवस्थानस्य शठकिरात इव
सङ्गच्छन्ते
०५०६००३० तथा चोक्तम्
०५०६००३१ न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते
०५०६००३२ यद्विश्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम्
०५०६००४१ नित्यं ददाति कामस्य च्छिद्रं तमनु येऽरयः
०५०६००४२ योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली
०५०६००५१ कामो मन्युर्मदो लोभः शोकमोहभयादयः
०५०६००५२ कर्मबन्धश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः
०५०६००६१ अथैवमखिललोकपालललामोऽपि विलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षित
भगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन्स्वकलेवरं
जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम
०५०६००७१ तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनया देह इमां
जगतीमभिमानाभासेन सङ्क्रममाणः कोङ्कवेङ्ककुटकान्दक्षिण
कर्णाटकान्देशान्यदृच्छयोपगतः कुटकाचलोपवन आस्य कृताश्मकवल उन्माद इव मुक्तमूर्धजो
ऽसंवीत एव विचचार
०५०६००८१ अथ समीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह
०५०६००९१ यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजार्हन्नामोपशिक्ष्य कलावधर्म
उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथ
पाखण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्तयिष्यते
०५०६०१०१ येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देव
हेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाधर्म
बहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति
०५०६०१११ ते च ह्यर्वाक्तनया निजलोकयात्रयान्धपरम्परयाश्वस्तास्तमस्यन्धे स्वयमेव
प्रपतिष्यन्ति

०५०६०१२१ अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः

०५०६०१३० तस्यानुगुणान्श्लोकान्गायन्ति

०५०६०१३१ अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत्

०५०६०१३२ गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति

०५०६०१४१ अहो नु वंशो यशसावदातः प्रैयव्रतो यत्र पुमान्पुराणः

०५०६०१४२ कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम्

०५०६०१५१ को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य योगी

०५०६०१५२ यो योगमायाः स्पृहयत्युदस्ता ह्यसत्तया येन कृतप्रयत्नाः

०५०६०१६१ इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य
विशुद्धाचरितमीरितं पुंसां समस्तदुश्चरिताभिहरणं परममहा
मङ्गलायनमिदमनुश्रद्धयोपचितयानुशृणोत्याश्रावयति वावहितो भगवति तस्मिन्वासुदेव एकान्ततो
भक्तिरनयोरपि समनुवर्तते

०५०६०१७१ यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं
स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो
एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः

०५०६०१८१ राजन्पतिर्गुरुरलं भवतां यदूनां

०५०६०१८२ दैवं प्रियः कुलपतिः क्व च किङ्करो वः

०५०६०१८३ अस्त्वेवमङ्ग भगवान्भजतां मुकुन्दो

०५०६०१८४ मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्

०५०६०१९१ नित्यानुभूतनिजलाभनिवृत्ततृष्णः

०५०६०१९२ श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः

०५०६०१९३ लोकस्य यः करुणयाभयमात्मलोकम्

०५०६०१९४ आख्यान्नमो भगवते ऋषभाय तस्मै

०५०७००१० श्रीशुक उवाच

०५०७००११ भरतस्तु महाभागवतो यदा भगवतावनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः
पञ्चजनीं विश्वरूपदुहितरमुपयेमे

०५०७००२१ तस्यामु ह वा आत्मजान्कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव
भूत
सूक्ष्माणि सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति

०५०७००३१ अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति

०५०७००४१ स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्तमानाः
प्रजाः स्व

धर्ममनुवर्तमानः पर्यपालयत्
०५०७००५१ ईजे च भगवन्तं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमास
चातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना
०५०७००६१ सम्प्रचरत्सु नानायागेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान्पुरुषावयवेष्वभ्यध्यायत्
०५०७००७१ एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महा
पुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाजायत
०५०७००८१ एवं वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात्स्वनिकेतात्पुलहाश्रमं
प्रवव्राज
०५०७००९१ यत्र ह वाव भगवान्हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छा
रूपेण
०५०७०१०१ यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्री
करोति
०५०७०१११ तस्मिन्वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूल
फलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां
निर्वृतिमवाप
०५०७०१२१ तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः
प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोक
नयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीर
हृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार
०५०७०१३१ इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च
विरोचमानः सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु
होवाच
०५०७०१४१ परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान

०५०७०१४२ सुरेतसादः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिङ्गिरामिमः

०५०८००१० श्रीशुक उवाच

०५०८००११ एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्त त्रयमुदकान्त उपविवेश

०५०८००२१ तत्र तदा राजन्हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम

०५०८००३१ तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत्

०५०८००४१ तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेश व्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात्सहसैवोच्चक्राम

०५०८००५१ तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिनिर्गतो गर्भः स्रोतसि निपपात

०५०८००६१ तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्याञ्चिद्दर्यां कृष्णसारसती निपपाताथ च ममार

०५०८००७१ तं त्वेणकुणकं कृपणं स्रोतसानूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत्

०५०८००८१ तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालन प्रीणनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन्

०५०८००९१ अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद् बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन्यौथिकांश्चैवोपेयाय नान्यं कञ्चन वेद मय्यतिविस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणन लालनमनसूयुनानुष्ठेयं शरण्योपेक्षादोषविदुषा

०५०८०१०१ नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षन्ते

०५०८०१११ इति कृतानुषङ्ग आसनशयनाटनस्नानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत्

०५०८०१२१ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशंसमानो यदा सह हरिणकुणकेन वनं समाविशति

०५०८०१३१ पथिषु च मुग्धभावेन तत्र तत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कन्धेनोद्वहति एवमुत्सङ्ग उरसि चाधायोपलालयन्मुदं परमामवाप

०५०८०१४१ क्रियायां निर्वर्त्यमानायामन्तरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्ष

पतिः प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्तात्द्वत्स ते सर्वत इति
०५०८०१५१ अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरह
विह्वलहृदयसन्तापस्तमेवानुशोचन्किल कश्मलं महदभिरम्भित इति होवाच
०५०८०१६१ अपि बत स वै कृपण एणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृत
सुकृतस्य कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन्सुजन इवागमिष्यति
०५०८०१७१ अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि
०५०८०१८१ अपि च न वृकः सालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षयति
०५०८०१९१ निम्लोचति ह भगवान्सकलजगत्क्षेमोदयस्त्रय्यात्माद्यापि मम न मृगवधून्यास
आगच्छति
०५०८०२०१ अपि स्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिज
मृगदारकविनोदैरसन्तोषं स्वानामपनुदन्
०५०८०२११ क्ष्वेलिकायां मां मृषासमाधिनामीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य
पृषद्
अपरुषविषाणाग्रेण लुठति
०५०८०२२१ आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरास ऋषिकुमारवदवहित
करणकलाप आस्ते
०५०८०२३१ किं वा अरे आचरितं तपस्तपस्विन्यानया यदियमवनिः सविनयकृष्णसारतनयतनुतर
सुभगशिवतमाखरखुरपदपङ्क्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं
सूचयन्त्यात्मानं च सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति
०५०८०२४१ अपि स्विदसौ भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं मृगबालकं स्वाश्रम
परिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपाति
०५०८०२५१ किं वात्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं
मामुपसृतमृगीतनयं शिशिरशान्तानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयतीति
च
०५०८०२६१ एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो
विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः
साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहत
योगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत
आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत
०५०८०२७१ तदानीमपि पार्श्ववर्तिनमात्मजमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना
विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु न मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप
०५०८०२८१ तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य

भृशमनुतप्यमान आह
०५०८०२९१ अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसङ्गस्य विविक्तपुण्यारण्य शरणस्यात्मवत आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमनन सङ्कीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कार्त्स्न्येन मनस्तत्तु पुनर्ममाबुधस्यारान्मृगसुतमनु परिसुस्राव
०५०८०३०१ इत्येवं निगूढनिर्वेदो विसृज्य मृगीं मातरं पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगण दयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम
०५०८०३११ तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृण वीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज
०५०९०००१० श्रीशुक उवाच
०५०९००११ अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोष तितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम्यस्तु तत्र पुमांस्तं परमभागवतं राजर्षि प्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः
०५०९००२१ तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्धविध्वंसनश्रवण स्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतिघातमाशङ्कमानो भगवद् अनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्शयामास लोकस्य
०५०९००३१ तस्यापि ह वा आत्मजस्य विप्रः पुत्रस्नेहानुबद्धमना आसमावर्तनात्संस्कारान्यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन्कर्मनियमाननभिप्रेतानपि समशिक्षयदनुशिष्टेन हि
भाव्यं पितुः पुत्रेणेति
०५०९००४१ स चापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स्म करोति छन्दांस्यध्यापयिष्यन्सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास
०५०९००५१ एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्य् औपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः
०५०९००६१ अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात्
०५०९००७१ पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न

परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त
०५०९००८१ स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरमूकेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याच्ञ्या यदृच्छया वोपसादितमल्पं
बहु मृष्टं कदन्नं वाभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम्नित्यनिवृत्तनिमित्तस्वसिद्ध
विशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावित
देहाभिमानः
०५०९०१०१ शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिल
संवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृत
कटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञयातज्ज्ञजनावमतो विचचार
०५०९०१११ यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति किन्तु न समं विषमं न्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माष
स्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति
०५०९०१२१ अथ कदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः
०५०९०१३१ तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये
तमसावृतायामनधिगतपशव आकस्मिकेन विधिना केदारान्वीरासनेन मृगवराहादिभ्यः
संरक्षमाणमङ्गिरःप्रवरसुतमपश्यन्
०५०९०१४१ अथ त एनमनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया
चण्डिकागृहमुपनिन्युर्मुदा विकसितवदनाः
०५०९०१५१ अथ पणयस्तं स्वविधिनाभिषिच्याहतेन वाससाच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतं
भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुति
मृदङ्गपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः
०५०९०१६१ अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तद्
अभिमन्त्रितमसिमतिकरालनिशितमुपाददे
०५०९०१७१ इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजौत्सिक्तमनसां भगवत्कलावीर
कुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद्ब्रह्मभूतस्य
साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं
तदुपलभ्य ब्रह्मतेजसातिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली
०५०९०१८१ भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानक
वदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां
तेनैवासिना विवृक्णशीर्ष्णां गलात्स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीयातिपानमद

विह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त च विजहार च शिरःकन्दुकलीलया

०५०९०१९१ एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति

०५०९०२०१ न वा एतद्विष्णुदत्त महदद्भुतं यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्त देहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवतानिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पाद मूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम्

०५१०००१० श्रीशुक उवाच

०५१०००११ अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाह पुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गो खरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः

०५१०००२१ यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां

रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः साध्वतिक्रमत किमिति विषममुह्यते यानमिति

०५१०००३१ अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्योपायतुरीयाच्छङ्कितमनसस्तं विज्ञापयां बभूवुः

०५१०००४१ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः अयमधुनैव नियुक्तो ऽपि न द्रुतं व्रजति नानेन सह वोढुमु ह वयं पारयाम इति

०५१०००५१ सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य

कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्म तेजसं जातवेदसमिव रजसावृतमतिराह

०५१०००६१ अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान्सुचिरं नातिपीवा न

संहननाङ्गो जरसा चोपद्रुतो भवान्सखे नो एवापर एते सङ्घट्टिन इति बहुविप्रलब्धोऽप्यविद्यया रचितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहं ममेत्यनध्यारोपित मिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह

०५१०००७१ अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो

मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनताया यथा

प्रकृतिं स्वां भजिष्यस इति

०५१०००८१ एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं रजसा तमसानुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान्ब्राह्मणो ब्रह्मभूतसर्वभूत सुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह
०५१०००९० ब्राह्मण उवाच
०५१०००९१ त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः
०५१०००९२ गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः
०५१००१०१ स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च
०५१००१०२ निद्रा रतिर्मन्युरहं मदः शुचो देहेन जातस्य हि मे न सन्ति
०५१००१११ जीवन्मृतत्वं नियमेन राजनाद्यन्तवद्यद्विकृतस्य दृष्टम्
०५१००११२ स्वस्वाम्यभावो ध्रुव ईड्य यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः
०५१००१२१ विशेषबुद्धेर्विवरं मनाक्च पश्याम यन्न व्यवहारतोऽन्यत्
०५१००१२२ क ईश्वरस्तत्र किमीशितव्यं तथापि राजन्करवाम किं ते
०५१००१३१ उन्मत्तमत्तजडवत्स्वसंस्थां गतस्य मे वीर चिकित्सितेन
०५१००१३२ अर्थः कियान्भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः
०५१००१४० श्रीशुक उवाच
०५१००१४१ एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन
कर्मारब्धं व्यपनयन्राजयानमपि तथोवाह
०५१००१५१ स चापि पाण्डवेय सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक् श्रद्धयाधिकृताधिकारस्तद्धृदयग्रन्थिमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसम्मतं त्वरयावरुह्य शिरसा पादमूलमुपसृतः क्षमापयन्विगतनृपदेवस्मय उवाच
०५१००१६१ कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः
०५१००१६२ कस्यासि कुत्रत्य इहापि कस्मात्क्षेमाय नश्चेदसि नोत शुक्लः
०५१००१७१ नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात्
०५१००१७२ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात्
०५१००१८१ तद्ब्रूह्यसङ्गो जडवन्निगूढ विज्ञानवीर्यो विचरस्यपारः
०५१००१८२ वचांसि योगग्रथितानि साधो न नः क्षमन्ते मनसापि भेत्तुम्
०५१००१९१ अहं च योगेश्वरमात्मतत्त्व विदां मुनीनां परमं गुरुं वै
०५१००१९२ प्रष्टुं प्रवृत्तः किमिहारणं तत्साक्षाद्धरिं ज्ञानकलावतीर्णम्
०५१००२०१ स वै भवा लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपि स्वित्
०५१००२०२ योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबन्धः

०५१००२११ दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये
०५१००२१२ यथासतोदानयनाद्यभावात्समूल इष्टो व्यवहारमार्गः
०५१००२२१ स्थाल्यग्नितापात्पयसोऽभितापस्तत्तापतस्तण्डुलगर्भरन्धिः
०५१००२२२ देहेन्द्रियास्वाशयसन्निकर्षात्तत्संसृतिः पुरुषस्यानुरोधात्
०५१००२३१ शास्ताभिगोप्ता नृपतिः प्रजानां यः किङ्करो वै न पिनष्टि पिष्टम्
०५१००२३२ स्वधर्ममाराधनमच्युतस्य यदीहमानो विजहात्यघौघम्
०५१००२४१ तन्मे भवान्नरदेवाभिमान मदेन तुच्छीकृतसत्तमस्य
०५१००२४२ कृषीष्ट मैत्रीदृशमार्तबन्धो यथा तरे सदवध्यानमंहः
०५१००२५१ न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि
०५१००२५२ महद्विमानात्स्वकृताद्धि मादृङ्नङ्क्ष्यत्यदूरादपि शूलपाणिः
०५११००१० ब्राह्मण उवाच
०५११००११ अकोविदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः
०५११००१२ न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति
०५११००२१ तथैव राजन्नुरुगार्हमेध वितानविद्योरुविजृम्भितेषु
०५११००२२ न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधुः
०५११००३१ न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्
०५११००३२ स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात्
०५११००४१ यावन्मनो रजसा पूरुषस्य सत्त्वेन वा तमसा वानुरुद्धम्
०५११००४२ चेतोभिराकूतिभिरातनोति निरङ्कुशं कुशलं चेतरं वा
०५११००५१ स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा
०५११००५२ बिभ्रत्पृथङ्नामभि रूपभेदमन्तर्बहिष्ट्वं च पुरैस्तनोति
०५११००६१ दुःखं सुखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति
०५११००६२ आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटः
०५११००७१ तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः
०५११००७२ तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्य
०५११००८१ गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात्
०५११००८२ यथा प्रदीपो घृतवर्तिमश्नन्शिखाः सधूमा भजति ह्यन्यदा स्वम्
०५११००८३ पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्वम्
०५११००९१ एकादशासन्मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः
०५११००९२ मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमीः
०५११०१०१ गन्धाकृतिस्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः

०५११०१०२ एकादशं स्वीकरणं ममेति शय्यामहं द्वादशमेक आहुः
०५११०१११ द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः
०५११०११२ सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः
०५११०१२१ क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्याः
०५११०१२२ आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः
०५११०१३१ क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयं ज्योतिरजः परेशः
०५११०१३२ नारायणो भगवान्वासुदेवः स्वमाययात्मन्यवधीयमानः
०५११०१४१ यथानिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत्
०५११०१४२ एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः
०५११०१५१ न यावदेतां तनुभृन्नरेन्द्र विधूय मायां वयुनोदयेन
०५११०१५२ विमुक्तसङ्गो जितषट्सपत्नो वेदात्मतत्त्वं भ्रमतीह तावत्
०५११०१६१ न यावदेतन्मन आत्मलिङ्गं संसारतापावपनं जनस्य
०५११०१६२ यच्छोकमोहामयरागलोभ वैरानुबन्धं ममतां विधत्ते
०५११०१७१ भ्रातृव्यमेनं तददभ्रवीर्यमुपेक्षयाध्येधितमप्रमत्तः
०५११०१७२ गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोषम्
०५१२००१० रहूगण उवाच
०५१२००११ नमो नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय
०५१२००१२ नमोऽवधूत द्विजबन्धुलिङ्ग निगूढनित्यानुभवाय तुभ्यम्
०५१२००२१ ज्वरामयार्तस्य यथागदं सन्निदाघदग्धस्य यथा हिमाम्भः
०५१२००२२ कुदेहमानाहिविदष्टदृष्टेः ब्रह्मन्वचस्तेऽमृतमौषधं मे
०५१२००३१ तस्माद्भवन्तं मम संशयार्थं प्रक्ष्यामि पश्चादधुना सुबोधम्
०५१२००३२ अध्यात्मयोगग्रथितं तवोक्तमाख्याहि कौतूहलचेतसो मे
०५१२००४१ यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहारमूलम्
०५१२००४२ न ह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन्भ्रमते मनो मे
०५१२००५० ब्राह्मण उवाच
०५१२००५१ अयं जनो नाम चलन्पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः
०५१२००५२ तस्यापि चाङ्घ्र्योरधि गुल्फजङ्घा जानूरुमध्योरशिरोधरांसाः
०५१२००६१ अंसेऽधि दार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते
०५१२००६२ यस्मिन्भवान्रूढनिजाभिमानो राजास्मि सिन्धुष्विति दुर्मदान्धः
०५१२००७१ शोच्यानिमांस्त्वमधिकष्टदीनान्विष्ट्या निगृह्णन्निरनुग्रहोऽसि
०५१२००७२ जनस्य गोप्तास्मि विकत्थमानो न शोभसे वृद्धसभासु धृष्टः

०५१२००८१ यदा क्षिताविव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम्
०५१२००८२ तन्नामतोऽन्यद्व्यवहारमूलं निरूप्यतां सत्क्रिययानुमेयम्
०५१२००९१ एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात्परमाणवो ये
०५१२००९२ अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः
०५१२०१०१ एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत्
०५१२०१०२ द्रव्यस्वभावाशयकालकर्म नाम्नाजयावेहि कृतं द्वितीयम्
०५१२०१११ ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्म सत्यम्
०५१२०११२ प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति
०५१२०१२१ रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा
०५१२०१२२ न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम्
०५१२०१३१ यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः
०५१२०१३२ निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे
०५१२०१४१ अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः
०५१२०१४२ आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद्धतार्थः
०५१२०१५१ सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति
०५१२०१५२ अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि
०५१२०१६१ तस्मान्नरोऽसङ्गसुसङ्गजात ज्ञानासिनेहैव विवृक्णमोहः
०५१२०१६२ हरिं तदीहाकथनश्रुताभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः
०५१३००१० ब्राह्मण उवाच
०५१३००११ दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमःसत्त्वविभक्तकर्मदृक्
०५१३००१२ स एष सार्थोऽर्थपरः परिभ्रमन्भवाटवीं याति न शर्म विन्दति
०५१३००२१ यस्यामिमे षण्नरदेव दस्यवः सार्थं विलुम्पन्ति कुनायकं बलात्
०५१३००२२ गोमायवो यत्र हरन्ति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः
०५१३००३१ प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः
०५१३००३२ क्वचित्तु गन्धर्वपुरं प्रपश्यति क्वचित्क्वचिच्चाशुरयोल्मुकग्रहम्
०५१३००४१ निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावति भो अटव्याम्
०५१३००४२ क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः
०५१३००५१ अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितान्तरात्मा
०५१३००५२ अपुण्यवृक्षान्श्रयते क्षुधार्दितो मरीचितोयान्यभिधावति क्वचित्
०५१३००६१ क्वचिद्वितोयाः सरितोऽभियाति परस्परं चालषते निरन्धः
०५१३००६२ आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः

०५१३००७१ शूरैर्हृतस्वः क्व च निर्विण्णचेताः शोचन्विमुह्यन्नुपयाति कश्मलम्
०५१३००७२ क्वचिच्च गन्धर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम्
०५१३००८१ चलन्क्वचित्कण्टकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमना इवास्ते
०५१३००८२ पदे पदेऽभ्यन्तरवह्निनार्दितः कौटुम्बिकः क्रुध्यति वै जनाय
०५१३००९१ क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किञ्चिद्विपिनेऽपविद्धः
०५१३००९२ दष्टः स्म शेते क्व च दन्दशूकैरन्धोऽन्धकूपे पतितस्तमिस्रे
०५१३०१०१ कर्हि स्म चित्क्षुद्ररसान्विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः
०५१३०१०२ तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलुम्पन्त्यथ तं ततोऽन्ये
०५१३०१११ क्वचिच्च शीतातपवातवर्ष प्रतिक्रियां कर्तुमनीश आस्ते
०५१३०११२ क्वचिन्मिथो विपणन्यच्च किञ्चिद्विद्वेषमृच्छत्युत वित्तशाठ्यात्
०५१३०१२१ क्वचित्क्वचित्क्षीणधनस्तु तस्मिन्शय्यासनस्थानविहारहीनः
०५१३०१२२ याचन्परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम्
०५१३०१३१ अन्योन्यवित्तव्यतिषङ्गवृद्ध वैरानुबन्धो विवहन्मिथश्च
०५१३०१३२ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्त बाधोपसर्गैर्विहरन्विपन्नः
०५१३०१४१ तांस्तान्विपन्नान्स हि तत्र तत्र विहाय जातं परिगृह्य सार्थः
०५१३०१४२ आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम्
०५१३०१५१ मनस्विनो निर्जितदिग्गजेन्द्रा ममेति सर्वे भुवि बद्धवैराः
०५१३०१५२ मृधे शयीरन्न तु तद्व्रजन्ति यन्न्यस्तदण्डो गतवैरोऽभियाति
०५१३०१६१ प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः
०५१३०१६२ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यं विधत्ते बककङ्कगृध्रैः
०५१३०१७१ तैर्वञ्चितो हंसकुलं समाविशन्नरोचयन्शीलमुपैति वानरान्
०५१३०१७२ तज्जातिरासेन सुनिर्वृतेन्द्रियः परस्परोद्वीक्षणविस्मृतावधिः
०५१३०१८१ द्रुमेषु रंस्यन्सुतदारवत्सलो व्यवायदीनो विवशः स्वबन्धने
०५१३०१८२ क्वचित्प्रमादाद्गिरिकन्दरे पतन्वल्लीं गृहीत्वा गजभीत आस्थितः
०५१३०१९१ अतः कथञ्चित्स विमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिन्दम
०५१३०१९२ अध्वन्यमुष्मिन्नजया निवेशितो भ्रमञ्जनोऽद्यापि न वेद कश्चन
०५१३०२०१ रहूगण त्वमपि ह्यध्वनोऽस्य सन्न्यस्तदण्डः कृतभूतमैत्रः
०५१३०२०२ असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम्
०५१३०२१० राजोवाच
०५१३०२११ अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन्
०५१३०२१२ न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागमः

०५१३०२२१ न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला
०५१३०२२२ मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः
०५१३०२३१ नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः
०५१३०२३२ ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञाम्
०५१३०२४० श्रीशुक उवाच
०५१३०२४१ इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिन्धुपतय आत्मसतत्त्वं विगणयतः
परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरण आपूर्णार्णव इव
निभृतकरणोर्म्याशयो धरणिमिमां विचचार
०५१३०२५१ सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्यविद्याध्यारोपितां च देहात्म
मतिं विससर्ज एवं हि नृप भगवदाश्रिताश्रितानुभावः
०५१३०२६० राजोवाच
०५१३०२६१ यो ह वा इह बहुविदा महाभागवत त्वयाभिहितः परोक्षेण वचसा जीवलोकभवाध्वा
स
ह्यार्यमनीषया कल्पितविषयोनाञ्जसाव्युत्पन्नलोकसमधिगमः अथ तदेवैतद्दुरवगमं
समवेतानुकल्पेन निर्दिश्यतामिति
०५१४००१० स होवाच
०५१४००११ स एष देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविध
देहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण
तस्मिन्दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोको
ऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनिष्पादितकर्मानुभवः श्मशानवदशिवतमायां
संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविन्द
मधुकरानुपदवीमवरुन्धे
०५१४००२१ यस्यामु ह वा एते षडिन्द्रियनामानः कर्मणा दस्यव एव ते तद्यथा पुरुषस्य
धनं
यत्किञ्चिद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात्परमपुरुषाराधनलक्षणो योऽसौ धर्मस्तं
तु साम्पराय उदाहरन्ति तद्धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसङ्कल्प
व्यवसायगृहग्राम्योपभोगेन कुनाथस्याजितात्मनो यथा सार्थस्य विलुम्पन्ति
०५१४००३१ अथ च यत्र कौटुम्बिका दारापत्यादयो नाम्ना कर्मणा वृकसृगाला एवानिच्छतोऽपि
कदर्यस्य
कुटुम्बिन उरणकवत्संरक्ष्यमाणं मिषतोऽपि हरन्ति
०५१४००४१ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृण
वीरुद्भिर्गह्वरमिव भवत्येवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन्न हि कर्माण्युत्सीदन्ति

यदयं कामकरण्ड एष आवसथः
०५१४००५१ तत्र गतो दंशमशकसमापसदैर्मनुजैः शलभशकुन्ततस्कर
मूषकादिभिरुपरुध्यमानबहिःप्राणः क्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकाम
कर्मभिरुपरक्तमनसानुपपन्नार्थं नरलोकं गन्धर्वनगरमुपपन्नमिति मिथ्या
दृष्टिरनुपश्यति
०५१४००६१ तत्र च क्वचिदातपोदकनिभान्विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः
०५१४००७१ क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिः
सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम्
०५१४००८१ अथ कदाचिन्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः
परिधावति
०५१४००९१ क्वचिच्च वात्यौपम्यया प्रमदयारोहमारोपितस्तत्कालरजसा रजनीभूत इवासाधुमर्यादो
रजस्वलाक्षोऽपि दिग्देवता अतिरजस्वलमतिर्न विजानाति
०५१४०१०१ क्वचित्सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशितस्मृतिस्तयैव मरीचि
तोयप्रायांस्तानेवाभिधावति
०५१४०१११ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुल
निर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः
०५१४०१२१ स यदा दुग्धपूर्वसुकृतस्तदा कारस्करकाकतुण्डाद्यपुण्यद्रुमलताविषोद
पानवदुभयार्थशून्यद्रविणाञ्जीवन्मृतान्स्वयं जीवन्म्रियमाण उपधावति
०५१४०१३१ एकदासत्प्रसङ्गान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं
पाखण्डमभियाति
०५१४०१४१ यदा तु परबाधयान्ध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान्वा
स खलु
भक्षयति
०५१४०१५१ क्वचिदासाद्य गृहं दाववत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं
निर्वेदमुपगच्छति
०५१४०१६१ क्वचित्कालविषमितराजकुलरक्षसापहृतप्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण
आस्ते
०५१४०१७१ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदिति स्वप्ननिर्वृतिलक्षणमनुभवति
०५१४०१८१ क्वचिद्गृहाश्रमकर्मचोदनातिभरगिरिमारुरुक्षमाणो लोकव्यसनकर्षितमनाः कण्टक
शर्कराक्षेत्रं प्रविशन्निव सीदति
०५१४०१९१ क्वचिच्च दुःसहेन कायाभ्यन्तरवह्निना गृहीतसारः स्वकुटुम्बाय क्रुध्यति

०५१४०२०१ स एव पुनर्निद्राजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत्किञ्चन वेद शव

इवापविद्धः

०५१४०२११ कदाचिद्भग्नमानदंष्ट्रो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथित

हृदयेनानुक्षीयमाणविज्ञानोऽन्धकूपेऽन्धवत्पतति

०५१४०२२१ कर्हि स्म चित्काममधुलवान्विचिन्वन्यदा परदारपरद्रव्याण्यवरुन्धानो राज्ञा

स्वामिभिर्वा निहतः पतत्यपारे निरये

०५१४०२३१ अथ च तस्मादुभयथापि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरन्ति

०५१४०२४१ मुक्तस्ततो यदि बन्धाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः

०५१४०२५१ क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणेऽकल्पो दुरन्त

चिन्तया विषण्ण आस्ते

०५१४०२६१ क्वचिन्मिथो व्यवहरन्यत्किञ्चिद्धनमन्येभ्यो वा काकिणिका

मात्रमप्यपहरन्यत्किञ्चिद्वा विद्वेषमेति वित्तशाठ्यात्

०५१४०२७१ अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्माद

शोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः

०५१४०२८१ क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारम्भाकुल

हृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्मापारे

ऽन्धे तमसि प्रहिणोति

०५१४०२९१ कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात्परमाण्वादिद्विपरार्धापवर्ग

कालोपलक्षणात्परिवर्तितेन वयसा रंहसा हरत आब्रह्मतृणस्तम्बादीनां भूतानामनिमिषतो मिषतां

वित्रस्तहृदयस्तमेवेश्वरं कालचक्रनिजायुधं साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य

पाखण्डदेवताः कङ्कगृध्रबकवटप्राया आर्यसमयपरिहृताः साङ्केत्येनाभिधत्ते

०५१४०३०१ यदा पाखण्डिभिरात्मवञ्चितैस्तैरुरु वञ्चितो ब्रह्मकुलं समावसंस्तेषां

शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतो यज्ञपुरुषस्याराधनमेव

तदरोचयन्शूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मिथुनीभावः कुटुम्बभरणं यथा

वानरजातेः

०५१४०३११ तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणादिना ग्राम्य

कर्मणैव विस्मृतकालावधिः

०५१४०३२१ क्वचिद्द्रुमवदैहिकार्थेषु गृहेषु रंस्यन्यथा वानरः सुतदारवत्सलो व्यवायक्षणः

०५१४०३३१ एवमध्वन्यवरुन्धानो मृत्युगजभयात्तमसि गिरिकन्दरप्राये

०५१४०३४१ क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां दुःखानां प्रतिनिवारणेऽकल्पो दुरन्तविषय विषण्ण आस्ते
०५१४०३५१ क्वचिन्मिथो व्यवहरन्यत्किञ्चिद्धनमुपयाति वित्तशाठ्येन
०५१४०३६१ क्वचित्क्षीणधनः शय्यासनाशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादाने ऽवसितमतिस्ततस्ततोऽवमानादीनि जनादभिलभते
०५१४०३७१ एवं वित्तव्यतिषङ्गविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति
०५१४०३८१ एतस्मिन्संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमु ह वावेतरस्तत्र विसृज्य जातं जातमुपादाय शोचन्मुह्यन्बिभ्यद्
विवदन्क्रन्दन्संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्ततेऽद्यापि यत आरब्ध एष नरलोक सार्थो यमध्वनः पारमुपदिशन्ति
०५१४०३९१ यदिदं योगानुशासनं न वा एतदवरुन्धते यन्न्यस्तदण्डा मुनय उपशमशीला उपरतात्मानः समवगच्छन्ति
०५१४०४०१ यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किं तु परं मृधे शयीरन्नस्यामेव ममेयमिति कृतवैरानुबन्धायां विसृज्य स्वयमुपसंहृताः
०५१४०४११ कर्मवल्लीमवलम्ब्य तत आपदः कथञ्चिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति एवमुपरि गतोऽपि
०५१४०४२० तस्येदमुपगायन्ति
०५१४०४२१ आर्षभस्येह राजर्षेर्मनसापि महात्मनः
०५१४०४२२ नानुवर्त्माहति नृपो मक्षिकेव गरुत्मतः
०५१४०४३१ यो दुस्त्यजान्दारसुतान्सुहृद्राज्यं हृदिस्पृशः
०५१४०४३२ जहौ युवैव मलवदुत्तमश्लोकलालसः
०५१४०४४१ यो दुस्त्यजान्क्षितिसुतस्वजनार्थदारान्
०५१४०४४२ प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्
०५१४०४४३ नैच्छन्नृपस्तदुचितं महतां मधुद्विट्
०५१४०४४४ सेवानुरक्तमनसामभवोऽपि फल्गुः
०५१४०४५१ यज्ञाय धर्मपतये विधिनैपुणाय
०५१४०४५२ योगाय साङ्ख्यशिरसे प्रकृतीश्वराय
०५१४०४५३ नारायणाय हरये नम इत्युदारं
०५१४०४५४ हास्यन्मृगत्वमपि यः समुदाजहार
०५१४०४६१ य इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्य् अयनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वानुशृणोत्याख्यास्यत्यभिनन्दति च सर्वा एवाशिष

आत्मन आशास्ते न काञ्चन परत इति

०५१५००१० श्रीशुक उवाच

०५१५००११ भरतस्यात्मजः सुमतिर्नामाभिहितो यमु ह वाव केचित्पाखण्डिन ऋषभ

पदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यन्ति

०५१५००२१ तस्माद्वृद्धसेनायां देवताजिन्नाम पुत्रोऽभवत्

०५१५००३१ अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह

उपजातः

०५१५००४१ य आत्मविद्यामाख्याय स्वयं संशुद्धो महापुरुषमनुसस्मार

०५१५००५१ प्रतीहात्सुवर्चलायां प्रतिहर्त्रादयस्त्रय आसन्निज्याकोविदाः सूनवः प्रतिहर्तुः स्तुत्यामज

भूमानावजनिषाताम्

०५१५००६१ भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तावो देवकुल्यायां प्रस्तावान्नियुत्सायां हृदयज

आसीद्विभुर्विभो रत्यां च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे नक्ताद्द्रुतिपुत्रो गयो राजर्षिप्रवर

उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन

महापुरुषतां प्राप्तः

०५१५००७१ स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति

महापुरुषे परावरे ब्रह्मणि सर्वात्मनार्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादित

भगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि

स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत्

०५१५००८१ तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति

०५१५००९१ गयं नृपः कः प्रतियाति कर्मभिर्यज्वाभिमानी बहुविद्धर्मगोप्ता

०५१५००९२ समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते

०५१५०१०१ यमभ्यषिञ्चन्परया मुदा सतीः सत्याशिषो दक्षकन्याः सरिद्भिः

०५१५०१०२ यस्य प्रजानां दुदुहे धराशिषो निराशिषो गुणवत्सस्नुतोधाः

०५१५०१११ छन्दांस्यकामस्य च यस्य कामान्दुदूहुराजह्रुरथो बलिं नृपाः

०५१५०११२ प्रत्यञ्चिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य

०५१५०१२१ यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे

०५१५०१२२ श्रद्धाविशुद्धाचलभक्तियोग समर्पितेज्याफलमाजहार

०५१५०१३१ यत्प्रीणनाद्बर्हिषि देवतिर्यङ् मनुष्यवीरुत्तृणमाविरिञ्चात्

०५१५०१३२ प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य

०५१५०१४१ गयाद्गयन्त्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुश्चित्ररथादूर्णायां

सम्राडजनिष्ट तत उत्कलायां मरीचिर्मरीचेर्बिन्दुमत्यां बिन्दुमानुदपद्यत तस्मात्सरघायां
मधुर्नामाभवन्मधोः सुमनसि वीरव्रतस्ततो भोजायां मन्थुप्रमन्थू जज्ञाते मन्थोः
सत्यायां भौवनस्ततो दूषणायां त्वष्टाजनिष्ट त्वष्टुर्विरोचनायां विरजो विरजस्य शतजित्प्रवरं पुत्र
शतं कन्या च विषूच्यां किल जातम्
०५१५०१५० तत्रायं श्लोकः
०५१५०१५१ प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः
०५१५०१५२ अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा
०५१६००१० राजोवाच
०५१६००११ उक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमा वा
सह दृश्यते
०५१६००२१ तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्त सिन्धव उपक्लृप्ता यत एतस्याः सप्त
द्वीपविशेषविकल्पस्त्वया भगवन्खलु सूचित एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं वि
जिज्ञासामि
०५१६००३१ भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि
भगवति वासुदेवाख्ये क्षमवेशितुं तदु हैतद्गुरोऽर्हस्यनुवर्णयितुमिति
०५१६००४० ऋषिरुवाच
०५१६००४१ न वै महाराज भगवतो मायागुणविभूतेः काष्ठां मनसा वचसा वाधिगन्तुमलं
विबुधायुषापि पुरुषस्तस्मात्प्राधान्येनैव भूगोलकविशेषं नामरूपमानलक्षणतो
व्याख्यास्यामः
०५१६००५१ यो वायं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुलो यथा
पुष्करपत्रम्
०५१६००६१ यस्मिन्नव वर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति
०५१६००७१ एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुल
गिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंशत्सहस्र
योजनविततो मूले षोडशसहस्रं तावतान्तर्भूम्यां प्रविष्टः
०५१६००८१ उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादा
गिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथव एकैकशः पूर्वस्मात्पूर्वस्मादुत्तर

उत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति
०५१६००९१ एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेध
हरिवर्षकिम्पुरुषभारतानां यथासङ्ख्यम्
०५१६०१०१ तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं
पप्रथतुः केतुमालभद्राश्वयोः सीमानं विदधाते
०५१६०१११ मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्
दिशमवष्टम्भगिरय उपक्लृप्ताः
०५१६०१२१ चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधि
सहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः
०५१६०१३१ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि
स्वाभाविकानि भरतर्षभ धारयन्ति
०५१६०१४१ देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति
०५१६०१५१ येष्वमरपरिवृढाः सह सुरललनाललामयूथपतय उपदेवगणैरुपगीयमान
महिमानः किल विहरन्ति
०५१६०१६१ मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृत
कल्पानि पतन्ति
०५१६०१७१ तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी
मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति
०५१६०१८१ यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दश
योजनं समन्तादनुवासयति
०५१६०१९१ एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन
जम्बू नाम नदी मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं
यावदिलावृतमुपस्यन्दयति
०५१६०२०१ तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन
सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति
०५१६०२११ यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु
धारयन्ति
०५१६०२२१ यस्तु महाकदम्बः सुपार्श्वनिरूढो यास्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः
पञ्च मधुधाराः सुपार्श्वशिखरात्पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति
०५१६०२३१ या ह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनुवासयति
०५१६०२४१ एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृत

गुडान्नाद्यम्बरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः
कुमुदाग्रात्पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति
०५१६०२५१ यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्यु
शीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति यावज्जीवं सुखं निरतिशयमेव
०५१६०२६१ कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिशिरपतङ्गरुचकनिषधशिनीवासकपिलशङ्ख
वैदूर्यजारुधिहंसऋषभनागकालञ्जरनारदादयो विंशतिगिरयो मेरोः कर्णिकाया इव केसरभूता
मूलदेशे परित उपक्लृप्ताः
०५१६०२७१ जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ
भवतः एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतावेवमुत्तरतस्त्रिशृङ्ग
मकरावष्टभिरेतैः परिसृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः
०५१६०२८१ मेरोर्मूर्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं सम
चतुरस्रां शातकौम्भीं वदन्ति
०५१६०२९१ तामनुपरितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः
०५१७००१० श्रीशुक उवाच
०५१७००११ तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनख
निर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुण
किञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचो
ऽभिधीयमानातिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः
०५१७००२१ यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति
यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कण्ठ्य
विवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाभिव्यज्यमानरोमपुलककुलकोऽधुनापि
परमादरेण शिरसा बिभर्ति
०५१७००३१ ततः सप्त ऋषयस्तत्प्रभावाभिज्ञा यां ननु तपस आत्यन्तिकी सिद्धिरेतावती
भगवति
सर्वात्मनि वासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव
इव सबहुमानमद्यापि जटाजूटैरुद्वहन्ति
०५१७००४१ ततोऽनेकसहस्रकोटिविमानानीकसङ्कुलदेवयानेनावतरन्तीन्दु मण्डलमावार्य ब्रह्म
सदने निपतति
०५१७००५१ तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्पन्दन्ती नदनदी
पतिमेवाभिनिविशति सीतालकनन्दा चक्षुर्भद्रेति
०५१७००६१ सीता तु ब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्धसु

पतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति

०५१७००७१ एवं माल्यवच्छिखरान्निष्पतन्ती ततोऽनुपरतवेगा केतुमालमभि चक्षुः प्रतीच्यां दिशि सरित्

पतिं प्रविशति

०५१७००८१ भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद्गिरिशिखरमतिहाय शृङ्गवतः

शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि जलधिमभिप्रविशति

०५१७००९१ तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य

हेमकूटाद्धैमकूटान्यतिरभसतररंहसा लुठयन्ती भारतमभिवर्षं दक्षिणस्यां दिशि

जलधिमभिप्रविशति यस्यां स्नानार्थं चागच्छतः पुंसः पदे पदेऽश्वमेधराजसूयादीनां फलं

न दुर्लभमिति

०५१७०१०१ अन्ये च नदा नद्यश्च वर्षे वर्षे सन्ति बहुशो मेर्वादिगिरिदुहितरः शतशः

०५१७०१११ तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्ट वर्षाणि स्वर्गिणां पुण्यशेषोपभोग

स्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति

०५१७०१२१ एषु पुरुषाणामयुतपुरुषायुर्वर्षाणां देवकल्पानां नागायुतप्राणानां वज्रसंहननबल

वयोमोदप्रमुदितमहासौरतमिथुनव्यवायापवर्गवर्षधृतैकगर्भकलत्राणां तत्र तु त्रेता

युगसमः कालो वर्तते

०५१७०१३१ यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबकफल

किसलयश्रियानम्यमानविटपलताविटपिभिरुपशुम्भमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु

तथा चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराजहंसजलकुक्कुटकारण्डवसारस

चक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडादिभिर्विचित्रविनोदैः सुललितसुरसुन्दरीणां

कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं विहरन्ति

०५१७०१४१ नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्व

व्यूहेनात्मनाद्यापि सन्निधीयते

०५१७०१५१ इलावृते तु भगवान्भव एक एव पुमान्न ह्यन्यस्तत्रापरो निर्विशति भवान्याः शापनिमित्तज्ञो

यत्प्रवेक्ष्यतः स्त्रीभावस्तत्पश्चाद्वक्ष्यामि

०५१७०१६१ भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य

तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञामात्मसमाधिरूपेण

सन्निधाप्यैतदभिगृणन्भव उपधावति

०५१७०१७० श्रीभगवानुवाच

०५१७०१७१ ओं नमो भगवते महापुरुषाय सर्वगुणसङ्ख्यानायानन्तायाव्यक्ताय नम इति

०५१७०१७१ भजे भजन्यारणपादपङ्कजं भगस्य कृत्स्नस्य परं परायणम्

०५१७०१७२ भक्तेष्वलं भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम्
०५१७०१८१ न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते
०५१७०१८२ ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः
०५१७०१९१ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः
०५१७०१९२ न नागवध्वोऽर्हण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेन्द्रियाः
०५१७०२०१ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनन्तमृषयः
०५१७०२०२ न वेद सिद्धार्थमिव क्वचित्स्थितं भूमण्डलं मूर्धसहस्रधामसु
०५१७०२११ यस्याद्य आसीद्गुणविग्रहो महान्विज्ञानधिष्ण्यो भगवानजः किल
०५१७०२१२ यत्सम्भवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे
०५१७०२२१ एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः
०५१७०२२२ महानहं वैकृततामसेन्द्रियाः सृजाम सर्वे यदनुग्रहादिदम्
०५१७०२३१ यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः
०५१७०२३२ न वेद निस्तारणयोगमञ्जसा तस्मै नमस्ते विलयोदयात्मने
०५१८००१० श्रीशुक उवाच
०५१८००११ तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्ववर्षे साक्षाद्भगवतो
वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना
सन्निधाप्येदमभिगृणन्त उपधावन्ति
०५१८००२० भद्रश्रवस ऊचुः
०५१८००२१ ओं नमो भगवते धर्मायात्मविशोधनाय नम इति
०५१८००३१ अहो विचित्रं भगवद्विचेष्टितं घ्नन्तं जनोऽयं हि मिषन्न पश्यति
०५१८००३२ ध्यायन्नसद्यर्हि विकर्म सेवितुं निर्हृत्य पुत्रं पितरं जिजीविषति
०५१८००४१ वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः
०५१८००४२ तथापि मुह्यन्ति तवाज मायया सुविस्मितं कृत्यमजं नतोऽस्मि तम्
०५१८००५१ विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरङ्गीकृतमप्यपावृतः
०५१८००५२ युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः
०५१८००६१ वेदान्युगान्ते तमसा तिरस्कृतान्रसातलाद्यो नृतुरङ्गविग्रहः
०५१८००६२ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्तेऽवितथेहिताय इति
०५१८००७१ हरिवर्षे चापि भगवान्नरहरिरूपेणास्ते तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये
तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः
प्रह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति
०५१८००८१ ओं नमो भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्र

कर्माशयान्रन्धय रन्धय तमो ग्रस ग्रस ओं स्वाहा अभयमभयमात्मनि भूयिष्ठा ओं क्ष्रौम्
०५१८००९१ स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया
०५१८००९२ मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी
०५१८०१०१ मागारदारात्मजवित्तबन्धुषु सङ्गो यदि स्याद्भगवत्प्रियेषु नः
०५१८०१०२ यः प्राणवृत्त्या परितुष्ट आत्मवान्सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः
०५१८०१११ यत्सङ्गलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम्
०५१८०११२ हरत्यजोऽन्तः श्रुतिभिर्गतोऽङ्गजं को वै न सेवेत मुकुन्दविक्रमम्
०५१८०१२१ यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः
०५१८०१२२ हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः
०५१८०१३१ हरिर्हि साक्षाद्भगवान्शरीरिणामात्मा झषाणामिव तोयमीप्सितम्
०५१८०१३२ हित्वा महांस्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दम्पतीनाम्
०५१८०१४१ तस्माद्रजोरागविषादमन्यु मानस्पृहाभयदैन्याधिमूलम्
०५१८०१४२ हित्वा गृहं संसृतिचक्रवालं नृसिंहपादं भजताकुतोभयमिति
०५१८०१५१ केतुमालेऽपि भगवान्कामदेवस्वरूपेण लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां पुत्राणां
तद्वर्षपतीनां पुरुषायुषाहोरात्रपरिसङ्ख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजित
मनसां विध्वस्ता व्यसवः संवत्सरान्ते विनिपतन्ति
०५१८०१६१ अतीव सुललितगतिविलासविलसितरुचिरहासलेशावलोकलीलया
किञ्चिदुत्तम्भितसुन्दरभ्रूमण्डल
सुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते
०५१८०१७१ तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमा देवी संवत्सरस्य रात्रिषु
प्रजापतेर्दुहितृभिरुपेताहःसु च तद्भर्तृभिरुपास्ते इदं चोदाहरति
०५१८०१८१ ओं ह्रां ह्रीं ह्रूं ओं नमो भगवते हृषीकेशाय सर्वगुणविशेषैर्विलक्षितात्मने आकूतीनां
चित्तीनां चेतसां विशेषाणां चाधिपतये षोडशकलाय च्छन्दोमयायान्नमयायामृतमयाय सर्वमयाय
सहसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात्
०५१८०१९१ स्त्रियो व्रतैस्त्वा हृषीकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम्
०५१८०१९२ तासां न ते वै परिपान्त्यपत्यं प्रियं धनायूंषि यतोऽस्वतन्त्राः
०५१८०२०१ स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम्
०५१८०२०२ स एक एवेतरथा मिथो भयं नैवात्मलाभादधि मन्यते परम्
०५१८०२११ या तस्य ते पादसरोरुहार्हणं निकामयेत्साखिलकामलम्पटा
०५१८०२१२ तदेव रासीप्सितमीप्सितोऽर्चितो यद्भग्नयाञ्चा भगवन्प्रतप्यते

०५१८०२२१ मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यन्त उग्रं तप ऐन्द्रिये धियः
०५१८०२२२ ऋते भवत्पादपरायणान्न मां विन्दन्त्यहं त्वद्धृदया यतोऽजित
०५१८०२३१ स त्वं ममाप्यच्युत शीर्ष्णि वन्दितं कराम्बुजं यत्त्वदधायि सात्वताम्
०५१८०२३२ बिभर्षि मां लक्ष्म वरेण्य मायया क ईश्वरस्येहितमूहितुं विभुरिति
०५१८०२४१ रम्यके च भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक् प्रदर्शितं स इदानीमपि महता भक्तियोगेनाराधयतीदं चोदाहरति
०५१८०२५१ ओं नमो भगवते मुख्यतमाय नमः सत्त्वाय प्राणायौजसे सहसे बलाय महामत्स्याय
नम इति
०५१८०२६१ अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुस्वनः
०५१८०२६२ स ईश्वरस्त्वं य इदं वशेऽनयन्नाम्ना यथा दारुमयीं नरः स्त्रियम्
०५१८०२७१ यं लोकपालाः किल मत्सरज्वरा हित्वा यतन्तोऽपि पृथक्समेत्य च
०५१८०२७२ पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपं स्थाणु यदत्र दृश्यते
०५१८०२८१ भवान्युगान्तार्णव ऊर्मिमालिनि क्षोणीमिमामोषधिवीरुधां निधिम्
०५१८०२८२ मया सहोरु क्रमतेऽज ओजसा तस्मै जगत्प्राणगणात्मने नम इति
०५१८०२९१ हिरण्मयेऽपि भगवान्निवसति कूर्मतनुं बिभ्राणस्तस्य तत्प्रियतमां तनुमर्यमा सह वर्षपुरुषैः पितृगणाधिपतिरुपधावति मन्त्रमिमं चानुजपति
०५१८०३०१ ओं नमो भगवते अकूपाराय सर्वसत्त्वगुणविशेषणायानुपलक्षितस्थानाय नमो वर्ष्मणे
नमो भूम्ने नमो नमोऽवस्थानाय नमस्ते
०५१८०३११ यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपं बहुरूपरूपितम्
०५१८०३१२ सङ्ख्या न यस्यास्त्ययथोपलम्भनात्तस्मै नमस्तेऽव्यपदेशरूपिणे
०५१८०३२१ जरायुजं स्वेदजमण्डजोद्भिदं चराचरं देवर्षिपितृभूतमैन्द्रियम्
०५१८०३२२ द्यौः खं क्षितिः शैलसरित्समुद्र द्वीपग्रहर्क्षेत्यभिधेय एकः
०५१८०३३१ यस्मिन्नसङ्ख्येयविशेषनाम रूपाकृतौ कविभिः कल्पितेयम्
०५१८०३३२ सङ्ख्या यया तत्त्वदृशापनीयते तस्मै नमः साङ्ख्यनिदर्शनाय ते इति
०५१८०३४१ उत्तरेषु च कुरुषु भगवान्यज्ञपुरुषः कृतवराहरूप आस्ते तं तु देवी हैषा भूः सह
कुरुभिरस्खलितभक्तियोगेनोपधावति इमां च परमामुपनिषदमावर्तयति
०५१८०३५१ ओं नमो भगवते मन्त्रतत्त्वलिङ्गाय यज्ञक्रतवे महाध्वरावयवाय महापुरुषाय नमः कर्मशुक्लाय त्रियुगाय नमस्ते
०५१८०३६१ यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम्

०५१८०३६२ मथ्नन्ति मथ्ना मनसा दिदृक्षवो गूढं क्रियार्थैर्नम ईरितात्मने
०५१८०३७१ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने
०५१८०३७२ अन्वीक्षयाङ्गातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमो नमः
०५१८०३८१ करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितुर्गुणैः
०५१८०३८२ माया यथायो भ्रमते तदाश्रयं ग्राव्णो नमस्ते गुणकर्मसाक्षिणे
०५१८०३९१ प्रमथ्य दैत्यं प्रतिवारणं मृधे यो मां रसाया जगदादिसूकरः
०५१८०३९२ कृत्वाग्रदंष्ट्रे निरगादुदन्वतः क्रीडन्निवेभः प्रणतास्मि तं विभुमिति
०५१९००१० श्रीशुक उवाच
०५१९००११ किम्पुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरण
सन्निकर्षाभिरतः परमभागवतो हनुमान्सह किम्पुरुषैरविरतभक्तिरुपास्ते
०५१९००२१ आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति
स्वयं चेदं गायति
०५१९००३१ ओं नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन
उपासित
लोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति
०५१९००४१ यत्तद्विशुद्धानुभवमात्रमेकं स्वतेजसा ध्वस्तगुणव्यवस्थम्
०५१९००४२ प्रत्यक्प्रशान्तं सुधियोपलम्भनं ह्यनामरूपं निरहं प्रपद्ये
०५१९००५१ मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः
०५१९००५२ कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य
०५१९००६१ न वै स आत्मात्मवतां सुहृत्तमः सक्तस्त्रिलोक्यां भगवान्वासुदेवः
०५१९००६२ न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि विहातुमर्हति
०५१९००७१ न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः
०५१९००७२ तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः
०५१९००८१ सुरोऽसुरो वाप्यथ वानरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम्
०५१९००८२ भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत्कोसलान्दिवमिति
०५१९००९१ भारतेऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञान
वैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति
०५१९०१०१ तं भगवान्नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां साङ्ख्य
योगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति इदं
चाभिगृणाति
०५१९०१११ ओं नमो भगवते उपशमशीलायोपरतानात्म्याय नमोऽकिञ्चनवित्ताय ऋषिऋषभाय
नर

नारायणाय परमहंसपरमगुरवे आत्मारामाधिपतये नमो नम इति

०५१९०१२० गायति चेदम्

०५१९०१२१ कर्तास्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः

०५१९०१२२ द्रष्टुर्न दृग्यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे

०५१९०१३१ इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भो भगवाञ्जगाद यत्

०५१९०१३२ यदन्तकाले त्वयि निर्गुणे मनो भक्त्या दधीतोज्झितदुष्कलेवरः

०५१९०१४१ यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन्

०५१९०१४२ शङ्केत विद्वान्कुकलेवरात्ययाद्यस्तस्य यत्नः श्रम एव केवलम्

०५१९०१५१ तन्नः प्रभो त्वं कुकलेवरार्पितां त्वन्माययाहंममतामधोक्षज

०५१९०१५२ भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः स्वभावमिति

०५१९०१६१ भारतेऽप्यस्मिन्वर्षे सरिच्छैलाः सन्ति बहवो मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः

कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः

पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च

शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः

०५१९०१७१ एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति

०५१९०१८१ चन्द्रवसा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा

कृष्णावेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिन्धुरन्धः

शोणश्च नदौ महानदी वेदस्मृतिर्ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती

सरयू रोधस्वती सप्तवती सुषोमा शतद्रूश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः

०५१९०१९१ अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्य

मानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते यथावर्ण

विधानमपवर्गश्चापि भवति

०५१९०२०१ योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्य

निमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुष

प्रसङ्गः

०५१९०२१० एतदेव हि देवा गायन्ति

०५१९०२११ अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः

०५१९०२१२ यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः

०५१९०२२१ किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना

०५१९०२२२ न यत्र नारायणपादपङ्कज स्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात्

०५१९०२३१ कल्पायुषां स्थानजयात्पुनर्भवात्क्षणायुषां भारतभूजयो वरम्

०५१९०२३२ क्षणेन मर्त्येन कृतं मनस्विनः सन्न्यस्य संयान्त्यभयं पदं हरेः

०५१९०२४१ न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः

०५१९०२४२ न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम्

०५१९०२५१ प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसम्भृताम्

०५१९०२५२ न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम्

०५१९०२६१ यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः

०५१९०२६२ एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः

०५१९०२७१ सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः

०५१९०२७२ स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम्

०५१९०२८१ यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम्

०५१९०२८२ तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति

०५१९०२९० श्रीशुक उवाच

०५१९०२९१ जम्बूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति सगरात्मजैरश्वान्वेषण इमां महीं

परितो निखनद्भिरुपकल्पितान्

०५१९०३०१ तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति

०५१९०३११ एवं तव भारतोत्तम जम्बूद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति

०५२०००१० श्रीशुक उवाच

०५२०००११ अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते

०५२०००२१ जम्बूद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन

लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखा बाह्योपवनेन प्लक्षो जम्बू

प्रमाणो द्वीपाख्याकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मज

इध्मजिह्वः स्वं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्म

योगेनोपरराम

०५२०००३१ शिवं यवसं सुभद्रं शान्तं क्षेममममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च

सप्तैवाभिज्ञाताः

०५२०००४१ मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान्सुपर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः अरुणा

नृम्णाङ्गिरसी सावित्री सुप्तभाता ऋतम्भरा सत्यम्भरा इति महानद्यः यासां जलोपस्पर्शनविधूतरजस्

तमसो हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शन

प्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते

०५२०००५१ प्रत्नस्य विष्णो रूपं यत्सत्यस्यर्तस्य ब्रह्मणः

०५२०००५२ अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति

०५२०००६१ प्लक्षादिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति च

सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्तते

०५२०००७१ प्लक्षः स्वसमानेनेक्षुरसोदेनावृतो यथा तथा द्वीपोऽपि शाल्मलो द्विगुणविशालः समानेन

सुरोदेनावृतः परिवृङ्क्ते

०५२०००८१ यत्र ह वै शाल्मली प्लक्षायामा यस्यां वाव किल निलयमाहुर्भगवतश्छन्दःस्तुतः पतत्रि

राजस्य सा द्वीपहूतये उपलक्ष्यते

०५२०००९१ तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञबाहुः स्वसुतेभ्यः सप्तभ्यस्तन्नामानि सप्तवर्षाणि

व्यभजत्सुरोचनं सौमनस्यं रमणकं देववर्षं पारिभद्रमाप्यायनमविज्ञातमिति

०५२००१०१ तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः स्वरसः शतश‍ृङ्गो वामदेवः कुन्दो मुकुन्दः पुष्प

वर्षः सहस्रश्रुतिरिति अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति

०५२००१११ तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरेषन्धरसंज्ञा भगवन्तं वेदमयं

सोममात्मानं वेदेन यजन्ते

०५२००१२१ स्वगोभिः पितृदेवेभ्यो विभजन्कृष्णशुक्लयोः

०५२००१२२ प्रजानां सर्वासां राजा न्धः सोमो न आस्त्विति

०५२००१३१ एवं सुरोदाद्बहिस्तद्द्विगुणः समानेनावृतो घृतोदेन यथापूर्वः कुशद्वीपो यस्मिन्कुश

स्तम्बो देवकृतस्तद्द्वीपाख्याकरो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति

०५२००१४१ तद्द्वीपपतिः प्रैयव्रतो राजन्हिरण्यरेता नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथा

भागं विभज्य स्वयं तप आतिष्ठत वसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेव

नामभ्यः

०५२००१५१ तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्त सप्तैव चक्रश्चतुःश‍ृङ्गः कपिलश्चित्रकूटो

देवानीक ऊर्ध्वरोमा द्रविण इति रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा देवगर्भा घृतच्युता

मन्त्रमालेति

०५२००१६१ यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भगवन्तं जातवेद
सरूपिणं कर्मकौशलेन यजन्ते
०५२००१७१ परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट्
०५२००१७२ देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यजेति
०५२००१८१ तथा घृतोदाद्बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तो वृतो यथा
कुशद्वीपो घृतोदेन यस्मिन्क्रौञ्चो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते
०५२००१९१ योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो
विभयो बभूव
०५२००२०१ तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु
सप्त रिक्थादान्वर्षपान्निवेश्य स्वयं भगवान्भगवतः परमकल्याणयशस आत्मभूतस्य
हरेश्चरणारविन्दमुपजगाम
०५२००२११ आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुतास्तेषां
वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः शुक्लो वर्धमानो भोजन उपबर्हिणो नन्दो नन्दनः
सर्वतोभद्र इति अभया अमृतौघा आर्यका तीर्थवती रूपवती पवित्रवती शुक्लेति
०५२००२२१ यासामम्भः पवित्रममलमुपयुञ्जानाः पुरुषऋषभद्रविणदेवकसंज्ञा वर्षपुरुषा
आपोमयं देवमपां पूर्णेनाञ्जलिना यजन्ते
०५२००२३१ आपः पुरुषवीर्याः स्थ पुनन्तीर्भूर्भुवःसुवः
०५२००२३२ ता नः पुनीतामीवघ्नीः स्पृशतामात्मना भुव इति
०५२००२४१ एवं पुरस्तात्क्षीरोदात्परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च
दधिमण्डोदेन परीतो यस्मिन्शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको यस्य ह महासुरभि
गन्धस्तं द्वीपमनुवासयति
०५२००२५१ तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्रनामानि तेषु
स्वात्मजान्पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधार
संज्ञान्निधाप्याधिपतीन्स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश
०५२००२६१ एतेषां वर्षमर्यादागिरयो नद्यश्च सप्त सप्तैव ईशान उरुशृङ्गो बलभद्रः शतकेसरः
सहस्रस्रोतो देवपालो महानस इति अनघायुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रस्रुतिर्निजधृतिरिति
०५२००२७१ तद्वर्षपुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं
प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते

०५२००२८१ अन्तःप्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः

०५२००२८२ अन्तर्यामीश्वरः साक्षात्पातु नो यद्वशे स्फुटम्

०५२००२९१ एवमेव दधिमण्डोदात्परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः

समानेन स्वादूदकेन समुद्रेण बहिरावृतो यस्मिन्बृहत्पुष्करं ज्वलनशिखामलकनक

पत्रायुतायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितम्

०५२००३०१ तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुत

योजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात्सूर्य

रथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति

०५२००३११ तद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नामैतस्यात्मजौ रमणकधातकिनामानौ वर्ष

पती नियुज्य स स्वयं पूर्वजवद्भगवत्कर्मशील एवास्ते

०५२००३२१ तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणं सकर्मकेण कर्मणाराधयन्तीदं चोदाहरन्ति

०५२००३३१ यत्तत्कर्ममयं लिङ्गं ब्रह्मलिङ्गं जनोऽर्चयेत्

०५२००३३२ एकान्तमद्वयं शान्तं तस्मै भगवते नम इति

०५२००३४१ ततः परस्ताल्लोकालोकनामाचलो लोकालोकयोरन्तराले परित उपक्षिप्तः

०५२००३५१ यावन्मानसोत्तरमेर्वोरन्तरं तावती भूमिः काञ्चन्यन्यादर्शतलोपमा यस्यां प्रहितः

पदार्थो न कथञ्चित्पुनः प्रत्युपलभ्यते तस्मात्सर्वसत्त्वपरिहृतासीत्

०५२००३६१ लोकालोक इति समाख्या यदनेनाचलेन लोकालोकस्यान्तर्वर्तिनावस्थाप्यते

०५२००३७१ स लोकत्रयान्ते परित ईश्वरेण विहितो यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां

गभस्तयोऽर्वाचीनांस्त्रीन्लोकानावितन्वाना न कदाचित्पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः

०५२००३८१ एतावान्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिन्तितः कविभिः स तु पञ्चाशत्कोटिगणितस्य भू

गोलस्य तुरीयभागोऽयं लोकालोकाचलः

०५२००३९१ तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाखिलजगद्गुरुणाधिनिवेशिता ये द्विरदपतय ऋषभः

पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः

०५२००४०१ तेषां स्वविभूतीनां लोकपालानां च विविधवीर्योपबृंहणाय भगवान्परममहापुरुषो

महाविभूतिपतिरन्तर्याम्यात्मनो विशुद्धसत्त्वं धर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्य्

उपलक्षणं विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितैर्निजभुजदण्डैः

सन्धारयमाणस्तस्मिन्गिरिवरे समन्तात्सकललोकस्वस्तय आस्ते

०५२००४११ आकल्पमेवं वेषं गत एष भगवानात्मयोगमायया विरचितविविधलोकयात्रा

गोपीयायेत्यर्थः

०५२००४२१ योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातं यद्बहिर्लोकालोकाचलात्ततः
परस्ताद्योगेश्वरगतिं विशुद्धामुदाहरन्ति

०५२००४३१ अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम्

०५२००४३२ सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः

०५२००४४१ मृतेऽण्ड एष एतस्मिन्यदभूत्ततो मार्तण्ड इति व्यपदेशः हिरण्यगर्भ इति यद्धिरण्याण्ड

समुद्भवः

०५२००४५१ सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही भिदा

०५२००४५२ स्वर्गापवर्गौ नरका रसौकांसि च सर्वशः

०५२००४६१ देवतिर्यङ्मनुष्याणां सरीसृपसवीरुधाम्

०५२००४६२ सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः

०५२१००१० श्रीशुक उवाच

०५२१००११ एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः

०५२१००२१ एतेन हि दिवो मण्डलमानं तद्विद उपदिशन्ति यथा द्विदलयोर्निष्पावादीनां ते
अन्तरेणान्तरिक्षं तदुभयसन्धितम्

०५२१००३१ यन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्म
भासा स एष उदगयनदक्षिणायनवैषुवतसंज्ञाभिर्मान्द्यशैघ्र्य
समानाभिर्गतिभिरारोहणावरोहणसमानस्थानेषु यथासवनमभिपद्यमानो मकरादिषु
राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते

०५२१००४१ यदा मेषतुलयोर्वर्तते तदाहोरात्राणि समानानि भवन्ति यदा वृषभादिषु पञ्चसु च राशिषु

चरति तदाहान्येव वर्धन्ते ह्रसति च मासि मास्येकैका घटिका रात्रिषु

०५२१००५१ यदा वृश्चिकादिषु पञ्चसु वर्तते तदाहोरात्राणि विपर्ययाणि भवन्ति

०५२१००६१ यावद्दक्षिणायनमहानि वर्धन्ते यावदुदगयनं रात्रयः

०५२१००७१ एवं नव कोटय एकपञ्चाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति
तस्मिन्नैन्द्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम
पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमय
निशीथानीति भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम्

०५२१००८१ तत्रत्यानां दिवसमध्यङ्गत एव सदादित्यस्तपति सव्येनाचलं दक्षिणेन करोति

०५२१००९१ यत्रोदेति तस्य ह समानसूत्रनिपाते निम्लोचति यत्र क्वचन स्यन्देनाभितपति तस्य हैष समान

सूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति ये तं समनुपश्येरन्

०५२१०१०१ यदा चैन्द्र्याः पुर्याः प्रचलते पञ्चदशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्धद्वादशलक्षाणि साधिकानि चोपयाति

०५२१०१११ एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनस्तथान्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्

चक्रे समभ्युद्यन्ति सह वा निम्लोचन्ति

०५२१०१२१ एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु

०५२१०१३१ यस्यैकं चक्रं द्वादशारं षण्नेमि त्रिणाभि संवत्सरात्मकं समामनन्ति तस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरे कृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्र

चक्रवद्भ्रमन्मानसोत्तरगिरौ परिभ्रमति

०५२१०१४१ तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुर्यमानेन सम्मितस्तैलयन्त्राक्षवद्ध्रुवे कृतोपरि भागः

०५२१०१५१ रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावान्रविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुणयोजिता वहन्ति देवमादित्यम्

०५२१०१६१ पुरस्तात्सवितुररुणः पश्चाच्च नियुक्तः सौत्ये कर्मणि किलास्ते

०५२१०१७१ तथा वालिखिल्या ऋषयोऽङ्गुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः

संस्तुवन्ति

०५२१०१८१ तथान्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त

चतुर्दश मासि मासि भगवन्तं सूर्यमात्मानं नानानामानं पृथङ्नानानामानः पृथक्

कर्मभिर्द्वन्द्वश उपासते

०५२२००१० राजोवाच

०५२२००११ यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं प्रचलितं चाप्रदक्षिणं भगवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति

०५२२००२० स होवाच

०५२२००२१ यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वादेवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रदक्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात्

०५२२००३१ स एष भगवानादिपुरुष एव साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्म

विशुद्धिनिमित्तं कविभिरपि च वेदेन विजिज्ञास्यमानो द्वादशधा विभज्य षड्सु वसन्तादिष्वृतुषु यथोप

जोषमृतुगुणान्विदधाति

०५२२००४१ तमेतमिह पुरुषास्त्रय्या विद्यया वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नातैर्योग

वितानैश्च श्रद्धया यजन्तोऽञ्जसा श्रेयः समधिगच्छन्ति

०५२२००५१ अथ स एष आत्मा लोकानां द्यावापृथिव्योरन्तरेण नभोवलयस्य कालचक्रगतो द्वादश

मासान्भुङ्क्ते राशिसंज्ञान्संवत्सरावयवान्मासः पक्षद्वयं दिवा नक्तं चेति सपादर्क्ष

द्वयमुपदिशन्ति यावता षष्ठमंशं भुञ्जीत स वै ऋतुरित्युपदिश्यते संवत्सरावयवः

०५२२००६१ अथ च यावतार्धेन नभोवीथ्यां प्रचरति तं कालमयनमाचक्षते

०५२२००७१ अथ च यावन्नभोमण्डलं सह द्यावापृथिव्योर्मण्डलाभ्यां कार्त्स्न्येन स ह भुञ्जीत तं

कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्यशैघ्र्यसम

गतिभिः समामनन्ति

०५२२००८१ एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सर

भुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो

भुङ्क्ते

०५२२००९१ अथ चापूर्यमाणाभिश्च कलाभिरमराणां क्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्व

पक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशता

मुहूर्तैर्भुङ्क्ते

०५२२०१०१ य एष षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यभूतपशु

पक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात्सर्वमय इति वर्णयन्ति

०५२२०१११ तत उपरिष्टाद्द्विलक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि

सहाभिजिताष्टाविंशतिः

०५२२०१२१ तत उपरिष्टादुशना द्विलक्षयोजनत उपलभ्यते पुरतः पश्चात्सहैव वार्कस्य शैघ्र्य

मान्द्यसाम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्यदानुकूल एव प्रायेण वर्षयंश्चारेणानुमीयते स

वृष्टिविष्टम्भग्रहोपशमनः

०५२२०१३१ उशनसा बुधो व्याख्यातस्तत उपरिष्टाद्द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः

प्रायेण शुभकृद्यदार्काद्व्यतिरिच्येत तदातिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते

०५२२०१४१ अत ऊर्ध्वमङ्गारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो

राशीन्द्वादशानुभुङ्क्ते यदि न वक्रेणाभिवर्तते प्रायेणाशुभग्रहोऽघशंसः

०५२२०१५१ तत उपरिष्टाद्विलक्षयोजनान्तरगता भगवान्बृहस्पतिरेकैकस्मिन्राशौ परिवत्सरं

परिवत्सरं चरति यदि न वक्रः स्यात्प्रायेणानुकूलो ब्राह्मणकुलस्य

०५२२०१६१ तत उपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानः शनैश्चर एकैकस्मिन्राशौ

त्रिंशन्मासान्विलम्बमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशान्तिकरः

०५२२०१७१ तत उत्तरस्माद्दषय एकादशलक्षयोजनान्तर उपलभ्यन्ते य एव लोकानां शमनुभावयन्तो

भगवतो विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमन्ति

०५२३००१० श्रीशुक उवाच

०५२३००११ अथ तस्मात्परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद्विष्णोः परमं पदमभिवदन्ति यत्र

ह महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः

सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य उपास्ते तस्येहानुभाव उपवर्णितः

०५२३००२१ स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन

भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते

०५२३००३१ यथा मेढीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिस्त्रिभिः सवनैर्यथास्थानं मण्डलानि

चरन्त्येवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्ब्य

वायुनोदीर्यमाणा आकल्पान्तं परिचङ्क्रमन्ति नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः

परिवर्तन्ते एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतन्ति

०५२३००४१ केचनैतज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योग

धारणायामनुवर्णयन्ति

०५२३००५१ यस्य पुच्छाग्रेऽवाक्षिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितस्तस्य लाङ्गूले

प्रजापतिरग्निरिन्द्रो धर्म इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः तस्य दक्षिणावर्तकुण्डली

भूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयन्ति दक्षिणायनानि तु सव्ये यथा

शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसङ्ख्या भवन्ति पृष्ठे

त्वजवीथी आकाशगङ्गा चोदरतः

०५२३००६१ पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषे च दक्षिणवामयोः पश्चिमयोः

पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासङ्ख्यं श्रवणपूर्वाषाढे दक्षिण

वामयोर्लोचनयोर्धनिष्ठा मूलं च दक्षिणवामयोः कर्णयोर्मघादीन्यष्ट नक्षत्राणि दक्षिणायनानि

वामपार्श्ववङ्क्रिषु युञ्जीत तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्ववङ्क्रिषु प्रातिलोम्येन

प्रयुञ्जीत शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत्

०५२३००७१ उत्तराहनावगस्तिरधराहनौ यमो मुखेषु चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि

वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशना स्तनयोरश्विनौ बुधः प्राणापानयो

राहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः

०५२३००८१ एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो

निरीक्षमाण उपतिष्ठेत नमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषायाभिधीमहीति

०५२३००९१ ग्रहर्क्षतारामयमाधिदैविकं पापापहं मन्त्रकृतां त्रिकालम्

०५२३००९२ नमस्यतः स्मरतो वा त्रिकालं नश्येत तत्कालजमाशु पापम्

०५२४००१० श्रीशुक उवाच

०५२४००११ अधस्तात्सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वं ग्रहत्वं

चालभत भगवदनुकम्पया स्वयमसुरापसदः सैंहिकेयो ह्यतदर्हस्तस्य तात जन्म कर्माणि

चोपरिष्टाद्वक्ष्यामः

०५२४००२१ यददस्तरणेर्मण्डलं प्रतपतस्तद्विस्तरतो योजनायुतमाचक्षते द्वादशसहस्रं

सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद्वैरानुबन्धः सूर्या

चन्द्रमसावभिधावति

०५२४००३१ तन्निशम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं

दयितमस्त्रं तत्तेजसा दुर्विषहं मुहुः परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकित

हृदय आरादेव निवर्तते तदुपरागमिति वदन्ति लोकाः

०५२४००४१ ततोऽधस्तात्सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव

०५२४००५१ ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेतभूतगणानां विहाराजिरमन्तरिक्षं यावद्वायुः प्रवाति

यावन्मेघा उपलभ्यन्ते

०५२४००६१ ततोऽधस्ताच्छतयोजनान्तर इयं पृथिवी यावद्धंसभासश्येनसुपर्णादयः पतत्त्रि

प्रवरा उत्पतन्तीति

०५२४००७१ उपवर्णितं भूमेर्यथासन्निवेशावस्थानमवनेरप्यधस्तात्सप्त भूविवरा एकैकशो

योजनायुतान्तरेणायामविस्तारेणोपक्लृप्ता अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति

०५२४००८१ एतेषु हि बिलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्यानन्दभूतिविभूतिभिः सुसमृद्ध

भवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृद्

अनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामा मायाविनोदा निवसन्ति

०५२४००९१ येषु महाराज मयेन मायाविना विनिर्मिताः पुरो नानामणिप्रवरप्रवेकविरचितविचित्रभवन

प्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिम

भूमिभिर्विवरेश्वरगृहोत्तमैः समलङ्कृताश्चकासति

०५२४०१०१ उद्यानानि चातितरां मनैन्द्रियानन्दिभिः कुसुमफलस्तबकसुभगकिसलयावनतरुचिर विटपविटपिनां लताङ्गालिङ्गितानां श्रीभिः समिथुनविविधविहङ्गमजलाशयानाममलजलपूर्णानां झषकुलोल्लङ्घनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पललोहितशतपत्रादिवनेषु कृत निकेतनानामेकविहाराकुलमधुरविविधस्वनादिभिरिन्द्रियोत्सवैरमरलोकश्रियमतिशयितानि

०५२४०१११ यत्र ह वाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते

०५२४०१२१ यत्र हि महाहिप्रवरशिरोमणयः सर्वं तमः प्रबाधन्ते

०५२४०१३१ न वा एतेषु वसतां दिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलित जरादयश्च देहवैवर्ण्यदौर्गन्ध्यस्वेदक्लमग्लानिरिति वयोऽवस्थाश्च भवन्ति

०५२४०१४१ न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात्

०५२४०१५१ यस्मिन्प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादेव स्रवन्ति पतन्ति च

०५२४०१६१ अथातले मयपुत्रोऽसुरो बलो निवसति येन ह वा इह सृष्टाः षण्णवतिर्मायाः काश्चनाद्यापि मायाविनो धारयन्ति यस्य च जृम्भमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकनानुराग स्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति यस्मिन्नुपयुक्ते पुरुष ईश्वरोऽहं सिद्धो ऽहमित्ययुतमहागजबलमात्मानमभिमन्यमानः कत्थते मदान्ध इव

०५२४०१७१ ततोऽधस्ताद्वितले हरो भगवान्हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापति सर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूत आस्ते यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण यत्र चित्रभानुर्मातरिश्वना समिध्यमान ओजसा पिबति तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति

०५२४०१८१ ततोऽधस्तात्सुतले उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा वटुवामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकम्पयैव पुनः प्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमाराधनीयमपगतसाध्वस आस्तेऽधुनापि

०५२४०१९१ नो एवैतत्साक्षात्कारो भूमिदानस्य यत्तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा सम्प्रतिपादितस्य साक्षादपवर्गद्वारस्य यद्बिलनिलयैश्वर्यम्

०५२४०२०१ यस्य ह वाव क्षुतपतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन्पुरुषः कर्म बन्धनमञ्जसा विधुनोति यस्य हैव प्रतिबाधनं मुमुक्षवोऽन्यथैवोपलभन्ते

०५२४०२११ तद्भक्तानामात्मवतां सर्वेषामात्मन्यात्मद आत्मतयैव

०५२४०२२१ न वै भगवान्नूनममुष्यानुजग्राह यदुत पुनरात्मानुस्मृतिमोषणं मायामय भोगैश्वर्यमेवातनुतेति

०५२४०२३१ यत्तद्भगवतानधिगतान्योपायेन याञ्चाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुण पाशैश्च सम्प्रतिमुक्तो गिरिदर्यां चापविद्ध इति होवाच

०५२४०२४१ नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्रो यस्य सचिवो मन्त्राय वृत एकान्ततो

बृहस्पतिस्तमतिहाय स्वयमुपेन्द्रेणात्मानमयाचतात्मनश्चाशिषो नो एव तद्दास्यमतिगम्भीर वयसः कालस्य मन्वन्तरपरिवृत्तं कियल्लोकत्रयमिदम्

०५२४०२५१ यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि

०५२४०२६१ तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति

०५२४०२७१ तस्यानुचरितमुपरिष्टाद्विस्तरिष्यते यस्य भगवान्स्वयमखिलजगद्गुरुर्नारायणो द्वारि

गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येनाङ्गुष्ठेन पदा दशकन्धरो योजनायुतायुतं दिग् विजय उच्चाटितः

०५२४०२८१ ततोऽधस्तात्तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोकीशं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते

०५२४०२९१ ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशो नाम गणः कुहक

तक्षककालियसुषेणादिप्रधाना महाभोगवन्तः पतत्रिराजाधिपतेः पुरुष वाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुम्बसङ्गेन क्वचित्प्रमत्ता विहरन्ति

०५२४०३०१ ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिन इति

विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा

प्रतिहतबलावलेपा बिलेशया इव वसन्ति ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्रवर्णाभिरिन्द्राद्बिभ्यति

०५२४०३११ ततोऽधस्तात्पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेत धनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति

येषामु ह वै पञ्चसप्तदशशतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पाताल

विवरतिमिरनिकरं स्वरोचिषा विधमन्ति

०५२५००१० श्रीशुक उवाच

०५२५००११ तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्यातानन्त इति

सात्वतीया द्रष्टृदृश्ययोः सङ्कर्षणमहमित्यभिमानलक्षणं यं सङ्कर्षणमित्याचक्षते

०५२५००२१ यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं

सिद्धार्थ इव लक्ष्यते

०५२५००३१ यस्य ह वा इदं कालेनोपसञ्जिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरन्तरेण साङ्कर्षणो

नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तम्भयन्नुदतिष्ठत्

०५२५००४१ यस्याङ्घ्रिकमलयुगलारुणविशदनखमणिषण्डमण्डलेष्वहिपतयः सह

सात्वतर्षभैरेकान्तभक्तियोगेनावनमन्तः स्ववदनानि परिस्फुरत्कुण्डलप्रभामण्डितगण्ड

स्थलान्यतिमनोहराणि प्रमुदितमनसः खलु विलोकयन्ति

०५२५००५१ यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वङ्गवलयविलसितविशदविपुलधवल

सुभगरुचिरभुजरजतस्तम्भेष्वगुरुचन्दनकुङ्कुमपङ्कानुलेपेनावलिम्पमानास्तद्

अभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमद

विघूर्णितारुणकरुणावलोकनयनवदनारविन्दं सव्रीडं किल विलोकयन्ति

०५२५००६१ स एव भगवाननन्तोऽनन्तगुणार्णव आदिदेव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय

आस्ते

०५२५००७१ ध्यायमानः सुरासुरोरगसिद्धगन्धर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृत

विह्वललोचनः सुललितमुखरिकामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनव

तुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नील

वासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजो भगवान्महेन्द्रो वारणेन्द्र इव काञ्चनीं

कक्षामुदारलीलो बिभर्ति

०५२५००८१ य एष एवमनुश्रुतो ध्यायमानो मुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं

हृदयग्रन्थिं सत्त्वरजस्तमोमयमन्तर्हृदयं गत आशु निर्भिनत्ति

तस्यानुभावान्भगवान्स्वायम्भुवो नारदः सह तुम्बुरुणा सभायां ब्रह्मणः संश्लोकयामास

०५२५००९१ उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः

०५२५००९२ सत्त्वाद्याः प्रकृतिगुणा यदीक्षयासन्

०५२५००९३ यद्रूपं ध्रुवमकृतं यदेकमात्मन्

०५२५००९४ नानाधात्कथमु ह वेद तस्य वर्त्म

०५२५०१०१ मूर्तिं नः पुरुकृपया बभार सत्त्वं

०५२५०१०२ संशुद्धं सदसदिदं विभाति तत्र

०५२५०१०३ यल्लीलां मृगपतिराददेऽनवद्याम्

०५२५०१०४ आदातुं स्वजनमनांस्युदारवीर्यः

०५२५०१११ यन्नाम श्रुतमनुकीर्तयेदकस्माद्

०५२५०११२ आर्तो वा यदि पतितः प्रलम्भनाद्वा

०५२५०११३ हन्त्यंहः सपदि नृणामशेषमन्यं

०५२५०११४ कं शेषाद्भगवत आश्रयेन्मुमुक्षुः

०५२५०१२१ मूर्धन्यर्पितमणुवत्सहस्रमूर्ध्नो

०५२५०१२२ भूगोलं सगिरिसरित्समुद्रसत्त्वम्

०५२५०१२३ आनन्त्यादनिमितविक्रमस्य भूम्नः

०५२५०१२४ को वीर्याण्यधि गणयेत्सहस्रजिह्वः

०५२५०१३१ एवम्प्रभावो भगवाननन्तो

०५२५०१३२ दुरन्तवीर्योरुगुणानुभावः

०५२५०१३३ मूले रसायाः स्थित आत्मतन्त्रो

०५२५०१३४ यो लीलया क्ष्मां स्थितये बिभर्ति

०५२५०१४१ एता ह्येवेह नृभिरुपगन्तव्या गतयो यथाकर्मविनिर्मिता यथोपदेशमनुवर्णिताः कामान्कामयमानैः

०५२५०१५१ एतावतीर्हि राजन्पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथा

प्रश्नं व्याचख्ये किमन्यत्कथयाम इति

०५२६००१० राजोवाच

०५२६००११ महर्ष एतद्वैचित्र्यं लोकस्य कथमिति

०५२६००२० ऋषिरुवाच

०५२६००२१ त्रिगुणत्वात्कर्तुः श्रद्धया कर्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवन्ति

०५२६००२१ अथेदानीं प्रतिषिद्धलक्षणस्याधर्मस्य तथैव कर्तुः श्रद्धाया वैसादृश्यात्कर्मफलं विसदृशं भवति या ह्यनाद्यविद्यया कृतकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्तासां प्राचुर्येणानुवर्णयिष्यामः

०५२६००३० राजोवाच

०५२६००३१ नरका नाम भगवन्किं देशविशेषा अथवा बहिस्त्रिलोक्या आहोस्विदन्तराल इति

०५२६००४० ऋषिरुवाच

०५२६००४१ अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च
जलाद्यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना
निवसन्ति

०५२६००५१ यत्र ह वाव भगवान्पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु सम्परेतेषु
यथाकर्मावद्यं दोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति

०५२६००६१ तत्र हैके नरकानेकविंशतिं गणयन्ति अथ तांस्ते राजन्नामरूपलक्षणतो
ऽनुक्रमिष्यामस्तामिस्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं
सूकरमुखमन्धकूपः कृमिभोजनः सन्दंशस्तप्तसूर्मिर्वज्रकण्टकशाल्मली वैतरणी पूयोदः
प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति किञ्च क्षारकर्दमो रक्षोगण
भोजनः शूलप्रोतो दन्दशूकोऽवटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिर्नरका विविध
यातनाभूमयः

०५२६००७१ तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरति
भयानकैस्तामिस्रे नरके बलान्निपात्यते अनशनानुदपानदण्डताडन
सन्तर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तामिस्र
प्राये

०५२६००८१ एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातना
स्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं
तमुपदिशन्ति

०५२६००९१ यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवानुदिनं
प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति

०५२६०१०१ ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातनामुपगतं त एव रुरवो भूत्वा
तथा तमेव विहिंसन्ति तस्माद्रौरवमित्याहू रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः

०५२६०१११ एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः
केवलं देहम्भरः

०५२६०१२१ यस्त्विह वा उग्रः पशून्पक्षिणो वा प्राणत उपरन्धयति तमपकरुणं पुरुषादैरपि
विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैले उपरन्धयन्ति

०५२६०१३१ यस्त्विह ब्रह्मध्रुक्स कालसूत्रसंज्ञके नरके अयुतयोजनपरिमण्डले ताम्रमये तप्त

खले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानान्तर्बहिः शरीर आस्ते शेते चेष्टतेऽवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि
०५२६०१४१ यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति तत्र हासावितस्ततो धावमान उभयतो धारैस्तालवनासिपत्रैश्छिद्यमान सर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्महा पाखण्डानुगतं फलं भुङ्क्ते
०५२६०१५१ यस्त्विह वै राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स
पापीयान्नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथैवेहेक्षुखण्ड आर्त स्वरेण स्वनयन्क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः
०५२६०१६१ यस्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पित वृत्तिर्विविक्तपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये के चाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः
०५२६०१७१ यस्त्विह वा असंविभज्याश्नाति यत्किञ्चनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः स
परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहूतादोऽनिर्वेशमात्मानं यातयते
०५२६०१८१ यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य वापहरत्यन्यस्य वानापदि पुरुषस्तममुत्र राजन्यमपुरुषा अयस्मयैरग्निपिण्डैः सन्दंशैस्त्वचि निष्कुषन्ति
०५२६०१९१ यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या
०५२६०२०१ यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति
०५२६०२११ ये त्विह वै राजन्या राजपुरुषा वा अपाखण्डा धर्मसेतून्भिन्दन्ति ते सम्परेत्य वैतरण्यां
निपतन्ति भिन्नमर्यादास्तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणित केशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते
०५२६०२२१ ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति ते चापि प्रेत्य
पूयविण्मूत्रश्लेष्ममलापूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति

०५२६०२३१ ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगया विहारा अतीर्थे च मृगान्निघ्नन्ति तानपि

सम्परेतान्लक्ष्यभूतान्यमपुरुषा इषुभिर्विध्यन्ति

०५२६०२४१ ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून्विशसन्ति तानमुष्मिन्लोके वैशसे नरके

पतितान्निरयपतयो यातयित्वा विशसन्ति

०५२६०२५१ यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहितस्तं पापकृतममुत्र रेतः

कुल्यायां पातयित्वा रेतः सम्पाययन्ति

०५२६०२६१ ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान्सार्थान्वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि

परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति

०५२६०२७१ यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथञ्चित्स वै प्रेत्य नरके

ऽवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायाद्गिरिमूर्ध्नः सम्पात्यते यत्र जलमिव स्थलमश्म

पृष्ठमवभासते तदवीचिमत्तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति

०५२६०२८१ यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थोऽपि वा पिबति

प्रमादतस्तेषां निरयं नीतानामुरसि पदाक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति

०५२६०२९१ अथ च यस्त्विह वा आत्मसम्भावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो

वरीयसो न बहु मन्येत स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो दुरन्ता यातना ह्यश्नुते

०५२६०३०१ ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून्खादन्ति तांश्च ते पशव इव

निहता यमसदने यातयन्तो रक्षोगणाः सौनिका इव स्वधितिनावदायासृक्पिबन्ति नृत्यन्ति च गायन्ति च

हृष्यमाणा यथेह पुरुषादाः

०५२६०३११ ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैश्रम्भकैरुपसृतानुपविश्रम्भय्य जिजीविषून्शूल

सूत्रादिषूपप्रोतान्क्रीडनकतया यातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मानः क्षुत्तृड्भ्यां

चाभिहताः कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति

०५२६०३२१ ये त्विह वै भूतान्युद्वेजयन्ति नरा उल्बणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके

दन्दशूकाख्ये निपतन्ति यत्र नृप दन्दशूकाः पञ्चमुखाः सप्तमुखा उपसृत्य ग्रसन्ति यथा बिलेशयान्

०५२६०३३१ ये त्विह वा अन्धावटकुसूलगुहादिषु भूतानि निरुन्धन्ति तथामुत्र तेष्वेवोपवेश्य सगरेण
वह्निना धूमेन निरुन्धन्ति

०५२६०३४१ यस्त्विह वा अतिथीनभ्यागतान्वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन
चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्राः कङ्ककाकवटादयः प्रसह्योरु
बलादुत्पाटयन्ति

०५२६०३५१ यस्त्विह वा आढ्याभिमतिरहङ्कृतिस्तिर्यक्प्रेक्षणः सर्वतोऽभिविशङ्की अर्थव्ययनाशचिन्तया
परिशुष्यमाणहृदयवदनो निर्वृतिमनवगतो ग्रह इवार्थमभिरक्षति स चापि प्रेत्य तद्
उत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापपुरुषं
धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति

०५२६०३६१ एवंविधा नरका यमालये सन्ति शतशः सहस्रशस्तेषु सर्वेषु च सर्व एवाधर्मवर्तिनो ये
केचिदिहोदिता अनुदिताश्चावनिपते पर्यायेण विशन्ति तथैव धर्मानुवर्तिन इतरत्र इह तु पुनर्भवे त
उभयशेषाभ्यां निविशन्ति

०५२६०३७१ निवृत्तिलक्षणमार्ग आदावेव व्याख्यातः एतावानेवाण्डकोशो यश्चतुर्दशधा पुराणेषु विकल्पित
उपगीयते यत्तद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्ममाया
गुणमयमनुवर्णितमादृतः पठति शृणोति श्रावयति स उपगेयं भगवतः परमात्मनोऽग्राह्यमपि
श्रद्धाभक्तिविशुद्धबुद्धिर्वेद

०५२६०३८१ श्रुत्वा स्थूलं तथा सूक्ष्मं रूपं भगवतो यतिः

०५२६०३८२ स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेदिति

०५२६०३९१ भूद्वीपवर्षसरिदद्रिनभःसमुद्र

०५२६०३९२ पातालदिङ्नरकभागणलोकसंस्था

०५२६०३९३ गीता मया तव नृपाद्भुतमीश्वरस्य

०५२६०३९४ स्थूलं वपुः सकलजीवनिकायधाम

०६०१००१० श्रीपरीक्षिदुवाच

०६०१००११ निवृत्तिमार्गः कथित आदौ भगवता यथा

०६०१००१२ क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः

०६०१००२१ प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने

०६०१००२२ योऽसावलीनप्रकृतेर्गुणसर्गः पुनः पुनः

०६०१००३१ अधर्मलक्षणा नाना नरकाश्चानुवर्णिताः

०६०१००३२ मन्वन्तरश्च व्याख्यात आद्यः स्वायम्भुवो यतः
०६०१००४१ प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च
०६०१००४२ द्वीपवर्षसमुद्राद्रि नद्युद्यानवनस्पतीन्
०६०१००५१ धरामण्डलसंस्थानं भागलक्षणमानतः
०६०१००५२ ज्योतिषां विवराणां च यथेदमसृजद्विभुः
०६०१००६१ अधुनेह महाभाग यथैव नरकान्नरः
०६०१००६२ नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि
०६०१००७० श्रीशुक उवाच
०६०१००७१ न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनौक्तपाणिभिः
०६०१००७२ ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः
०६०१००८१ तस्मात्पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना
०६०१००८२ दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक्चिकित्सेत रुजां निदानवित्
०६०१००९० श्रीराजोवाच
०६०१००९१ दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम्
०६०१००९२ करोति भूयो विवशः प्रायश्चित्तमथो कथम्
०६०१०१०१ क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः
०६०१०१०२ प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत्
०६०१०११० श्रीबादरायणिरुवाच
०६०१०१११ कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते
०६०१०११२ अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम्
०६०१०१२१ नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि
०६०१०१२२ एवं नियमकृद्राजन्शनैः क्षेमाय कल्पते
०६०१०१३१ तपसा ब्रह्मचर्येण शमेन च दमेन च
०६०१०१३२ त्यागेन सत्यशौचाभ्यां यमेन नियमेन वा
०६०१०१४१ देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः
०६०१०१४२ क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः
०६०१०१५१ केचित्केवलया भक्त्या वासुदेवपरायणाः
०६०१०१५२ अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः
०६०१०१६१ न तथा ह्यघवान्राजन्पूयेत तपआदिभिः
०६०१०१६२ यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया
०६०१०१७१ सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः

०६०१०१७२ सुशीलाः साधवो यत्र नारायणपरायणाः
०६०१०१८१ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्
०६०१०१८२ न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः
०६०१०१९१ सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह
०६०१०१९२ न ते यमं पाशभृतश्च तद्भटान्स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः
०६०१०२०१ अत्र चोदाहरन्तीममितिहासं पुरातनम्
०६०१०२०२ दूतानां विष्णुयमयोः संवादस्तं निबोध मे
०६०१०२११ कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः
०६०१०२१२ नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः
०६०१०२२१ बन्द्यक्षैः कैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थितः
०६०१०२२२ बिभ्रत्कुटुम्बमशुचिर्यातयामास देहिनः
०६०१०२३१ एवं निवसतस्तस्य लालयानस्य तत्सुतान्
०६०१०२३२ कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषः समाः
०६०१०२४१ तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः
०६०१०२४२ बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम्
०६०१०२५१ स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि
०६०१०२५२ निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम्
०६०१०२६१ भुञ्जानः प्रपिबन्खादन्बालकं स्नेहयन्त्रितः
०६०१०२६२ भोजयन्पाययन्मूढो न वेदागतमन्तकम्
०६०१०२७१ स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते
०६०१०२७२ मतिं चकार तनये बाले नारायणाह्वये
०६०१०२८१ स पाशहस्तांस्त्रीन्दृष्ट्वा पुरुषानतिदारुणान्
०६०१०२८२ वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान्
०६०१०२९१ दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम्
०६०१०२९२ प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः
०६०१०३०१ निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम्
०६०१०३०२ भर्तुर्नाम महाराज पार्षदाः सहसापतन्
०६०१०३११ विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम्
०६०१०३१२ यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा
०६०१०३२१ ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरःसराः
०६०१०३२२ के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम्

०६०१०३३१ कस्य वा कुत आयाताः कस्मादस्य निषेधथ
०६०१०३३२ किं देवा उपदेवा या यूयं किं सिद्धसत्तमाः
०६०१०३४१ सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः
०६०१०३४२ किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः
०६०१०३५१ सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः
०६०१०३५२ धनुर्निषङ्गासिगदा शङ्खचक्राम्बुजश्रियः
०६०१०३६१ दिशो वितिमिरालोकाः कुर्वन्तः स्वेन तेजसा
०६०१०३६२ किमर्थं धर्मपालस्य किङ्करान्नो निषेधथ
०६०१०३७० श्रीशुक उवाच
०६०१०३७१ इत्युक्ते यमदूतैस्ते वासुदेवोक्तकारिणः
०६०१०३७२ तान्प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा
०६०१०३८० श्रीविष्णुदूता ऊचुः
०६०१०३८१ यूयं वै धर्मराजस्य यदि निर्देशकारिणः
०६०१०३८२ ब्रूत धर्मस्य नस्तत्त्वं यच्चाधर्मस्य लक्षणम्
०६०१०३९१ कथं स्विद्ध्रियते दण्डः किं वास्य स्थानमीप्सितम्
०६०१०३९२ दण्ड्याः किं कारिणः सर्वे आहो स्वित्कतिचिन्नृणाम्
०६०१०४०० यमदूता ऊचुः
०६०१०४०१ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः
०६०१०४०२ वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम
०६०१०४११ येन स्वधाम्न्यमी भावा रजःसत्त्वतमोमयाः
०६०१०४१२ गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम्
०६०१०४२१ सूर्योऽग्निः खं मरुद्देवः सोमः सन्ध्याहनी दिशः
०६०१०४२२ कं कुः स्वयं धर्म इति ह्येते दैह्यस्य साक्षिणः
०६०१०४३१ एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते
०६०१०४३२ सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः
०६०१०४४१ सम्भवन्ति हि भद्राणि विपरीतानि चानघाः
०६०१०४४२ कारिणां गुणसङ्गोऽस्ति देहवान्न ह्यकर्मकृत्
०६०१०४५१ येन यावान्यथाधर्मो धर्मो वेह समीहितः
०६०१०४५२ स एव तत्फलं भुङ्क्ते तथा तावदमुत्र वै
०६०१०४६१ यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते
०६०१०४६२ भूतेषु गुणवैचित्र्यात्तथान्यत्रानुमीयते

०६०१०४७१ वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा
०६०१०४७२ एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम्
०६०१०४८१ मनसैव पुरे देवः पूर्वरूपं विपश्यति
०६०१०४८२ अनुमीमांसतेऽपूर्वं मनसा भगवानजः
०६०१०४९१ यथाज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि
०६०१०४९२ न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा
०६०१०५०१ पञ्चभिः कुरुते स्वार्थान्पञ्च वेदाथ पञ्चभिः
०६०१०५०२ एकस्तु षोडशेन त्रीन्स्वयं सप्तदशोऽश्नुते
०६०१०५११ तदेतत्षोडशकलं लिङ्गं शक्तित्रयं महत्
०६०१०५१२ धत्तेऽनुसंसृतिं पुंसि हर्षशोकभयार्तिदाम्
०६०१०५२१ देह्यज्ञोऽजितषड्वर्गो नेच्छन्कर्माणि कार्यते
०६०१०५२२ कोशकार इवात्मानं कर्मणाच्छाद्य मुह्यति
०६०१०५३१ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्
०६०१०५३२ कार्यते ह्यवशः कर्म गुणैः स्वाभाविकैर्बलात्
०६०१०५४१ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत
०६०१०५४२ यथायोनि यथाबीजं स्वभावेन बलीयसा
०६०१०५५१ एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः
०६०१०५५२ आसीत्स एव न चिरादीशसङ्गाद्विलीयते
०६०१०५६१ अयं हि श्रुतसम्पन्नः शीलवृत्तगुणालयः
०६०१०५६२ धृतव्रतो मृदुर्दान्तः सत्यवाङ्मन्त्रविच्छुचिः
०६०१०५७१ गुर्वग्न्यतिथिवृद्धानां शुश्रूषुरनहङ्कृतः
०६०१०५७२ सर्वभूतसुहृत्साधुर्मितवागनसूयकः
०६०१०५८१ एकदासौ वनं यातः पितृसन्देशकृद्द्विजः
०६०१०५८२ आदाय तत आवृत्तः फलपुष्पसमित्कुशान्
०६०१०५९१ ददर्श कामिनं कञ्चिच्छूद्रं सह भुजिष्यया
०६०१०५९२ पीत्वा च मधु मैरेयं मदाघूर्णितनेत्रया
०६०१०६०१ मत्तया विश्लथन्नीव्या व्यपेतं निरपत्रपम्
०६०१०६०२ क्रीडन्तमनुगायन्तं हसन्तमनयान्तिके
०६०१०६११ दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम्
०६०१०६१२ जगाम हृच्छयवशं सहसैव विमोहितः
०६०१०६२१ स्तम्भयन्नात्मनात्मानं यावत्सत्त्वं यथाश्रुतम्

०६०१०६२२ न शशाक समाधातुं मनो मदनवेपितम्
०६०१०६३१ तन्निमित्तस्मरव्याज ग्रहग्रस्तो विचेतनः
०६०१०६३२ तामेव मनसा ध्यायन्स्वधर्माद्विरराम ह
०६०१०६४१ तामेव तोषयामास पित्र्येणार्थेन यावता
०६०१०६४२ ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा
०६०१०६५१ विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम्
०६०१०६५२ विससर्जाचिरात्पापः स्वैरिण्यापाङ्गविद्धधीः
०६०१०६६१ यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम्
०६०१०६६२ बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम्
०६०१०६७१ यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यतिगर्हितः
०६०१०६७२ अवर्तत चिरं कालमघायुरशुचिर्मलात्
०६०१०६८१ तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम्
०६०१०६८२ नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुद्ध्यति
०६०२००१० श्रीबादरायणिरुवाच
०६०२००११ एवं ते भगवद्दूता यमदूताभिभाषितम्
०६०२००१२ उपधार्याथ तान्राजन्प्रत्याहुर्नयकोविदाः
०६०२००२० श्रीविष्णुदूता ऊचुः
०६०२००२१ अहो कष्टं धर्मदृशामधर्मः स्पृशते सभाम्
०६०२००२२ यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा
०६०२००३१ प्रजानां पितरो ये च शास्तारः साधवः समाः
०६०२००३२ यदि स्यात्तेषु वैषम्यं कं यान्ति शरणं प्रजाः
०६०२००४१ यद्यदाचरति श्रेयानितरस्तत्तदीहते
०६०२००४२ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते
०६०२००५१ यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः
०६०२००५२ स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः
०६०२००६१ स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम्
०६०२००६२ विस्रम्भणीयो भूतानां सघृणो दोग्धुमर्हति
०६०२००७१ अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि
०६०२००७२ यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः
०६०२००८१ एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्
०६०२००८२ यदा नारायणायेति जगाद चतुरक्षरम्

०६०२००९१ स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः
०६०२००९२ स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे
०६०२०१०१ सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्
०६०२०१०२ नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः
०६०२०१११ न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान्व्रतादिभिः
०६०२०११२ यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम्
०६०२०१२१ नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे
०६०२०१२२ तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः
०६०२०१३१ अथैनं मापनयत कृताशेषाघनिष्कृतम्
०६०२०१३२ यदसौ भगवन्नाम म्रियमाणः समग्रहीत्
०६०२०१४१ साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा
०६०२०१४२ वैकुण्ठनामग्रहणमशेषाघहरं विदुः
०६०२०१५१ पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः
०६०२०१५२ हरिरित्यवशेनाह पुमान्नार्हति यातनाः
०६०२०१६१ गुरूणां च लघूनां च गुरूणि च लघूनि च
०६०२०१६२ प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः
०६०२०१७१ तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः
०६०२०१७२ नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया
०६०२०१८१ अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत्
०६०२०१८२ सङ्कीर्तितमघं पुंसो दहेदेधो यथानलः
०६०२०१९१ यथागदं वीर्यतममुपयुक्तं यदृच्छया
०६०२०१९२ अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः
०६०२०२०० श्रीशुक उवाच
०६०२०२०१ त एवं सुविनिर्णीय धर्मं भागवतं नृप
०६०२०२०२ तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन्
०६०२०२११ इति प्रत्युदिता याम्या दूता यात्वा यमान्तिकम्
०६०२०२१२ यमराज्ञे यथा सर्वमाचचक्षुररिन्दम
०६०२०२२१ द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः
०६०२०२२२ ववन्दे शिरसा विष्णोः किङ्करान्दर्शनोत्सवः
०६०२०२३१ तं विवक्षुमभिप्रेत्य महापुरुषकिङ्कराः
०६०२०२३२ सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ

०६०२०२४१ अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः
०६०२०२४२ धर्मं भागवतं शुद्धं त्रैवेद्यं च गुणाश्रयम्
०६०२०२५१ भक्तिमान्भगवत्याशु माहात्म्यश्रवणाद्धरेः
०६०२०२५२ अनुतापो महानासीत्स्मरतोऽशुभमात्मनः
०६०२०२६१ अहो मे परमं कष्टमभूदविजितात्मनः
०६०२०२६२ येन विप्लावितं ब्रह्म वृषल्यां जायतात्मना
०६०२०२७१ धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम्
०६०२०२७२ हित्वा बालां सतीं योऽहं सुरापीमसतीमगाम्
०६०२०२८१ वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ
०६०२०२८२ अहो मयाधुना त्यक्तावकृतज्ञेन नीचवत्
०६०२०२९१ सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे
०६०२०२९२ धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः
०६०२०३०१ किमिदं स्वप्न आहो स्वित्साक्षाद्दृष्टमिहाद्भुतम्
०६०२०३०२ क्व याता अद्य ते ये मां व्यकर्षन्पाशपाणयः
०६०२०३११ अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः
०६०२०३१२ व्यामोचयन्नीयमानं बद्ध्वा पाशैरधो भुवः
०६०२०३२१ अथापि मे दुर्भगस्य विबुधोत्तमदर्शने
०६०२०३२२ भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति
०६०२०३३१ अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः
०६०२०३३२ वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति
०६०२०३४१ क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः
०६०२०३४२ क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम्
०६०२०३५१ सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः
०६०२०३५२ यथा न भूय आत्मानमन्धे तमसि मज्जये
०६०२०३६१ विमुच्य तमिमं बन्धमविद्याकामकर्मजम्
०६०२०३६२ सर्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान्
०६०२०३७१ मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया
०६०२०३७२ विक्रीडितो ययैवाहं क्रीडामृग इवाधमः
०६०२०३८१ ममाहमिति देहादौ हित्वामिथ्यार्थधीर्मतिम्
०६०२०३८२ धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः
०६०२०३९० श्रीशुक उवाच

०६०२०३९१ इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु
०६०२०३९२ गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः
०६०२०४०१ स तस्मिन्देवसदन आसीनो योगमास्थितः
०६०२०४०२ प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि
०६०२०४११ ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना
०६०२०४१२ युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि
०६०२०४२१ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः
०६०२०४२२ उपलभ्योपलब्धान्प्राग्ववन्दे शिरसा द्विजः
०६०२०४३१ हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु
०६०२०४३२ सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम्
०६०२०४४१ साकं विहायसा विप्रो महापुरुषकिङ्करैः
०६०२०४४२ हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः
०६०२०४५१ एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मणा
०६०२०४५२ निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन्
०६०२०४६१ नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात्
०६०२०४६२ न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा
०६०२०४७१ य एतं परमं गुह्यमितिहासमघापहम्
०६०२०४७२ शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्यानुकीर्तयेत्
०६०२०४८१ न वै स नरकं याति नेक्षितो यमकिङ्करैः
०६०२०४८२ यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते
०६०२०४९१ म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम्
०६०२०४९२ अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन्
०६०३००१० श्रीराजोवाच
०६०३००११ निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तानपि धर्मराजः
०६०३००१२ एवं हताज्ञो विहतान्मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम्
०६०३००२१ यमस्य देवस्य न दण्डभङ्गः कुतश्चनर्षे श्रुतपूर्व आसीत्
०६०३००२२ एतन्मुने वृश्चति लोकसंशयं न हि त्वदन्य इति मे विनिश्चितम्
०६०३००३० श्रीशुक उवाच
०६०३००३१ भगवत्पुरुषै राजन्याम्याः प्रतिहतोद्यमाः
०६०३००३२ पतिं विज्ञापयामासुर्यमं संयमनीपतिम्
०६०३००४० यमदूता ऊचुः

०६०३००४१ कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो
०६०३००४२ त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः
०६०३००५१ यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः
०६०३००५२ कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव वा
०६०३००६१ किन्तु शास्तृबहुत्वे स्याद्बहूनामिह कर्मिणाम्
०६०३००६२ शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम्
०६०३००७१ अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः
०६०३००७२ शास्ता दण्डधरो नृणां शुभाशुभविवेचनः
०६०३००८१ तस्य ते विहितो दण्डो न लोके वर्ततेऽधुना
०६०३००८२ चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता
०६०३००९१ नीयमानं तवादेशादस्माभिर्यातनागृहान्
०६०३००९२ व्यामोचयन्पातकिनं छित्त्वा पाशान्प्रसह्य ते
०६०३०१०१ तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम्
०६०३०१०२ नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम्
०६०३०११० श्रीबादरायणिरुवाच
०६०३०१११ इति देवः स आपृष्टः प्रजासंयमनो यमः
०६०३०११२ प्रीतः स्वदूतान्प्रत्याह स्मरन्पादाम्बुजं हरेः
०६०३०१२० यम उवाच
०६०३०१२१ परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम्
०६०३०१२२ यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः
०६०३०१३१ यो नामभिर्वाचि जनं निजायां बध्नाति तन्त्र्यामिव दामभिर्गाः
०६०३०१३२ यस्मै बलिं त इमे नामकर्म निबन्धबद्धाश्चकिता वहन्ति
०६०३०१४१ अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनो विरिञ्चिः
०६०३०१४२ आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः
०६०३०१५१ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः
०६०३०१५२ यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये
०६०३०१६१ यं वै न गोभिर्मनसासुभिर्वा हृदा गिरा वासुभृतो विचक्षते
०६०३०१६२ आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम्
०६०३०१७१ तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः
०६०३०१७२ प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः
०६०३०१८१ भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि

०६०३०१८२ रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च
०६०३०१९१ धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुरृषयो नापि देवाः
०६०३०१९२ न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः
०६०३०२०१ स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः
०६०३०२०२ प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम्
०६०३०२११ द्वादशैते विजानीमो धर्मं भागवतं भटाः
०६०३०२१२ गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वामृतमश्नुते
०६०३०२२१ एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः
०६०३०२२२ भक्तियोगो भगवति तन्नामग्रहणादिभिः
०६०३०२३१ नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः
०६०३०२३२ अजामिलोऽपि येनैव मृत्युपाशादमुच्यत
०६०३०२४१ एतावतालमघनिर्हरणाय पुंसां
०६०३०२४२ सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम्
०६०३०२४३ विक्रुश्य पुत्रमघवान्यदजामिलोऽपि
०६०३०२४४ नारायणेति म्रियमाण इयाय मुक्तिम्
०६०३०२५१ प्रायेण वेद तदिदं न महाजनोऽयं
०६०३०२५२ देव्या विमोहितमतिर्बत माययालम्
०६०३०२५३ त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
०६०३०२५४ वैतानिके महति कर्मणि युज्यमानः
०६०३०२६१ एवं विमृश्य सुधियो भगवत्यनन्ते
०६०३०२६२ सर्वात्मना विदधते खलु भावयोगम्
०६०३०२६३ ते मे न दण्डमर्हन्त्यथ यद्यमीषां
०६०३०२६४ स्यात्पातकं तदपि हन्त्युरुगायवादः
०६०३०२७१ ते देवसिद्धपरिगीतपवित्रगाथा
०६०३०२७२ ये साधवः समदृशो भगवत्प्रपन्नाः
०६०३०२७३ तान्नोपसीदत हरेर्गदयाभिगुप्तान्
०६०३०२७४ नैषां वयं न च वयः प्रभवाम दण्डे
०६०३०२८१ तानानयध्वमसतो विमुखान्मुकुन्द
०६०३०२८२ पादारविन्दमकरन्दरसादजस्रम्
०६०३०२८३ निष्किञ्चनैः परमहंसकुलैरसङ्गैर्
०६०३०२८४ जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान्

०६०३०२९१ जिह्वा न वक्ति भगवद्गुणनामधेयं
०६०३०२९२ चेतश्च न स्मरति तच्चरणारविन्दम्
०६०३०२९३ कृष्णाय नो नमति यच्छिर एकदापि
०६०३०२९४ तानानयध्वमसतोऽकृतविष्णुकृत्यान्
०६०३०३०१ तत्क्षम्यतां स भगवान्पुरुषः पुराणो
०६०३०३०२ नारायणः स्वपुरुषैर्यदसत्कृतं नः
०६०३०३०३ स्वानामहो न विदुषां रचिताञ्जलीनां
०६०३०३०४ क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने
०६०३०३११ तस्मात्सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम्
०६०३०३१२ महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम्
०६०३०३२१ शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः
०६०३०३२२ यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः
०६०३०३३१ कृष्णाङ्घ्रिपद्ममधुलिण्न पुनर्विसृष्ट
०६०३०३३२ मायागुणेषु रमते वृजिनावहेषु
०६०३०३३३ अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुम्
०६०३०३३४ ईहेत कर्म यत एव रजः पुनः स्यात्
०६०३०३४१ इत्थं स्वभर्तृगदितं भगवन्महित्वं
०६०३०३४२ संस्मृत्य विस्मितधियो यमकिङ्करास्ते
०६०३०३४३ नैवाच्युताश्रयजनं प्रतिशङ्कमाना
०६०३०३४४ द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन्
०६०३०३५१ इतिहासमिमं गुह्यं भगवान्कुम्भसम्भवः
०६०३०३५२ कथयामास मलय आसीनो हरिमर्चयन्
०६०४००१० श्रीराजोवाच
०६०४००११ देवासुरनृणां सर्गो नागानां मृगपक्षिणाम्
०६०४००१२ सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे
०६०४००२१ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा
०६०४००२२ अनुसर्गं यया शक्त्या ससर्ज भगवान्परः
०६०४००३० श्रीसूत उवाच
०६०४००३१ इति सम्प्रश्नमाकर्ण्य राजर्षेर्बादरायणिः
०६०४००३२ प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः
०६०४००४० श्रीशुक उवाच

०६०४००४१ यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः
०६०४००४२ अन्तःसमुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम्
०६०४००५१ द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः
०६०४००५२ मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया
०६०४००६१ ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह
०६०४००६२ राजोवाच महान्सोमो मन्युं प्रशमयन्निव
०६०४००७१ न द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ
०६०४००७२ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः
०६०४००८१ अहो प्रजापतिपतिर्भगवान्हरिरव्ययः
०६०४००८२ वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः
०६०४००९१ अन्नं चराणामचरा ह्यपदः पादचारिणाम्
०६०४००९२ अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः
०६०४०१०१ यूयं च पित्रान्वादिष्टा देवदेवेन चानघाः
०६०४०१०२ प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ
०६०४०१११ आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम्
०६०४०११२ पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः
०६०४०१२१ तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियाः पतिः
०६०४०१२२ पतिः प्रजानां भिक्षूणां गृह्यज्ञानां बुधः सुहृत्
०६०४०१३१ अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः
०६०४०१३२ सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ
०६०४०१४१ यः समुत्पतितं देह आकाशान्मन्युमुल्बणम्
०६०४०१४२ आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते
०६०४०१५१ अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः
०६०४०१५२ वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम्
०६०४०१६१ इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप
०६०४०१६२ सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे
०६०४०१७१ तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल
०६०४०१७२ यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः
०६०४०१८१ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः
०६०४०१८२ रेतसा मनसा चैव तन्ममावहितः शृणु
०६०४०१९१ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः

०६०४०१९२ देवासुरमनुष्यादीन्नभःस्थलजलौकसः
०६०४०२०१ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः
०६०४०२०२ विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः
०६०४०२११ तत्राघमर्षणं नाम तीर्थं पापहरं परम्
०६०४०२१२ उपस्पृश्यानुसवनं तपसातोषयद्धरिम्
०६०४०२२१ अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम्
०६०४०२२२ तुभ्यं तदभिधास्यामि कस्यातुष्यद्यथा हरिः
०६०४०२३० श्रीप्रजापतिरुवाच
०६०४०२३१ नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे
०६०४०२३२ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयम्भुवे
०६०४०२४१ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन्संवसतः पुरेऽस्मिन्
०६०४०२४२ गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि
०६०४०२५१ देहोऽसवोऽक्षा मनवो भूतमात्रामात्मानमन्यं च विदुः परं यत्
०६०४०२५२ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे
०६०४०२६१ यदोपरामो मनसो नामरूप रूपस्य दृष्टस्मृतिसम्प्रमोषात्
०६०४०२६२ य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः
०६०४०२७१ मनीषिणोऽन्तर्हृदि सन्निवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः
०६०४०२७२ वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कर्षन्ति गूढम्
०६०४०२८१ स वै ममाशेषविशेषमाया निषेधनिर्वाणसुखानुभूतिः
०६०४०२८२ स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः
०६०४०२९१ यद्यन्निरुक्तं वचसा निरूपितं धियाक्षभिर्वा मनसोत यस्य
०६०४०२९२ मा भूत्स्वरूपं गुणरूपं हि तत्तत्स वै गुणापायविसर्गलक्षणः
०६०४०३०१ यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च
०६०४०३०२ परावरेषां परमं प्राक्प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम्
०६०४०३११ यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति
०६०४०३१२ कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने
०६०४०३२१ अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मणोः
०६०४०३२२ अवेक्षितं किञ्चन योगसाङ्ख्ययोः समं परं ह्यनुकूलं बृहत्तत्
०६०४०३३१ योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः
०६०४०३३२ नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु
०६०४०३४१ यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति

०६०४०३४२ यथानिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतां मनोरथम्
०६०४०३५० श्रीशुक उवाच
०६०४०३५१ इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे
०६०४०३५२ प्रादुरासीत्कुरुश्रेष्ठ भगवान्भक्तवत्सलः
०६०४०३६१ कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः
०६०४०३६२ चक्रशङ्खासिचर्मेषु धनुःपाशगदाधरः
०६०४०३७१ पीतवासा घनश्यामः प्रसन्नवदनेक्षणः
०६०४०३७२ वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः
०६०४०३८१ महाकिरीटकटकः स्फुरन्मकरकुण्डलः
०६०४०३८२ काञ्च्यङ्गुलीयवलय नूपुराङ्गदभूषितः
०६०४०३९१ त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः
०६०४०३९२ वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः
०६०४०४०१ स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः
०६०४०४०२ रूपं तन्महदाश्चर्यं विचक्ष्यागतसाध्वसः
०६०४०४११ ननाम दण्डवद्भूमौ प्रहृष्टात्मा प्रजापतिः
०६०४०४१२ न किञ्चनोदीरयितुमशकत्तीव्रया मुदा
०६०४०४१३ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः
०६०४०४२१ तं तथावनतं भक्तं प्रजाकामं प्रजापतिम्
०६०४०४२२ चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः
०६०४०४३० श्रीभगवानुवाच
०६०४०४३१ प्राचेतस महाभाग संसिद्धस्तपसा भवान्
०६०४०४३२ यच्छ्रद्धया मत्परया मयि भावं परं गतः
०६०४०४४१ प्रीतोऽहं ते प्रजानाथ यत्तेऽस्योद्बृंहणं तपः
०६०४०४४२ ममैष कामो भूतानां यद्भूयासुर्विभूतयः
०६०४०४५१ ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः
०६०४०४५२ विभूतयो मम ह्येता भूतानां भूतिहेतवः
०६०४०४६१ तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रियाकृतिः
०६०४०४६२ अङ्गानि क्रतवो जाता धर्म आत्मासवः सुराः
०६०४०४७१ अहमेवासमेवाग्रे नान्यत्किञ्चान्तरं बहिः
०६०४०४७२ संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः
०६०४०४८१ मय्यनन्तगुणेऽनन्ते गुणतो गुणविग्रहः

०६०४०४८२ यदासीत्तत एवाद्यः स्वयम्भूः समभूदजः
०६०४०४९१ स वै यदा महादेवो मम वीर्योपबृंहितः
०६०४०४९२ मेने खिलमिवात्मानमुद्यतः स्वर्गकर्मणि
०६०४०५०१ अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम्
०६०४०५०२ नव विश्वसृजो युष्मान्येनादावसृजद्विभुः
०६०४०५११ एषा पञ्चजनस्याङ्ग दुहिता वै प्रजापतेः
०६०४०५१२ असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम्
०६०४०५२१ मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः
०६०४०५२२ मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि
०६०४०५३१ त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूय मायया
०६०४०५३२ मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम्
०६०४०५४० श्रीशुक उवाच
०६०४०५४१ इत्युक्त्वा मिषतस्तस्य भगवान्विश्वभावनः
०६०४०५४२ स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः
०६०५००१० श्रीशुक उवाच
०६०५००११ तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः
०६०५००१२ हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः
०६०५००२१ अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप
०६०५००२२ पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम्
०६०५००३१ तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः
०६०५००३२ सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम्
०६०५००४१ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः
०६०५००४२ धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत
०६०५००५१ तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः
०६०५००५२ प्रजाविवृद्धये यत्तान्देवर्षिस्तान्ददर्श ह
०६०५००६१ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः
०६०५००६२ अदृष्ट्वान्तं भुवो यूयं बालिशा बत पालकाः
०६०५००७१ तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमम्
०६०५००७२ बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम्
०६०५००८१ नदीमुभयतो वाहां पञ्चपञ्चाद्भुतं गृहम्
०६०५००८२ क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमि

०६०५००९१ कथं स्वपितुरादेशमविद्वांसो विपश्चितः
०६०५००९२ अनुरूपमविज्ञाय अहो सर्गं करिष्यथ
०६०५०१०० श्रीशुक उवाच
०६०५०१०१ तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया
०६०५०१०२ वाचः कूटं तु देवर्षेः स्वयं विममृशुर्धिया
०६०५०१११ भूः क्षेत्रं जीवसंज्ञं यदनादि निजबन्धनम्
०६०५०११२ अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत्
०६०५०१२१ एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः
०६०५०१२२ तमदृष्ट्वाभवं पुंसः किमसत्कर्मभिर्भवेत्
०६०५०१३१ पुमान्नैवैति यद्गत्वा बिलस्वर्गं गतो यथा
०६०५०१३२ प्रत्यग्धामाविद इह किमसत्कर्मभिर्भवेत्
०६०५०१४१ नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता
०६०५०१४२ तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत्
०६०५०१५१ तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत्
०६०५०१५२ तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत्
०६०५०१६१ सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम्
०६०५०१६२ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत्
०६०५०१७१ पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणः
०६०५०१७२ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत्
०६०५०१८१ ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम्
०६०५०१८२ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत्
०६०५०१९१ कालचक्रं भ्रमि तीक्ष्णं सर्वं निष्कर्षयज्जगत्
०६०५०१९२ स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत्
०६०५०२०१ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम्
०६०५०२०२ कथं तदनुरूपाय गुणविस्रम्भ्युपक्रमेत्
०६०५०२११ इति व्यवसिता राजन्हर्यश्वा एकचेतसः
०६०५०२१२ प्रययुस्तं परिक्रम्य पन्थानमनिवर्तनम्
०६०५०२२१ स्वरब्रह्मणि निर्भात हृषीकेशपदाम्बुजे
०६०५०२२२ अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः
०६०५०२३१ नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम्
०६०५०२३२ अन्वतप्यत कः शोचन्सुप्रजस्त्वं शुचां पदम्

०६०५०२४१ स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः
०६०५०२४२ पुत्रानजनयद्दक्षः सवलाश्वान्सहस्रिणः
०६०५०२५१ ते च पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः
०६०५०२५२ नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः
०६०५०२६१ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः
०६०५०२६२ जपन्तो ब्रह्म परमं तेपुस्तत्र महत्तपः
०६०५०२७१ अब्भक्षाः कतिचिन्मासान्कतिचिद्वायुभोजनाः
०६०५०२७२ आराधयन्मन्त्रमिममभ्यस्यन्त इडस्पतिम्
०६०५०२८१ ओं नमो नारायणाय पुरुषाय महात्मने
०६०५०२८२ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि
०६०५०२९१ इति तानपि राजेन्द्र प्रजासर्गधियो मुनिः
०६०५०२९२ उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत्
०६०५०३०१ दाक्षायणाः संश्रृणुत गदतो निगमं मम
०६०५०३०२ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः
०६०५०३११ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित्
०६०५०३१२ स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते
०६०५०३२१ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः
०६०५०३२२ तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष
०६०५०३३१ सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः
०६०५०३३२ नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव
०६०५०३४१ एतस्मिन्काल उत्पातान्बहून्पश्यन्प्रजापतिः
०६०५०३४२ पूर्ववन्नारदकृतं पुत्रनाशमुपाश्रृणोत्
०६०५०३५१ चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः
०६०५०३५२ देवर्षिमुपलभ्याह रोषाद्विस्फुरिताधरः
०६०५०३६० श्रीदक्ष उवाच
०६०५०३६१ अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया
०६०५०३६२ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः
०६०५०३७१ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम्
०६०५०३७२ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः
०६०५०३८१ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः
०६०५०३८२ पार्षदमध्ये चरसि यशोहा निरपत्रपः

०६०५०३९१ ननु भागवता नित्यं भूतानुग्रहकातराः
०६०५०३९२ ऋते त्वां सौहृदघ्नं वै वैरङ्करमवैरिणाम्
०६०५०४०१ नेत्थं पुंसां विरागः स्यात्त्वया केवलिना मृषा
०६०५०४०२ मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम्
०६०५०४११ नानुभूय न जानाति पुमान्विषयतीक्ष्णताम्
०६०५०४१२ निर्विद्यते स्वयं तस्मान्न तथा भिन्नधीः परैः
०६०५०४२१ यन्नस्त्वं कर्मसन्धानां साधूनां गृहमेधिनाम्
०६०५०४२२ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम्
०६०५०४३१ तन्तुकृन्तन यन्नस्त्वमभद्रमचरः पुनः
०६०५०४३२ तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतः पदम्
०६०५०४४० श्रीशुक उवाच
०६०५०४४१ प्रतिजग्राह तद्बाढं नारदः साधुसम्मतः
०६०५०४४२ एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वयम्
०६०६००१० श्रीशुक उवाच
०६०६००१२ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा
०६०६००२१ षष्टिं सञ्जनयामास दुहितॄः पितृवत्सलाः
०६०६००२२ दश धर्माय कायादाद्द्विषट्त्रिणव चेन्दवे
०६०६००३१ भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः
०६०६००३२ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु
०६०६००४१ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः
०६०६००४२ भानुर्लम्बा ककुद्यामिर्विश्वा साध्या मरुत्वती
०६०६००५१ वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुताञ्शृणु
०६०६००५२ भानोस्तु देवऋषभ इन्द्रसेनस्ततो नृप
०६०६००६१ विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः
०६०६००६२ ककुदः सङ्कटस्तस्य कीकटस्तनयो यतः
०६०६००७१ भुवो दुर्गाणि यामेयः स्वर्गो नन्दिस्ततोऽभवत्
०६०६००७२ विश्वेदेवास्तु विश्वाया अप्रजांस्तान्प्रचक्षते
०६०६००८१ साध्योगणश्च साध्याया अर्थसिद्धिस्तु तत्सुतः
०६०६००८२ मरुत्वांश्च जयन्तश्च मरुत्वत्या बभूवतुः
०६०६००९१ जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः
०६०६००९२ मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे

०६०६०१०१ ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम्
०६०६०१०२ सङ्कल्पायास्तु सङ्कल्पः कामः सङ्कल्पजः स्मृतः
०६०६०१११ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु
०६०६०११२ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वास्तुर्विभावसुः
०६०६०१२१ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः
०६०६०१२२ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः
०६०६०१३१ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः
०६०६०१३२ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः
०६०६०१४१ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः
०६०६०१४२ स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः
०६०६०१५१ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला
०६०६०१५२ वास्तोराङ्गिरसीपुत्रो विश्वकर्माकृतीपतिः
०६०६०१६१ ततो मनुश्चाक्षुषोऽभूद्विश्वे साध्या मनोः सुताः
०६०६०१६२ विभावसोरसूतोषा व्युष्टं रोचिषमातपम्
०६०६०१७१ पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु
०६०६०१७२ सरूपासूत भूतस्य भार्या रुद्रांश्च कोटिशः
०६०६०१८१ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः
०६०६०१८२ अजैकपादहिर्ब्रध्नो बहुरूपो महानिति
०६०६०१९१ रुद्रस्य पार्षदाश्चान्ये घोराः प्रेतविनायकाः
०६०६०१९२ प्रजापतेरङ्गिरसः स्वधा पत्नी पितृनथ
०६०६०२०१ अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत्सती
०६०६०२०२ कृशाश्वोऽर्चिषि भार्यायां धूमकेतुमजीजनत्
०६०६०२११ धिषणायां वेदशिरो देवलं वयुनं मनुम्
०६०६०२१२ तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनीति च
०६०६०२२१ पतङ्ग्यसूत पतगान्यामिनी शलभानथ
०६०६०२२२ सुपर्णासूत गरुडं साक्षाद्यज्ञेशवाहनम्
०६०६०२२२ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः
०६०६०२३१ कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत
०६०६०२३२ दक्षशापात्सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः
०६०६०२४१ पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः
०६०६०२४२ शृणु नामानि लोकानां मातॄणां शङ्कराणि च

०६०६०२५१ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्
०६०६०२५२ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला
०६०६०२६१ मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः
०६०६०२६२ तिमेर्यादोगणा आसन्श्वापदाः सरमासुताः
०६०६०२७१ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप
०६०६०२७२ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः
०६०६०२८१ दन्दशूकादयः सर्पा राजन्क्रोधवशात्मजाः
०६०६०२८२ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः
०६०६०२९१ अरिष्टायास्तु गन्धर्वाः काष्ठाया द्विशफेतराः
०६०६०२९२ सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्शृणु
०६०६०३०१ द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः
०६०६०३०२ अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः
०६०६०३११ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः
०६०६०३१२ धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः
०६०६०३२१ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल
०६०६०३२२ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली
०६०६०३३१ वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः
०६०६०३३२ उपदानवी हयशिरा पुलोमा कालका तथा
०६०६०३४१ उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप
०६०६०३४२ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः
०६०६०३५१ उपयेमेऽथ भगवान्कश्यपो ब्रह्मचोदितः
०६०६०३५२ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः
०६०६०३६१ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता
०६०६०३६२ जघान स्वर्गतो राजन्नेक इन्द्रप्रियङ्करः
०६०६०३७१ विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत्
०६०६०३७२ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः
०६०६०३८१ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः
०६०६०३८२ यत्र नारायणो देवः स्वांशेनावातरद्विभुः
०६०६०३९१ विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः
०६०६०३९२ धाता विधाता वरुणो मित्रः शत्रु उरुक्रमः
०६०६०४०१ विवस्वतः श्राद्धदेवं संज्ञासूयत वै मनुम्

०६०६०४०२ मिथुनं च महाभागा यमं देवं यमीं तथा
०६०६०४०३ सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि
०६०६०४११ छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः
०६०६०४१२ कन्यां च तपतीं या वै वव्रे संवरणं पतिम्
०६०६०४२१ अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः
०६०६०४२२ यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता
०६०६०४३१ पूषानपत्यः पिष्टादो भग्नदन्तोऽभवत्पुरा
०६०६०४३२ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः
०६०६०४४१ त्वष्टुर्दैत्यात्मजा भार्या रचना नाम कन्यका
०६०६०४४२ सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान्
०६०६०४५१ तं वव्रिरे सुरगणा स्वस्रीयं द्विषतामपि
०६०६०४५२ विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत्
०६०७००१० श्रीराजोवाच
०६०७००११ कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः
०६०७००१२ एतदाचक्ष्व भगवञ्छिष्याणामक्रमं गुरौ
०६०७००२० श्रीबादरायणिरुवाच
०६०७००२१ इन्द्रस्त्रिभुवनैश्वर्य मदोल्लङ्घितसत्पथः
०६०७००२२ मरुद्भिर्वसुभी रुद्रैरादित्यैरृभुभिर्नृप
०६०७००३१ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः
०६०७००३२ सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः
०६०७००४१ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः
०६०७००४२ निषेव्यमाणो मघवान्स्तूयमानश्च भारत
०६०७००५१ उपगीयमानो ललितमास्थानाध्यासनाश्रितः
०६०७००५२ पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा
०६०७००६१ युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः
०६०७००६२ विराजमानः पौलम्या सहार्धासनया भृशम्
०६०७००७१ स यदा परमाचार्यं देवानामात्मनश्च ह
०६०७००७२ नाभ्यनन्दत सम्प्राप्तं प्रत्युत्थानासनादिभिः
०६०७००८१ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम्
०६०७००८२ नोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम्
०६०७००९१ ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः

०६०७००९२ आययौ स्वगृहं तूर्ष्णीं विद्वान्श्रीमदविक्रियाम्
०६०७०१०१ तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः
०६०७०१०२ गर्हयामास सदसि स्वयमात्मानमात्मना
०६०७०१११ अहो बत मयासाधु कृतं वै दभ्रबुद्धिना
०६०७०११२ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः
०६०७०१२१ को गृध्येत्पण्डितो लक्ष्मीं त्रिपिष्टपपतेरपि
०६०७०१२२ ययाहमासुरं भावं नीतोऽद्य विबुधेश्वरः
०६०७०१३१ यः पारमेष्ठ्यं धिषणमधितिष्ठन्न कश्चन
०६०७०१३२ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः
०६०७०१४१ तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः
०६०७०१४२ ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव
०६०७०१५१ अथाहममराचार्यमगाधधिषणं द्विजम्
०६०७०१५२ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन्
०६०७०१६१ एवं चिन्तयतस्तस्य मघोनो भगवान्गृहात्
०६०७०१६२ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया
०६०७०१७१ गुरोर्नाधिगतः संज्ञां परीक्षन्भगवान्स्वराट्
०६०७०१७२ ध्यायन्धिया सुरैर्युक्तः शर्म नालभतात्मनः
०६०७०१८१ तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम्
०६०७०१८२ देवान्प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः
०६०७०१९१ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः
०६०७०१९२ ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः
०६०७०२०१ तांस्तथाभ्यर्दितान्वीक्ष्य भगवानात्मभूरजः
०६०७०२०२ कृपया परया देव उवाच परिसान्त्वयन्
०६०७०२१० श्रीब्रह्मोवाच
०६०७०२११ अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत्
०६०७०२१२ ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत
०६०७०२२१ तस्यायमनयस्यासीत्परेभ्यो वः पराभवः
०६०७०२२२ प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत्सुराः
०६०७०२३१ मघवन्द्विषतः पश्य प्रक्षीणान्गुर्वतिक्रमात्
०६०७०२३२ सम्प्रत्युपचितान्भूयः काव्यमाराध्य भक्तितः
०६०७०२३३ आददीरन्निलयनं ममापि भृगुदेवताः

०६०७०२४१ त्रिपिष्टपं किं गणयन्त्यभेद्य मन्त्रा भृगूणामनुशिक्षितार्थाः
०६०७०२४२ न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम्
०६०७०२५१ तद्विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम्
०६०७०२५२ सभाजितोऽर्थान्स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म
०६०७०२६० श्रीशुक उवाच
०६०७०२६१ त एवमुदिता राजन्ब्रह्मणा विगतज्वराः
०६०७०२६२ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन्
०६०७०२७० श्रीदेवा ऊचुः
०६०७०२७१ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते
०६०७०२७२ कामः सम्पाद्यतां तात पितॄणां समयोचितः
०६०७०२८१ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम्
०६०७०२८२ अपि पुत्रवतां ब्रह्मन्किमुत ब्रह्मचारिणाम्
०६०७०२९१ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः
०६०७०२९२ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः
०६०७०३०१ दयाया भगिनी मूर्तिर्धर्मस्यात्मातिथिः स्वयम्
०६०७०३०२ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः
०६०७०३११ तस्मात्पितॄणामार्तानामार्तिं परपराभवम्
०६०७०३१२ तपसापनयंस्तात सन्देशं कर्तुमर्हसि
०६०७०३२१ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम्
०६०७०३२२ यथाञ्जसा विजेष्यामः सपत्नांस्तव तेजसा
०६०७०३३१ न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम्
०६०७०३३२ छन्दोभ्योऽन्यत्र न ब्रह्मन्वयो ज्यैष्ठ्यस्य कारणम्
०६०७०३४० श्रीऋषिरुवाच
०६०७०३४१ अभ्यर्थितः सुरगणैः पौरहित्ये महातपाः
०६०७०३४२ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा
०६०७०३५० श्रीविश्वरूप उवाच
०६०७०३५१ विगर्हितं धर्मशीलैर्ब्रह्मवर्चौपव्ययम्
०६०७०३५२ कथं नु मद्विधो नाथा लोकेशैरभियाचितम्
०६०७०३५३ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते
०६०७०३६१ अकिञ्चनानां हि धनं शिलोञ्छनं तेनेह निर्वर्तितसाधुसत्क्रियः
०६०७०३६२ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः

०६०७०३७१ तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत्
०६०७०३७२ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये
०६०७०३८० श्रीबादरायणिरुवाच
०६०७०३८१ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः
०६०७०३८२ पौरहित्यं वृतश्चक्रे परमेण समाधिना
०६०७०३९१ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया
०६०७०३९२ आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः
०६०७०४०१ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः
०६०७०४०२ तां प्राह स महेन्द्राय विश्वरूप उदारधीः
०६०८००१० श्रीराजोवाच
०६०८००११ यया गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान्
०६०८००१२ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम्
०६०८००२१ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम्
०६०८००२२ यथाततायिनः शत्रून्येन गुप्तोऽजयन्मृधे
०६०८००३० श्रीबादरायणिरुवाच
०६०८००३१ वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते
०६०८००३२ नारायणाख्यं वर्माह तदिहैकमनाः शृणु
०६०८००४० श्रीविश्वरूप उवाच
०६०८००४१ धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः
०६०८००४२ कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः
०६०८००५१ नारायणपरं वर्म सन्नह्येद्भय आगते
०६०८००५२ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि
०६०८००६१ मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत्
०६०८००६२ ओं नमो नारायणायेति विपर्ययमथापि वा
०६०८००७१ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया
०६०८००७२ प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु
०६०८००८१ न्यसेद्धृदय ओंकारं विकारमनु मूर्धनि
०६०८००८२ षकारं तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत्
०६०८००९१ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु
०६०८००९२ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः
०६०८०१०१ सविसर्गं फडन्तं तत्सर्वदिक्षु विनिर्दिशेत्

०६०८०१०२ ओं विष्णवे नम इति
०६०८०१११ आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम्
०६०८०११२ विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत्
०६०८०१२१ ओं हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे
०६०८०१२२ दरारिचर्मासिगदेषुचाप पाशान्दधानोऽष्टगुणोऽष्टबाहुः
०६०८०१३१ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात्
०६०८०१३२ स्थलेषु मायावटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः
०६०८०१४१ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः
०६०८०१४२ विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः
०६०८०१५१ रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः
०६०८०१५२ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान्
०६०८०१६१ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात्
०६०८०१६२ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात्
०६०८०१७१ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात्
०६०८०१७२ देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात्
०६०८०१८१ धन्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा
०६०८०१८२ यज्ञश्च लोकादवताज्जनान्ताद्बलो गणात्क्रोधवशादहीन्द्रः
०६०८०१९१ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषण्डगणप्रमादात्
०६०८०१९२ कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः
०६०८०२०१ मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गवमात्तवेणुः
०६०८०२०२ नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः
०६०८०२११ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम्
०६०८०२१२ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः
०६०८०२२१ श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः
०६०८०२२२ दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः
०६०८०२३१ चक्रं युगान्तानलतिग्मनेमि भ्रमत्समन्ताद्भगवत्प्रयुक्तम्
०६०८०२३२ दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः
०६०८०२४१ गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि
०६०८०२४२ कुष्माण्डवैनायकयक्षरक्षो भूतग्रहांश्चूर्णय चूर्णयारीन्
०६०८०२५१ त्वं यातुधानप्रमथप्रेतमातृ पिशाचविप्रग्रहघोरदृष्टीन्
०६०८०२५२ दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन्

०६०८०२६१ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि
०६०८०२६२ चक्षूंषि चर्मन्छतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम्
०६०८०२७१ यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च
०६०८०२७२ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽंहोभ्य एव च
०६०८०२८१ सर्वाण्येतानि भगवन्नामरूपानुकीर्तनात्
०६०८०२८२ प्रयान्तु सङ्क्षयं सद्यो ये नः श्रेयःप्रतीपकाः
०६०८०२९१ गरुडो भगवान्स्तोत्र स्तोभश्छन्दोमयः प्रभुः
०६०८०२९२ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः
०६०८०३०१ सर्वापद्भ्यो हरेर्नाम रूपयानायुधानि नः
०६०८०३०२ बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः
०६०८०३११ यथा हि भगवानेव वस्तुतः सदसच्च यत्
०६०८०३१२ सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः
०६०८०३२१ यथैकात्म्यानुभावानां विकल्परहितः स्वयम्
०६०८०३२२ भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया
०६०८०३३१ तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः
०६०८०३३२ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः
०६०८०३४१ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः
०६०८०३४२ प्रहापय लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः
०६०८०३५१ मघवन्निदमाख्यातं वर्म नारायणात्मकम्
०६०८०३५२ विजेष्यसेऽञ्जसा येन दंशितोऽसुरयूथपान्
०६०८०३६१ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा
०६०८०३६२ पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते
०६०८०३७१ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्
०६०८०३७२ राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित्
०६०८०३८१ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः
०६०८०३८२ योगधारणया स्वाङ्गं जहौ स मरुधन्वनि
०६०८०३९१ तस्योपरि विमानेन गन्धर्वपतिरेकदा
०६०८०३९२ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः
०६०८०४०१ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः
०६०८०४०२ स वालिखिल्यवचनादस्थीन्यादाय विस्मितः
०६०८०४०३ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात्

०६०८०४१० श्रीशुक उवाच
०६०८०४११ य इदं शृणुयात्काले यो धारयति चादृतः
०६०८०४१२ तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात्
०६०८०४२१ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः
०६०८०४२२ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान्
०६०९००१० श्रीशुक उवाच
०६०९००११ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत
०६०९००१२ सोमपीथं सुरापीथमन्नादमिति शुश्रुम
०६०९००२१ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः
०६०९००२२ अददद्यस्य पितरो देवाः सप्रश्रयं नृप
०६०९००३१ स एव हि ददौ भागं परोक्षमसुरान्प्रति
०६०९००३२ यजमानोऽवहद्भागं मातृस्नेहवशानुगः
०६०९००४१ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः
०६०९००४२ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा
०६०९००५१ सोमपीथं तु यत्तस्य शिर आसीत्कपिञ्जलः
०६०९००५२ कलविङ्कः सुरापीथमन्नादं यत्स तित्तिरिः
०६०९००६१ ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः
०६०९००६२ संवत्सरान्ते तदघं भूतानां स विशुद्धये
०६०९००६३ भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः
०६०९००७१ भूमिस्तुरीयं जग्राह खातपूरवरेण वै
०६०९००७२ ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते
०६०९००८१ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः
०६०९००८२ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते
०६०९००९१ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः
०६०९००९२ रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते
०६०९०१०१ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम्
०६०९०१०२ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन्
०६०९०१११ हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे
०६०९०११२ इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम्
०६०९०१२१ अथान्वाहार्यपचनादुत्थितो घोरदर्शनः
०६०९०१२२ कृतान्त इव लोकानां युगान्तसमये यथा

०६०९०१३१ विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने
०६०९०१३२ दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम्
०६०९०१४१ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम्
०६०९०१५१ देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी
०६०९०१५२ नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम्
०६०९०१६१ दरीगम्भीरवक्त्रेण पिबता च नभस्तलम्
०६०९०१६२ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम्
०६०९०१७१ महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः
०६०९०१७२ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश
०६०९०१८१ येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्तिना
०६०९०१८२ स वै वृत्र इति प्रोक्तः पापः परमदारुणः
०६०९०१९१ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः
०६०९०१९२ स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः
०६०९०२०१ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः
०६०९०२०२ प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः
०६०९०२१० श्रीदेवा ऊचुः
०६०९०२११ वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः
०६०९०२१२ हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः
०६०९०२२१ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम्
०६०९०२२२ विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्ति सिन्धुम्
०६०९०२३१ यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाबध्य ततार दुर्गम्
०६०९०२३२ स एव नस्त्वाष्ट्रभयाद्दुरन्तात्त्राताश्रितान्वारिचरोऽपि नूनम्
०६०९०२४१ पुरा स्वयम्भूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले
०६०९०२४२ एकोऽरविन्दात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः
०६०९०२५१ य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम्
०६०९०२५२ वयं न यस्यापि पुरः समीहतः पश्याम लिङ्गं पृथगीशमानिनः
०६०९०२६१ यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव
०६०९०२६२ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगे युगे च
०६०९०२७१ तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यम्
०६०९०२७२ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा
०६०९०२८० श्रीशुक उवाच

०६०९०२८१ इति तेषां महाराज सुराणामुपतिष्ठताम्
०६०९०२८२ प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः
०६०९०२९१ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ
०६०९०२९२ पर्युपासितमुन्निद्र शरदम्बुरुहेक्षणम्
०६०९०३०१ दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः
०६०९०३०२ दण्डवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः
०६०९०३१० श्रीदेवा ऊचुः
०६०९०३११ नमस्ते यज्ञवीर्याय वयसे उत ते नमः
०६०९०३१२ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये
०६०९०३२१ यत्ते गतीनां तिसृणामीशितुः परमं पदम्
०६०९०३२२ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति
०६०९०३३१ ओं नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान्
०६०९०३४१ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि
०६०९०३५१ अथ तत्र भवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददात्याहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः
०६०९०३६१ न हि विरोध उभयं भगवत्यपरिमितगुणगण ईश्वरेऽनवगाह्यमाहात्म्ये ऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय को न्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात्
०६०९०३७१ समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम्
०६०९०३८१ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः
०६०९०३९१ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र

पुनरयं संसारपर्यावर्तः
०६०९०४०१ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो
दितिजदनुजादयश्चापि तेषामुपक्रमसमयोऽयमिति स्वात्ममायया
सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दण्डं दण्डधर दधर्थ एवमेनमपि भगवञ्जहि
त्वाष्ट्रमुत यदि मन्यसे
०६०९०४११ अस्माकं तावकानां तततत नतानां हरे तव
चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां
स्वलिङ्गविवरणेनात्मसात्कृतानामनुकम्पानुरञ्जितविशदरुचिरशिशिरस्मितावलोकेन
विगलितमधुरमुखरसामृतकलया चान्तस्तापमनघार्हसि शमयितुम्
०६०९०४२१ अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य
सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च
यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयानुभवतः सर्वप्रत्ययसाक्षिण
आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वार्थविशेषो विज्ञापनीयः
स्याद्विस्फुलिङ्गादिभिरिव हिरण्यरेतसः
०६०९०४३१ अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां
विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः
०६०९०४४१ अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम्
०६०९०४४२ ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च
०६०९०४५१ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय
०६०९०४५२ सत्सङ्ग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते
०६०९०४६० श्रीशुक उवाच
०६०९०४६१ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः
०६०९०४६२ स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः
०६०९०४७० श्रीभगवानुवाच
०६०९०४७१ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया
०६०९०४७२ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि
०६०९०४८१ किं दुरापं मयि प्रीते तथापि विबुधर्षभाः
०६०९०४८२ मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित्
०६०९०४९१ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक्
०६०९०४९२ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः
०६०९०५०१ स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि

०६०९०५०२ न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः
०६०९०५११ मघवन्यात भद्रं वो दध्यञ्चमृषिसत्तमम्
०६०९०५१२ विद्याव्रततपःसारं गात्रं याचत मा चिरम्
०६०९०५२१ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्
०६०९०५२२ यद्वा अश्वशिरो नाम तयोरमरतां व्यधात्
०६०९०५३१ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम्
०६०९०५३२ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः
०६०९०५४१ युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति
०६०९०५४२ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः
०६०९०५४३ येन वृत्रशिरो हर्ता मत्तेजौपबृंहितः
०६०९०५५१ तस्मिन्विनिहते यूयं तेजोऽस्त्रायुधसम्पदः
०६०९०५५२ भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान्
०६१०००१० श्रीबादरायणिरुवाच
०६१०००११ इन्द्रमेवं समादिश्य भगवान्विश्वभावनः
०६१०००१२ पश्यतामनिमेषाणां अत्रैवान्तर्दधे हरिः
०६१०००२१ तथाभियाचितो देवैर्ऋषिराथर्वणो महान्
०६१०००२२ मोदमान उवाचेदं प्रहसन्निव भारत
०६१०००३१ अपि वृन्दारका यूयं न जानीथ शरीरिणाम्
०६१०००३२ संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः
०६१०००४१ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः
०६१०००४२ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे
०६१०००५० श्रीदेवा ऊचुः
०६१०००५१ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकम्पिनाम्
०६१०००५२ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम्
०६१०००६१ नूनं स्वार्थपरो लोको न वेद परसङ्कटम्
०६१०००६२ यदि वेद न याचेत नेति नाह यदीश्वरः
०६१०००७० श्रीऋषिरुवाच
०६१०००७१ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः
०६१०००७२ एष वः प्रियमात्मानं त्यजन्तं सन्त्यजाम्यहम्
०६१०००८१ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान्
०६१०००८२ ईहेत भूतदयया स शोच्यः स्थावरैरपि

०६१०००९१ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः
०६१०००९२ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति
०६१००१०१ अहो दैन्यमहो कष्टं पारक्यैः क्षणभङ्गुरैः
०६१००१०२ यन्नोपकुर्यादस्वार्थैर्मर्त्यैः स्वज्ञातिविग्रहैः
०६१००११० श्रीबादरायणिरुवाच
०६१००१११ एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम्
०६१००११२ परे भगवति ब्रह्मण्यात्मानं सन्नयञ्जहौ
०६१००१२१ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबन्धनः
०६१००१२२ आस्थितः परमं योगं न देहं बुबुधे गतम्
०६१००१३१ अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा
०६१००१३२ मुनेः शक्तिभिरुत्सिक्तो भगवत्तेजसान्वितः
०६१००१४१ वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत
०६१००१४२ स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव
०६१००१५१ वृत्रमभ्यद्रवच्छत्रुमसुरानीकयूथपैः
०६१००१५२ पर्यस्तमोजसा राजन्क्रुद्धो रुद्र इवान्तकम्
०६१००१६१ ततः सुराणामसुरै रणः परमदारुणः
०६१००१६२ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे
०६१००१७१ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः
०६१००१७२ मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम्
०६१००१८१ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वया श्रिया
०६१००१८२ नामृष्यन्नसुरा राजन्मृधे वृत्रपुरःसराः
०६१००१९१ नमुचिः शम्बरोऽनर्वा द्विमूर्धा ऋषभोऽसुरः
०६१००१९२ हयग्रीवः शङ्कुशिरा विप्रचित्तिरयोमुखः
०६१००२०१ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः
०६१००२०२ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः
०६१००२११ सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः
०६१००२१२ प्रतिषिध्येन्द्रसेनाग्रं मृत्योरपि दुरासदम्
०६१००२२१ अभ्यर्दयन्नसम्भ्रान्ताः सिंहनादेन दुर्मदाः
०६१००२२२ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः
०६१००२३१ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः
०६१००२३२ सर्वतोऽवाकिरन्शस्त्रैरस्त्रैश्च विबुधर्षभान्

०६१००२४१ न तेऽदृश्यन्त सञ्छन्नाः शरजालैः समन्ततः
०६१००२४२ पुङ्खानुपुङ्खपतितैर्ज्योतींषीव नभोघनैः
०६१००२५१ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान्
०६१००२५२ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा
०६१००२६१ अथ क्षीणास्त्रशस्त्रौघा गिरिशृङ्गद्रुमोपलैः
०६१००२६२ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत्
०६१००२७१ तानक्षतान्स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः
०६१००२७२ द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरविक्षतांस्तत्रसुरिन्द्रसैनिकान्
०६१००२८१ सर्वे प्रयासा अभवन्विमोघाः कृताः कृता देवगणेषु दैत्यैः
०६१००२८२ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता ऊषती रूक्षवाचः
०६१००२९१ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः
०६१००२९२ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः
०६१००३०१ वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत्
०६१००३०२ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः
०६१००३११ कालोपपन्नां रुचिरां मनस्विनां जगाद वाचं पुरुषप्रवीरः
०६१००३१२ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वन्छम्बर मे शृणुध्वम्
०६१००३२१ जातस्य मृत्युर्ध्रुव एव सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता
०६१००३२२ लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तम्
०६१००३३१ द्वौ सम्मताविह मृत्यू दुरापौ यद्ब्रह्मसन्धारणया जितासुः
०६१००३३२ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः
०६११००१० श्रीशुक उवाच
०६११००११ त एवं शंसतो धर्मं वचः पत्युरचेतसः
०६११००१२ नैवागृह्णन्त सम्भ्रान्ताः पलायनपरा नृप
०६११००२१ विशीर्यमाणां पृतनामासुरीमसुरर्षभः
०६११००२२ कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत्
०६११००३१ दृष्ट्वातप्यत सङ्क्रुद्ध इन्द्रशत्रुरमर्षितः
०६११००३२ तान्निवार्यौजसा राजन्निर्भर्त्स्येदमुवाच ह
०६११००४१ किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः
०६११००४२ न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम्
०६११००५१ यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि
०६११००५२ अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्यसुखे स्पृहा

०६११००६१ एवं सुरगणान्क्रुद्धो भीषयन्वपुषा रिपून्
०६११००६२ व्यनदत्सुमहाप्राणो येन लोका विचेतसः
०६११००७१ तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै
०६११००७२ निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः
०६११००८१ ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः
०६११००८२ गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः
०६११००९१ विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम्
०६११००९२ चिक्षेप तामापततीं सुदुःसहां जग्राह वामेन करेण लीलया
०६११०१०१ स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोरुविक्रमः
०६११०१०२ जघान कुम्भस्थल उन्नदन्मृधे तत्कर्म सर्वे समपूजयन्नृप
०६११०१११ ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा
०६११०११२ अपासरद्भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक्सप्तधनुर्भृशार्तः
०६११०१२१ न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा
०६११०१२२ इन्द्रोऽमृतस्यन्दिकराभिमर्श वीतव्यथक्षतवाहोऽवतस्थे
०६११०१३१ स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य
०६११०१३२ स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसञ्जगाद
०६११०१४० श्रीवृत्र उवाच
०६११०१४१ दिष्ट्या भवान्मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च
०६११०१४२ दिष्ट्यानृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाचिरात्
०६११०१५१ यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य
०६११०१५२ विश्रभ्य खड्गेन शिरांस्यवृश्चत्पशोरिवाकरुणः स्वर्गकामः
०६११०१६१ श्रीह्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम्
०६११०१६२ कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्ति गृध्राः
०६११०१७१ अन्येऽनु ये त्वेह नृशंसमज्ञा यदुद्यतास्त्राः प्रहरन्ति मह्यम्
०६११०१७२ तैर्भूतनाथान्सगणान्निशात त्रिशूलनिर्भिन्नगलैर्यजामि
०६११०१८१ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह
०६११०१८२ तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये
०६११०१९१ सुरेश कस्मान्न हिनोषि वज्रं पुरः स्थिते वैरिणि मय्यमोघम्
०६११०१९२ मा संशयिष्ठा न गदेव वज्रः स्यान्निष्फलः कृपणार्थेव याच्ञा
०६११०२०१ नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः
०६११०२०२ तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः

०६११०२११ अहं समाधाय मनो यथाह नः सङ्कर्षणस्तच्चरणारविन्दे

०६११०२१२ त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः

०६११०२२१ पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम्

०६११०२२२ न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं सम्प्रयासः

०६११०२३१ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र

०६११०२३२ ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिञ्चनगोचरोऽन्यैः

०६११०२४१ अहं हरे तव पादैकमूल दासानुदासो भवितास्मि भूयः

०६११०२४२ मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः

०६११०२५१ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्

०६११०२५२ न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे

०६११०२६१ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः

०६११०२६२ प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम्

०६११०२७१ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः

०६११०२७२ त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात्

०६१२००१० श्रीऋषिरुवाच

०६१२००११ एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः

०६१२००१२ शूलं प्रगृह्याभ्यपतत्सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु

०६१२००२१ ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसासुरेन्द्रः

०६१२००२२ क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद

०६१२००३१ ख आपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः

०६१२००३२ वज्रेण वज्री शतपर्वणाच्छिनद्भुजं च तस्योरगराजभोगम्

०६१२००४१ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम्

०६१२००४२ हनौ तताडेन्द्रमथामरेभं वज्रं च हस्तान्न्यपतन्मघोनः

०६१२००५१ वृत्रस्य कर्मातिमहाद्भुतं तत्सुरासुराश्चारणसिद्धसङ्घाः

०६१२००५२ अपूजयंस्तत्पुरुहूतसङ्कटं निरीक्ष्य हा हेति विचुक्रुशुर्भृशम्

०६१२००६१ इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः

०६१२००६२ तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः

०६१२००७१ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम्

०६१२००७२ विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम्

०६१२००८१ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे

०६१२००८२ द्विजा इव शिचा बद्धाः स काल इह कारणम्

०६१२००९१ ओजः सहो बलं प्राणममृतं मृत्युमेव च
०६१२००९२ तमज्ञाय जनो हेतुमात्मानं मन्यते जडम्
०६१२०१०१ यथा दारुमयी नारी यथा पत्रमयो मृगः
०६१२०१०२ एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः
०६१२०१११ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः
०६१२०११२ शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात्
०६१२०१२१ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम्
०६१२०१२२ भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम्
०६१२०१३१ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः
०६१२०१३२ भवन्त्येव हि तत्काले यथानिच्छोर्विपर्ययाः
०६१२०१४१ तस्मादकीर्तियशसोर्जयापजययोरपि
०६१२०१४२ समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा
०६१२०१५१ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः
०६१२०१५२ तत्र साक्षिणमात्मानं यो वेद स न बध्यते
०६१२०१६१ पश्य मां निर्जितं शत्रु वृक्णायुधभुजं मृधे
०६१२०१६२ घटमानं यथाशक्ति तव प्राणजिहीर्षया
०६१२०१७१ प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः
०६१२०१७२ अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः
०६१२०१८० श्रीशुक उवाच
०६१२०१८१ इन्द्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत्
०६१२०१८२ गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः
०६१२०१९० इन्द्र उवाच
०६१२०१९१ अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी
०६१२०१९२ भक्तः सर्वात्मनात्मानं सुहृदं जगदीश्वरम्
०६१२०२०१ भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम्
०६१२०२०२ यद्विहायासुरं भावं महापुरुषतां गतः
०६१२०२११ खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव
०६१२०२१२ वासुदेवे भगवति सत्त्वात्मनि दृढा मतिः
०६१२०२२१ यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे
०६१२०२२२ विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः
०६१२०२३० श्रीशुक उवाच

०६१२०२३१ इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप
०६१२०२३२ युयुधाते महावीर्याविन्द्रवृत्रौ युधाम्पती
०६१२०२४१ आविध्य परिघं वृत्रः कार्ष्णायसमरिन्दमः
०६१२०२४२ इन्द्राय प्राहिणोद्घोरं वामहस्तेन मारिष
०६१२०२५१ स तु वृत्रस्य परिघं करं च करभोपमम्
०६१२०२५२ चिच्छेद युगपद्देवो वज्रेण शतपर्वणा
०६१२०२६१ दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः
०६१२०२६२ छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः
०६१२०२७१ महाप्राणो महावीर्यो महासर्प इव द्विपम्
०६१२०२७२ कृत्वाधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम्
०६१२०२८१ नभोगम्भीरवक्त्रेण लेलिहोल्बणजिह्वया
०६१२०२८२ दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम्
०६१२०२९१ अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन्
०६१२०२९२ गिरिराट्पादचारीव पद्भ्यां निर्जरयन्महीम्
०६१२०३०१ जग्रास स समासाद्य वज्रिणं सहवाहनम्
०६१२०३०२ वृत्रग्रस्तं तमालोक्य सप्रजापतयः सुराः
०६१२०३०३ हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः
०६१२०३११ निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः
०६१२०३१२ महापुरुषसन्नद्धो योगमायाबलेन च
०६१२०३२१ भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः
०६१२०३२२ उच्चकर्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा
०६१२०३३१ वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन्समन्तात्परिवर्तमानः
०६१२०३३२ न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये
०६१२०३४१ तदा च खे दुन्दुभयो विनेदुर्गन्धर्वसिद्धाः समहर्षिसङ्घाः
०६१२०३४२ वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन्
०६१२०३५१ वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम
०६१२०३५२ पश्यतां सर्वदेवानामलोकं समपद्यत
०६१३००१० श्रीशुक उवाच
०६१३००११ वृत्रे हते त्रयो लोका विना शक्रेण भूरिद
०६१३००१२ सपाला ह्यभवन्सद्यो विज्वरा निर्वृतेन्द्रियाः
०६१३००२१ देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयम्

०६१३००२२ प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः
०६१३००३० श्रीराजोवाच
०६१३००३१ इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने
०६१३००३२ येनासन्सुखिनो देवा हरेर्दुःखं कुतोऽभवत्
०६१३००४० श्रीशुक उवाच
०६१३००४१ वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः
०६१३००४२ तद्वधायार्थयन्निन्द्रं नैच्छद्भीतो बृहद्वधात्
०६१३००५० इन्द्र उवाच
०६१३००५१ स्त्रीभूद्रुमजलैरेनो विश्वरूपवधोद्भवम्
०६१३००५२ विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व माऽर्ज्म्यहम्
०६१३००६० श्रीशुक उवाच
०६१३००६१ ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन्
०६१३००६२ याजयिष्याम भद्रं ते हयमेधेन मा स्म भैः
०६१३००७१ हयमेधेन पुरुषं परमात्मानमीश्वरम्
०६१३००७२ इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात्
०६१३००८१ ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान्
०६१३००८२ श्वादः पुल्कसको वापि शुद्ध्येरन्यस्य कीर्तनात्
०६१३००९१ तमश्वमेधेन महामखेन श्रद्धान्वितोऽस्माभिरनुष्ठितेन
०६१३००९२ हत्वापि सब्रह्मचराचरं त्वं न लिप्यसे किं खलनिग्रहेण
०६१३०१०० श्रीशुक उवाच
०६१३०१०१ एवं सञ्चोदितो विप्रैर्मरुत्वानहनद्रिपुम्
०६१३०१०२ ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम्
०६१३०१११ तयेन्द्रः स्मासहत्तापं निर्वृतिर्नामुमाविशत्
०६१३०११२ ह्रीमन्तं वाच्यतां प्राप्तं सुखयन्त्यपि नो गुणाः
०६१३०१२१ तां ददर्शानुधावन्तीं चाण्डालीमिव रूपिणीम्
०६१३०१२२ जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम्
०६१३०१३१ विकीर्य पलितान्केशांस्तिष्ठ तिष्ठेति भाषिणीम्
०६१३०१३२ मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणम्
०६१३०१४१ नभो गतो दिशः सर्वाः सहस्राक्षो विशाम्पते
०६१३०१४२ प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप मानसम्
०६१३०१५१ स आवसत्पुष्करनालतन्तूनलब्धभोगो यदिहाग्निदूतः

०६१३०१५२ वर्षाणि साहस्रमलक्षितोऽन्तः सञ्चिन्तयन्ब्रह्मवधाद्विमोक्षम्
०६१३०१६१ तावत्त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः
०६१३०१६२ स सम्पदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चां गतिमिन्द्रपत्न्या
०६१३०१७१ ततो गतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारिताघः
०६१३०१७२ पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या
०६१३०१८१ तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत
०६१३०१८२ यथावद्दीक्षयां चक्रुः पुरुषाराधनेन ह
०६१३०१९१ अथेज्यमाने पुरुषे सर्वदेवमयात्मनि
०६१३०१९२ अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः
०६१३०२०१ स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप
०६१३०२०२ नीतस्तेनैव शून्याय नीहार इव भानुना
०६१३०२११ स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः
०६१३०२१२ इष्ट्वाधियज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः
०६१३०२२१ इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम्
०६१३०२२२ भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः
०६१३०२३१ पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम्
०६१३०२३२ धन्यं यशस्यं निखिलाघमोचनं रिपुञ्जयं स्वस्त्ययनं तथायुषम्
०६१४००१० श्रीपरीक्षिदुवाच
०६१४००११ रजस्तमःस्वभावस्य ब्रह्मन्वृत्रस्य पाप्मनः
०६१४००१२ नारायणे भगवति कथमासीद्दृढा मतिः
०६१४००२१ देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम्
०६१४००२२ भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते
०६१४००३१ रजोभिः समसङ्ख्याताः पार्थिवैरिह जन्तवः
०६१४००३२ तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः
०६१४००४१ प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम
०६१४००४२ मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति
०६१४००५१ मुक्तानामपि सिद्धानां नारायणपरायणः
०६१४००५२ सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने
०६१४००६१ वृत्रस्तु स कथं पापः सर्वलोकोपतापनः
०६१४००६२ इत्थं दृढमतिः कृष्ण आसीत्सङ्ग्राम उल्बणे
०६१४००७१ अत्र नः संशयो भूयाञ्छ्रोतुं कौतूहलं प्रभो

०६१४००७२ यः पौरुषेण समरे सहस्राक्षमतोषयत्
०६१४००८० श्रीसूत उवाच
०६१४००८१ परीक्षितोऽथ सम्प्रश्नं भगवान्बादरायणिः
०६१४००८२ निशम्य श्रद्दधानस्य प्रतिनन्द्य वचोऽब्रवीत्
०६१४००९० श्रीशुक उवाच
०६१४००९१ शृणुष्वावहितो राजन्नितिहासमिमं यथा
०६१४००९२ श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि
०६१४०१०१ आसीद्राजा सार्वभौमः शूरसेनेषु वै नृप
०६१४०१०२ चित्रकेतुरिति ख्यातो यस्यासीत्कामधुङ्मही
०६१४०१११ तस्य भार्यासहस्राणां सहस्राणि दशाभवन्
०६१४०११२ सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम्
०६१४०१२१ रूपौदार्यवयोजन्म विद्यैश्वर्यश्रियादिभिः
०६१४०१२२ सम्पन्नस्य गुणैः सर्वैश्चिन्ता बन्ध्यापतेरभूत्
०६१४०१३१ न तस्य सम्पदः सर्वा महिष्यो वामलोचनाः
०६१४०१३२ सार्वभौमस्य भूश्चेयमभवन्प्रीतिहेतवः
०६१४०१४१ तस्यैकदा तु भवनमङ्गिरा भगवानृषिः
०६१४०१४२ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया
०६१४०१५१ तं पूजयित्वा विधिवत्प्रत्युत्थानार्हणादिभिः
०६१४०१५२ कृतातिथ्यमुपासीदत्सुखासीनं समाहितः
०६१४०१६१ महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ
०६१४०१६२ प्रतिपूज्य महाराज समाभाष्येदमब्रवीत्
०६१४०१७० अङ्गिरा उवाच
०६१४०१७१ अपि तेऽनामयं स्वस्ति प्रकृतीनां तथात्मनः
०६१४०१७२ यथा प्रकृतिभिर्गुप्तः पुमान्राजा च सप्तभिः
०६१४०१८१ आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात्
०६१४०१८२ राज्ञा तथा प्रकृतयो नरदेवाहिताधयः
०६१४०१९१ अपि दाराः प्रजामात्या भृत्याः श्रेण्योऽथ मन्त्रिणः
०६१४०१९२ पौरा जानपदा भूपा आत्मजा वशवर्तिनः
०६१४०२०१ यस्यात्मानुवशश्चेत्स्यात्सर्वे तद्वशगा इमे
०६१४०२०२ लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः
०६१४०२११ आत्मनः प्रीयते नात्मा परतः स्वत एव वा

०६१४०२१२ लक्षयेऽलब्धकामं त्वां चिन्तया शबलं मुखम्
०६१४०२२१ एवं विकल्पितो राजन्विदुषा मुनिनापि सः
०६१४०२२२ प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम्
०६१४०२३० चित्रकेतुरुवाच
०६१४०२३१ भगवन्किं न विदितं तपोज्ञानसमाधिभिः
०६१४०२३२ योगिनां ध्वस्तपापानां बहिरन्तः शरीरिषु
०६१४०२४१ तथापि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम्
०६१४०२४२ भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया
०६१४०२५१ लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः
०६१४०२५२ न नन्दयन्त्यप्रजं मां क्षुत्तृट्कामिवापरे
०६१४०२६१ ततः पाहि महाभाग पूर्वैः सह गतं तमः
०६१४०२६२ यथा तरेम दुष्पारं प्रजया तद्विधेहि नः
०६१४०२७० श्रीशुक उवाच
०६१४०२७१ इत्यर्थितः स भगवान्कृपालुर्ब्रह्मणः सुतः
०६१४०२७२ श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद्विभुः
०६१४०२८१ ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत
०६१४०२८२ नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद्विजः
०६१४०२९१ अथाह नृपतिं राजन्भवितैकस्तवात्मजः
०६१४०२९२ हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ
०६१४०३०१ सापि तत्प्राशनादेव चित्रकेतोरधारयत्
०६१४०३०२ गर्भं कृतद्युतिर्देवी कृत्तिकाग्नेरिवात्मजम्
०६१४०३११ तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः
०६१४०३१२ ववृधे शूरसेनेश तेजसा शनकैर्नृप
०६१४०३२१ अथ काल उपावृत्ते कुमारः समजायत
०६१४०३२२ जनयन्शूरसेनानां शृण्वतां परमां मुदम्
०६१४०३३१ हृष्टो राजा कुमारस्य स्नातः शुचिरलङ्कृतः
०६१४०३३२ वाचयित्वाशिषो विप्रैः कारयामास जातकम्
०६१४०३४१ तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च
०६१४०३४२ ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानि षट्
०६१४०३५१ ववर्ष कामानन्येषां पर्जन्य इव देहिनाम्
०६१४०३५२ धन्यं यशस्यमायुष्यं कुमारस्य महामनाः

०६१४०३६१ कृच्छ्रलब्धेऽथ राजर्षेस्तनयेऽनुदिनं पितुः
०६१४०३६२ यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्धत
०६१४०३७१ मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः
०६१४०३७२ कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत्
०६१४०३८१ चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति
०६१४०३८२ न तथान्येषु सञ्जज्ञे बालं लालयतोऽन्वहम्
०६१४०३९१ ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया
०६१४०३९२ आनपत्येन दुःखेन राज्ञश्चानादरेण च
०६१४०४०१ धिगप्रजां स्त्रियं पापां पत्युश्चागृहसम्मताम्
०६१४०४०२ सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम्
०६१४०४११ दासीनां को नु सन्तापः स्वामिनः परिचर्यया
०६१४०४१२ अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः
०६१४०४२१ एवं सन्दह्यमानानां सपत्न्याः पुत्रसम्पदा
०६१४०४२२ राज्ञोऽसम्मतवृत्तीनां विद्वेषो बलवानभूत्
०६१४०४३१ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः
०६१४०४३२ गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति
०६१४०४४१ कृतद्युतिरजानन्ती सपत्नीनामघं महत्
०६१४०४४२ सुप्त एवेति सञ्चिन्त्य निरीक्ष्य व्यचरद्गृहे
०६१४०४५१ शयानं सुचिरं बालमुपधार्य मनीषिणी
०६१४०४५२ पुत्रमानय मे भद्रे इति धात्रीमचोदयत्
०६१४०४६१ सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम्
०६१४०४६२ प्राणेन्द्रियात्मभिस्त्यक्तं हतास्मीत्यपतद्भुवि
०६१४०४७१ तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि
०६१४०४७२ प्रविश्य राज्ञी त्वरयात्मजान्तिकं ददर्श बालं सहसा मृतं सुतम्
०६१४०४८१ पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा
०६१४०४९१ ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम्
०६१४०४९२ आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः
०६१४०५०१ श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन्स्खलन्पथि
०६१४०५०२ स्नेहानुबन्धैधितया शुचा भृशं विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः
०६१४०५११ पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः
०६१४०५१२ दीर्घं श्वसन्बाष्पकलोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम्

०६१४०५२१ पतिं निरीक्ष्योरुशुचार्पितं तदा मृतं च बालं सुतमेकसन्ततिम्
०६१४०५२२ जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा
०६१४०५३१ स्तनद्वयं कुङ्कुमपङ्कमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः
०६१४०५३२ विकीर्य केशान्विगलत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम्
०६१४०५४१ अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे
०६१४०५४२ परे नु जीवत्यपरस्य या मृतिर्विपर्ययश्चेत्त्वमसि ध्रुवः परः
०६१४०५५१ न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः
०६१४०५५२ यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि
०६१४०५६१ त्वं तात नार्हसि च मां कृपणामनाथां
०६१४०५६२ त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम्
०६१४०५६३ अञ्जस्तरेम भवताप्रजदुस्तरं यद्
०६१४०५६४ ध्वान्तं न याह्यकरुणेन यमेन दूरम्
०६१४०५७१ उत्तिष्ठ तात त इमे शिशवो वयस्यास्
०६१४०५७२ त्वामाह्वयन्ति नृपनन्दन संविहर्तुम्
०६१४०५७३ सुप्तश्चिरं ह्यशनया च भवान्परीतो
०६१४०५७४ भुङ्क्ष्व स्तनं पिब शुचो हर नः स्वकानाम्
०६१४०५८१ नाहं तनूज ददृशे हतमङ्गला ते
०६१४०५८२ मुग्धस्मितं मुदितवीक्षणमाननाब्जम्
०६१४०५८३ किं वा गतोऽस्यपुनरन्वयमन्यलोकं
०६१४०५८४ नीतोऽघृणेन न शृणोमि कला गिरस्ते
०६१४०५९० श्रीशुक उवाच
०६१४०५९१ विलपन्त्या मृतं पुत्रमिति चित्रविलापनैः
०६१४०५९२ चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह
०६१४०६०१ तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः
०६१४०६०२ रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम्
०६१४०६११ एवं कश्मलमापन्नं नष्टसंज्ञमनायकम्
०६१४०६१२ ज्ञात्वाङ्गिरा नाम ऋषिराजगाम सनारदः
०६१५००१० श्रीशुक उवाच
०६१५००११ ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम्
०६१५००१२ शोकाभिभूतं राजानं बोधयन्तौ सदुक्तिभिः
०६१५००२१ कोऽयं स्यात्तव राजेन्द्र भवान्यमनुशोचति

०६१५००२२ त्वं चास्य कतमः सृष्टौ पुरेदानीमतः परम्
०६१५००३१ यथा प्रयान्ति संयान्ति स्रोतोवेगेन बालुकाः
०६१५००३२ संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः
०६१५००४१ यथा धानासु वै धाना भवन्ति न भवन्ति च
०६१५००४२ एवं भूतानि भूतेषु चोदितानीशमायया
०६१५००५१ वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः
०६१५००५२ जन्ममृत्योर्यथा पश्चात्प्राङ्नैवमधुनापि भोः
०६१५००६१ भूतैर्भूतानि भूतेशः सृजत्यवति हन्ति च
०६१५००६२ आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत्
०६१५००७१ देहेन देहिनो राजन्देहाद्देहोऽभिजायते
०६१५००७२ बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः
०६१५००८१ देहदेहिविभागोऽयमविवेककृतः पुरा
०६१५००८२ जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः
०६१५००९० श्रीशुक उवाच
०६१५००९१ एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः
०६१५००९२ विमृज्य पाणिना वक्त्रमाधिम्लानमभाषत
०६१५०१०० श्रीराजोवाच
०६१५०१०१ कौ युवां ज्ञानसम्पन्नौ महिष्ठौ च महीयसाम्
०६१५०१०२ अवधूतेन वेषेण गूढाविह समागतौ
०६१५०१११ चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः
०६१५०११२ मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः
०६१५०१२१ कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः
०६१५०१२२ अपान्तरतमा व्यासो मार्कण्डेयोऽथ गौतमः
०६१५०१३१ वसिष्ठो भगवान्रामः कपिलो बादरायणिः
०६१५०१३२ दुर्वासा याज्ञवल्क्यश्च जातुकर्णस्तथारुणिः
०६१५०१४१ रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः
०६१५०१४२ ऋषिर्वेदशिरा धौम्यो मुनिः पञ्चशिखस्तथा
०६१५०१५१ हिरण्यनाभः कौशल्यः श्रुतदेव ऋतध्वजः
०६१५०१५२ एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः
०६१५०१६१ तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू
०६१५०१६२ अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम्

०६१५०१७० श्रीअङ्गिरा उवाच

०६१५०१७१ अहं ते पुत्रकामस्य पुत्रदोऽस्म्यङ्गिरा नृप

०६१५०१७२ एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः

०६१५०१८१ इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे

०६१५०१८२ अतदर्हमनुस्मृत्य महापुरुषगोचरम्

०६१५०१९१ अनुग्रहाय भवतः प्राप्तावावामिह प्रभो

०६१५०१९२ ब्रह्मण्यो भगवद्भक्तो नावासादितुमर्हसि

०६१५०२०१ तदैव ते परं ज्ञानं ददामि गृहमागतः

०६१५०२०२ ज्ञात्वान्याभिनिवेशं ते पुत्रमेव ददाम्यहम्

०६१५०२११ अधुना पुत्रिणां तापो भवतैवानुभूयते

०६१५०२१२ एवं दारा गृहा रायो विविधैश्वर्यसम्पदः

०६१५०२२१ शब्दादयश्च विषयाश्चला राज्यविभूतयः

०६१५०२२२ मही राज्यं बलं कोषो भृत्यामात्यसुहृज्जनाः

०६१५०२३१ सर्वेऽपि शूरसेनेमे शोकमोहभयार्तिदाः

०६१५०२३२ गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः

०६१५०२४१ दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः

०६१५०२४२ कर्मभिर्ध्यायतो नाना कर्माणि मनसोऽभवन्

०६१५०२५१ अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः

०६१५०२५२ देहिनो विविधक्लेश सन्तापकृदुदाहृतः

०६१५०२६१ तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः

०६१५०२६२ द्वैते ध्रुवार्थविश्रम्भं त्यजोपशममाविश

०६१५०२७० श्रीनारद उवाच

०६१५०२७१ एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम

०६१५०२७२ यां धारयन्सप्तरात्राद्द्रष्टा सङ्कर्षणं विभुम्

०६१५०२८१ यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे

०६१५०२८२ शर्वादयो भ्रममिमं द्वितयं विसृज्य

०६१५०२८३ सद्यस्तदीयमतुलानधिकं महित्वं

०६१५०२८४ प्रापुर्भवानपि परं न चिरादुपैति

०६१६००१० श्रीबादरायणिरुवाच

०६१६००११ अथ देवऋषी राजन्सम्परेतं नृपात्मजम्

०६१६००१२ दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम्

०६१६००२० श्रीनारद उवाच
०६१६००२१ जीवात्मन्पश्य भद्रं ते मातरं पितरं च ते
०६१६००२२ सुहृदो बान्धवास्तप्ताः शुचा त्वत्कृतया भृशम्
०६१६००३१ कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः
०६१६००३२ भुङ्क्ष्व भोगान्पितृप्रत्तानधितिष्ठ नृपासनम्
०६१६००४० जीव उवाच
०६१६००४१ कस्मिञ्जन्मन्यमी मह्यं पितरो मातरोऽभवन्
०६१६००४२ कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु
०६१६००५१ बन्धुज्ञात्यरिमध्यस्थ मित्रोदासीनविद्विषः
०६१६००५२ सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः
०६१६००६१ यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः
०६१६००६२ पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु
०६१६००७१ नित्यस्यार्थस्य सम्बन्धो ह्यनित्यो दृश्यते नृषु
०६१६००७२ यावद्यस्य हि सम्बन्धो ममत्वं तावदेव हि
०६१६००८१ एवं योनिगतो जीवः स नित्यो निरहङ्कृतः
०६१६००८२ यावद्यत्रोपलभ्येत तावत्स्वत्वं हि तस्य तत्
०६१६००९१ एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक्
०६१६००९२ आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः
०६१६०१०१ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा
०६१६०१०२ एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः
०६१६०१११ नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम्
०६१६०११२ उदासीनवदासीनः परावरदृगीश्वरः
०६१६०१२० श्रीबादरायणिरुवाच
०६१६०१२१ इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा
०६१६०१२२ विस्मिता मुमुचुः शोकं छित्त्वात्मस्नेहशृङ्खलाम्
०६१६०१३१ निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः
०६१६०१३२ तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम्
०६१६०१४१ बालघ्न्यो व्रीडितास्तत्र बालहत्याहतप्रभाः
०६१६०१४२ बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम्
०६१६०१४३ यमुनायां महाराज स्मरन्त्यो द्विजभाषितम्
०६१६०१५१ स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः

०६१६०१५२ गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः
०६१६०१६१ कालिन्द्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः
०६१६०१६२ मौनेन संयतप्राणो ब्रह्मपुत्राववन्दत
०६१६०१७१ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने
०६१६०१७२ भगवान्नारदः प्रीतो विद्यामेतामुवाच ह
०६१६०१८१ ओं नमस्तुभ्यं भगवते वासुदेवाय धीमहि
०६१६०१८२ प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च
०६१६०१९१ नमो विज्ञानमात्राय परमानन्दमूर्तये
०६१६०१९२ आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये
०६१६०२०१ आत्मानन्दानुभूत्यैव न्यस्तशक्त्यूर्मये नमः
०६१६०२०२ हृषीकेशाय महते नमस्तेऽनन्तमूर्तये
०६१६०२११ वचस्युपरतेऽप्राप्य य एको मनसा सह
०६१६०२१२ अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः
०६१६०२२१ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते
०६१६०२२२ मृण्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः
०६१६०२३१ यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः
०६१६०२३२ अन्तर्बहिश्च विततं व्योमवत्तन्नतोऽस्म्यहम्
०६१६०२४१ देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु
०६१६०२४२ नैवान्यदा लौहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति
०६१६०२५१ ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये
सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविन्दयुगल परमपरमेष्ठिन्नमस्ते
०६१६०२६० श्रीशुक उवाच
०६१६०२६१ भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः
०६१६०२६२ ययावङ्गिरसा साकं धाम स्वायम्भुवं प्रभो
०६१६०२७१ चित्रकेतुस्तु तां विद्यां यथा नारदभाषिताम्
०६१६०२७२ धारयामास सप्ताहमब्भक्षः सुसमाहितः
०६१६०२८१ ततः स सप्तरात्रान्ते विद्यया धार्यमाणया
०६१६०२८२ विद्याधराधिपत्यं च लेभेऽप्रतिहतं नृप
०६१६०२९१ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः
०६१६०२९२ जगाम देवदेवस्य शेषस्य चरणान्तिकम्
०६१६०३०१ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकङ्कणम्

०६१६०३०२ प्रसन्नवक्त्रारुणलोचनं वृतं ददर्श सिद्धेश्वरमण्डलैः प्रभुम्
०६१६०३११ तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वस्थामलान्तःकरणोऽभ्ययान्मुनिः
०६१६०३१२ प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमानमदादिपुरुषम्
०६१६०३२१ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः
०६१६०३२२ प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम्
०६१६०३३१ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ
०६१६०३३२ नियम्य सर्वेन्द्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम्
०६१६०३४० चित्रकेतुरुवाच
०६१६०३४१ अजित जितः सममतिभिः साधुभिर्भवाञ्जितात्मभिर्भवता
०६१६०३४२ विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः
०६१६०३५१ तव विभवः खलु भगवञ्जगदुदयस्थितिलयादीनि
०६१६०३५२ विश्वसृजस्तेऽंशांशास्तत्र मृषा स्पर्धन्ति पृथगभिमत्या
०६१६०३६१ परमाणुपरममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः
०६१६०३६२ आदावन्तेऽपि च सत्त्वानां यद्ध्रुवं तदेवान्तरालेऽपि
०६१६०३७१ क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैरण्डकोशः
०६१६०३७२ यत्र पतत्यणुकल्पः सहाण्डकोटिकोटिभिस्तदनन्तः
०६१६०३८१ विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम्
०६१६०३८२ तेषामाशिष ईश तदनु विनश्यन्ति यथा राजकुलम्
०६१६०३९१ कामधियस्त्वयि रचिता न परम रोहन्ति यथा करम्भबीजानि
०६१६०३९२ ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि
०६१६०४०१ जितमजित तदा भवता यदाह भागवतं धर्ममनवद्यम्
०६१६०४०२ निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय
०६१६०४११ विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र
०६१६०४१२ विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः
०६१६०४२१ कः क्षेमो निजपरयोः कियान्वार्थः स्वपरद्रुहा धर्मेण
०६१६०४२२ स्वद्रोहात्तव कोपः परसम्पीडया च तथाधर्मः
०६१६०४३१ न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः
०६१६०४३२ स्थिरचरसत्त्वकदम्बेष्वपृथग्धियो यमुपासते त्वार्याः
०६१६०४४१ न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः
०६१६०४४२ यन्नाम सकृच्छ्रवणात्पुक्कशोऽपि विमुच्यते संसारात्
०६१६०४५१ अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः

०६१६०४५२ सुरऋषिणा यत्कथितं तावकेन कथमन्यथा भवति
०६१६०४६१ विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम्
०६१६०४६२ विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः
०६१६०४७१ नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय
०६१६०४७२ दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय
०६१६०४८१ यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति
०६१६०४८२ यं चेकितानमनु चित्तय उच्चकन्ति
०६१६०४८३ भूमण्डलं सर्षपायति यस्य मूर्ध्नि
०६१६०४८४ तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने
०६१६०४९० श्रीशुक उवाच
०६१६०४९१ संस्तुतो भगवानेवमनन्तस्तमभाषत
०६१६०४९२ विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह
०६१६०५०० श्रीभगवानुवाच
०६१६०५०१ यन्नारदाङ्गिरोभ्यां ते व्याहृतं मेऽनुशासनम्
०६१६०५०२ संसिद्धोऽसि तया राजन्विद्यया दर्शनाच्च मे
०६१६०५११ अहं वै सर्वभूतानि भूतात्मा भूतभावनः
०६१६०५१२ शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू
०६१६०५२१ लोके विततमात्मानं लोकं चात्मनि सन्ततम्
०६१६०५२२ उभयं च मया व्याप्तं मयि चैवोभयं कृतम्
०६१६०५३१ यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि
०६१६०५३२ आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः
०६१६०५४१ एवं जागरणादीनि जीवस्थानानि चात्मनः
०६१६०५४२ मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत्
०६१६०५५१ येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा
०६१६०५५२ सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम्
०६१६०५६१ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः
०६१६०५६२ अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत्परम्
०६१६०५७१ यदेतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः
०६१६०५७२ ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः
०६१६०५८१ लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम्
०६१६०५८२ आत्मानं यो न बुध्येत न क्वचित्क्षेममाप्नुयात्

०६१६०५९१ स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम्
०६१६०५९२ अभयं चाप्यनीहायां सङ्कल्पाद्विरमेत्कविः
०६१६०६०१ सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः
०६१६०६०२ ततोऽनिवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च
०६१६०६११ एवं विपर्ययं बुद्ध्वा नृणां विज्ञाभिमानिनाम्
०६१६०६१२ आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम्
०६१६०६२१ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा
०६१६०६२२ ज्ञानविज्ञानसन्तृप्तो मद्भक्तः पुरुषो भवेत्
०६१६०६३१ एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः
०६१६०६३२ स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम्
०६१६०६४१ त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम
०६१६०६४२ ज्ञानविज्ञानसम्पन्नो धारयन्नाशु सिध्यसि
०६१६०६५० श्रीशुक उवाच
०६१६०६५१ आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः
०६१६०६५२ पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः
०६१७००१० श्रीशुक उवाच
०६१७००११ यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः
०६१७००१२ विद्याधरश्चित्रकेतुश्चचार गगने चरः
०६१७००२१ स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः
०६१७००२२ स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः
०६१७००३१ कुलाचलेन्द्रद्रोणीषु नानासङ्कल्पसिद्धिषु
०६१७००३२ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम्
०६१७००४१ एकदा स विमानेन विष्णुदत्तेन भास्वता
०६१७००४२ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः
०६१७००५१ आलिङ्ग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि
०६१७००५२ उवाच देव्याः शृण्वन्त्या जहासोच्चैस्तदन्तिके
०६१७००६० चित्रकेतुरुवाच
०६१७००६१ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम्
०६१७००६२ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया
०६१७००७१ जटाधरस्तीव्रतपा ब्रह्मवादिसभापतिः
०६१७००७२ अङ्कीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा

०६१७००८१ प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति
०६१७००८२ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम्
०६१७००९० श्रीशुक उवाच
०६१७००९१ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप
०६१७००९२ तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः
०६१७०१०१ इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम्
०६१७०१०२ रुषाह देवी धृष्टाय निर्जितात्माभिमानिने
०६१७०११० श्रीपार्वत्युवाच
०६१७०१११ अयं किमधुना लोके शास्ता दण्डधरः प्रभुः
०६१७०११२ अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत्
०६१७०१२१ न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः
०६१७०१२२ न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम्
०६१७०१३१ एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम्
०६१७०१३२ यः क्षत्रबन्धुः परिभूय सूरीन्प्रशास्ति धृष्टस्तदयं हि दण्ड्यः
०६१७०१४१ नायमर्हति वैकुण्ठ पादमूलोपसर्पणम्
०६१७०१४२ सम्भावितमतिः स्तब्धः साधुभिः पर्युपासितम्
०६१७०१५१ अतः पापीयसीं योनिमासुरीं याहि दुर्मते
०६१७०१५२ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम्
०६१७०१६० श्रीशुक उवाच
०६१७०१६१ एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः
०६१७०१६२ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत
०६१७०१७० चित्रकेतुरुवाच
०६१७०१७१ प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाम्बिके
०६१७०१७२ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत्
०६१७०१८१ संसारचक्र एतस्मिञ्जन्तुरज्ञानमोहितः
०६१७०१८२ भ्राम्यन्सुखं च दुःखं च भुङ्क्ते सर्वत्र सर्वदा
०६१७०१९१ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः
०६१७०१९२ कर्तारं मन्यतेऽत्राज्ञ आत्मानं परमेव च
०६१७०२०१ गुणप्रवाह एतस्मिन्कः शापः को न्वनुग्रहः
०६१७०२०२ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा
०६१७०२११ एकः सृजति भूतानि भगवानात्ममायया

०६१७०२१२ एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः
०६१७०२२१ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः
०६१७०२२२ समस्य सर्वत्र निरञ्जनस्य सुखे न रागः कुत एव रोषः
०६१७०२३१ तथापि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय
०६१७०२३२ बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते
०६१७०२४१ अथ प्रसादये न त्वां शापमोक्षाय भामिनि
०६१७०२४२ यन्मन्यसे ह्यसाधूक्तं मम तत्क्षम्यतां सति
०६१७०२५० श्रीशुक उवाच
०६१७०२५१ इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम
०६१७०२५२ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः
०६१७०२६१ ततस्तु भगवान्रुद्रो रुद्राणीमिदमब्रवीत्
०६१७०२६२ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम्
०६१७०२७० श्रीरुद्र उवाच
०६१७०२७१ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः
०६१७०२७२ माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम्
०६१७०२८१ नारायणपराः सर्वे न कुतश्चन बिभ्यति
०६१७०२८२ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः
०६१७०२९१ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया
०६१७०२९२ सुखं दुःखं मृतिर्जन्म शापोऽनुग्रह एव च
०६१७०३०१ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि
०६१७०३०२ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः
०६१७०३११ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम्
०६१७०३१२ ज्ञानवैराग्यवीर्याणां न हि कश्चिद्व्यपाश्रयः
०६१७०३२१ नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः
०६१७०३२२ विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः
०६१७०३३१ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा
०६१७०३३२ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः
०६१७०३४१ तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः
०६१७०३४२ सर्वत्र समदृक्शान्तो ह्यहं चैवाच्युतप्रियः
०६१७०३५१ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु
०६१७०३५२ महापुरुषभक्तेषु शान्तेषु समदर्शिषु

०६१७०३६० श्रीशुक उवाच
०६१७०३६१ इति श्रुत्वा भगवतः शिवस्योमाभिभाषितम्
०६१७०३६२ बभूव शान्तधी राजन्देवी विगतविस्मया
०६१७०३७१ इति भागवतो देव्याः प्रतिशप्तुमलन्तमः
०६१७०३७२ मूर्ध्ना स जगृहे शापमेतावत्साधुलक्षणम्
०६१७०३८१ जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः
०६१७०३८२ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः
०६१७०३९१ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
०६१७०३९२ वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः
०६१७०४०१ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः
०६१७०४०२ माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते
०६१७०४११ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत्
०६१७०४१२ इतिहासं हरिं स्मृत्वा स याति परमां गतिम्
०६१८००१० श्रीशुक उवाच
०६१८००११ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम्
०६१८००१२ अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान्
०६१८००२१ सिद्धिर्भगस्य भार्याङ्ग महिमानं विभुं प्रभुम्
०६१८००२२ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम्
०६१८००३१ धातुः कुहूः सिनीवाली राका चानुमतिस्तथा
०६१८००३२ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात्
०६१८००४१ अग्नीन्पुरीष्यानाधत्त क्रियायां समनन्तरः
०६१८००४२ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः
०६१८००५१ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल
०६१८००५२ अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी
०६१८००६१ रेतः सिषिचतुः कुम्भे उर्वश्याः सन्निधौ द्रुतम्
०६१८००६२ रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात्
०६१८००७१ पौलोम्यामिन्द्र आधत्त त्रीन्पुत्रानिति नः श्रुतम्
०६१८००७२ जयन्तमृषभं तात तृतीयं मीढुषं प्रभुः
०६१८००८१ उरुक्रमस्य देवस्य मायावामनरूपिणः
०६१८००८२ कीर्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः
०६१८००९१ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः

०६१८००९२ पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह
०६१८०१०१ अथ कश्यपदायादान्दैतेयान्कीर्तयामि ते
०६१८०१०२ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च
०६१८०१११ दितेर्द्वाविव दायादौ दैत्यदानववन्दितौ
०६१८०११२ हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ
०६१८०१२१ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी
०६१८०१२२ जम्भस्य तनया सा तु सुषुवे चतुरः सुतान्
०६१८०१३१ संह्लादं प्रागनुह्लादं ह्लादं प्रह्लादमेव च
०६१८०१३२ तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत्
०६१८०१४१ शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम्
०६१८०१४२ संह्लादस्य कृतिर्भार्या सूत पञ्चजनं ततः
०६१८०१५१ ह्लादस्य धमनिर्भार्या सूत वातापिमिल्वलम्
०६१८०१५२ योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलः
०६१८०१६१ अनुह्लादस्य सूर्यायां बाष्कलो महिषस्तथा
०६१८०१६२ विरोचनस्तु प्राह्लादिर्देव्यां तस्याभवद्बलिः
०६१८०१७१ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत्
०६१८०१७२ तस्यानुभावं सुश्लोक्यं पश्चादेवाभिधास्यते
०६१८०१८१ बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम्
०६१८०१८२ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः
०६१८०१९१ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः
०६१८०१९२ त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम्
०६१८०२०० श्रीराजोवाच
०६१८०२०१ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो
०६१८०२०२ इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः
०६१८०२११ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह
०६१८०२१२ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि
०६१८०२२० श्रीसूत उवाच
०६१८०२२१ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्याद‍ृतमल्पमर्थवत्
०६१८०२२२ सभाजयन्सन्निभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः
०६१८०२३० श्रीशुक उवाच
०६१८०२३१ हतपुत्रा दितिः शक्र पार्ष्णिग्राहेण विष्णुना

०६१८०२३२ मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्
०६१८०२४१ कदा नु भ्रातृहन्तारमिन्द्रियाराममुल्बणम्
०६१८०२४२ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम्
०६१८०२५१ कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्य च
०६१८०२५२ भूतध्रुक्तत्कृते स्वार्थं किं वेद निरयो यतः
०६१८०२६१ आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः
०६१८०२६२ मदशोषक इन्द्रस्य भूयाद्येन सुतो हि मे
०६१८०२७१ इति भावेन सा भर्तुराचचारासकृत्प्रियम्
०६१८०२७२ शुश्रूषयानुरागेण प्रश्रयेण दमेन च
०६१८०२८१ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः
०६१८०२८२ मनो जग्राह भावज्ञा सस्मितापाङ्गवीक्षणैः
०६१८०२९१ एवं स्त्रिया जडीभूतो विद्वानपि मनोज्ञया
०६१८०२९२ बाढमित्याह विवशो न तच्चित्रं हि योषिति
०६१८०३०१ विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः
०६१८०३०२ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता
०६१८०३११ एवं शुश्रूषितस्तात भगवान्कश्यपः स्त्रिया
०६१८०३१२ प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च
०६१८०३२० श्रीकश्यप उवाच
०६१८०३२१ वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते
०६१८०३२२ स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः
०६१८०३३१ पतिरेव हि नारीणां दैवतं परमं स्मृतम्
०६१८०३३२ मानसः सर्वभूतानां वासुदेवः श्रियः पतिः
०६१८०३४१ स एव देवतालिङ्गैर्नामरूपविकल्पितैः
०६१८०३४२ इज्यते भगवान्पुम्भिः स्त्रीभिश्च पतिरूपधृक्
०६१८०३५१ तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे
०६१८०३५२ यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम्
०६१८०३६१ सोऽहं त्वयार्चितो भद्रे ईदृग्भावेन भक्तितः
०६१८०३६२ तं ते सम्पादये काममसतीनां सुदुर्लभम्
०६१८०३७० दितिरुवाच
०६१८०३७१ वरदो यदि मे ब्रह्मन्पुत्रमिन्द्रहणं वृणे
०६१८०३७२ अमृत्युं मृतपुत्राहं येन मे घातितौ सुतौ

०६१८०३८१ निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत
०६१८०३८२ अहो अधर्मः सुमहानद्य मे समुपस्थितः
०६१८०३९१ अहो अर्थेन्द्रियारामो योषिन्मय्येह मायया
०६१८०३९२ गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम्
०६१८०४०१ कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः
०६१८०४०२ धिङ्मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः
०६१८०४११ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम्
०६१८०४१२ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम्
०६१८०४२१ न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम्
०६१८०४२२ पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च
०६१८०४३१ प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत्
०६१८०४३२ वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पते
०६१८०४४१ इति सञ्चिन्त्य भगवान्मारीचः कुरुनन्दन
०६१८०४४२ उवाच किञ्चित्कुपित आत्मानं च विगर्हयन्
०६१८०४५० श्रीकश्यप उवाच
०६१८०४५१ पुत्रस्ते भविता भद्रे इन्द्रहादेवबान्धवः
०६१८०४५२ संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि
०६१८०४६० दितिरुवाच
०६१८०४६१ धारयिष्ये व्रतं ब्रह्मन्ब्रूहि कार्याणि यानि मे
०६१८०४६२ यानि चेह निषिद्धानि न व्रतं घ्नन्ति यान्युत
०६१८०४७० श्रीकश्यप उवाच
०६१८०४७१ न हिंस्याद्भूतजातानि न शपेन्नानृतं वदेत्
०६१८०४७२ न छिन्द्यान्नखरोमाणि न स्पृशेद्यदमङ्गलम्
०६१८०४८१ नाप्सु स्नायान्न कुप्येत न सम्भाषेत दुर्जनैः
०६१८०४८२ न वसीताधौतवासः स्रजं च विधृतां क्वचित्
०६१८०४९१ नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम्
०६१८०४९२ भुञ्जीतोदक्यया दृष्टं पिबेन्नाञ्जलिना त्वपः
०६१८०५०१ नोच्छिष्टास्पृष्टसलिला सन्ध्यायां मुक्तमूर्धजा
०६१८०५०२ अनर्चितासंयतवाक्नासंवीता बहिश्चरेत्
०६१८०५११ नाधौतपादाप्रयता नार्द्रपादा उदक्शिराः
०६१८०५१२ शयीत नापराङ्गान्यैर्न नग्ना न च सन्ध्ययोः

०६१८०५२१ धौतवासा शुचिर्नित्यं सर्वमङ्गलसंयुता
०६१८०५२२ पूजयेत्प्रातराशात्प्राग्गोविप्राञ्श्रियमच्युतम्
०६१८०५३१ स्त्रियो वीरवतीश्चार्चेत्स्रग्गन्धबलिमण्डनैः
०६१८०५३२ पतिं चार्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम्
०६१८०५४१ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम्
०६१८०५४२ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः
०६१८०५५१ बाढमित्यभ्युपेत्याथ दिती राजन्महामनाः
०६१८०५५२ कश्यपाद्गर्भमाधत्त व्रतं चाञ्जो दधार सा
०६१८०५६१ मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद
०६१८०५६२ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः
०६१८०५७१ नित्यं वनात्सुमनसः फलमूलसमित्कुशान्
०६१८०५७२ पत्राङ्कुरमृदोऽपश्च काले काल उपाहरत्
०६१८०५८१ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप
०६१८०५८२ प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः
०६१८०५९१ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते
०६१८०५९२ चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह
०६१८०६०१ एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता
०६१८०६०२ अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता
०६१८०६११ लब्ध्वा तदन्तरं शक्रो निद्रापहृतचेतसः
०६१८०६१२ दितेः प्रविष्ट उदरं योगेशो योगमायया
०६१८०६२१ चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम्
०६१८०६२२ रुदन्तं सप्तधैकैकं मा रोदीरिति तान्पुनः
०६१८०६३१ तमूचुः पाट्यमानास्ते सर्वे प्राञ्जलयो नृप
०६१८०६३२ किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव
०६१८०६४१ मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः
०६१८०६४२ अनन्यभावान्पार्षदानात्मनो मरुतां गणान्
०६१८०६५१ न ममार दितेर्गर्भः श्रीनिवासानुकम्पया
०६१८०६५२ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान्
०६१८०६६१ सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यताम्
०६१८०६६२ संवत्सरं किञ्चिदूनं दित्या यद्धरिरर्चितः
०६१८०६७१ सजूरिन्द्रेण पञ्चाशद्देवास्ते मरुतोऽभवन्

०६१८०६७२ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः
०६१८०६८१ दितिरुत्थाय ददृशे कुमारानन‍लप्रभान्
०६१८०६८२ इन्द्रेण सहितान्देवी पर्यतुष्यदनिन्दिता
०६१८०६९१ अथेन्द्रमाह ताताहमादित्यानां भयावहम्
०६१८०६९२ अपत्यमिच्छन्त्यचरं व्रतमेतत्सुदुष्करम्
०६१८०७०१ एकः सङ्कल्पितः पुत्रः सप्त सप्ताभवन्कथम्
०६१८०७०२ यदि ते विदितं पुत्र सत्यं कथय मा मृषा
०६१८०७१० इन्द्र उवाच
०६१८०७११ अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम्
०६१८०७१२ लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मदृक्
०६१८०७२१ कृत्तो मे सप्तधा गर्भ आसन्सप्त कुमारकाः
०६१८०७२२ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे
०६१८०७३१ ततस्तत्परमाश्चर्यं वीक्ष्य व्यवसितं मया
०६१८०७३२ महापुरुषपूजायाः सिद्धिः काप्यानुषङ्गिणी
०६१८०७४१ आराधनं भगवत ईहमाना निराशिषः
०६१८०७४२ ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः
०६१८०७५१ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम्
०६१८०७५२ को वृणीत गुणस्पर्शं बुधः स्यान्नरकेऽपि यत्
०६१८०७६१ तदिदं मम दौर्जन्यं बालिशस्य महीयसि
०६१८०७६२ क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः
०६१८०७७० श्रीशुक उवाच
०६१८०७७१ इन्द्रस्तयाभ्यनुज्ञातः शुद्धभावेन तुष्टया
०६१८०७७२ मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः
०६१८०७८१ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि
०६१८०७८२ मङ्गलं मरुतां जन्म किं भूयः कथयामि ते
०६१९००१० श्रीराजोवाच
०६१९००११ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम्
०६१९००१२ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति
०६१९००२० श्रीशुक उवाच
०६१९००२१ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया
०६१९००२२ आरभेत व्रतमिदं सार्वकामिकमादितः

०६१९००३१ निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च
०६१९००३२ स्नात्वा शुक्लदती शुक्ले वसीतालङ्कृताम्बरे
०६१९००३३ पूजयेत्प्रातराशात्प्राग्भगवन्तं श्रिया सह
०६१९००४१ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते
०६१९००४२ महाविभूतिपतये नमः सकलसिद्धये
०६१९००५१ यथा त्वं कृपया भूत्या तेजसा महिमौजसा
०६१९००५२ जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान्प्रभुः
०६१९००६१ विष्णुपत्नि महामाये महापुरुषलक्षणे
०६१९००६२ प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते
०६१९००७१ ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपहरामीति अनेनाहरहर्मन्त्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवासौपवीतविभूषणगन्धपुष्पधूपदीपोपहाराद्युपचारान्सुस् अमाहितोपाहरेत्
०६१९००८१ हविःशेषं च जुहुयादनले द्वादशाहुतीः
०६१९००८२ ओं नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति
०६१९००९१ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ
०६१९००९२ भक्त्या सम्पूजयेन्नित्यं यदीच्छेत्सर्वसम्पदः
०६१९०१०१ प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा
०६१९०१०२ दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत्
०६१९०१११ युवां तु विश्वस्य विभू जगतः कारणं परम्
०६१९०११२ इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया
०६१९०१२१ तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः
०६१९०१२२ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान्
०६१९०१३१ गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान्
०६१९०१३२ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशयाः
०६१९०१३३ नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः
०६१९०१४१ यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ
०६१९०१४२ तथा म उत्तमश्लोक सन्तु सत्या महाशिषः
०६१९०१५१ इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह
०६१९०१५२ तन्निःसार्योपहरणं दत्त्वाचमनमर्चयेत्
०६१९०१६१ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा

०६१९०१६२ यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम्
०६१९०१७१ पतिं च परया भक्त्या महापुरुषचेतसा
०६१९०१७२ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः
०६१९०१७३ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च
०६१९०१८१ कृतमेकतरेणापि दम्पत्योरुभयोरपि
०६१९०१८२ पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः
०६१९०१९१ विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथञ्चन
०६१९०१९२ विप्रान्स्त्रियो वीरवतीः स्रग्गन्धबलिमण्डनैः
०६१९०१९३ अर्चेदहरहर्भक्त्या देवं नियममास्थिता
०६१९०२०१ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः
०६१९०२०२ अद्यादात्मविशुद्ध्यर्थं सर्वकामसमृद्धये
०६१९०२११ एतेन पूजाविधिना मासान्द्वादश हायनम्
०६१९०२१२ नीत्वाथोपरमेत्साध्वी कार्तिके चरमेऽहनि
०६१९०२२१ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत्
०६१९०२२२ पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा
०६१९०२२३ पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः
०६१९०२३१ आशिषः शिरसादाय द्विजैः प्रीतैः समीरिताः
०६१९०२३२ प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया
०६१९०२४१ आचार्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः
०६१९०२४२ दद्यात्पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम्
०६१९०२५१ एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह
०६१९०२५२ स्त्री चैतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम्
०६१९०२६१ कन्या च विन्देत समग्रलक्षणं पतिं त्ववीरा हतकिल्बिषां गतिम्
०६१९०२६२ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम्
०६१९०२७१ विन्देद्विरूपा विरुजा विमुच्यते य आमयावीन्द्रियकल्यदेहम्
०६१९०२७२ एतत्पठन्नभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम्
०६१९०२८१ तुष्टाः प्रयच्छन्ति समस्तकामान्होमावसाने हुतभुक्छ्रीहरिश्च
०६१९०२८२ राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते
०७०१००१० श्रीराजोवाच
०७०१००११ समः प्रियः सुहृद्ब्रह्मन्भूतानां भगवान्स्वयम्
०७०१००१२ इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा

०७०१००२१ न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः
०७०१००२२ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि
०७०१००३१ इति नः सुमहाभाग नारायणगुणान्प्रति
०७०१००३२ संशयः सुमहाञ्जातस्तद्भवांश्छेत्तुमर्हति
०७०१००४० श्रीऋषिरुवाच
०७०१००४१ साधु पृष्टं महाराज हरेश्चरितमद्भुतम्
०७०१००४२ यद्भागवतमाहात्म्यं भगवद्भक्तिवर्धनम्
०७०१००५१ गीयते परमं पुण्यमृषिभिर्नारदादिभिः
०७०१००५२ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम्
०७०१००६१ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान्प्रकृतेः परः
०७०१००६२ स्वमायागुणमाविश्य बाध्यबाधकतां गतः
०७०१००७१ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः
०७०१००७२ न तेषां युगपद्राजन्ह्रास उल्लास एव वा
०७०१००८१ जयकाले तु सत्त्वस्य देवर्षीन्रजसोऽसुरान्
०७०१००८२ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत्
०७०१००९१ ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते
०७०१००९२ विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः
०७०१०१०१ यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक्स्वमायया
०७०१०१०२ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ
०७०१०१११ कालं चरन्तं सृजतीश आश्रयं प्रधानपुम्भ्यां नरदेव सत्यकृत्
०७०१०११२ य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः
०७०१०११३ तत्प्रत्यनीकानसुरान्सुरप्रियो रजस्तमस्कान्प्रमिणोत्युरुश्रवाः
०७०१०१२१ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा
०७०१०१२२ प्रीत्या महाक्रतौ राजन्पृच्छतेऽजातशत्रवे
०७०१०१३१ दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ
०७०१०१३२ वासुदेवे भगवति सायुज्यं चेदिभूभुजः
०७०१०१४१ तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ
०७०१०१४२ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम्
०७०१०१५० श्रीयुधिष्ठिर उवाच
०७०१०१५१ अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि
०७०१०१५२ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः

०७०१०१६१ एतद्वेदितुमिच्छामः सर्व एव वयं मुने
०७०१०१६२ भगवन्निन्दया वेनो द्विजैस्तमसि पातितः
०७०१०१७१ दमघोषसुतः पाप आरभ्य कलभाषणात्
०७०१०१७२ सम्प्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः
०७०१०१८१ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम्
०७०१०१८२ श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः
०७०१०१९१ कथं तस्मिन्भगवति दुरवग्राह्यधामनि
०७०१०१९२ पश्यतां सर्वलोकानां लयमीयतुरञ्जसा
०७०१०२०१ एतद्भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना
०७०१०२०२ ब्रूह्येतदद्भुततमं भगवान्ह्यत्र कारणम्
०७०१०२१० श्रीबादरायणिरुवाच
०७०१०२११ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः
०७०१०२१२ तुष्टः प्राह तमाभाष्य श‍ृण्वत्यास्तत्सदः कथाः
०७०१०२२० श्रीनारद उवाच
०७०१०२२१ निन्दनस्तवसत्कार न्यक्कारार्थं कलेवरम्
०७०१०२२२ प्रधानपरयो राजन्नविवेकेन कल्पितम्
०७०१०२३१ हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा
०७०१०२३२ वैषम्यमिह भूतानां ममाहमिति पार्थिव
०७०१०२४१ यन्निबद्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः
०७०१०२४२ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः
०७०१०२४३ परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते
०७०१०२५१ तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा
०७०१०२५२ स्नेहात्कामेन वा युञ्ज्यात्कथञ्चिन्नेक्षते पृथक्
०७०१०२६१ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्
०७०१०२६२ न तथा भक्तियोगेन इति मे निश्चिता मतिः
०७०१०२७१ कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन्
०७०१०२७२ संरम्भभययोगेन विन्दते तत्स्वरूपताम्
०७०१०२८१ एवं कृष्णे भगवति मायामनुज ईश्वरे
०७०१०२८२ वैरेण पूतपाप्मानस्तमापुरनुचिन्तया
०७०१०२९१ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः
०७०१०२९२ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः

०७०१०३०१ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः
०७०१०३०२ सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो
०७०१०३११ कतमोऽपि न वेनः स्यात्पञ्चानां पुरुषं प्रति
०७०१०३१२ तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्
०७०१०३२१ मातृष्वस्रेयो वश्चैद्यो दन्तवक्रश्च पाण्डव
०७०१०३२२ पार्षदप्रवरौ विष्णोर्विप्रशापात्पदच्युतौ
०७०१०३३० श्रीयुधिष्ठिर उवाच
०७०१०३३१ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः
०७०१०३३२ अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः
०७०१०३४१ देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्
०७०१०३४२ देहसम्बन्धसम्बद्धमेतदाख्यातुमर्हसि
०७०१०३५० श्रीनारद उवाच
०७०१०३५१ एकदा ब्रह्मणः पुत्रा विष्णुलोकं यदृच्छया
०७०१०३५२ सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम्
०७०१०३६१ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः
०७०१०३६२ दिग्वाससः शिशून्मत्वा द्वाःस्थौ तान्प्रत्यषेधताम्
०७०१०३७१ अशपन्कुपिता एवं युवां वासं न चार्हथः
०७०१०३७२ रजस्तमोभ्यां रहिते पादमूले मधुद्विषः
०७०१०३७३ पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः
०७०१०३८१ एवं शप्तौ स्वभवनात्पतन्तौ तौ कृपालुभिः
०७०१०३८२ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम्
०७०१०३९१ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ
०७०१०३९२ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः
०७०१०४०१ हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा
०७०१०४०२ हिरण्याक्षो धरोद्धारे बिभ्रता शौकरं वपुः
०७०१०४११ हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम्
०७०१०४१२ जिघांसुरकरोन्नाना यातना मृत्युहेतवे
०७०१०४२१ तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम्
०७०१०४२२ भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः
०७०१०४३१ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ
०७०१०४३२ रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ

०७०१०४४१ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये
०७०१०४४२ रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात्प्रभो
०७०१०४५१ तावत्र क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव
०७०१०४५२ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ
०७०१०४६१ वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम्
०७०१०४६२ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ
०७०१०४७० श्रीयुधिष्ठिर उवाच
०७०१०४७१ विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि
०७०१०४७२ ब्रूहि मे भगवन्येन प्रह्लादस्याच्युतात्मता
०७०२००१० श्रीनारद उवाच
०७०२००११ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना
०७०२००१२ हिरण्यकशिपू राजन्पर्यतप्यद्रुषा शुचा
०७०२००२१ आह चेदं रुषा पूर्णः सन्दष्टदशनच्छदः
०७०२००२२ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन्धूम्रमम्बरम्
०७०२००३१ करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः
०७०२००३२ शूलमुद्यम्य सदसि दानवानिदमब्रवीत्
०७०२००४१ भो भो दानवदैतेया द्विमूर्धंस्त्र्यक्ष शम्बर
०७०२००४२ शतबाहो हयग्रीव नमुचे पाक इल्वल
०७०२००५१ विप्रचित्ते मम वचः पुलोमन्शकुनादयः
०७०२००५२ श्रृणुतानन्तरं सर्वे क्रियतामाशु मा चिरम्
०७०२००६१ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत्
०७०२००६२ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः
०७०२००७१ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः
०७०२००७२ भजन्तं भजमानस्य बालस्येवास्थिरात्मनः
०७०२००८१ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै
०७०२००८२ असृक्प्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः
०७०२००९१ तस्मिन्कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ
०७०२००९२ विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः
०७०२०१०१ तावद्यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम्
०७०२०१०२ सूदयध्वं तपोयज्ञ स्वाध्यायव्रतदानिनः
०७०२०१११ विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान्

०७०२०११२ देवर्षिपितृभूतानां धर्मस्य च परायणम्
०७०२०१२१ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमक्रियाः
०७०२०१२२ तं तं जनपदं यात सन्दीपयत वृश्चत
०७०२०१३१ इति ते भर्तृनिर्देशमादाय शिरसादृताः
०७०२०१३२ तथा प्रजानां कदनं विदधुः कदनप्रियाः
०७०२०१४१ पुरग्रामव्रजोद्यान क्षेत्रारामाश्रमाकरान्
०७०२०१४२ खेटखर्वटघोषांश्च ददहुः पत्तनानि च
०७०२०१५१ केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान्
०७०२०१५२ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः
०७०२०१५३ प्रादहन्शरणान्येके प्रजानां ज्वलितोल्मुकैः
०७०२०१६१ एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः
०७०२०१६२ दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः
०७०२०१७१ हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः
०७०२०१७२ कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत्
०७०२०१८१ शकुनिं शम्बरं धृष्टिं भूतसन्तापनं वृकम्
०७०२०१८२ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम्
०७०२०१९१ तन्मातरं रुषाभानुं दितिं च जननीं गिरा
०७०२०१९२ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर
०७०२०२०० श्रीहिरण्यकशिपुरुवाच
०७०२०२०१ अम्बाम्ब हे वधूः पुत्रा वीरं मार्हथ शोचितुम्
०७०२०२०२ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः
०७०२०२११ भूतानामिह संवासः प्रपायामिव सुव्रते
०७०२०२१२ दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः
०७०२०२२१ नित्य आत्माव्ययः शुद्धः सर्वगः सर्ववित्परः
०७०२०२२२ धत्तेऽसावात्मनो लिङ्गं मायया विसृजन्गुणान्
०७०२०२३१ यथाम्भसा प्रचलता तरवोऽपि चला इव
०७०२०२३२ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः
०७०२०२४१ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान्
०७०२०२४२ याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव
०७०२०२५१ एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना
०७०२०२५२ एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः

०७०२०२६१ सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः
०७०२०२६२ अविवेकश्च चिन्ता च विवेकास्मृतिरेव च
०७०२०२७१ अत्राप्युदाहरन्तीममितिहासं पुरातनम्
०७०२०२७२ यमस्य प्रेतबन्धूनां संवादं तं निबोधत
०७०२०२८१ उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः
०७०२०२८२ सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत
०७०२०२९१ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम्
०७०२०२९२ शरनिर्भिन्नहृदयं शयानमसृगाविलम्
०७०२०३०१ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम्
०७०२०३०२ रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे
०७०२०३११ उशीनरेन्द्रं विधिना तथा कृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः
०७०२०३१२ हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपापतन्
०७०२०३२१ रुदत्य उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः
०७०२०३२२ विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे
०७०२०३३१ अहो विधात्राकरुणेन नः प्रभो भवान्प्रणीतो दृगगोचरां दशाम्
०७०२०३३२ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः
०७०२०३४१ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते
०७०२०३४२ तत्रानुयानं तव वीर पादयोः शुश्रूषतीनां दिश यत्र यास्यसि
०७०२०३५१ एवं विलपतीनां वै परिगृह्य मृतं पतिम्
०७०२०३५२ अनिच्छतीनां निर्हारमर्कोऽस्तं सन्न्यवर्तत
०७०२०३६१ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम्
०७०२०३६२ आह तान्बालको भूत्वा यमः स्वयमुपागतः
०७०२०३७० श्रीयम उवाच
०७०२०३७१ अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः
०७०२०३७२ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम्
०७०२०३८१ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः
०७०२०३८२ अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे
०७०२०३९१ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः
०७०२०३९२ तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसङ्ग्रहे प्रभुः
०७०२०४०१ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति
०७०२०४०२ जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽभिगुप्तोऽस्य हतो न जीवति

०७०२०४११ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः
०७०२०४१२ न तत्र हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो हि बध्यते
०७०२०४२१ इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम्
०७०२०४२२ यथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति
०७०२०४३१ यथानलो दारुषु भिन्न ईयते यथानिलो देहगतः पृथक्स्थितः
०७०२०४३२ यथा नभः सर्वगतं न सज्जते तथा पुमान्सर्वगुणाश्रयः परः
०७०२०४४१ सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ
०७०२०४४२ यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित्
०७०२०४५१ न श्रोता नानुवक्तायं मुख्योऽप्यत्र महानसुः
०७०२०४५२ यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः
०७०२०४६१ भूतेन्द्रियमनोलिङ्गान्देहानुच्चावचान्विभुः
०७०२०४६२ भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा
०७०२०४७१ यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्मनिबन्धनम्
०७०२०४७२ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते
०७०२०४८१ वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः
०७०२०४८२ यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा
०७०२०४९१ अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः
०७०२०४९२ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति
०७०२०५०१ लुब्धको विपिने कश्चित्पक्षिणां निर्मितोऽन्तकः
०७०२०५०२ वितत्य जालं विदधे तत्र तत्र प्रलोभयन्
०७०२०५११ कुलिङ्गमिथुनं तत्र विचरत्समदृश्यत
०७०२०५१२ तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता
०७०२०५२१ आसज्जत सिचस्तन्त्र्यां महिष्यः कालयन्त्रिता
०७०२०५२२ कुलिङ्गस्तां तथापन्नां निरीक्ष्य भृशदुःखितः
०७०२०५२३ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत्
०७०२०५३१ अहो अकरुणो देवः स्त्रियाकरुणया विभुः
०७०२०५३२ कृपणं मामनुशोचन्त्या दीनया किं करिष्यति
०७०२०५४१ कामं नयतु मां देवः किमर्धेनात्मनो हि मे
०७०२०५४२ दीनेन जीवता दुःखमनेन विधुरायुषा
०७०२०५५१ कथं त्वजातपक्षांस्तान्मातृहीनान्बिभर्म्यहम्
०७०२०५५२ मन्दभाग्याः प्रतीक्षन्ते नीडे मे मातरं प्रजाः

०७०२०५६१ एवं कुलिङ्गं विलपन्तमारात्प्रियावियोगातुरमश्रुकण्ठम्
०७०२०५६२ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः
०७०२०५७१ एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः
०७०२०५७२ नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि
०७०२०५८० श्रीहिरण्यकशिपुरुवाच
०७०२०५८१ बाल एवं प्रवदति सर्वे विस्मितचेतसः
०७०२०५८२ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम्
०७०२०५९१ यम एतदुपाख्याय तत्रैवान्तरधीयत
०७०२०५९२ ज्ञातयो हि सुयज्ञस्य चक्रुर्यत्साम्परायिकम्
०७०२०६०१ अतः शोचत मा यूयं परं चात्मानमेव वा
०७०२०६०२ क आत्मा कः परो वात्र स्वीयः पारक्य एव वा
०७०२०६०३ स्वपराभिनिवेशेन विनाज्ञानेन देहिनाम्
०७०२०६१० श्रीनारद उवाच
०७०२०६११ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा
०७०२०६१२ पुत्रशोकं क्षणात्त्यक्त्वा तत्त्वे चित्तमधारयत्
०७०३००१० श्रीनारद उवाच
०७०३००११ हिरण्यकशिपू राजन्नजेयमजरामरम्
०७०३००१२ आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत
०७०३००२१ स तेपे मन्दरद्रोण्यां तपः परमदारुणम्
०७०३००२२ ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः
०७०३००३१ जटादीधितिभी रेजे संवर्तार्क इवांशुभिः
०७०३००३२ तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे
०७०३००४१ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः
०७०३००४२ तीर्यगूर्ध्वमधो लोकान्प्रातपद्विष्वगीरितः
०७०३००५१ चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः
०७०३००५२ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश
०७०३००६१ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः
०७०३००६२ धात्रे विज्ञापयामासुर्देवदेव जगत्पते
०७०३००७१ दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः
०७०३००७२ तस्य चोपशमं भूमन्विधेहि यदि मन्यसे
०७०३००७३ लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तवाभिभूः

०७०३००८१ तस्यायं किल सङ्कल्पश्चरतो दुश्चरं तपः
०७०३००८२ श्रूयतां किं न विदितस्तवाथापि निवेदितम्
०७०३००९१ सृष्ट्वा चराचरमिदं तपोयोगसमाधिना
०७०३००९२ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम्
०७०३०१०१ तदहं वर्धमानेन तपोयोगसमाधिना
०७०३०१०२ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः
०७०३०१११ अन्यथेदं विधास्येऽहमयथा पूर्वमोजसा
०७०३०११२ किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः
०७०३०१२१ इति शुश्रुम निर्बन्धं तपः परममास्थितः
०७०३०१२२ विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर
०७०३०१३१ तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते
०७०३०१३२ भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च
०७०३०१४१ इति विज्ञापितो देवैर्भगवानात्मभूर्नृप
०७०३०१४२ परितो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम्
०७०३०१५१ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः
०७०३०१५२ पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितम्
०७०३०१६१ तपन्तं तपसा लोकान्यथाभ्रापिहितं रविम्
०७०३०१६२ विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः
०७०३०१७० श्रीब्रह्मोवाच
०७०३०१७१ उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप
०७०३०१७२ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः
०७०३०१८१ अद्राक्षमहमेतं ते हृत्सारं महदद्भुतम्
०७०३०१८२ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते
०७०३०१९१ नैतत्पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे
०७०३०१९२ निरम्बुर्धारयेत्प्राणान्को वै दिव्यसमाः शतम्
०७०३०२०१ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम्
०७०३०२०२ तपोनिष्ठेन भवताजितोऽहं दितिनन्दन
०७०३०२११ ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव
०७०३०२१२ मर्तस्य ते ह्यमर्तस्य दर्शनं नाफलं मम
०७०३०२२० श्रीनारद उवाच
०७०३०२२१ इत्युक्त्वादिभवो देवो भक्षिताङ्गं पिपीलिकैः

०७०३०२२२ कमण्डलुजलेनौक्षद्दिव्येनामोघराधसा
०७०३०२३१ स तत्कीचकवल्मीकात्सहओजोबलान्वितः
०७०३०२३२ सर्वावयवसम्पन्नो वज्रसंहननो युवा
०७०३०२३३ उत्थितस्तप्तहेमाभो विभावसुरिवैधसः
०७०३०२४१ स निरीक्ष्याम्बरे देवं हंसवाहमुपस्थितम्
०७०३०२४२ ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः
०७०३०२५१ उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम्
०७०३०२५२ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयागृणात्
०७०३०२६० श्रीहिरण्यकशिपुरुवाच
०७०३०२६१ कल्पान्ते कालसृष्टेन योऽन्धेन तमसावृतम्
०७०३०२६२ अभिव्यनग्जगदिदं स्वयञ्ज्योतिः स्वरोचिषा
०७०३०२७१ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति
०७०३०२७२ रजःसत्त्वतमोधाम्ने पराय महते नमः
०७०३०२८१ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये
०७०३०२८२ प्राणेन्द्रियमनोबुद्धि विकारैर्व्यक्तिमीयुषे
०७०३०२९१ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम्
०७०३०२९२ चित्तस्य चित्तैर्मनैन्द्रियाणां पतिर्महान्भूतगुणाशयेशः
०७०३०३०१ त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चतुर्होत्रकविद्यया च
०७०३०३०२ त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा
०७०३०३११ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यवयवैः क्षिणोषि
०७०३०३१२ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा
०७०३०३२१ त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद्व्यतिरिक्तमस्ति
०७०३०३२२ विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः
०७०३०३३१ व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम्
०७०३०३३२ भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः
०७०३०३४१ अनन्ताव्यक्तरूपेण येनेदमखिलं ततम्
०७०३०३४२ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः
०७०३०३५१ यदि दास्यस्यभिमतान्वरान्मे वरदोत्तम
०७०३०३५२ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो
०७०३०३६१ नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः
०७०३०३६२ न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि

०७०३०३७१ व्यसुभिर्वासुमद्भिर्वा सुरासुरमहोरगैः
०७०३०३७२ अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम्
०७०३०३८१ सर्वेषां लोकपालानां महिमानं यथात्मनः
०७०३०३८२ तपोयोगप्रभावाणां यन्न रिष्यति कर्हिचित्
०७०४००१० श्रीनारद उवाच
०७०४००११ एवं वृतः शतधृतिर्हिरण्यकशिपोरथ
०७०४००१२ प्रादात्तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान्
०७०४००२० श्रीब्रह्मोवाच
०७०४००२१ तातेमे दुर्लभाः पुंसां यान्वृणीषे वरान्मम
०७०४००२२ तथापि वितराम्यङ्ग वरान्यद्यपि दुर्लभान्
०७०४००३१ ततो जगाम भगवानमोघानुग्रहो विभुः
०७०४००३२ पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः
०७०४००४१ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः
०७०४००४२ भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन्
०७०४००५१ स विजित्य दिशः सर्वा लोकांश्च त्रीन्महासुरः
०७०४००५२ देवासुरमनुष्येन्द्र गन्धर्वगरुडोरगान्
०७०४००६१ सिद्धचारणविद्याध्रानृषीन्पितृपतीन्मनून्
०७०४००६२ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनपि
०७०४००७१ सर्वसत्त्वपतीञ्जित्वा वशमानीय विश्वजित्
०७०४००७२ जहार लोकपालानां स्थानानि सह तेजसा
०७०४००८१ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिपिष्टपम्
०७०४००८२ महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा
०७०४००८३ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत्
०७०४००९१ यत्र विद्रुमसोपाना महामारकता भुवः
०७०४००९२ यत्र स्फाटिककुड्यानि वैदूर्यस्तम्भपङ्क्तयः
०७०४०१०१ यत्र चित्रवितानानि पद्मरागासनानि च
०७०४०१०२ पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः
०७०४०१११ कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः
०७०४०११२ रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम्
०७०४०१२१ तस्मिन्महेन्द्रभवने महाबलो महामना निर्जितलोक एकराट्
०७०४०१२२ रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः

०७०४०१३१ तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः
०७०४०१३२ उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम्
०७०४०१४१ जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः
०७०४०१४२ गन्धर्वसिद्धा ऋषयोऽस्तुवन्मुहुर्विद्याधराश्चाप्सरसश्च पाण्डव
०७०४०१५१ स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः
०७०४०१५२ इज्यमानो हविर्भागानग्रहीत्स्वेन तेजसा
०७०४०१६१ अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही
०७०४०१६२ तथा कामदुघा गावो नानाश्चर्यपदं नभः
०७०४०१७१ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः
०७०४०१७२ क्षारसीधुघृतक्षौद्र दधिक्षीरामृतोदकाः
०७०४०१८१ शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः
०७०४०१८२ दधार लोकपालानामेक एव पृथग्गुणान्
०७०४०१९१ स इत्थं निर्जितककुबेकराड्विषयान्प्रियान्
०७०४०१९२ यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः
०७०४०२०१ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः
०७०४०२०२ कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः
०७०४०२११ तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः
०७०४०२१२ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम्
०७०४०२२१ तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः
०७०४०२२२ यद्गत्वा न निवर्तन्ते शान्ताः सन्न्यासिनोऽमलाः
०७०४०२३१ इति ते संयतात्मानः समाहितधियोऽमलाः
०७०४०२३२ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः
०७०४०२४१ तेषामाविरभूद्वाणी अरूपा मेघनिःस्वना
०७०४०२४२ सन्नादयन्ती ककुभः साधूनामभयङ्करी
०७०४०२५१ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः
०७०४०२५२ मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये
०७०४०२६१ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत्
०७०४०२६२ तस्य शान्तिं करिष्यामि कालं तावत्प्रतीक्षत
०७०४०२७१ यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु
०७०४०२७२ धर्मे मयि च विद्वेषः स वा आशु विनश्यति
०७०४०२८१ निर्वैराय प्रशान्ताय स्वसुताय महात्मने

०७०४०२८२ प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम्
०७०४०२९० श्रीनारद उवाच
०७०४०२९१ इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः
०७०४०२९२ न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम्
०७०४०३०१ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः
०७०४०३०२ प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः
०७०४०३११ ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः
०७०४०३१२ आत्मवत्सर्वभूतानामेकप्रियसुहृत्तमः
०७०४०३२१ दासवत्सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः
०७०४०३२२ भ्रातृवत्सदृशे स्निग्धो गुरुष्वीश्वरभावनः
०७०४०३२३ विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः
०७०४०३३१ नोद्विग्नचित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक्
०७०४०३३२ दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः
०७०४०३४१ यस्मिन्महद्गुणा राजन्गृह्यन्ते कविभिर्मुहुः
०७०४०३४२ न तेऽधुना पिधीयन्ते यथा भगवतीश्वरे
०७०४०३५१ यं साधुगाथासदसि रिपवोऽपि सुरा नृप
०७०४०३५२ प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः
०७०४०३६१ गुणैरलमसङ्ख्येयैर्माहात्म्यं तस्य सूच्यते
०७०४०३६२ वासुदेवे भगवति यस्य नैसर्गिकी रतिः
०७०४०३७१ न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया
०७०४०३७२ कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम्
०७०४०३८१ आसीनः पर्यटन्नश्नन्शयानः प्रपिबन्ब्रुवन्
०७०४०३८२ नानुसन्धत्त एतानि गोविन्दपरिरम्भितः
०७०४०३९१ क्वचिद्रुदति वैकुण्ठ चिन्ताशबलचेतनः
०७०४०३९२ क्वचिद्धसति तच्चिन्ता ह्लाद उद्गायति क्वचित्
०७०४०४०१ नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित्
०७०४०४०२ क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह
०७०४०४११ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः
०७०४०४१२ अस्पन्दप्रणयानन्द सलिलामीलितेक्षणः
०७०४०४२१ स उत्तमश्लोकपदारविन्दयोर्निषेवयाकिञ्चनसङ्गलब्धया
०७०४०४२२ तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसङ्गदीनस्य मनः शमं व्यधात्

०७०४०४३१ तस्मिन्महाभागवते महाभागे महात्मनि
०७०४०४३२ हिरण्यकशिपू राजन्नकरोदघमात्मजे
०७०४०४४० श्रीयुधिष्ठिर उवाच
०७०४०४४१ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत
०७०४०४४२ यदात्मजाय शुद्धाय पितादात्साधवे ह्यघम्
०७०४०४५१ पुत्रान्विप्रतिकूलान्स्वान्पितरः पुत्रवत्सलाः
०७०४०४५२ उपालभन्ते शिक्षार्थं नैवाघमपरो यथा
०७०४०४६१ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान्
०७०४०४६२ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो
०७०४०४६३ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः
०७०५००१० श्रीनारद उवाच
०७०५००११ पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः
०७०५००१२ षण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके
०७०५००२१ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम्
०७०५००२२ पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान्
०७०५००३१ यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च
०७०५००३२ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम्
०७०५००४१ एकदासुरराट्पुत्रमङ्कमारोप्य पाण्डव
०७०५००४२ पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान्
०७०५००५० श्रीप्रह्लाद उवाच
०७०५००५१ तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात्
०७०५००५२ हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत
०७०५००६० श्रीनारद उवाच
०७०५००६१ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः
०७०५००६२ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः
०७०५००७१ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः
०७०५००७२ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा
०७०५००८१ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः
०७०५००८२ प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः
०७०५००९१ वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा
०७०५००९२ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः

०७०५०१०१ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत्
०७०५०१०२ भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन
०७०५०११० श्रीप्रह्राद उवाच
०७०५०१११ परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः
०७०५०११२ विमोहितधियां दृष्टस्तस्मै भगवते नमः
०७०५०१२१ स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते
०७०५०१२२ अन्य एष तथान्योऽहमिति भेदगतासती
०७०५०१३१ स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते
०७०५०१३२ मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम्
०७०५०१४१ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ
०७०५०१४२ तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया
०७०५०१५० श्रीनारद उवाच
०७०५०१५१ एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः
०७०५०१५२ तं सन्निभर्त्स्य कुपितः सुदीनो राजसेवकः
०७०५०१६१ आनीयतामरे वेत्रमस्माकमयशस्करः
०७०५०१६२ कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः
०७०५०१७१ दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः
०७०५०१७२ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः
०७०५०१८१ इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः
०७०५०१८२ प्रह्रादं ग्राहयामास त्रिवर्गस्योपपादनम्
०७०५०१९१ तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम्
०७०५०१९२ दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम्
०७०५०२०१ पादयोः पतितं बालं प्रतिनन्द्याशिषासुरः
०७०५०२०२ परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम्
०७०५०२११ आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः
०७०५०२१२ आसिञ्चन्विकसद्वक्रमिदमाह युधिष्ठिर
०७०५०२२० हिरण्यकशिपुरुवाच
०७०५०२२१ प्रह्रादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम्
०७०५०२२२ कालेनैतावतायुष्मन्यदशिक्षद्गुरोर्भवान्
०७०५०२३० श्रीप्रह्राद उवाच
०७०५०२३१ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्

०७०५०२३२ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्
०७०५०२४१ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा
०७०५०२४२ क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्
०७०५०२५१ निशम्यैतत्सुतवचो हिरण्यकशिपुस्तदा
०७०५०२५२ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः
०७०५०२६१ ब्रह्मबन्धो किमेतत्ते विपक्षं श्रयतासता
०७०५०२६२ असारं ग्राहितो बालो मामनादृत्य दुर्मते
०७०५०२७१ सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः
०७०५०२७२ तेषामुदेत्यघं काले रोगः पातकिनामिव
०७०५०२८० श्रीगुरुपुत्र उवाच
०७०५०२८१ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो
०७०५०२८२ नैसर्गिकीयं मतिरस्य राजन्नियच्छ मन्युं कददाः स्म मा नः
०७०५०२९० श्रीनारद उवाच
०७०५०२९१ गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम्
०७०५०२९२ न चेद्गुरुमुखीयं ते कुतोऽभद्रासती मतिः
०७०५०३०० श्रीप्रह्लाद उवाच
०७०५०३०१ मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम्
०७०५०३०२ अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम्
०७०५०३११ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः
०७०५०३१२ अन्धा यथान्धैरुपनीयमानास्तेऽपीशतन्त्र्यामुरुदाम्नि बद्धाः
०७०५०३२१ नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः
०७०५०३२२ महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत्
०७०५०३३१ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा
०७०५०३३२ अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले
०७०५०३४१ आहामर्षरुषाविष्टः कषायीभूतलोचनः
०७०५०३४२ वध्यतामाश्वयं वध्यो निःसारयत नैरृताः
०७०५०३५१ अयं मे भ्रातृहा सोऽयं हित्वा स्वान्सुहृदोऽधमः
०७०५०३५२ पितृव्यहन्तुः पादौ यो विष्णोर्दासवदर्चति
०७०५०३६१ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः
०७०५०३६२ सौहृदं दुस्त्यजं पित्रोरहाद्यः पञ्चहायनः
०७०५०३७१ परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत्सुतोऽहितः

०७०५०३७२ छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात्
०७०५०३८१ सर्वैरुपायैर्हन्तव्यः सम्भोजशयनासनैः
०७०५०३८२ सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम्
०७०५०३९१ नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः
०७०५०३९२ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः
०७०५०४०१ नदन्तो भैरवं नादं छिन्धि भिन्धीति वादिनः
०७०५०४०२ आसीनं चाहनन्शूलैः प्रह्लादं सर्वमर्मसु
०७०५०४११ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि
०७०५०४१२ युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः
०७०५०४२१ प्रयासेऽपहते तस्मिन्दैत्येन्द्रः परिशङ्कितः
०७०५०४२२ चकार तद्वधोपायान्निर्बन्धेन युधिष्ठिर
०७०५०४३१ दिग्गजैर्दन्दशूकेन्द्रैरभिचारावपातनैः
०७०५०४३२ मायाभिः सन्निरोधैश्च गरदानैरभोजनैः
०७०५०४४१ हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि
०७०५०४४२ न शशाक यदा हन्तुमपापमसुरः सुतम्
०७०५०४४३ चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत
०७०५०४५१ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः
०७०५०४५२ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा
०७०५०४६१ वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम्
०७०५०४६२ न विस्मरति मेऽनार्यं शुनः शेप इव प्रभुः
०७०५०४७१ अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः
०७०५०४७२ नूनमेतद्विरोधेन मृत्युर्मे भविता न वा
०७०५०४८१ इति तच्चिन्तया किञ्चिन्म्लानश्रियमधोमुखम्
०७०५०४८२ शण्डामर्कावौशनसौ विविक्त इति होचतुः
०७०५०४९१ जितं त्वयैकेन जगत्रयं भ्रुवोर्विजृम्भणत्रस्तसमस्तधिष्ण्यपम्
०७०५०४९२ न तस्य चिन्त्यं तव नाथ चक्ष्वहे न वै शिशूनां गुणदोषयोः पदम्
०७०५०५०१ इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा
०७०५०५०२ बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति
०७०५०५११ तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत्
०७०५०५१२ धर्मो ह्यस्योपदेष्टव्यो राज्ञां यो गृहमेधिनाम्
०७०५०५२१ धर्ममर्थं च कामं च नितरां चानुपूर्वशः

०७०५०५२२ प्रह्लादायोचतू राजन्प्रश्रितावनताय च
०७०५०५३१ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम्
०७०५०५३२ न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम्
०७०५०५४१ यदाचार्यः परावृत्तो गृहमेधीयकर्मसु
०७०५०५४२ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः
०७०५०५५१ अथ तान्श्लक्ष्णया वाचा प्रत्याहूय महाबुधः
०७०५०५५२ उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव
०७०५०५६१ ते तु तद्गौरवात्सर्वे त्यक्तक्रीडापरिच्छदाः
०७०५०५६२ बाला अदूषितधियो द्वन्द्वारामेरितेहितैः
०७०५०५७१ पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः
०७०५०५७२ तानाह करुणो मैत्रो महाभागवतोऽसुरः
०७०६००१० श्रीप्रह्लाद उवाच
०७०६००११ कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह
०७०६००१२ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम्
०७०६००२१ यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम्
०७०६००२२ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत्
०७०६००३१ सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम्
०७०६००३२ सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः
०७०६००४१ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम्
०७०६००४२ न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम्
०७०६००५१ ततो यतेत कुशलः क्षेमाय भवमाश्रितः
०७०६००५२ शरीरं पौरुषं यावन्न विपद्येत पुष्कलम्
०७०६००६१ पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः
०७०६००६२ निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः
०७०६००७१ मुग्धस्य बाल्ये कैशोरे क्रीडतो याति विंशतिः
०७०६००७२ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः
०७०६००८१ दुरापूरेण कामेन मोहेन च बलीयसा
०७०६००८२ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि
०७०६००९१ को गृहेषु पुमान्सक्तमात्मानमजितेन्द्रियः
०७०६००९२ स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम्
०७०६०१०१ को न्वर्थतृष्णां विसृजेत्प्राणेभ्योऽपि य ईप्सितः

०७०६०१०२ यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक्
०७०६०१११ कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान्
०७०६०११२ सुहृत्सु तत्स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः
०७०६०१२१ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ
०७०६०१२२ गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान्
०७०६०१३१ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः
०७०६०१३२ औपस्थ्यजैह्वं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः
०७०६०१४१ कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः
०७०६०१४२ सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः
०७०६०१५१ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः
०७०६०१५२ प्रेत्येह वाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी
०७०६०१६१ विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन्स्वलोकाय न कल्पते वै
०७०६०१६२ यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः
०७०६०१७१ यतो न कश्चित्क्व च कुत्रचिद्वा दीनः स्वमात्मानमलं समर्थः
०७०६०१७२ विमोचितुं कामदृशां विहार क्रीडामृगो यन्निगडो विसर्गः
०७०६०१८१ ततो विदूरात्परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु
०७०६०१८२ उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः
०७०६०१९१ न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः
०७०६०१९२ आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः
०७०६०२०१ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु
०७०६०२०२ भौतिकेषु विकारेषु भूतेष्वथ महत्सु च
०७०६०२११ गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा
०७०६०२१२ एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः
०७०६०२२१ प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम्
०७०६०२२२ व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः
०७०६०२३१ केवलानुभवानन्द स्वरूपः परमेश्वरः
०७०६०२३२ माययान्तर्हितैश्वर्य ईयते गुणसर्गया
०७०६०२४१ तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम्
०७०६०२४२ भावमासुरमुन्मुच्य यया तुष्यत्यधोक्षजः
०७०६०२५१ तुष्टे च तत्र किमलभ्यमनन्त आद्ये
०७०६०२५२ किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः

०७०६०२५३ धर्मादयः किमगुणेन च काङ्क्षितेन
०७०६०२५४ सारं जुषां चरणयोरुपगायतां नः
०७०६०२६१ धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग
०७०६०२६२ ईक्षा त्रयी नयदमौ विविधा च वार्ता
०७०६०२६३ मन्ये तदेतदखिलं निगमस्य सत्यं
०७०६०२६४ स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः
०७०६०२७१ ज्ञानं तदेतदमलं दुरवापमाह
०७०६०२७२ नारायणो नरसखः किल नारदाय
०७०६०२७३ एकान्तिनां भगवतस्तदकिञ्चनानां
०७०६०२७४ पादारविन्दरजसाप्लुतदेहिनां स्यात्
०७०६०२८१ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम्
०७०६०२८२ धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात्
०७०६०२९० श्रीदैत्यपुत्रा ऊचुः
०७०६०२९१ प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम्
०७०६०२९२ एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ
०७०६०३०१ बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः
०७०६०३०२ छिन्धि नः संशयं सौम्य स्याच्चेद्विस्रम्भकारणम्
०७०७००१० श्रीनारद उवाच
०७०७००११ एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः
०७०७००१२ उवाच तान्स्मयमानः स्मरन्मदनुभाषितम्
०७०७००२० श्रीप्रह्लाद उवाच
०७०७००२१ पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम्
०७०७००२२ युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति
०७०७००३१ पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः
०७०७००३२ पापेन पापोऽभक्षीति वदन्तो वासवादयः
०७०७००४१ तेषामतिबलोद्योगं निशम्यासुरयूथपाः
०७०७००४२ वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम्
०७०७००५१ कलत्रपुत्रवित्ताप्तान्गृहान्पशुपरिच्छदान्
०७०७००५२ नावेक्ष्यमाणास्त्वरिताः सर्वे प्राणपरीप्सवः
०७०७००६१ व्यलुम्पन्राजशिबिरममरा जयकाङ्क्षिणः
०७०७००६२ इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत्

०७०७००७१ नीयमानां भयोद्विग्नां रुदतीं कुररीमिव
०७०७००७२ यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि
०७०७००८१ प्राह नैनां सुरपते नेतुमर्हस्यनागसम्
०७०७००८२ मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम्
०७०७००९० श्रीइन्द्र उवाच
०७०७००९१ आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः
०७०७००९२ आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः
०७०७०१०० श्रीनारद उवाच
०७०७०१०१ अयं निष्किल्बिषः साक्षान्महाभागवतो महान्
०७०७०१०२ त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली
०७०७०१११ इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन्वचः
०७०७०११२ अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ
०७०७०१२१ ततो मे मातरमृषिः समानीय निजाश्रमे
०७०७०१२२ आश्वास्येहोष्यतां वत्से यावत्ते भर्तुरागमः
०७०७०१३१ तथेत्यवात्सीद्देवर्षेरन्तिके साकुतोभया
०७०७०१३२ यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्तत
०७०७०१४१ ऋषिं पर्यचरत्तत्र भक्त्या परमया सती
०७०७०१४२ अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये
०७०७०१५१ ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः
०७०७०१५२ धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम्
०७०७०१६१ तत्तु कालस्य दीर्घत्वात्स्त्रीत्वान्मातुस्तिरोदधे
०७०७०१६२ ऋषिणानुगृहीतं मां नाधुनाप्यजहात्स्मृतिः
०७०७०१७१ भवतामपि भूयान्मे यदि श्रद्दधते वचः
०७०७०१७२ वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा
०७०७०१८१ जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः
०७०७०१८२ फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना
०७०७०१९१ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः
०७०७०१९२ अविक्रियः स्वदृघेतुर्व्यापकोऽसङ्ग्यनावृतः
०७०७०२०१ एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः
०७०७०२०२ अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत्
०७०७०२११ स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात्

०७०७०२१२ क्षेत्रेषु देहेषु तथात्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत
०७०७०२२१ अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः
०७०७०२२२ विकाराः षोडशाचार्यैः पुमानेकः समन्वयात्
०७०७०२३१ देहस्तु सर्वसङ्घातो जगत्तस्थुरिति द्विधा
०७०७०२३२ अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन्
०७०७०२४१ अन्वयव्यतिरेकेण विवेकेनोशतात्मना
०७०७०२४२ स्वर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः
०७०७०२५१ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः
०७०७०२५२ ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः
०७०७०२६१ एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः
०७०७०२६२ स्वरूपमात्मनो बुध्येद्गन्धैर्वायुमिवान्वयात्
०७०७०२७१ एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः
०७०७०२७२ अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवार्प्यते
०७०७०२८१ तस्माद्भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम्
०७०७०२८२ बीजनिर्हरणं योगः प्रवाहोपरमो धियः
०७०७०२९१ तत्रोपायसहस्राणामयं भगवतोदितः
०७०७०२९२ यदीश्वरे भगवति यथा यैरञ्जसा रतिः
०७०७०३०१ गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च
०७०७०३०२ सङ्गेन साधुभक्तानामीश्वराराधनेन च
०७०७०३११ श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम्
०७०७०३१२ तत्पादाम्बुरुहध्यानात्तल्लिङ्गेक्षार्हणादिभिः
०७०७०३२१ हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः
०७०७०३२२ इति भूतानि मनसा कामैस्तैः साधु मानयेत्
०७०७०३३१ एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे
०७०७०३३२ वासुदेवे भगवति यया संलभ्यते रतिः
०७०७०३४१ निशम्य कर्माणि गुणानतुल्यान्वीर्याणि लीलातनुभिः कृतानि
०७०७०३४२ यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति
०७०७०३५१ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम्
०७०७०३५२ मुहुः श्वसन्वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः
०७०७०३६१ तदा पुमान्मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः
०७०७०३६२ निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम्

०७०७०३७१ अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम्
०७०७०३७२ तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम्
०७०७०३८१ कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः
०७०७०३८२ स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः
०७०७०३९१ रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः
०७०७०३९२ सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः
०७०७०४०१ एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः
०७०७०४०२ तस्माददृष्टश्रुतदूषणं परं भक्त्योक्तयेशं भजतात्मलब्धये
०७०७०४११ यदर्थ इह कर्माणि विद्वन्मान्यसकृन्नरः
०७०७०४१२ करोत्यतो विपर्यासममोघं विन्दते फलम्
०७०७०४२१ सुखाय दुःखमोक्षाय सङ्कल्प इह कर्मिणः
०७०७०४२२ सदाप्नोतीहया दुःखमनीहायाः सुखावृतः
०७०७०४३१ कामान्कामयते काम्यैर्यदर्थमिह पूरुषः
०७०७०४३२ स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च
०७०७०४४१ किमु व्यवहितापत्य दारागारधनादयः
०७०७०४४२ राज्यकोशगजामात्य भृत्याप्ता ममतास्पदाः
०७०७०४५१ किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः
०७०७०४५२ अनर्थैरर्थसङ्काशैर्नित्यानन्दरसोदधेः
०७०७०४६१ निरूप्यतामिह स्वार्थः कियान्देहभृतोऽसुराः
०७०७०४६२ निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः
०७०७०४७१ कर्माण्यारभते देही देहेनात्मानुवर्तिना
०७०७०४७२ कर्मभिस्तनुते देहमुभयं त्वविवेकतः
०७०७०४८१ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः
०७०७०४८२ भजतानीहयात्मानमनीहं हरिमीश्वरम्
०७०७०४९१ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः
०७०७०४९२ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः
०७०७०५०१ देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा
०७०७०५०२ भजन्मुकुन्दचरणं स्वस्तिमान्स्याद्यथा वयम्
०७०७०५११ नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः
०७०७०५१२ प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता
०७०७०५२१ न दानं न तपो नेज्या न शौचं न व्रतानि च

०७०७०५२२ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्
०७०७०५३१ ततो हरौ भगवति भक्तिं कुरुत दानवाः
०७०७०५३२ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे
०७०७०५४१ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः
०७०७०५४२ खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः
०७०७०५५१ एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः
०७०७०५५२ एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम्
०७०८००१० श्रीनारद उवाच
०७०८००११ अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम्
०७०८००१२ जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम्
०७०८००२१ अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम्
०७०८००२२ आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा
०७०८००३१ श्रुत्वा तदप्रियं दैत्यो दुःसहं तनयानयम्
०७०८००३२ कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे
०७०८००४१ क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम्
०७०८००४२ आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा
०७०८००५१ प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम्
०७०८००५२ सर्पः पदाहत इव श्वसन्प्रकृतिदारुणः
०७०८००६० श्रीहिरण्यकशिपुरुवाच
०७०८००६१ हे दुर्विनीत मन्दात्मन्कुलभेदकराधम
०७०८००६२ स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाद्य यमक्षयम्
०७०८००७१ क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः
०७०८००७२ तस्य मेऽभीतवन्मूढ शासनं किं बलोऽत्यगाः
०७०८००८० श्रीप्रह्लाद उवाच
०७०८००८१ न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम्
०७०८००८२ परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः
०७०८००९१ स ईश्वरः काल उरुक्रमोऽसावोजः सहः सत्त्वबलेन्द्रियात्मा
०७०८००९२ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः
०७०८०१०१ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विषः
०७०८०१०२ ऋतेऽजितादात्मन उत्पथे स्थितात्तद्धि ह्यनन्तस्य महत्समर्हणम्
०७०८०१११ दस्यून्पुरा षण्न विजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश

०७०८०११२ जितात्मनो ज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे
०७०८०१२० श्रीहिरण्यकशिपुरुवाच
०७०८०१२१ व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे
०७०८०१२२ मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विक्लवा गिरः
०७०८०१३१ यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः
०७०८०१३२ क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते
०७०८०१४१ सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते
०७०८०१४२ गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम्
०७०८०१५१ एवं दुरुक्तैर्मुहुरर्दयन्रुषा सुतं महाभागवतं महासुरः
०७०८०१५२ खड्गं प्रगृह्योत्पतितो वरासनात्स्तम्भं तताडातिबलः स्वमुष्टिना
०७०८०१६१ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत्
०७०८०१६२ यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामात्ययमङ्ग मेनिरे
०७०८०१७१ स विक्रमन्पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम्
०७०८०१७२ अन्तःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः
०७०८०१८१ सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः
०७०८०१८२ अदृश्यतात्यद्भुतरूपमुद्वहन्स्तम्भे सभायां न मृगं न मानुषम्
०७०८०१९१ स सत्त्वमेनं परितो विपश्यन्स्तम्भस्य मध्यादनुनिर्जिहानम्
०७०८०१९२ नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम्
०७०८०२०१ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम्
०७०८०२०२ प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेशरजृम्भिताननम्
०७०८०२११ करालदंष्ट्रं करवालचञ्चल क्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम्
०७०८०२१२ स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुत व्यात्तास्यनासं हनुभेदभीषणम्
०७०८०२२१ दिविस्पृशत्कायमदीर्घपीवर ग्रीवोरुवक्षःस्थलमल्पमध्यमम्
०७०८०२२२ चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम्
०७०८०२३१ दुरासदं सर्वनिजेतरायुध प्रवेकविद्रावितदैत्यदानवम्
०७०८०२३२ प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम्
०७०८०२४१ एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुञ्जरः
०७०८०२४२ अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा
०७०८०२५१ न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा यो नु पुरापिबत्तमः
०७०८०२५२ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया
०७०८०२६१ तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाग्रहीत्

०७०८०२६२ स तस्य हस्तोत्कलितस्तदासुरो विक्रीडतो यद्वदहिर्गरुत्मतः
०७०८०२७१ असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः
०७०८०२७२ तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः
०७०८०२७३ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन गतश्रमो मृधे
०७०८०२८१ तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः
०७०८०२८२ कृत्वाट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः
०७०८०२९१ विष्वक्स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचम्
०७०८०२९२ द्वार्यूरुमापत्य ददार लीलया नखैर्यथाहिं गरुडो महाविषम्
०७०८०३०१ संरम्भदुष्प्रेक्ष्यकराललोचनो व्यात्ताननान्तं विलिहन्स्वजिह्वया
०७०८०३०२ असृग्लवाक्तारुणकेशराननो यथान्त्रमाली द्विपहत्यया हरिः
०७०८०३११ नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान्
०७०८०३१२ अहन्समस्तान्नखशस्त्रपाणिभिर्दोर्दण्डयूथोऽनुपथान्सहस्रशः
०७०८०३२१ सटावधूता जलदाः परापतन्ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः
०७०८०३२२ अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा विचुक्रुशुः
०७०८०३३१ द्यौस्तत्सटोत्क्षिप्तविमानसङ्कुला प्रोत्सर्पत क्ष्मा च पदाभिपीडिता
०७०८०३३२ शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे
०७०८०३४१ ततः सभायामुपविष्टमुत्तमे नृपासने सम्भृततेजसं विभुम्
०७०८०३४२ अलक्षितद्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन
०७०८०३५१ निशाम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे
०७०८०३५२ प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः
०७०८०३६१ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां सङ्कुलमास नाकिनाम्
०७०८०३६२ सुरानका दुन्दुभयोऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः
०७०८०३७१ तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः
०७०८०३७२ ऋषयः पितरः सिद्धा विद्याधरमहोरगाः
०७०८०३८१ मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः
०७०८०३८२ यक्षाः किम्पुरुषास्तात वेतालाः सहकिन्नराः
०७०८०३९१ ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः
०७०८०३९२ मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम्
०७०८०३९३ ईडिरे नरशार्दुलं नातिदूरचराः पृथक्
०७०८०४०० श्रीब्रह्मोवाच
०७०८०४०१ नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे

०७०८०४०२ विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया सन्दधतेऽव्ययात्मने

०७०८०४१० श्रीरुद्र उवाच

०७०८०४११ कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः

०७०८०४१२ तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल

०७०८०४२० श्रीइन्द्र उवाच

०७०८०४२१ प्रत्यानीताः परम भवता त्रायता नः स्वभागा

०७०८०४२२ दैत्याक्रान्तं हृदयकमलं तद्गृहं प्रत्यबोधि

०७०८०४२३ कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते

०७०८०४२४ मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम्

०७०८०४३० श्रीऋषय ऊचुः

०७०८०४३१ त्वं नस्तपः परममात्थ यदात्मतेजो

०७०८०४३२ येनेदमादिपुरुषात्मगतं ससर्क्थ

०७०८०४३३ तद्विप्रलुप्तममुनाद्य शरण्यपाल

०७०८०४३४ रक्षागृहीतवपुषा पुनरन्वमंस्थाः

०७०८०४४० श्रीपितर ऊचुः

०७०८०४४१ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्

०७०८०४४२ दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु

०७०८०४४३ तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्

०७०८०४४४ तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे

०७०८०४५० श्रीसिद्धा ऊचुः

०७०८०४५१ यो नो गतिं योगसिद्धामसाधुरहार्षीद्योगतपोबलेन

०७०८०४५२ नाना दर्पं तं नखैर्विददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह

०७०८०४६० श्रीविद्याधरा ऊचुः

०७०८०४६१ विद्यां पृथग्धारणयानुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः

०७०८०४६२ स येन सङ्ख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम्

०७०८०४७० श्रीनागा ऊचुः

०७०८०४७१ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः

०७०८०४७२ तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते

०७०८०४८० श्रीमनव ऊचुः

०७०८०४८१ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः

०७०८०४८२ भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान्

०७०८०४९० श्रीप्रजापतय ऊचुः
०७०८०४९१ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः
०७०८०४९२ स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः
०७०८०५०० श्रीगन्धर्वा ऊचुः
०७०८०५०१ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः
०७०८०५०२ स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते
०७०८०५१० श्रीचारणा ऊचुः
०७०८०५११ हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः
०७०८०५१२ यदेष साधुहृच्छयस्त्वयासुरः समापितः
०७०८०५२० श्रीयक्षा ऊचुः
०७०८०५२१ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्
०७०८०५२२ त इह दितिसुतेन प्रापिता वाहकत्वम्
०७०८०५२३ स तु जनपरितापं तत्कृतं जानता ते
०७०८०५२४ नरहर उपनीतः पञ्चतां पञ्चविंश
०७०८०५३० श्रीकिम्पुरुषा ऊचुः
०७०८०५३१ वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः
०७०८०५३२ अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा
०७०८०५४० श्रीवैतालिका ऊचुः
०७०८०५४१ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे
०७०८०५४२ यस्तामनैषीद्वशमेष दुर्जनो द्विष्ट्या हतस्ते भगवन्यथामयः
०७०८०५५० श्रीकिन्नरा ऊचुः
०७०८०५५१ वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनानुकारिताः
०७०८०५५२ भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव
०७०८०५६० श्रीविष्णुपार्षदा ऊचुः
०७०८०५६१ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म
०७०८०५६२ सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः
०७०९००१० श्रीनारद उवाच
०७०९००११ एवं सुरादयः सर्वे ब्रह्मरुद्रपुरः सराः
०७०९००१२ नोपैतुमशकन्मन्यु संरम्भं सुदुरासदम्
०७०९००२१ साक्षात्श्रीः प्रेषिता देवैर्दृष्ट्वा तं महदद्भुतम्
०७०९००२२ अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता

०७०९००३१ प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके
०७०९००३२ तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम्
०७०९००४१ तथेति शनकै राजन्महाभागवतोऽर्भकः
०७०९००४२ उपेत्य भुवि कायेन ननाम विधृताञ्जलिः
०७०९००५१ स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः
०७०९००५२ उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं कालाहिवित्रस्तधियां कृताभयम्
०७०९००६१ स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः
०७०९००६२ तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः
०७०९००७१ अस्तौषीद्धरिमेकाग्र मनसा सुसमाहितः
०७०९००७२ प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः
०७०९००८० श्रीप्रह्लाद उवाच
०७०९००८१ ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः
०७०९००८२ सत्त्वैकतानगतयो वचसां प्रवाहैः
०७०९००८३ नाराधितुं पुरुगुणैरधुनापि पिप्रुः
०७०९००८४ किं तोष्टुमर्हति स मे हरिरुग्रजातेः
०७०९००९१ मन्ये धनाभिजनरूपतपःश्रुतौजस्
०७०९००९२ तेजःप्रभावबलपौरुषबुद्धियोगाः
०७०९००९३ नाराधनाय हि भवन्ति परस्य पुंसो
०७०९००९४ भक्त्या तुतोष भगवान्गजयूथपाय
०७०९०१०१ विप्राद्द्विषड्गुणयुतादरविन्दनाभ
०७०९०१०२ पादारविन्दविमुखात्श्वपचं वरिष्ठम्
०७०९०१०३ मन्ये तदर्पितमनोवचनेहितार्थ
०७०९०१०४ प्राणं पुनाति स कुलं न तु भूरिमानः
०७०९०१११ नैवात्मनः प्रभुरयं निजलाभपूर्णो
०७०९०११२ मानं जनादविदुषः करुणो वृणीते
०७०९०११३ यद्यज्जनो भगवते विदधीत मानं
०७०९०११४ तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः
०७०९०१२१ तस्मादहं विगतविक्लव ईश्वरस्य
०७०९०१२२ सर्वात्मना महि गृणामि यथा मनीषम्
०७०९०१२३ नीचोऽजया गुणविसर्गमनुप्रविष्टः
०७०९०१२४ पूयेत येन हि पुमाननुवर्णितेन

०७०९०१३१ सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो
०७०९०१३२ ब्रह्मादयो वयमिवेश न चोद्विजन्तः
०७०९०१३३ क्षेमाय भूतय उतात्मसुखाय चास्य
०७०९०१३४ विक्रीडितं भगवतो रुचिरावतारैः
०७०९०१४१ तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य
०७०९०१४२ मोदेत साधुरपि वृश्चिकसर्पहत्या
०७०९०१४३ लोकाश्च निर्वृतिमिताः प्रतियन्ति सर्वे
०७०९०१४४ रूपं नृसिंह विभयाय जनाः स्मरन्ति
०७०९०१५१ नाहं बिभेम्यजित तेऽतिभयानकास्य
०७०९०१५२ जिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात्
०७०९०१५३ आन्त्रस्रजःक्षतजकेशरशङ्कुकर्णान्
०७०९०१५४ निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात्
०७०९०१६१ त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र
०७०९०१६२ संसारचक्रकदनाद्ग्रसतां प्रणीतः
०७०९०१६३ बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं
०७०९०१६४ प्रीतोऽपवर्गशरणं ह्वयसे कदा नु
०७०९०१७१ यस्मात्प्रियाप्रियवियोगसंयोगजन्म
०७०९०१७२ शोकाग्निना सकलयोनिषु दह्यमानः
०७०९०१७३ दुःखौषधं तदपि दुःखमतद्धियाहं
०७०९०१७४ भूमन्भ्रमामि वद मे तव दास्ययोगम्
०७०९०१८१ सोऽहं प्रियस्य सुहृदः परदेवताया
०७०९०१८२ लीलाकथास्तव नृसिंह विरिञ्चगीताः
०७०९०१८३ अञ्जस्तितर्म्यनुगृणन्गुणविप्रमुक्तो
०७०९०१८४ दुर्गाणि ते पदयुगालयहंससङ्गः
०७०९०१९१ बालस्य नेह शरणं पितरौ नृसिंह
०७०९०१९२ नार्तस्य चागदमुदन्वति मज्जतो नौः
०७०९०१९३ तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्
०७०९०१९४ तावद्विभो तनुभृतां त्वदुपेक्षितानाम्
०७०९०२०१ यस्मिन्यतो यर्हि येन च यस्य यस्माद्
०७०९०२०२ यस्मै यथा यदुत यस्त्वपरः परो वा
०७०९०२०३ भावः करोति विकरोति पृथक्स्वभावः

०७०९०२०४ सञ्चोदितस्तदखिलं भवतः स्वरूपम्
०७०९०२११ माया मनः सृजति कर्ममयं बलीयः
०७०९०२१२ कालेन चोदितगुणानुमतेन पुंसः
०७०९०२१३ छन्दोमयं यदजयार्पितषोडशारं
०७०९०२१४ संसारचक्रमज कोऽतितरेत्त्वदन्यः
०७०९०२२१ स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना
०७०९०२२२ कालो वशीकृतविसृज्यविसर्गशक्तिः
०७०९०२२३ चक्रे विसृष्टमजयेश्वर षोडशारे
०७०९०२२४ निष्पीड्यमानमुपकर्ष विभो प्रपन्नम्
०७०९०२३१ दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानाम्
०७०९०२३२ आयुः श्रियो विभव इच्छति याञ्जनोऽयम्
०७०९०२३३ येऽस्मत्पितुः कुपितहासविजृम्भितभ्रू
०७०९०२३४ विस्फूर्जितेन लुलिताः स तु ते निरस्तः
०७०९०२४१ तस्मादमूस्तनुभृतामहमाशिषोऽज्ञ
०७०९०२४२ आयुः श्रियं विभवमैन्द्रियमाविरिञ्च्यात्
०७०९०२४३ नेच्छामि ते विलुलितानुरुविक्रमेण
०७०९०२४४ कालात्मनोपनय मां निजभृत्यपार्श्वम्
०७०९०२५१ कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः
०७०९०२५२ क्वेदं कलेवरमशेषरुजां विरोहः
०७०९०२५३ निर्विद्यते न तु जनो यदपीति विद्वान्
०७०९०२५४ कामानलं मधुलवैः शमयन्दुरापैः
०७०९०२६१ क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
०७०९०२६२ जातः सुरेतरकुले क्व तवानुकम्पा
०७०९०२६३ न ब्रह्मणो न तु भवस्य न वै रमाया
०७०९०२६४ यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः
०७०९०२७१ नैषा परावरमतिर्भवतो ननु स्याज्
०७०९०२७२ जन्तोर्यथात्मसुहृदो जगतस्तथापि
०७०९०२७३ संसेवया सुरतरोरिव ते प्रसादः
०७०९०२७४ सेवानुरूपमुदयो न परावरत्वम्
०७०९०२८१ एवं जनं निपतितं प्रभवाहिकूपे
०७०९०२८२ कामाभिकाममनु यः प्रपतन्प्रसङ्गात्

०७०९०२८३ कृत्वात्मसात्सुरर्षिणा भगवन्गृहीतः
०७०९०२८४ सोऽहं कथं नु विसृजे तव भृत्यसेवाम्
०७०९०२९१ मत्प्राणरक्षणमनन्त पितुर्वधश्च
०७०९०२९२ मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम्
०७०९०२९३ खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्
०७०९०२९४ त्वामीश्वरो मदपरोऽवतु कं हरामि
०७०९०३०१ एकस्त्वमेव जगदेतममुष्य यत्त्वम्
०७०९०३०२ आद्यन्तयोः पृथगवस्यसि मध्यतश्च
०७०९०३०३ सृष्ट्वा गुणव्यतिकरं निजमाययेदं
०७०९०३०४ नानेव तैरवसितस्तदनुप्रविष्टः
०७०९०३११ त्वम्वा इदं सदसदीश भवांस्ततोऽन्यो
०७०९०३१२ माया यदात्मपरबुद्धिरियं ह्यपार्था
०७०९०३१३ यद्यस्य जन्म निधनं स्थितिरीक्षणं च
०७०९०३१४ तद्वैतदेव वसुकालवदष्टितर्वोः
०७०९०३२१ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये
०७०९०३२२ शेषेत्मना निजसुखानुभवो निरीहः
०७०९०३२३ योगेन मीलितदृगात्मनिपीतनिद्रस्
०७०९०३२४ तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे
०७०९०३३१ तस्यैव ते वपुरिदं निजकालशक्त्या
०७०९०३३२ सञ्चोदितप्रकृतिधर्मण आत्मगूढम्
०७०९०३३३ अम्भस्यनन्तशयनाद्विरमत्समाधेर्
०७०९०३३४ नाभेरभूत्स्वकणिकावटवन्महाब्जम्
०७०९०३४१ तत्सम्भवः कविरतोऽन्यदपश्यमानस्
०७०९०३४२ त्वां बीजमात्मनि ततं स बहिर्विचिन्त्य
०७०९०३४३ नाविन्ददब्दशतमप्सु निमज्जमानो
०७०९०३४४ जातेऽङ्कुरे कथमुहोपलभेत बीजम्
०७०९०३५१ स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं
०७०९०३५२ कालेन तीव्रतपसा परिशुद्धभावः
०७०९०३५३ त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं
०७०९०३५४ भूतेन्द्रियाशयमये विततं ददर्श
०७०९०३६१ एवं सहस्रवदनाङ्घ्रिशिरःकरोरु

०७०९०३६२ नासाद्यकर्णनयनाभरणायुधाढ्यम्
०७०९०३६३ मायामयं सदुपलक्षितसन्निवेशं
०७०९०३६४ दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः
०७०९०३७१ तस्मै भवान्हयशिरस्तनुवं हि बिभ्रद्
०७०९०३७२ वेदद्रुहावतिबलौ मधुकैटभाख्यौ
०७०९०३७३ हत्वानयच्छ्रुतिगणांश्च रजस्तमश्च
०७०९०३७४ सत्त्वं तव प्रियतमां तनुमामनन्ति
०७०९०३८१ इत्थं नृतिर्यगृषिदेवझषावतारैर्
०७०९०३८२ लोकान्विभावयसि हंसि जगत्प्रतीपान्
०७०९०३८३ धर्मं महापुरुष पासि युगानुवृत्तं
०७०९०३८४ छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम्
०७०९०३९१ नैतन्मनस्तव कथासु विकुण्ठनाथ
०७०९०३९२ सम्प्रीयते दुरितदुष्टमसाधु तीव्रम्
०७०९०३९३ कामातुरं हर्षशोकभयैषणार्तं
०७०९०३९४ तस्मिन्कथं तव गतिं विमृशामि दीनः
०७०९०४०१ जिह्वैकतोऽच्युत विकर्षति मावितृप्ता
०७०९०४०२ शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित्
०७०९०४०३ घ्राणोऽन्यतश्चपलदृक्क्व च कर्मशक्तिर्
०७०९०४०४ बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति
०७०९०४११ एवं स्वकर्मपतितं भववैतरण्याम्
०७०९०४१२ अन्योन्यजन्ममरणाशनभीतभीतम्
०७०९०४१३ पश्यञ्जनं स्वपरविग्रहवैरमैत्रं
०७०९०४१४ हन्तेति पारचर पीपृहि मूढमद्य
०७०९०४२१ को न्वत्र तेऽखिलगुरो भगवन्प्रयास
०७०९०४२२ उत्तारणेऽस्य भवसम्भवलोपहेतोः
०७०९०४२३ मूढेषु वै महदनुग्रह आर्तबन्धो
०७०९०४२४ किं तेन ते प्रियजनाननुसेवतां नः
०७०९०४३१ नैवोद्विजे पर दुरत्ययवैतरण्यास्
०७०९०४३२ त्वद्वीर्यगायनमहामृतमग्नचित्तः
०७०९०४३३ शोचे ततो विमुखचेतस इन्द्रियार्थ
०७०९०४३४ मायासुखाय भरमुद्वहतो विमूढान्

०७०९०४४१ प्रायेण देव मुनयः स्वविमुक्तिकामा
०७०९०४४२ मौनं चरन्ति विजने न परार्थनिष्ठाः
०७०९०४४३ नैतान्विहाय कृपणान्विमुमुक्ष एको
०७०९०४४४ नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये
०७०९०४५१ यन्मैथुनादिगृहमेधिसुखं हि तुच्छं
०७०९०४५२ कण्डूयनेन करयोरिव दुःखदुःखम्
०७०९०४५३ तृप्यन्ति नेह कृपणा बहुदुःखभाजः
०७०९०४५४ कण्डूतिवन्मनसिजं विषहेत धीरः
०७०९०४६१ मौनव्रतश्रुततपोऽध्ययनस्वधर्म
०७०९०४६२ व्याख्यारहोजपसमाधय आपवर्ग्याः
०७०९०४६३ प्रायः परं पुरुष ते त्वजितेन्द्रियाणां
०७०९०४६४ वार्ता भवन्त्युत न वात्र तु दाम्भिकानाम्
०७०९०४७१ रूपे इमे सदसती तव वेदसृष्टे
०७०९०४७२ बीजाङ्कुराविव न चान्यदरूपकस्य
०७०९०४७३ युक्ताः समक्षमुभयत्र विचक्षन्ते त्वां
०७०९०४७४ योगेन वह्निमिव दारुषु नान्यतः स्यात्
०७०९०४८१ त्वं वायुरग्निरवनिर्वियदम्बु मात्राः
०७०९०४८२ प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च
०७०९०४८३ सर्वं त्वमेव सगुणो विगुणश्च भूमन्
०७०९०४८४ नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम्
०७०९०४९१ नैते गुणा न गुणिनो महदादयो ये
०७०९०४९२ सर्वे मनः प्रभृतयः सहदेवमर्त्याः
०७०९०४९३ आद्यन्तवन्त उरुगाय विदन्ति हि त्वाम्
०७०९०४९४ एवं विमृश्य सुधियो विरमन्ति शब्दात्
०७०९०५०१ तत्तेऽर्हत्तम नमः स्तुतिकर्मपूजाः
०७०९०५०२ कर्म स्मृतिश्चरणयोः श्रवणं कथायाम्
०७०९०५०३ संसेवया त्वयि विनेति षडङ्गया किं
०७०९०५०४ भक्तिं जनः परमहंसगतौ लभेत
०७०९०५१० श्रीनारद उवाच
०७०९०५११ एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः
०७०९०५१२ प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत

०७०९०५२० श्रीभगवानुवाच
०७०९०५२१ प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम
०७०९०५२२ वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम्
०७०९०५३१ मामप्रीणत आयुष्मन्दर्शनं दुर्लभं हि मे
०७०९०५३२ दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति
०७०९०५४१ प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः
०७०९०५४२ श्रेयस्कामा महाभाग सर्वासामाशिषां पतिम्
०७०९०५५० श्रीनारद उवाच
०७०९०५५१ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः
०७०९०५५२ एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः
०७१०००१० श्रीनारद उवाच
०७१०००११ भक्तियोगस्य तत्सर्वमन्तरायतयार्भकः
०७१०००१२ मन्यमानो हृषीकेशं स्मयमान उवाच ह
०७१०००२० श्रीप्रह्लाद उवाच
०७१०००२१ मा मां प्रलोभयोत्पत्त्या सक्तंकामेषु तैर्वरैः
०७१०००२२ तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः
०७१०००३१ भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत्
०७१०००३२ भवान्संसारबीजेषु हृदयग्रन्थिषु प्रभो
०७१०००४१ नान्यथा तेऽखिलगुरो घटेत करुणात्मनः
०७१०००४२ यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्
०७१०००५१ आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः
०७१०००५२ न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः
०७१०००६१ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः
०७१०००६२ नान्यथेहावयोरर्थो राजसेवकयोरिव
०७१०००७१ यदि दास्यसि मे कामान्वरांस्त्वं वरदर्षभ
०७१०००७२ कामानां हृद्यसंरोहं भवतस्तु वृणे वरम्
०७१०००८१ इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः
०७१०००८२ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना
०७१०००९१ विमुञ्चति यदा कामान्मानवो मनसि स्थितान्
०७१०००९२ तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते
०७१००१०१ ओं नमो भगवते तुभ्यं पुरुषाय महात्मने

०७१००१०२ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने

०७१००११० श्रीभगवानुवाच

०७१००१११ नैकान्तिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः

०७१००११२ तथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान्

०७१००१२१ कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम्

०७१००१२२ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन्

०७१००१३१ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा

०७१००१३२ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः

०७१००१४१ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः

०७१००१४२ त्वां च मां च स्मरन्काले कर्मबन्धात्प्रमुच्यते

०७१००१५० श्रीप्रह्लाद उवाच

०७१००१५१ वरं वरय एतत्ते वरदेशान्महेश्वर

०७१००१५२ यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम्

०७१००१६१ विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम्

०७१००१६२ भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान्

०७१००१७१ तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्

०७१००१७२ पूतस्तेऽपाङ्गसंदृष्टस्तदा कृपणवत्सल

०७१००१८० श्रीभगवानुवाच

०७१००१८१ त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ

०७१००१८२ यत्साधोऽस्य कुले जातो भवान्वै कुलपावनः

०७१००१९१ यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः

०७१००१९२ साधवः समुदाचारास्ते पूयन्तेऽपि कीकटाः

०७१००२०१ सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन

०७१००२०२ उच्चावचेषु दैत्येन्द्र मद्भावविगतस्पृहाः

०७१००२११ भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः

०७१००२१२ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक्

०७१००२२१ कुरु त्वं प्रेतकृत्यानि पितुः पूतस्य सर्वशः

०७१००२२२ मदङ्गस्पर्शनेनाङ्ग लोकान्यास्यति सुप्रजाः

०७१००२३१ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः

०७१००२३२ मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः

०७१००२४० श्रीनारद उवाच

०७१००२४१ प्रह्लादोऽपि तथा चक्रे पितुर्यत्साम्परायिकम्
०७१००२४२ यथाह भगवान्राजन्नभिषिक्तो द्विजातिभिः
०७१००२५१ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम्
०७१००२५२ स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः
०७१००२६० श्रीब्रह्मोवाच
०७१००२६१ देवदेवाखिलाध्यक्ष भूतभावन पूर्वज
०७१००२६२ दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः
०७१००२७१ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः
०७१००२७२ तपोयोगबलोन्नद्धः समस्तनिगमानहन्
०७१००२८१ दिष्ट्या तत्तनयः साधुर्महाभागवतोऽर्भकः
०७१००२८२ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना
०७१००२९१ एतद्वपुस्ते भगवन्ध्यायतः परमात्मनः
०७१००२९२ सर्वतो गोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः
०७१००३०० श्रीभगवानुवाच
०७१००३०१ मैवं विभोऽसुराणां ते प्रदेयः पद्मसम्भव
०७१००३०२ वरः क्रूरनिसर्गाणामहीनाममृतं यथा
०७१००३१० श्रीनारद उवाच
०७१००३११ इत्युक्त्वा भगवान्राजंस्ततश्चान्तर्दधे हरिः
०७१००३१२ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना
०७१००३२१ ततः सम्पूज्य शिरसा ववन्दे परमेष्ठिनम्
०७१००३२२ भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः
०७१००३३१ ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः
०७१००३३२ दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम्
०७१००३४१ प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः
०७१००३४२ स्वधामानि ययू राजन्ब्रह्माद्याः प्रतिपूजिताः
०७१००३५१ एवं च पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः
०७१००३५२ हृदि स्थितेन हरिणा वैरभावेन तौ हतौ
०७१००३६१ पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः
०७१००३६२ कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः
०७१००३७१ शयानौ युधि निर्भिन्न हृदयौ रामशायकैः
०७१००३७२ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि

०७१००३८१ ताविहाथ पुनर्जातौ शिशुपालकरूषजौ
०७१००३८२ हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः
०७१००३९१ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः
०७१००३९२ जहुस्तेऽन्ते तदात्मानः कीटः पेशस्कृतो यथा
०७१००४०१ यथा यथा भगवतो भक्त्या परमयाभिदा
०७१००४०२ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः
०७१००४११ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान्
०७१००४१२ दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम्
०७१००४२१ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः
०७१००४२२ अवतारकथा पुण्या वधो यत्रादिदैत्ययोः
०७१००४३१ प्रह्लादस्यानुचरितं महाभागवतस्य च
०७१००४३२ भक्तिर्ज्ञानं विरक्तिश्च याथार्थ्यं चास्य वै हरेः
०७१००४४१ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम्
०७१००४४२ परावरेषां स्थानानां कालेन व्यत्ययो महान्
०७१००४५१ धर्मो भागवतानां च भगवान्येन गम्यते
०७१००४५२ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः
०७१००४६१ य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम्
०७१००४६२ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते
०७१००४७१ एतद्य आदिपुरुषस्य मृगेन्द्रलीलां
०७१००४७२ दैत्येन्द्रयूथपवधं प्रयतः पठेत
०७१००४७३ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं
०७१००४७४ श्रुत्वानुभावमकुतोभयमेति लोकम्
०७१००४८१ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति
०७१००४८२ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम्
०७१००४९१ स वा अयं ब्रह्म महद्विमृग्य कैवल्यनिर्वाणसुखानुभूतिः
०७१००४९२ प्रियः सुहृद्वः खलु मातुलेय आत्मार्हणीयो विधिकृद्गुरुश्च
०७१००५०१ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम्
०७१००५०२ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः
०७१००५११ स एष भगवान्राजन्व्यतनोद्विहतं यशः
०७१००५१२ पुरा रुद्रस्य देवस्य मयेनानन्तमायिना
०७१००५२० राजोवाच

०७१००५२१ कस्मिन्कर्मणि देवस्य मयोऽहञ्जगदीशितुः
०७१००५२२ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम्
०७१००५३० श्रीनारद उवाच
०७१००५३१ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः
०७१००५३२ मायिनां परमाचार्यं मयं शरणमाययुः
०७१००५४१ स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः
०७१००५४२ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः
०७१००५५१ ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन्सेश्वरान्नृप
०७१००५५२ स्मरन्तो नाशयां चक्रुः पूर्ववैरमलक्षिताः
०७१००५६१ ततस्ते सेश्वरा लोका उपासाद्येश्वरं नताः
०७१००५६२ त्राहि नस्तावकान्देव विनष्टांस्त्रिपुरालयैः
०७१००५७१ अथानुगृह्य भगवान्मा भैष्टेति सुरान्विभुः
०७१००५७२ शरं धनुषि सन्धाय पुरेष्वस्त्रं व्यमुञ्चत
०७१००५८१ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात्
०७१००५८२ यथा मयूखसन्दोहा नादृश्यन्त पुरो यतः
०७१००५९१ तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः
०७१००५९२ तानानीय महायोगी मयः कूपरसेऽक्षिपत्
०७१००६०१ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः
०७१००६०२ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः
०७१००६११ विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम्
०७१००६१२ तदायं भगवान्विष्णुस्तत्रोपायमकल्पयत्
०७१००६२१ वत्सश्चासीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः
०७१००६२२ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ
०७१००६३१ तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन्विमोहिताः
०७१००६३२ तद्विज्ञाय महायोगी रसपालानिदं जगौ
०७१००६४१ स्मयन्विशोकः शोकार्तान्स्मरन्दैवगतिं च ताम्
०७१००६४२ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन
०७१००६५१ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः
०७१००६५२ अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधानिकं व्यधात्
०७१००६६१ धर्मज्ञानविरक्त्यृद्धि तपोविद्याक्रियादिभिः
०७१००६६२ रथं सूतं ध्वजं वाहान्धनुर्वर्मशरादि यत्

०७१००६७१ सन्नद्धो रथमास्थाय शरं धनुरुपाददे
०७१००६७२ शरं धनुषि सन्धाय मुहूर्तेऽभिजितीश्वरः
०७१००६८१ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप
०७१००६८२ दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुलाः
०७१००६९१ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः
०७१००६९२ अवाकिरञ्जगुर्हृष्टा ननृतुश्चाप्सरोगणाः
०७१००७०१ एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप
०७१००७०२ ब्रह्मादिभिः स्तूयमानः स्वं धाम प्रत्यपद्यत
०७१००७११ एवं विधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः
०७१००७१२ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकं पुनानान्यपरं वदामि किम्
०७११००१० श्रीशुक उवाच
०७११००११ श्रुत्वेहितं साधु सभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः
०७११००१२ युधिष्ठिरो दैत्यपतेर्मुदान्वितः पप्रच्छ भूयस्तनयं स्वयम्भुवः
०७११००२० श्रीयुधिष्ठिर उवाच
०७११००२१ भगवन्श्रोतुमिच्छामि नृणां धर्मं सनातनम्
०७११००२२ वर्णाश्रमाचारयुतं यत्पुमान्विन्दते परम्
०७११००३१ भवान्प्रजापतेः साक्षादात्मजः परमेष्ठिनः
०७११००३२ सुतानां सम्मतो ब्रह्मंस्तपोयोगसमाधिभिः
०७११००४१ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः
०७११००४२ करुणाः साधवः शान्तास्त्वद्विधा न तथापरे
०७११००५० श्रीनारद उवाच
०७११००५१ नत्वा भगवतेऽजाय लोकानां धर्मसेतवे
०७११००५२ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम्
०७११००६१ योऽवतीर्यात्मनोऽंशेन दाक्षायण्यां तु धर्मतः
०७११००६२ लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे
०७११००७१ धर्ममूलं हि भगवान्सर्ववेदमयो हरिः
०७११००७२ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति
०७११००८१ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः
०७११००८२ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम्
०७११००९१ सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः
०७११००९२ नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्

०७११०१०१ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः
०७११०१०२ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव
०७११०१११ श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः
०७११०११२ सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम्
०७११०१२१ नृणामयं परो धर्मः सर्वेषां समुदाहृतः
०७११०१२२ त्रिंशल्लक्षणवान्राजन्सर्वात्मा येन तुष्यति
०७११०१३१ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम्
०७११०१३२ इज्याध्ययनदानानि विहितानि द्विजन्मनाम्
०७११०१३३ जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः
०७११०१४१ विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः
०७११०१४२ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः
०७११०१५१ वैश्यस्तु वार्तावृत्तिः स्यान्नित्यं ब्रह्मकुलानुगः
०७११०१५२ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्
०७११०१६१ वार्ता विचित्रा शालीन यायावरशिलोञ्छनम्
०७११०१६२ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा
०७११०१७१ जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः
०७११०१७२ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः
०७११०१८१ ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा
०७११०१८२ सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन
०७११०१९१ ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम्
०७११०१९२ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम्
०७११०२०१ सत्यानृतं च वाणिज्यं श्ववृत्तिर्नीचसेवनम्
०७११०२०२ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम्
०७११०२०३ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः
०७११०२११ शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम्
०७११०२१२ ज्ञानं दयाच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम्
०७११०२२१ शौर्यं वीर्यं धृतिस्तेजस्त्यागश्चात्मजयः क्षमा
०७११०२२२ ब्रह्मण्यता प्रसादश्च सत्यं च क्षत्रलक्षणम्
०७११०२३१ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम्
०७११०२३२ आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम्
०७११०२४१ शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया

०७११०२४२ अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम्
०७११०२५१ स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता
०७११०२५२ तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम्
०७११०२६१ सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्तनैः
०७११०२६२ स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा
०७११०२७१ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च
०७११०२७२ वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम्
०७११०२८१ सन्तुष्टालोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक्
०७११०२८२ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत्
०७११०२९१ या पतिं हरिभावेन भजेत्श्रीरिव तत्परा
०७११०२९२ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते
०७११०३०१ वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत्
०७११०३०२ अचौराणामपापानामन्त्यजान्तेवसायिनाम्
०७११०३११ प्रायः स्वभावविहितो नृणां धर्मो युगे युगे
०७११०३१२ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत्
०७११०३२१ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत्
०७११०३२२ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात्
०७११०३३१ उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात्
०७११०३३२ न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति
०७११०३४१ एवं कामाशयं चित्तं कामानामतिसेवया
०७११०३४२ विरज्येत यथा राजन्नग्निवत्कामबिन्दुभिः
०७११०३५१ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्
०७११०३५२ यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्
०७१२००१० श्रीनारद उवाच
०७१२००११ ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम्
०७१२००१२ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः
०७१२००२१ सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान्
०७१२००२२ सन्ध्ये उभे च यतवाग्जपन्ब्रह्म समाहितः
०७१२००३१ छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः
०७१२००३२ उपक्रमेऽवसाने च चरणौ शिरसा नमेत्
०७१२००४१ मेखलाजिनवासांसि जटादण्डकमण्डलून्

०७१२००४२ बिभृयादुपवीतं च दर्भपाणिर्यथोदितम्
०७१२००५१ सायं प्रातश्चरेद्भैक्ष्यं गुरवे तन्निवेदयेत्
०७१२००५२ भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत्क्वचित्
०७१२००६१ सुशीलो मितभुग्दक्षः श्रद्दधानो जितेन्द्रियः
०७१२००६२ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च
०७१२००७१ वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः
०७१२००७२ इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः
०७१२००८१ केशप्रसाधनोन्मर्द स्नपनाभ्यञ्जनादिकम्
०७१२००८२ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा
०७१२००९१ नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान्
०७१२००९२ सुतामपि रहो जह्यादन्यदा यावदर्थकृत्
०७१२०१०१ कल्पयित्वात्मना यावदाभासमिदमीश्वरः
०७१२०१०२ द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः
०७१२०१११ एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि
०७१२०११२ गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः
०७१२०१२१ अञ्जनाभ्यञ्जनोन्मर्द स्त्र्यवलेखामिषं मधु
०७१२०१२२ स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये बृहद्व्रताः
०७१२०१३१ उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च
०७१२०१३२ त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम्
०७१२०१४१ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः
०७१२०१४२ गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत्
०७१२०१५१ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम्
०७१२०१५२ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत्
०७१२०१६१ एवं विधो ब्रह्मचारी वानप्रस्थो यतिर्गृही
०७१२०१६२ चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति
०७१२०१७१ वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसम्मतान्
०७१२०१७२ यानास्थाय मुनिर्गच्छेदृषिलोकमुहाञ्जसा
०७१२०१८१ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः
०७१२०१८२ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत्
०७१२०१९१ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान्
०७१२०१९२ लब्धे नवे नवेऽन्नाद्ये पुराणं च परित्यजेत्

०७१२०२०१ अग्न्यर्थमेव शरणमुटजं वाद्रिकन्दरम्
०७१२०२०२ श्रयेत हिमवाय्वग्नि वर्षार्कातपषाड्वयम्
०७१२०२११ केशरोमनखश्मश्रु मलानि जटिलो दधत्
०७१२०२१२ कमण्डल्वजिने दण्ड वल्कलाग्निपरिच्छदान्
०७१२०२२१ चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः
०७१२०२२२ द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः
०७१२०२३१ यदाकल्पः स्वक्रियायां व्याधिभिर्जरयाथवा
०७१२०२३२ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम्
०७१२०२४१ आत्मन्यग्नीन्समारोप्य सन्न्यस्याहं ममात्मताम्
०७१२०२४२ कारणेषु न्यसेत्सम्यक्सङ्घातं तु यथार्हतः
०७१२०२५१ खे खानि वायौ निश्वासांस्तेजःसूष्माणमात्मवान्
०७१२०२५२ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम्
०७१२०२६१ वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि
०७१२०२६२ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ
०७१२०२७१ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत्
०७१२०२७२ दिक्षु श्रोत्रं सनादेन स्पर्शेनाध्यात्मनि त्वचम्
०७१२०२८१ रूपाणि चक्षुषा राजञ्ज्योतिष्यभिनिवेशयेत्
०७१२०२८२ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत्
०७१२०२९१ मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे
०७१२०२९२ कर्माण्यध्यात्मना रुद्रे यदहं ममताक्रिया
०७१२०२९३ सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे
०७१२०३०१ अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम्
०७१२०३०२ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत्
०७१२०३११ इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम्
०७१२०३१२ ज्ञात्वाद्वयोऽथ विरमेद्दग्धयोनिरिवानलः
०७१३००१० श्रीनारद उवाच
०७१३००११ कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः
०७१३००१२ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम्
०७१३००२१ बिभृयाद्यद्यसौ वासः कौपीनाच्छादनं परम्
०७१३००२२ त्यक्तं न लिङ्गाद्दण्डादेरन्यत्किञ्चिदनापदि
०७१३००३१ एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः

०७१३००३२ सर्वभूतसुहृच्छान्तो नारायणपरायणः
०७१३००४१ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये
०७१३००४२ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये
०७१३००५१ सुप्तिप्रबोधयोः सन्धावात्मनो गतिमात्मदृक्
०७१३००५२ पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः
०७१३००६१ नाभिनन्देद्ध्रुवं मृत्युमध्रुवं वास्य जीवितम्
०७१३००६२ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम्
०७१३००७१ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम्
०७१३००७२ वादवादांस्त्यजेत्तर्कान्पक्षं कंच न संश्रयेत्
०७१३००८१ न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून्
०७१३००८२ न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित्
०७१३००९१ न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः
०७१३००९२ शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत्
०७१३०१०१ अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत्
०७१३०१०२ कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम्
०७१३०१११ अत्राप्युदाहरन्तीममितिहासं पुरातनम्
०७१३०११२ प्रह्लादस्य च संवादं मुनेराजगरस्य च
०७१३०१२१ तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि
०७१३०१२२ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम्
०७१३०१३१ ददर्श लोकान्विचरन्लोकतत्त्वविवित्सया
०७१३०१३२ वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः
०७१३०१४१ कर्मणाकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः
०७१३०१४२ न विदन्ति जना यं वै सोऽसाविति न वेति च
०७१३०१५१ तं नत्वाभ्यर्च्य विधिवत्पादयोः शिरसा स्पृशन्
०७१३०१५२ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः
०७१३०१६१ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा
०७१३०१६२ वित्तं चैवोद्यमवतां भोगो वित्तवतामिह
०७१३०१६३ भोगिनां खलु देहोऽयं पीवा भवति नान्यथा
०७१३०१७१ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नु हार्थो यत एव भोगः
०७१३०१७२ अभोगिनोऽयं तव विप्र देहः पीवा यतस्तद्वद नः क्षमं चेत्
०७१३०१८१ कविः कल्पो निपुणदृक्चित्रप्रियकथः समः

०७१३०१८२ लोकस्य कुर्वतः कर्म शेषे तद्वीक्षितापि वा
०७१३०१९० श्रीनारद उवाच
०७१३०१९१ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः
०७१३०१९२ स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः
०७१३०२०० श्रीब्राह्मण उवाच
०७१३०२०१ वेदेदमसुरश्रेष्ठ भवान्नन्वार्यसम्मतः
०७१३०२०२ ईहोपरमयोर्नॄणां पदान्यध्यात्मचक्षुषा
०७१३०२११ यस्य नारायणो देवो भगवान्हृद्गतः सदा
०७१३०२१२ भक्त्या केवलयाज्ञानं धुनोति ध्वान्तमर्कवत्
०७१३०२२१ तथापि ब्रूमहे प्रश्नांस्तव राजन्यथाश्रुतम्
०७१३०२२२ सम्भाषणीयो हि भवानात्मनः शुद्धिमिच्छता
०७१३०२३१ तृष्णया भववाहिन्या योग्यैः कामैरपूर्यया
०७१३०२३२ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः
०७१३०२४१ यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन्
०७१३०२४२ स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च
०७१३०२५१ तत्रापि दम्पतीनां च सुखायान्यापनुत्तये
०७१३०२५२ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम्
०७१३०२६१ सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः
०७१३०२६२ मनःसंस्पर्शजान्दृष्ट्वा भोगान्स्वप्स्यामि संविशन्
०७१३०२७१ इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान्
०७१३०२७२ विचित्रामसति द्वैते घोरामाप्नोति संसृतिम्
०७१३०२८१ जलं तदुद्भवैश्छन्नं हित्वाज्ञो जलकाम्यया
०७१३०२८२ मृगतृष्णामुपाधावेत्तथान्यत्रार्थदृक्स्वतः
०७१३०२९१ देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः
०७१३०२९२ दुःखात्ययं चानीशस्य क्रिया मोघाः कृताः कृताः
०७१३०३०१ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित्
०७१३०३०२ मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम्
०७१३०३११ पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम्
०७१३०३१२ भयादलब्धनिद्राणां सर्वतोऽभिविशङ्किनाम्
०७१३०३२१ राजतश्चौरतः शत्रोः स्वजनात्पशुपक्षितः
०७१३०३२२ अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम्

०७१३०३३१ शोकमोहभयक्रोध रागक्लैब्यश्रमादयः
०७१३०३३२ यन्मूलाः स्युर्नृणां जह्यात्स्पृहां प्राणार्थयोर्बुधः
०७१३०३४१ मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ
०७१३०३४२ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम्
०७१३०३५१ विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात्
०७१३०३५२ कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिम्
०७१३०३६१ अनीहः परितुष्टात्मा यदृच्छोपनतादहम्
०७१३०३६२ नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान्
०७१३०३७१ क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा
०७१३०३७२ क्वचिद्भूरि गुणोपेतं गुणहीनमुत क्वचित्
०७१३०३८१ श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितम्
०७१३०३८२ भुञ्जे भुक्त्वाथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया
०७१३०३९१ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा
०७१३०३९२ वसेऽन्यदपि सम्प्राप्तं दिष्टभुक्तुष्टधीरहम्
०७१३०४०१ क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु
०७१३०४०२ क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया
०७१३०४११ क्वचित्स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलङ्कृतः
०७१३०४१२ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो
०७१३०४२१ नाहं निन्दे न च स्तौमि स्वभावविषमं जनम्
०७१३०४२२ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि
०७१३०४३१ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे
०७१३०४३२ मनो वैकारिके हुत्वा तं मायायां जुहोत्यनु
०७१३०४४१ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः
०७१३०४४२ ततो निरीहो विरमेत्स्वानुभूत्यात्मनि स्थितः
०७१३०४५१ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम्
०७१३०४५२ व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्परः
०७१३०४६० श्रीनारद उवाच
०७१३०४६१ धर्मं पारमहंस्यं वै मुनेः श्रुत्वासुरेश्वरः
०७१३०४६२ पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम्
०७१४००१० श्रीयुधिष्ठिर उवाच
०७१४००११ गृहस्थ एतां पदवीं विधिना येन चाञ्जसा

०७१४००१२ यायाद्देवऋषे ब्रूहि मादृशो गृहमूढधीः
०७१४००२० श्रीनारद उवाच
०७१४००२१ गृहेष्ववस्थितो राजन्क्रियाः कुर्वन्यथोचिताः
०७१४००२२ वासुदेवार्पणं साक्षादुपासीत महामुनीन्
०७१४००३१ शृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम्
०७१४००३२ श्रद्दधानो यथाकालमुपशान्तजनावृतः
०७१४००४१ सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु
०७१४००४२ विमुञ्चेन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः
०७१४००५१ यावदर्थमुपासीनो देहे गेहे च पण्डितः
०७१४००५२ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत्
०७१४००६१ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे
०७१४००६२ यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः
०७१४००७१ दिव्यं भौमं चान्तरीक्षं वित्तमच्युतनिर्मितम्
०७१४००७२ तत्सर्वमुपयुञ्जान एतत्कुर्यात्स्वतो बुधः
०७१४००८१ यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्
०७१४००८२ अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति
०७१४००९१ मृगोष्ट्रखरमर्काखु सरीसृप्खगमक्षिकाः
०७१४००९२ आत्मनः पुत्रवत्पश्येत्तैरेषामन्तरं कियत्
०७१४०१०१ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि
०७१४०१०२ यथादेशं यथाकालं यावद्दैवोपपादितम्
०७१४०१११ आश्वाघान्तेऽवसायिभ्यः कामान्संविभजेद्यथा
०७१४०११२ अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः
०७१४०१२१ जह्याद्यदर्थे स्वान्प्राणान्हन्याद्वा पितरं गुरुम्
०७१४०१२२ तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः
०७१४०१३१ कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम्
०७१४०१३२ क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः
०७१४०१४१ सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः
०७१४०१४२ शेषे स्वत्वं त्यजन्प्राज्ञः पदवीं महतामियात्
०७१४०१५१ देवानृषीन्नृभूतानि पितॄनात्मानमन्वहम्
०७१४०१५२ स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक्
०७१४०१६१ यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसम्पदः

०७१४०१६२ वैतानिकेन विधिना अग्निहोत्रादिना यजेत्
०७१४०१७१ न ह्यग्निमुखतोऽयं वै भगवान्सर्वयज्ञभुक्
०७१४०१७२ इज्येत हविषा राजन्यथा विप्रमुखे हुतैः
०७१४०१८१ तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः
०७१४०१८२ तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणाननु
०७१४०१९१ कुर्यादपरपक्षीयं मासि प्रौष्ठपदे द्विजः
०७१४०१९२ श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान्
०७१४०२०१ अयने विषुवे कुर्याद्व्यतीपाते दिनक्षये
०७१४०२०२ चन्द्रादित्योपरागे च द्वादश्यां श्रवणेषु च
०७१४०२११ तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके
०७१४०२१२ चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा
०७१४०२२१ माघे च सितसप्तम्यां मघाराकासमागमे
०७१४०२२२ राकया चानुमत्या च मासर्क्षाणि युतान्यपि
०७१४०२३१ द्वादश्यामनुराधा स्याच्छ्रवणस्तिस्र उत्तराः
०७१४०२३२ तिसृष्वेकादशी वासु जन्मर्क्षश्रोणयोगयुक्
०७१४०२४१ त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः
०७१४०२४२ कुर्यात्सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः
०७१४०२५१ एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम्
०७१४०२५२ पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम्
०७१४०२६१ संस्कारकालो जायाया अपत्यस्यात्मनस्तथा
०७१४०२६२ प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप
०७१४०२७१ अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयाअवहान्
०७१४०२७२ स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते
०७१४०२८१ बिम्बं भगवतो यत्र सर्वमेतच्चराचरम्
०७१४०२८२ यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम्
०७१४०२९१ यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम्
०७१४०२९२ यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः
०७१४०३०१ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत
०७१४०३०२ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः
०७१४०३११ नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली
०७१४०३१२ वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा

०७१४०३२१ नारायणाश्रमो नन्दा सीतारामाश्रमादयः
०७१४०३२२ सर्वे कुलाचला राजन्महेन्द्रमलयादयः
०७१४०३३१ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये
०७१४०३३२ एतान्देशान्निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः
०७१४०३३३ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः
०७१४०३४१ पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः
०७१४०३४२ हरिरेवैक उर्वीश यन्मयं वै चराचरम्
०७१४०३५१ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु
०७१४०३५२ राजन्यदग्रपूजायां मतः पात्रतयाच्युतः
०७१४०३६१ जीवराशिभिराकीर्ण अण्डकोशाङ्घ्रिपो महान्
०७१४०३६२ तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम्
०७१४०३७१ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः
०७१४०३७२ शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ
०७१४०३८१ तेष्वेव भगवान्राजंस्तारतम्येन वर्तते
०७१४०३८२ तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते
०७१४०३९१ दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप
०७१४०३९२ त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता
०७१४०४०१ ततोऽर्चायां हरिं केचित्संश्रद्धाय सपर्यया
०७१४०४०२ उपासत उपास्तापि नार्थदा पुरुषद्विषाम्
०७१४०४११ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः
०७१४०४१२ तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम्
०७१४०४२१ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः
०७१४०४२२ पुनन्तः पादरजसा त्रिलोकीं दैवतं महत्
०७१५००१० श्रीनारद उवाच
०७१५००११ कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपापरे
०७१५००१२ स्वाध्यायेऽन्ये प्रवचने केचन ज्ञानयोगयोः
०७१५००२१ ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता
०७१५००२२ दैवे च तदभावे स्यादितरेभ्यो यथार्हतः
०७१५००३१ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा
०७१५००३२ भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम्
०७१५००४१ देशकालोचितश्रद्धा द्रव्यपात्रार्हणानि च

०७१५००४२ सम्यग्भवन्ति नैतानि विस्तरात्स्वजनार्पणात्
०७१५००५१ देशे काले च सम्प्राप्ते मुन्यन्नं हरिदैवतम्
०७१५००५२ श्रद्धया विधिवत्पात्रे न्यस्तं कामधुगक्षयम्
०७१५००६१ देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च
०७१५००६२ अन्नं संविभजन्पश्येत्सर्वं तत्पुरुषात्मकम्
०७१५००७१ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित्
०७१५००७२ मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया
०७१५००८१ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम्
०७१५००८२ न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः
०७१५००९१ एके कर्ममयान्यज्ञान्ज्ञानिनो यज्ञवित्तमाः
०७१५००९२ आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते
०७१५०१०१ द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति
०७१५०१०२ एष माकरुणो हन्यादतज्ज्ञो ह्यसुतृप्ध्रुवम्
०७१५०१११ तस्माद्दैवोपपन्नेन मुन्यन्नेनापि धर्मवित्
०७१५०११२ सन्तुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः
०७१५०१२१ विधर्मः परधर्मश्च आभास उपमा छलः
०७१५०१२२ अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत्
०७१५०१३१ धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः
०७१५०१३२ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः
०७१५०१४१ यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक्
०७१५०१४२ स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये
०७१५०१५१ धर्मार्थमपि नेहेत यात्रार्थं वाधनो धनम्
०७१५०१५२ अनीहानीहमानस्य महाहेरिव वृत्तिदा
०७१५०१६१ सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम्
०७१५०१६२ कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः
०७१५०१७१ सदा सन्तुष्टमनसः सर्वाः शिवमया दिशः
०७१५०१७२ शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम्
०७१५०१८१ सन्तुष्टः केन वा राजन्न वर्तेतापि वारिणा
०७१५०१८२ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः
०७१५०१९१ असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः
०७१५०१९२ स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते

०७१५०२०१ कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात्
०७१५०२०२ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः
०७१५०२११ पण्डिता बहवो राजन्बहुज्ञाः संशयच्छिदः
०७१५०२१२ सदसस्पतयोऽप्येके असन्तोषात्पतन्त्यधः
०७१५०२२१ असङ्कल्पाज्जयेत्कामं क्रोधं कामविवर्जनात्
०७१५०२२२ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात्
०७१५०२३१ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया
०७१५०२३२ योगान्तरायान्मौनेन हिंसां कामाद्यनीहया
०७१५०२४१ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना
०७१५०२४२ आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया
०७१५०२५१ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च
०७१५०२५२ एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्
०७१५०२६१ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ
०७१५०२६२ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत्
०७१५०२७१ एष वै भगवान्साक्षात्प्रधानपुरुषेश्वरः
०७१५०२७२ योगेश्वरैर्विमृग्याङ्घ्रिर्लोको यं मन्यते नरम्
०७१५०२८१ षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः
०७१५०२८२ तदन्ता यदि नो योगानावहेयुः श्रमावहाः
०७१५०२९१ यथा वार्तादयो ह्यर्था योगस्यार्थं न बिभ्रति
०७१५०२९२ अनर्थाय भवेयुः स्म पूर्तमिष्टं तथासतः
०७१५०३०१ यश्चित्तविजये यत्तः स्यान्निःसङ्गोऽपरिग्रहः
०७१५०३०२ एको विविक्तशरणो भिक्षुर्भैक्ष्यमिताशनः
०७१५०३११ देशे शुचौ समे राजन्संस्थाप्यासनमात्मनः
०७१५०३१२ स्थिरं सुखं समं तस्मिन्नासीतर्ज्वङ्ग ओमिति
०७१५०३२१ प्राणापानौ सन्निरुन्ध्यात्पूरकुम्भकरेचकैः
०७१५०३२२ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः
०७१५०३३१ यतो यतो निःसरति मनः कामहतं भ्रमत्
०७१५०३३२ ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः
०७१५०३४१ एवमभ्यस्यतश्चित्तं कालेनाल्पीयसा यतेः
०७१५०३४२ अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत्
०७१५०३५१ कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत्

०७१५०३५२ चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित्
०७१५०३६१ यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गावपनात्पुनः
०७१५०३६२ यदि सेवेत तान्भिक्षुः स वै वान्ताश्यपत्रपः
०७१५०३७१ यैः स्वदेहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मवत्
०७१५०३७२ त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः
०७१५०३८१ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि
०७१५०३८२ तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोलता
०७१५०३९१ आश्रमापसदा ह्येते खल्वाश्रमविडम्बनाः
०७१५०३९२ देवमायाविमूढांस्तानुपेक्षेतानुकम्पया
०७१५०४०१ आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः
०७१५०४०२ किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लम्पटः
०७१५०४११ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून्मन इन्द्रियेशम्
०७१५०४१२ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम्
०७१५०४२१ अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम्
०७१५०४२२ धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम्
०७१५०४३१ रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः
०७१५०४३२ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः
०७१५०४४१ रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः
०७१५०४४२ रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित्
०७१५०४५१ यावन्नृकायरथमात्मवशोपकल्पं
०७१५०४५२ धत्ते गरिष्ठचरणार्चनया निशातम्
०७१५०४५३ ज्ञानासिमच्युतबलो दधदस्तशत्रुः
०७१५०४५४ स्वानन्दतुष्ट उपशान्त इदं विजह्यात्
०७१५०४६१ नोचेत्प्रमत्तमसदिन्द्रियवाजिसूता
०७१५०४६२ नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति
०७१५०४६३ ते दस्यवः सहयसूतममुं तमोऽन्धे
०७१५०४६४ संसारकूप उरुमृत्युभये क्षिपन्ति
०७१५०४७१ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्
०७१५०४७२ आवर्तते प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम्
०७१५०४८१ हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम्
०७१५०४८२ दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः

०७१५०४९१ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च
०७१५०४९२ पूर्तं सुरालयाराम कूपाजीव्यादिलक्षणम्
०७१५०५०१ द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः
०७१५०५०२ अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः
०७१५०५११ अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः
०७१५०५१२ एकैकश्येनानुपूर्वं भूत्वा भूत्वेह जायते
०७१५०५२१ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः
०७१५०५२२ इन्द्रियेषु क्रियायज्ञान्ज्ञानदीपेषु जुह्वति
०७१५०५३१ इन्द्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः
०७१५०५३२ वाचं वर्णसमाम्नाये तमोंकारे स्वरे न्यसेत्
०७१५०५३३ ओंकारं बिन्दौ नादे तं तं तु प्राणे महत्यमुम्
०७१५०५४१ अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट्
०७१५०५४२ विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात्
०७१५०५५१ देवयानमिदं प्राहुर्भूत्वा भूत्वानुपूर्वशः
०७१५०५५२ आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते
०७१५०५६१ य एते पितृदेवानामयने वेदनिर्मिते
०७१५०५६२ शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति
०७१५०५७१ आदावन्ते जनानां सद्बहिरन्तः परावरम्
०७१५०५७२ ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम्
०७१५०५८१ आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः
०७१५०५८२ दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम्
०७१५०५९१ क्षित्यादीनामिहार्थानां छाया न कतमापि हि
०७१५०५९२ न सङ्घातो विकारोऽपि न पृथङ्गान्वितो मृषा
०७१५०६०१ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना
०७१५०६०२ न स्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः
०७१५०६११ स्यात्सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः
०७१५०६१२ जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता
०७१५०६२१ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः
०७१५०६२२ वर्तयन्स्वानुभूत्येह त्रीन्स्वप्नान्धुनुते मुनिः
०७१५०६३१ कार्यकारणवस्त्वैक्य दर्शनं पटतन्तुवत्
०७१५०६३२ अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते

०७१५०६४१ यद्ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणम्
०७१५०६४२ मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते
०७१५०६५१ आत्मजायासुतादीनामन्येषां सर्वदेहिनाम्
०७१५०६५२ यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते
०७१५०६६१ यद्यस्य वानिषिद्धं स्याद्येन यत्र यतो नृप
०७१५०६६२ स तेनेहेत कार्याणि नरो नान्यैरनापदि
०७१५०६७१ एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः
०७१५०६७२ गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः
०७१५०६८१ यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः
०७१५०६८२ यत्पादपङ्केरुहसेवया भवानहारषीन्निर्जितदिग्गजः क्रतून्
०७१५०६९१ अहं पुराभवं कश्चिद्गन्धर्व उपबर्हणः
०७१५०६९२ नाम्नातीते महाकल्पे गन्धर्वाणां सुसम्मतः
०७१५०७०१ रूपपेशलमाधुर्य सौगन्ध्यप्रियदर्शनः
०७१५०७०२ स्त्रीणां प्रियतमो नित्यं मत्तः स्वपुरलम्पटः
०७१५०७११ एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः
०७१५०७१२ उपहूता विश्वसृग्भिर्हरिगाथोपगायने
०७१५०७२१ अहं च गायंस्तद्विद्वान्स्त्रीभिः परिवृतो गतः
०७१५०७२२ ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा
०७१५०७२३ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः
०७१५०७३१ तावद्दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम्
०७१५०७३२ शुश्रूषयानुषङ्गेण प्राप्तोऽहं ब्रह्मपुत्रताम्
०७१५०७४१ धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः
०७१५०७४२ गृहस्थो येन पदवीमञ्जसा न्यासिनामियात्
०७१५०७५१ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति
०७१५०७५२ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम्
०७१५०७६१ स वा अयं ब्रह्म महद्विमृग्य कैवल्यनिर्वाणसुखानुभूतिः
०७१५०७६२ प्रियः सुहृद्वः खलु मातुलेय आत्मार्हणीयो विधिकृद्गुरुश्च
०७१५०७७१ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम्
०७१५०७७२ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः
०७१५०७८० श्रीशुक उवाच
०७१५०७८१ इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः

०७१५०७८२ पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः
०७१५०७९१ कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः
०७१५०७९२ श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः
०७१५०८०१ इति दाक्षायिणीनां ते पृथग्वंशा प्रकीर्तिताः
०७१५०८०२ देवासुरमनुष्याद्या लोका यत्र चराचराः
०८०१००१० श्रीराजोवाच
०८०१००११ स्वायम्भुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः
०८०१००१३ यत्र विश्वसृजां सर्गो मनूनन्यान्वदस्व नः
०८०१००२१ मन्वन्तरे हरेर्जन्म कर्माणि च महीयसः
०८०१००२३ गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम्
०८०१००३१ यद्यस्मिन्नन्तरे ब्रह्मन्भगवान्विश्वभावनः
०८०१००३३ कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा
०८०१००४० श्रीऋषिरुवाच
०८०१००४१ मनवोऽस्मिन्व्यतीताः षट्कल्पे स्वायम्भुवादयः
०८०१००४३ आद्यस्ते कथितो यत्र देवादीनां च सम्भवः
०८०१००५१ आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः
०८०१००५३ धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः
०८०१००६१ कृतं पुरा भगवतः कपिलस्यानुवर्णितम्
०८०१००६३ आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह
०८०१००७१ विरक्तः कामभोगेषु शतरूपापतिः प्रभुः
०८०१००७३ विसृज्य राज्यं तपसे सभार्यो वनमाविशत्
०८०१००८१ सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन्
०८०१००८३ तप्यमानस्तपो घोरमिदमन्वाह भारत
०८०१००९० श्रीमनुरुवाच
०८०१००९१ येन चेतयते विश्वं विश्वं चेतयते न यम्
०८०१००९३ यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः
०८०१०१०१ आत्मावास्यमिदं विश्वं यत्किञ्चिज्जगत्यां जगत्
०८०१०१०३ तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्
०८०१०१११ यं पश्यति न पश्यन्तं चक्षुर्यस्य न रिष्यति
०८०१०११३ तं भूतनिलयं देवं सुपर्णमुपधावत
०८०१०१२१ न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिः

०८०१०१२३ विश्वस्यामूनि यद्यस्माद्विश्वं च तद्दतं महत्
०८०१०१३१ स विश्वकायः पुरुहूतईशः सत्यः स्वयंज्योतिरजः पुराणः
०८०१०१३३ धत्तेऽस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते
०८०१०१४१ अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे
०८०१०१४३ ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते
०८०१०१५१ ईहते भगवानीशो न हि तत्र विसज्जते
०८०१०१५३ आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम्
०८०१०१६१ तमीहमानं निरहङ्कृतं बुधं निराशिषं पूर्णमनन्यचोदितम्
०८०१०१६३ नृन्शिक्षयन्तं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्मभावनम्
०८०१०१७० श्रीशुक उवाच
०८०१०१७१ इति मन्त्रोपनिषदं व्याहरन्तं समाहितम्
०८०१०१७३ दृष्ट्वासुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा
०८०१०१८१ तांस्तथावसितान्वीक्ष्य यज्ञः सर्वगतो हरिः
०८०१०१८३ यामैः परिवृतो देवैर्हत्वाशासत्त्रिविष्टपम्
०८०१०१९१ स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत्
०८०१०१९३ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः
०८०१०२०१ तत्रेन्द्रो रोचनस्त्वासीद्देवाश्च तुषितादयः
०८०१०२०३ ऊर्जस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः
०८०१०२११ ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत्
०८०१०२१३ तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः
०८०१०२२१ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः
०८०१०२२३ अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः
०८०१०२३१ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः
०८०१०२३३ पवनः सृञ्जयो यज्ञ होत्राद्यास्तत्सुता नृप
०८०१०२४१ वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः
०८०१०२४३ सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित्
०८०१०२५१ धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः
०८०१०२५३ सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह
०८०१०२६१ सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान्
०८०१०२६३ भूतद्रुहो भूतगणांश्चावधीत्सत्यजित्सखः
०८०१०२७१ चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः

०८०१०२७३ पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः
०८०१०२८१ सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः
०८०१०२८३ ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे
०८०१०२९१ देवा वैधृतयो नाम विधृतेस्तनया नृप
०८०१०२९३ नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा
०८०१०३०१ तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधसः
०८०१०३०३ हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात्
०८०१०३१० श्रीराजोवाच
०८०१०३११ बादरायण एतत्ते श्रोतुमिच्छामहे वयम्
०८०१०३१३ हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत्
०८०१०३२१ तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम्
०८०१०३२३ यत्र यत्रोत्तमश्लोको भगवान्गीयते हरिः
०८०१०३३० श्रीसूत उवाच
०८०१०३३१ परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः
०८०१०३३३ उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम्
०८०२००१० श्रीशुक उवाच
०८०२००११ आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः
०८०२००१३ क्षीरोदेनावृतः श्रीमान्योजनायुतमुच्छ्रितः
०८०२००२१ तावता विस्तृतः पर्यक्त्रिभिः शृङ्गैः पयोनिधिम्
०८०२००२३ दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः
०८०२००३१ अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः
०८०२००३३ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम्
०८०२००४१ स चावनिज्यमानाङ्घ्रिः समन्तात्पयऊर्मिभिः
०८०२००४३ करोति श्यामलां भूमिं हरिन्मरकताश्मभिः
०८०२००५१ सिद्धचारणगन्धर्वैर्विद्याधरमहोरगैः
०८०२००५३ किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः
०८०२००६१ यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया
०८०२००६३ अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया
०८०२००७१ नानारण्यपशुव्रात सङ्कुलद्रोण्यलङ्कृतः
०८०२००७३ चित्रद्रुमसुरोद्यान कलकण्ठविहङ्गमः
०८०२००८१ सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः

०८०२००८३ देवस्त्रीमज्जनामोद सौरभाम्बनिलैर्युतः
०८०२००९१ तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः
०८०२००९३ उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम्
०८०२०१०१ सर्वतोऽलङ्कृतं दिव्यैर्नित्यपुष्पफलद्रुमैः
०८०२०१०३ मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः
०८०२०१११ चूतैः पियालैः पनसैराम्रैराम्रातकैरपि
०८०२०११३ क्रमुकैर्नारिकेलैश्च खर्जूरैर्बीजपूरकैः
०८०२०१२१ मधुकैः शालतालैश्च तमालैरसनार्जुनैः
०८०२०१२३ अरिष्टोडुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः
०८०२०१३१ पिचुमर्दैः कोविदारैः सरलैः सुरदारुभिः
०८०२०१३३ द्राक्षेक्षुरम्भाजम्बुभिर्बदर्यक्षाभयामलैः
०८०२०१४१ बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः
०८०२०१४३ तस्मिन्सरः सुविपुलं लसत्काञ्चनपङ्कजम्
०८०२०१५१ कुमुदोत्पलकह्लार शतपत्रश्रियोर्जितम्
०८०२०१५३ मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः
०८०२०१६१ हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि
०८०२०१६३ जलकुक्कुटकोयष्टि दात्यूहकुलकूजितम्
०८०२०१७१ मत्स्यकच्छपसञ्चार चलत्पद्मरजःपयः
०८०२०१७३ कदम्बवेतसनल नीपवञ्जुलकैर्वृतम्
०८०२०१८१ कुन्दैः कुरुबकाशोकैः शिरीषैः कूटजेङ्गुदैः
०८०२०१८३ कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः
०८०२०१९१ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः
०८०२०१९३ शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः
०८०२०२०१ तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन्
०८०२०२०३ सकण्टकं कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन्वनस्पतीन्
०८०२०२११ यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः
०८०२०२१३ महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः सरभाश्चमर्यः
०८०२०२२१ वृका वराहा महिषर्क्षशल्या गोपुच्छशालावृकमर्कटाश्च
०८०२०२२३ अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण
०८०२०२३१ स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्करभैरनुद्रुतः
०८०२०२३३ गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः

०८०२०२४१ सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः
०८०२०२४३ वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्यासमथागमद्द्रुतम्
०८०२०२५१ विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुरूषितम्
०८०२०२५३ पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन्गतक्लमः
०८०२०२६१ स पुष्करेणोद्धृतशीकराम्बुभिर्निपाययन्संस्नपयन्यथा गृही
०८०२०२६३ घृणी करेणुः करभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया
०८०२०२७१ तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाग्रहीत्
०८०२०२७३ यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे
०८०२०२८१ तथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा
०८०२०२८३ विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन्
०८०२०२९१ नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः
०८०२०२९३ समाः सहस्रं व्यगमन्महीपते सप्राणयोश्चित्रममंसतामराः
०८०२०३०१ ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः
०८०२०३०३ विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः
०८०२०३११ इत्थं गजेन्द्रः स यदाप सङ्कटं प्राणस्य देही विवशो यदृच्छया
०८०२०३१३ अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत
०८०२०३२१ न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम्
०८०२०३२३ ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम्
०८०२०३३१ यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम्
०८०२०३३३ भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि
०८०३००१० श्रीबादरायणिरुवाच
०८०३००११ एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि
०८०३००१३ जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम्
०८०३००२० श्रीगजेन्द्र उवाच
०८०३००२१ ओं नमो भगवते तस्मै यत एतच्चिदात्मकम्
०८०३००२३ पुरुषायादिबीजाय परेशायाभिधीमहि
०८०३००३१ यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्
०८०३००३३ योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम्
०८०३००४१ यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम्
०८०३००४३ अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः
०८०३००५१ कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु

०८०३००५३ तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः
०८०३००६१ न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्
०८०३००६३ यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स मावतु
०८०३००७१ दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः
०८०३००७३ चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः
०८०३००८१ न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा
०८०३००८३ तथापि लोकाप्ययसम्भवाय यः स्वमायया तान्यनुकालमृच्छति
०८०३००९१ तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये
०८०३००९३ अरूपायोरुरूपाय नम आश्चर्यकर्मणे
०८०३०१०१ नम आत्मप्रदीपाय साक्षिणे परमात्मने
०८०३०१०३ नमो गिरां विदूराय मनसश्चेतसामपि
०८०३०१११ सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता
०८०३०११३ नमः कैवल्यनाथाय निर्वाणसुखसंविदे
०८०३०१२१ नमः शान्ताय घोराय मूढाय गुणधर्मिणे
०८०३०१२३ निर्विशेषाय साम्याय नमो ज्ञानघनाय च
०८०३०१३१ क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे
०८०३०१३३ पुरुषायात्ममूलाय मूलप्रकृतये नमः
०८०३०१४१ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे
०८०३०१४३ असता च्छाययोक्ताय सदाभासाय ते नमः
०८०३०१५१ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय
०८०३०१५३ सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय
०८०३०१६१ गुणारणिच्छन्नचिदुष्मपाय तत्क्षोभविस्फूर्जितमानसाय
०८०३०१६३ नैष्कर्म्यभावेन विवर्जितागम स्वयंप्रकाशाय नमस्करोमि
०८०३०१७१ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय
०८०३०१७३ स्वांशेन सर्वतनुभृन्मनसि प्रतीत प्रत्यग्दृशे भगवते बृहते नमस्ते
०८०३०१८१ आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय
०८०३०१८३ मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय
०८०३०१९१ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति
०८०३०१९३ किं चाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम्
०८०३०२०१ एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः
०८०३०२०३ अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः

०८०३०२११ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम्
०८०३०२१३ अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे
०८०३०२२१ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः
०८०३०२२३ नामरूपविभेदेन फल्ग्व्या च कलया कृताः
०८०३०२३१ यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः
०८०३०२३३ तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः
०८०३०२४१ स वै न देवासुरमर्त्यतिर्यङ्‌ स्त्री न षण्ढो न पुमान्न जन्तुः
०८०३०२४३ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः
०८०३०२५१ जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या
०८०३०२५३ इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम्
०८०३०२६१ सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम्
०८०३०२६३ विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम्
०८०३०२७१ योगरन्धितकर्माणो हृदि योगविभाविते
०८०३०२७३ योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम्
०८०३०२८१ नमो नमस्तुभ्यमसह्यवेग शक्तित्रयायाखिलधीगुणाय
०८०३०२८३ प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने
०८०३०२९१ नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम्
०८०३०२९३ तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम्
०८०३०३०० श्रीशुक उवाच
०८०३०३०१ एवं गजेन्द्रमुपवर्णितनिर्विशेषं
०८०३०३०२ ब्रह्मादयो विविधलिङ्गभिदाभिमानाः
०८०३०३०३ नैते यदोपससृपुर्निखिलात्मकत्वात्
०८०३०३०४ तत्राखिलामरमयो हरिराविरासीत्
०८०३०३११ तं तद्वदार्तमुपलभ्य जगन्निवासः
०८०३०३१२ स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः
०८०३०३१३ छन्दोमयेन गरुडेन समुह्यमानश्
०८०३०३१४ चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः
०८०३०३२१ सोऽन्तःसरस्युरुबलेन गृहीत आर्तो
०८०३०३२२ दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्
०८०३०३२३ उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्
०८०३०३२४ नारायणाखिलगुरो भगवन्नमस्ते

०८०३०३३१ तं वीक्ष्य पीडितमजः सहसावतीर्य
०८०३०३३२ सग्राहमाशु सरसः कृपयोज्जहार
०८०३०३३३ ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं
०८०३०३३४ संपश्यतां हरिरमूमुचदुच्छ्रियाणाम्
०८०४००१० श्रीशुक उवाच
०८०४००११ तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः
०८०४००१३ मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः
०८०४००२१ नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः
०८०४००२३ ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम्
०८०४००३१ योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक्
०८०४००३३ मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः
०८०४००४१ प्रणम्य शिरसाधीशमुत्तमश्लोकमव्ययम्
०८०४००४३ अगायत यशोधाम कीर्तन्यगुणसत्कथम्
०८०४००५१ सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम्
०८०४००५३ लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः
०८०४००६१ गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात्
०८०४००६३ प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः
०८०४००७१ स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः
०८०४००७३ इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः
०८०४००८१ स एकदाराधनकाल आत्मवान्गृहीतमौनव्रत ईश्वरं हरिम्
०८०४००८३ जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः
०८०४००९१ यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः
०८०४००९३ तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह
०८०४०१०१ तस्मा इमं शापमदादसाधुरयं दुरात्माकृतबुद्धिरद्य
०८०४०१०३ विप्रावमन्ता विशतां तमिस्रं यथा गजः स्तब्धमतिः स एव
०८०४०११० श्रीशुक उवाच
०८०४०१११ एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः
०८०४०११३ इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन्
०८०४०१२१ आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम्
०८०४०१२३ हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः
०८०४०१३१ एवं विमोक्ष्य गजयूथपमब्जनाभस्

०८०४०१३२ तेनापि पार्षदगतिं गमितेन युक्तः
०८०४०१३३ गन्धर्वसिद्धविबुधैरुपगीयमान
०८०४०१३४ कर्माद्भुतं स्वभवनं गरुडासनोऽगात्
०८०४०१४१ एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम्
०८०४०१४३ स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम्
०८०४०१५१ यथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः
०८०४०१५३ शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये
०८०४०१६१ इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम
०८०४०१६३ शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः
०८०४०१७० श्रीभगवानुवाच
०८०४०१७१ ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम्
०८०४०१७३ वेत्रकीचकवेणूनां गुल्मानि सुरपादपान्
०८०४०१८१ शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च
०८०४०१८३ क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम्
०८०४०१९१ श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम
०८०४०१९३ सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम्
०८०४०२०१ शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम्
०८०४०२०३ ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च
०८०४०२११ मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे
०८०४०२१३ कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम्
०८०४०२२१ प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययम्
०८०४०२२३ दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि
०८०४०२३१ गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम्
०८०४०२३३ ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान्
०८०४०२४१ उत्थायापररात्रान्ते प्रयताः सुसमाहिताः
०८०४०२४३ स्मरन्ति मम रूपाणि मुच्यन्ते तेऽहसोऽखिलात्
०८०४०२५१ ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये
०८०४०२५३ तेषां प्राणात्यये चाहं ददामि विपुलां गतिम्
०८०४०२६० श्रीशुक उवाच
०८०४०२६१ इत्यादिश्य हृषीकेशः प्राध्माय जलजोत्तमम्
०८०४०२६३ हर्षयन्विबुधानीकमारुरोह खगाधिपम्

०८०५००१० श्रीशुक उवाच
०८०५००११ राजन्नुदितमेतत्ते हरेः कर्माघनाशनम्
०८०५००१३ गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु
०८०५००२१ पञ्चमो रैवतो नाम मनुस्तामससोदरः
०८०५००२३ बलिविन्ध्यादयस्तस्य सुता हार्जुनपूर्वकाः
०८०५००३१ विभुरिन्द्रः सुरगणा राजन्भूतरयादयः
०८०५००३३ हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः
०८०५००४१ पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः
०८०५००४३ तयोः स्वकलया जज्ञे वैकुण्ठो भगवान्स्वयम्
०८०५००५१ वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः
०८०५००५३ रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया
०८०५००६१ तस्यानुभावः कथितो गुणाश्च परमोदयाः
०८०५००६३ भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान्
०८०५००७१ षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः
०८०५००७३ पूरुपूरुषसुद्युम्न प्रमुखाश्चाक्षुषात्मजाः
०८०५००८१ इन्द्रो मन्त्रद्रुमस्तत्र देवा आप्यादयो गणाः
०८०५००८३ मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः
०८०५००९१ तत्रापि देवसम्भूत्यां वैराजस्याभवत्सुतः
०८०५००९३ अजितो नाम भगवानंशेन जगतः पतिः
०८०५०१०१ पयोधिं येन निर्मथ्य सुराणां साधिता सुधा
०८०५०१०३ भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः
०८०५०११० श्रीराजोवाच
०८०५०१११ यथा भगवता ब्रह्मन्मथितः क्षीरसागरः
०८०५०११३ यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना
०८०५०१२१ यथामृतं सुरैः प्राप्तं किं चान्यदभवत्ततः
०८०५०१२३ एतद्भगवतः कर्म वदस्व परमाद्भुतम्
०८०५०१३१ त्वया सङ्कथ्यमानेन महिम्ना सात्वतां पतेः
०८०५०१३३ नातितृप्यति मे चित्तं सुचिरं तापतापितम्
०८०५०१४० श्रीसूत उवाच
०८०५०१४१ सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः
०८०५०१४३ अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे

०८०५०१५० श्रीशुक उवाच
०८०५०१५१ यदा युद्धेऽसुरैर्देवा बध्यमानाः शितायुधैः
०८०५०१५३ गतासवो निपतिता नोत्तिष्ठेरन्स्म भूरिशः
०८०५०१६१ यदा दुर्वासः शापेन सेन्द्रा लोकास्त्रयो नृप
०८०५०१६३ निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः
०८०५०१७१ निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः
०८०५०१७३ नाध्यगच्छन्स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चितम्
०८०५०१८१ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः
०८०५०१८३ सर्वं विज्ञापयां चक्रुः प्रणताः परमेष्ठिने
०८०५०१९१ स विलोक्येन्द्रवाय्वादीन्निःसत्त्वान्विगतप्रभान्
०८०५०१९३ लोकानमङ्गलप्रायानसुरानयथा विभुः
०८०५०२०१ समाहितेन मनसा संस्मरन्पुरुषं परम्
०८०५०२०३ उवाचोत्फुल्लवदनो देवान्स भगवान्परः
०८०५०२११ अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः
०८०५०२१३ यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम्
०८०५०२२१ न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः
०८०५०२२३ तथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्त्वतमांसि काले
०८०५०२३१ अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम्
०८०५०२३३ तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः
०८०५०२४० श्रीशुक उवाच
०८०५०२४१ इत्याभाष्य सुरान्वेधाः सह देवैररिन्दम
०८०५०२४३ अजितस्य पदं साक्षाज्जगाम तमसः परम्
०८०५०२५१ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै प्रभुः
०८०५०२५३ स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः
०८०५०२६० श्रीब्रह्मोवाच
०८०५०२६१ अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम्
०८०५०२६३ मनोऽग्रयानं वचसानिरुक्तं नमामहे देववरं वरेण्यम्
०८०५०२७१ विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम्
०८०५०२७३ छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे
०८०५०२८१ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु
०८०५०२८३ त्रिनाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये

०८०५०२९१ य एकवर्णं तमसः परं तदलोकमव्यक्तमनन्तपारम्
०८०५०२९३ आसां चकारोपसुपर्णमेनमुपासते योगरथेन धीराः
०८०५०३०१ न यस्य कश्चातितितर्ति मायां यया जनो मुह्यति वेद नार्थम्
०८०५०३०३ तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरन्तम्
०८०५०३११ इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्तराविः
०८०५०३१३ गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः
०८०५०३२१ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः
०८०५०३२३ स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः
०८०५०३३१ अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः
०८०५०३३३ लोका यतोऽथाखिललोकपालाः प्रसीदतां नः स महाविभूतिः
०८०५०३४१ सोमं मनो यस्य समामनन्ति दिवौकसां यो बलमन्ध आयुः
०८०५०३४३ ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः
०८०५०३५१ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा
०८०५०३५३ अन्तःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतां नः स महाविभूतिः
०८०५०३६१ यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम्
०८०५०३६३ द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः
०८०५०३७१ प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः
०८०५०३७३ अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः
०८०५०३८१ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः
०८०५०३८३ प्राणेन्द्रियात्मासुशरीरकेतः प्रसीदतां नः स महाविभूतिः
०८०५०३९१ बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशो धिषणाद्विरिञ्चः
०८०५०३९३ खेभ्यस्तु छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः
०८०५०४०१ श्रीर्वक्षसः पितरश्छाययासन्धर्मः स्तनादितरः पृष्ठतोऽभूत्
०८०५०४०३ द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्रसीदतां नः स महाविभूतिः
०८०५०४११ विप्रो मुखाद्ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च
०८०५०४१३ ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः
०८०५०४२१ लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः
०८०५०४२३ भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः
०८०५०४३१ द्रव्यं वयः कर्म गुणान्विशेषं यद्योगमायाविहितान्वदन्ति
०८०५०४३३ यद्दुर्विभाव्यं प्रबुधापबाधं प्रसीदतां नः स महाविभूतिः
०८०५०४४१ नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने

०८०५०४४३ गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नभस्वदूतये
०८०५०४५१ स त्वं नो दर्शयात्मानमस्मत्करणगोचरम्
०८०५०४५३ प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम्
०८०५०४६१ तैस्तैः स्वेच्छाभूतै रूपैः काले काले स्वयं विभो
०८०५०४६३ कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि
०८०५०४७१ क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा
०८०५०४७३ देहिनां विषयार्तानां न तथैवार्पितं त्वयि
०८०५०४८१ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः
०८०५०४८३ कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः
०८०५०४९१ यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम्
०८०५०४९३ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि
०८०५०५०१ नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे
०८०५०५०३ निर्गुणाय गुणेशाय सत्त्वस्थाय च साम्प्रतम्
०८०६००१० श्रीशुक उवाच
०८०६००११ एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः
०८०६००१३ तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः
०८०६००२१ तेनैव सहसा सर्वे देवाः प्रतिहतेक्षणाः
०८०६००२३ नापश्यन्खं दिशः क्षौणीमात्मानं च कुतो विभुम्
०८०६००३१ विरिञ्चो भगवान्दृष्ट्वा सह शर्वेण तां तनुम्
०८०६००३३ स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम्
०८०६००४१ तप्तहेमावदातेन लसत्कौशेयवाससा
०८०६००४३ प्रसन्नचारुसर्वाङ्गीं सुमुखीं सुन्दरभ्रुवम्
०८०६००५१ महामणिकिरीटेन केयूराभ्यां च भूषिताम्
०८०६००५३ कर्णाभरणनिर्भात कपोलश्रीमुखाम्बुजाम्
०८०६००६१ काञ्चीकलापवलय हारनूपुरशोभिताम्
०८०६००६३ कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम्
०८०६००७१ सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम्
०८०६००७३ तुष्टाव देवप्रवरः सशर्वः पुरुषं परम्
०८०६००७५ सर्वामरगणैः साकं सर्वाङ्गैरवनिं गतैः
०८०६००८० श्रीब्रह्मोवाच
०८०६००८१ अजातजन्मस्थितिसंयमाया गुणाय निर्वाणसुखार्णवाय

०८०६००८३ अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते
०८०६००९१ रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोऽर्थिभिर्वैदिकतान्त्रिकेण
०८०६००९३ योगेन धातः सह नस्त्रिलोकान्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ
०८०६०१०१ त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे
०८०६०१०३ त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्
०८०६०१११ त्वं माययात्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः
०८०६०११३ पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चितः
०८०६०१२१ यथाग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बूद्यमने च वृत्तिम्
०८०६०१२३ योगैर्मनुष्या अधियन्ति हि त्वां गुणेषु बुद्ध्या कवयो वदन्ति
०८०६०१३१ तं त्वां वयं नाथ समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम्
०८०६०१३३ दृष्ट्वा गता निर्वृतमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः
०८०६०१४१ स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम्
०८०६०१४३ समागतास्ते बहिरन्तरात्मन्किं वान्यविज्ञाप्यमशेषसाक्षिणः
०८०६०१५१ अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते
०८०६०१५३ किं वा विदामेश पृथग्विभाता विधत्स्व शं नो द्विजदेवमन्त्रम्
०८०६०१६० श्रीशुक उवाच
०८०६०१६१ एवं विरिञ्चादिभिरीडितस्तद्विज्ञाय तेषां हृदयं यथैव
०८०६०१६३ जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन्संवृतसर्वकारकान्
०८०६०१७१ एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः
०८०६०१७३ विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः
०८०६०१८० श्रीभगवानुवाच
०८०६०१८१ हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम्
०८०६०१८३ श‍ृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः
०८०६०१९१ यात दानवदैतेयैस्तावत्सन्धिर्विधीयताम्
०८०६०१९३ कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः
०८०६०२०१ अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे
०८०६०२०३ अहिमूषिकवद्देवा ह्यर्थस्य पदवीं गतैः
०८०६०२११ अमृतोत्पादने यत्नः क्रियतामविलम्बितम्
०८०६०२१३ यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत्
०८०६०२२१ क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः
०८०६०२२३ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्

०८०६०२३१ सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः
०८०६०२३३ क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः
०८०६०२४१ यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः
०८०६०२४३ न संरम्भेण सिध्यन्ति सर्वार्थाः सान्त्वया यथा
०८०६०२५१ न भेतव्यं कालकूटाद्विषाञ्जलधिसम्भवात्
०८०६०२५३ लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु
०८०६०२६० श्रीशुक उवाच
०८०६०२६१ इति देवान्समादिश्य भगवान्पुरुषोत्तमः
०८०६०२६३ तेषामन्तर्दधे राजन्स्वच्छन्दगतिरीश्वरः
०८०६०२७१ अथ तस्मै भगवते नमस्कृत्य पितामहः
०८०६०२७३ भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः
०८०६०२८१ दृष्ट्वारीनप्यसंयत्ताञ्जातक्षोभान्स्वनायकान्
०८०६०२८३ न्यषेधद्दैत्यराट्श्लोक्यः सन्धिविग्रहकालवित्
०८०६०२९१ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः
०८०६०२९३ श्रिया परमया जुष्टं जिताशेषमुपागमन्
०८०६०३०१ महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः
०८०६०३०३ अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात्
०८०६०३११ तत्त्वरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः
०८०६०३१३ शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः
०८०६०३२१ ततो देवासुराः कृत्वा संविदं कृतसौहृदाः
०८०६०३२३ उद्यमं परमं चक्रुरमृतार्थे परन्तप
०८०६०३३१ ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः
०८०६०३३३ नदन्त उदधिं निन्युः शक्ताः परिघबाहवः
०८०६०३४१ दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः
०८०६०३४३ अपारयन्तस्तं वोढुं विवशा विजहुः पथि
०८०६०३५१ निपतन्स गिरिस्तत्र बहूनमरदानवान्
०८०६०३५३ चूर्णयामास महता भारेण कनकाचलः
०८०६०३६१ तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान्
०८०६०३६३ विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः
०८०६०३७१ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान्
०८०६०३७३ ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा

०८०६०३८१ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया
०८०६०३८३ आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः
०८०६०३९१ अवरोप्य गिरिं स्कन्धात्सुपर्णः पततां वरः
०८०६०३९३ ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः
०८०७००१० श्रीशुक उवाच
०८०७००११ ते नागराजमामन्त्र्य फलभागेन वासुकिम्
०८०७००१३ परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः
०८०७००२१ आरेभिरे सुरा यत्ता अमृतार्थे कुरूद्वह
०८०७००२३ हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन्
०८०७००३१ तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम्
०८०७००३३ न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम्
०८०७००४१ स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः
०८०७००४३ इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः
०८०७००४५ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः
०८०७००६१ कृतस्थानविभागास्त एवं कश्यपनन्दनाः
०८०७००६३ ममन्थुः परमं यत्ता अमृतार्थं पयोनिधिम्
०८०७००७१ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्
०८०७००७३ ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन
०८०७००८१ ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः
०८०७००८३ आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा
०८०७००९१ विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः
०८०७००९३ कृत्वा वपुः कच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार
०८०७०१०१ तमुत्थितं वीक्ष्य कुलाचलं पुनः समुद्यता निर्मथितुं सुरासुराः
०८०७०१०३ दधार पृष्ठेन स लक्षयोजन प्रस्तारिणा द्वीप इवापरो महान्
०८०७०१११ सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः
०८०७०११३ बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः
०८०७०१२१ तथासुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन्
०८०७०१२३ उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः
०८०७०१३१ उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः
०८०७०१३३ तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोऽभिवृष्टः
०८०७०१४१ उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः

०८०७०१४३ ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम्
०८०७०१५१ अहीन्द्रसाहस्रकठोरदृङ्मुख श्वासाग्निधूमाहतवर्चसोऽसुराः
०८०७०१५३ पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन्
०८०७०१६१ देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान्
०८०७०१६३ समभ्यवर्षन्भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः
०८०७०१७१ मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः
०८०७०१७३ यदा सुधा न जायेत निर्ममन्थाजितः स्वयम्
०८०७०१८१ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्
०८०७०१८२ मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः
०८०७०१८३ जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा
०८०७०१८४ मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः
०८०७०१९१ निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः
०८०७०१९३ सम्भ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात्
०८०७०२०१ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति
०८०७०२०३ भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम्
०८०७०२११ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं मुनीनाम्
०८०७०२१३ आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः
०८०७०२२० श्रीप्रजापतय ऊचुः
०८०७०२२१ देवदेव महादेव भूतात्मन्भूतभावन
०८०७०२२३ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात्
०८०७०२३१ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः
०८०७०२३३ तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम्
०८०७०२४१ गुणमय्या स्वशक्त्यास्य सर्गस्थित्यप्ययान्विभो
०८०७०२४३ धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम्
०८०७०२५१ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम्
०८०७०२५३ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः
०८०७०२६१ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणः स्वभावः
०८०७०२६३ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति
०८०७०२७१ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम्
०८०७०२७३ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम्
०८०७०२८१ नाभिर्नभस्ते श्वसनं नभस्वान्सूर्यश्च चक्षूंषि जलं स्म रेतः

०८०७०२८३ परावरात्माश्रयणं तवात्मा सोमो मनो द्यौर्भगवन्शिरस्ते
०८०७०२९१ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते
०८०७०२९३ छन्दांसि साक्षात्तव सप्त धातवस्त्रयीमयात्मन्हृदयं सर्वधर्मः
०८०७०३०१ मुखानि पञ्चोपनिषदस्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः
०८०७०३०३ यत्तच्छिवाख्यं परमात्मतत्त्वं देव स्वयंज्योतिरवस्थितिस्ते
०८०७०३११ छाया त्वधर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि
०८०७०३१३ साङ्ख्यात्मनः शास्त्रकृतस्तवेक्षा छन्दोमयो देव ऋषिः पुराणः
०८०७०३२१ न ते गिरित्राखिललोकपाल विरिञ्चवैकुण्ठसुरेन्द्रगम्यम्
०८०७०३२३ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम्
०८०७०३३१ कामाध्वरत्रिपुरकालगराद्यनेक
०८०७०३३२ भूतद्रुहः क्षपयतः स्तुतये न तत्ते
०८०७०३३३ यस्त्वन्तकाल इदमात्मकृतं स्वनेत्र
०८०७०३३४ वह्निस्फुलिङ्गशिखया भसितं न वेद
०८०७०३४१ ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि
०८०७०३४२ द्वन्द्वं चरन्तमुमया तपसाभितप्तम्
०८०७०३४३ कत्थन्त उग्रपरुषं निरतं श्मशाने
०८०७०३४४ ते नूनमूतिमविदंस्तव हातलज्जाः
०८०७०३५१ तत्तस्य ते सदसतोः परतः परस्य
०८०७०३५२ नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः
०८०७०३५३ ब्रह्मादयः किमुत संस्तवने वयं तु
०८०७०३५४ तत्सर्गसर्गविषया अपि शक्तिमात्रम्
०८०७०३६१ एतत्परं प्रपश्यामो न परं ते महेश्वर
०८०७०३६३ मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः
०८०७०३७० श्रीशुक उवाच
०८०७०३७१ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः
०८०७०३७३ सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम्
०८०७०३८० श्रीशिव उवाच
०८०७०३८१ अहो बत भवान्येतत्प्रजानां पश्य वैशसम्
०८०७०३८३ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम्
०८०७०३९१ आसां प्राणपरीप्सूनां विधेयमभयं हि मे
०८०७०३९३ एतावान्हि प्रभोरर्थो यद्दीनपरिपालनम्

०८०७०४०१ प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः
०८०७०४०३ बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया
०८०७०४११ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः
०८०७०४१३ प्रीते हरौ भगवति प्रीयेऽहं सचराचरः
०८०७०४१५ तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे
०८०७०४२० श्रीशुक उवाच
०८०७०४२१ एवमामन्त्र्य भगवान्भवानीं विश्वभावनः
०८०७०४२३ तद्विषं जग्धुमारेभे प्रभावज्ञान्वमोदत
०८०७०४३१ ततः करतलीकृत्य व्यापि हालाहलं विषम्
०८०७०४३३ अभक्षयन्महादेवः कृपया भूतभावनः
०८०७०४४१ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः
०८०७०४४३ यच्चकार गले नीलं तच्च साधोर्विभूषणम्
०८०७०४५१ तप्यन्ते लोकतापेन साधवः प्रायशो जनाः
०८०७०४५३ परमाराधनं तद्धि पुरुषस्याखिलात्मनः
०८०७०४६१ निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः
०८०७०४६३ प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे
०८०७०४७१ प्रस्कन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत्
०८०७०४७३ वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे
०८०८००१० श्रीशुक उवाच
०८०८००११ पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः
०८०८००१३ ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत्
०८०८००२१ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः
०८०८००२३ यज्ञस्य देवयानस्य मेध्याय हविषे नृप
०८०८००३१ तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः
०८०८००३३ तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया
०८०८००४१ तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः
०८०८००४३ दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम्
०८०८००५१ ऐरावणादयस्त्वष्टौ दिग्गजा अभवंस्ततः
०८०८००५३ अभ्रमुप्रभृतयोऽष्टौ च करिण्यस्त्वभवन्नृप
०८०८००६१ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः
०८०८००६३ तस्मिन्मणौ स्पृहां चक्रे वक्षोऽलङ्करणे हरिः

०८०८००७१ ततोऽभवत्पारिजातः सुरलोकविभूषणम्
०८०८००७३ पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान्
०८०८००८१ ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः
०८०८००८३ रमण्यः स्वर्गिणां वल्गु गतिलीलावलोकनैः
०८०८००९१ ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा
०८०८००९३ रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा
०८०८०१०१ तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः
०८०८०१०३ रूपौदार्यवयोवर्ण महिमाक्षिप्तचेतसः
०८०८०१११ तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम्
०८०८०११३ मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि
०८०८०१२१ आभिषेचनिका भूमिराहरत्सकलौषधीः
०८०८०१२३ गावः पञ्च पवित्राणि वसन्तो मधुमाधवौ
०८०८०१३१ ऋषयः कल्पयां चक्रुराभिषेकं यथाविधि
०८०८०१३३ जगुर्भद्राणि गन्धर्वा नट्यश्च ननृतुर्जगुः
०८०८०१४१ मेघा मृदङ्गपणव मुरजानकगोमुखान्
०८०८०१४३ व्यनादयन्शङ्खवेणु वीणास्तुमुलनिःस्वनान्
०८०८०१५१ ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम्
०८०८०१५३ दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः
०८०८०१६१ समुद्रः पीतकौशेय वाससी समुपाहरत्
०८०८०१६३ वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम्
०८०८०१७१ भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः
०८०८०१७३ हारं सरस्वती पद्ममजो नागाश्च कुण्डले
०८०८०१८१ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना
०८०८०१८३ चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम्
०८०८०१९१ स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम्
०८०८०१९३ ततस्ततो नूपुरवल्गु शिञ्जितैर्विसर्पती हेमलतेव सा बभौ
०८०८०२०१ विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम्
०८०८०२०३ गन्धर्वसिद्धासुरयक्षचारण त्रैपिष्टपेयादिषु नान्वविन्दत
०८०८०२११ नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम्
०८०८०२१३ कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः
०८०८०२२१ धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम्

०८०८०२२३ वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः
०८०८०२३१ क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः
०८०८०२३३ यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते हि माम्
०८०८०२४१ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतयागुणाश्रयम्
०८०८०२४३ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्
०८०८०२५१ तस्यांसदेश उशतीं नवकञ्जमालां
०८०८०२५२ माद्यन्मधुव्रतवरूथगिरोपघुष्टाम्
०८०८०२५३ तस्थौ निधाय निकटे तदुरः स्वधाम
०८०८०२५४ सव्रीडहासविकसन्नयनेन याता
०८०८०२६१ तस्याः श्रियस्त्रिजगतो जनको जनन्या
०८०८०२६२ वक्षो निवासमकरोत्परमं विभूतेः
०८०८०२६३ श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
०८०८०२६४ यत्र स्थितैधयत साधिपतींस्त्रिलोकान्
०८०८०२७१ शङ्खतूर्यमृदङ्गानां वादित्राणां पृथुः स्वनः
०८०८०२७३ देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत्
०८०८०२८१ ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम्
०८०८०२८३ ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः
०८०८०२९१ श्रियावलोकिता देवाः सप्रजापतयः प्रजाः
०८०८०२९३ शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम्
०८०८०३०१ निःसत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः
०८०८०३०३ यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः
०८०८०३११ अथासीद्वारुणी देवी कन्या कमललोचना
०८०८०३१३ असुरा जगृहुस्तां वै हरेरनुमतेन ते
०८०८०३२१ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः
०८०८०३२३ उदतिष्ठन्महाराज पुरुषः परमाद्भुतः
०८०८०३३१ दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः
०८०८०३३३ श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः
०८०८०३४१ पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः
०८०८०३४३ स्निग्धकुञ्चितकेशान्त सुभगः सिंहविक्रमः
०८०८०३५१ अमृतापूर्णकलसं बिभ्रद्वलयभूषितः
०८०८०३५३ स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः

०८०८०३६१ धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्
०८०८०३६३ तमालोक्यासुराः सर्वे कलसं चामृताभृतम्
०८०८०३७१ लिप्सन्तः सर्ववस्तूनि कलसं तरसाहरन्
०८०८०३७३ नीयमानेऽसुरैस्तस्मिन्कलसेऽमृतभाजने
०८०८०३८१ विषण्णमनसो देवा हरिं शरणमाययुः
०८०८०३८३ इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत्
०८०८०३८५ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया
०८०८०३९१ मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम्
०८०८०३९३ अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो
०८०८०४०१ देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः
०८०८०४०३ सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः
०८०८०४११ इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः
०८०८०४१३ दुर्बलाः प्रबलान्राजन्गृहीतकलसान्मुहुः
०८०८०४२१ एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः
०८०८०४२३ योषिद्रूपमनिर्देश्यं दधारपरमाद्भुतम्
०८०८०४३१ प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम्
०८०८०४३३ समानकर्णाभरणं सुकपोलोन्नसाननम्
०८०८०४४१ नवयौवननिर्वृत्त स्तनभारकृशोदरम्
०८०८०४४३ मुखामोदानुरक्तालि झङ्कारोद्विग्नलोचनम्
०८०८०४५१ बिभ्रत्सुकेशभारेण मालामुत्फुल्लमल्लिकाम्
०८०८०४५३ सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम्
०८०८०४६१ विरजाम्बरसंवीत नितम्बद्वीपशोभया
०८०८०४६३ काञ्च्या प्रविलसद्वल्गु चलच्चरणनूपुरम्
०८०८०४७१ सव्रीडस्मितविक्षिप्त भ्रूविलासावलोकनैः
०८०८०४७३ दैत्ययूथपचेतःसु काममुद्दीपयन्मुहुः
०८०९००१० श्रीशुक उवाच
०८०९००११ तेऽन्योन्यतोऽसुराः पात्रं हरन्तस्त्यक्तसौहृदाः
०८०९००१३ क्षिपन्तो दस्युधर्माण आयान्तीं ददृशुः स्त्रियम्
०८०९००२१ अहो रूपमहो धाम अहो अस्या नवं वयः
०८०९००२३ इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः
०८०९००३१ का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि

०८०९००३३ कस्यासि वद वामोरु मथ्नतीव मनांसि नः
०८०९००४१ न वयं त्वामरैर्दैत्यैः सिद्धगन्धर्वचारणैः
०८०९००४३ नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः
०८०९००५१ नूनं त्वं विधिना सुभ्रूः प्रेषितासि शरीरिणाम्
०८०९००५३ सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम्
०८०९००६१ सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि
०८०९००६३ ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे
०८०९००७१ वयं कश्यपदायादा भ्रातरः कृतपौरुषाः
०८०९००७३ विभजस्व यथान्यायं नैव भेदो यथा भवेत्
०८०९००८१ इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः
०८०९००८३ प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत्
०८०९००९० श्रीभगवानुवाच
०८०९००९१ कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः
०८०९००९३ विश्वासं पण्डितो जातु कामिनीषु न याति हि
०८०९०१०१ सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः
०८०९०१०३ सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम्
०८०९०११० श्रीशुक उवाच
०८०९०१११ इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः
०८०९०११३ जहसुर्भावगम्भीरं ददुश्चामृतभाजनम्
०८०९०१२१ ततो गृहीत्वामृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा
०८०९०१२३ यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम्
०८०९०१३१ इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः
०८०९०१३३ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत
०८०९०१४१ अथोपोष्य कृतस्नाना हुत्वा च हविषानलम्
०८०९०१४३ दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः
०८०९०१५१ यथोपजोषं वासांसि परिधायाहतानि ते
०८०९०१५३ कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः
०८०९०१६१ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च
०८०९०१६३ धूपामोदितशालायांजुष्टायां माल्यदीपकैः
०८०९०१७१ तस्यां नरेन्द्र करभोरुरुशद्दुकूल श्रोणीतटालसगतिर्मदविह्वलाक्षी
०८०९०१७३ सा कूजती कनकनूपुरशिञ्जितेन कुम्भस्तनी कलसपाणिरथाविवेश

०८०९०१८१ तां श्रीसखीं कनककुण्डलचारुकर्ण नासाकपोलवदनां परदेवताख्याम्
०८०९०१८३ संवीक्ष्य सम्मुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकान्ताम्
०८०९०१९१ असुराणां सुधादानं सर्पाणामिव दुर्नयम्
०८०९०१९३ मत्वा जातिनृशंसानां न तां व्यभजदच्युतः
०८०९०२०१ कल्पयित्वा पृथक्पङ्क्तीरुभयेषां जगत्पतिः
०८०९०२०३ तांश्चोपवेशयामास स्वेषु स्वेषु च पङ्क्तिषु
०८०९०२११ दैत्यान्गृहीतकलसो वञ्चयन्नुपसञ्चरैः
०८०९०२१३ दूरस्थान्पाययामासजरामृत्युहरां सुधाम्
०८०९०२२१ ते पालयन्तः समयमसुराः स्वकृतं नृप
०८०९०२२३ तूष्णीमासन्कृतस्नेहाः स्त्रीविवादजुगुप्सया
०८०९०२३१ तस्यां कृतातिप्रणयाः प्रणयापायकातराः
०८०९०२३३ बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम्
०८०९०२४१ देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि
०८०९०२४३ प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः
०८०९०२५१ चक्रेण क्षुरधारेण जहार पिबतः शिरः
०८०९०२५३ हरिस्तस्य कबन्धस्तु सुधयाप्लावितोऽपतत्
०८०९०२६१ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्
०८०९०२६३ यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः
०८०९०२७१ पीतप्रायेऽमृते देवैर्भगवान्लोकभावनः
०८०९०२७३ पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः
०८०९०२८१ एवं सुरासुरगणाः समदेशकाल
०८०९०२८२ हेत्वर्थकर्ममतयोऽपि फले विकल्पाः
०८०९०२८३ तत्रामृतं सुरगणाः फलमञ्जसापुर्
०८०९०२८४ यत्पादपङ्कजरजःश्रयणान्न दैत्याः
०८०९०२९१ यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्
०८०९०२९२ देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात्
०८०९०२९३ तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्
०८०९०२९४ सर्वस्य तद्भवति मूलनिषेचनं यत्
०८१०००१० श्रीशुक उवाच
०८१०००११ इति दानवदैतेया नाविन्दन्नमृतं नृप
०८१०००१३ युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः

०८१०००२१ साधयित्वामृतं राजन्पाययित्वा स्वकान्सुरान्
०८१०००२३ पश्यतां सर्वभूतानां ययौ गरुडवाहनः
०८१०००३१ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनन्दनाः
०८१०००३३ अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः
०८१०००४१ ततः सुरगणाः सर्वे सुधया पीतयैधिताः
०८१०००४३ प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः
०८१०००५१ तत्र दैवासुरो नाम रणः परमदारुणः
०८१०००५३ रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः
०८१०००६१ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे
०८१०००६३ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः
०८१०००७१ शङ्खतूर्यमृदङ्गानां भेरीडमरिणां महान्
०८१०००७३ हस्त्यश्वरथपत्तीनां नदतां निस्वनोऽभवत्
०८१०००८१ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः
०८१०००८३ हया हयैरिभाश्चेभैः समसज्जन्त संयुगे
०८१०००९१ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः
०८१०००९३ केचिद्गौरमुखैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः
०८१००१०१ गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः
०८१००१०३ शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः
०८१००१११ शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः
०८१००११३ बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः
०८१००१२१ अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः
०८१००१२३ सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः
०८१००१३१ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः
०८१००१३३ महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः
०८१००१४१ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः
०८१००१४३ स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः
०८१००१५१ देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन
०८१००१५३ रेजतुर्वीरमालाभिर्यादसामिव सागरौ
०८१००१६१ वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः
०८१००१६३ यानं वैहायसं नाम कामगं मयनिर्मितम्
०८१००१७१ सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो

०८१००१७३ अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम्
०८१००१८१ आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः
०८१००१८३ बालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये
०८१००१९१ तस्यासन्सर्वतो यानैर्यूथानां पतयोऽसुराः
०८१००१९३ नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः
०८१००२०१ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः
०८१००२०३ शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः
०८१००२११ हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः
०८१००२१३ तारकश्चक्रदृक्षुम्भो निशुम्भो जम्भ उत्कलः
०८१००२२१ अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः
०८१००२२३ अन्ये पौलोमकालेया निवातकवचादयः
०८१००२३१ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः
०८१००२३३ सर्व एते रणमुखे बहुशो निर्जितामराः
०८१००२४१ सिंहनादान्विमुञ्चन्तः शङ्खान्दध्मुर्महारवान्
०८१००२४३ दृष्ट्वा सपत्नानुत्सिक्तान्बलभित्कुपितो भृशम्
०८१००२५१ ऐरावतं दिक्करिणमारूढः शुशुभे स्वराट्
०८१००२५३ यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः
०८१००२६१ तस्यासन्सर्वतो देवा नानावाहध्वजायुधाः
०८१००२६३ लोकपालाः सहगणैर्वाय्वग्निवरुणादयः
०८१००२७१ तेऽन्योन्यमभिसंसृत्य क्षिपन्तो मर्मभिर्मिथः
०८१००२७३ आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः
०८१००२८१ युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत
०८१००२८३ वरुणो हेतिनायुध्यन्मित्रो राजन्प्रहेतिना
०८१००२९१ यमस्तु कालनाभेन विश्वकर्मा मयेन वै
०८१००२९३ शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः
०८१००३०१ अपराजितेन नमुचिरश्विनौ वृषपर्वणा
०८१००३०३ सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च
०८१००३११ राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः
०८१००३१३ निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी
०८१००३२१ वृषाकपिस्तु जम्भेन महिषेण विभावसुः
०८१००३२३ इल्वलः सह वातापिर्ब्रह्मपुत्रैररिन्दम

०८१००३३१ कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह
०८१००३३३ बृहस्पतिश्चोशनसा नरकेण शनैश्चरः
०८१००३४१ मरुतो निवातकवचैः कालेयैर्वसवोऽमराः
०८१००३४३ विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह
०८१००३५१ त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः
०८१००३५३ अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः
०८१००३६१ भुशुण्डिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि
०८१००३६३ निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिन्दिपालैश्च शिरांसि चिच्छिदुः
०८१००३७१ गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः
०८१००३७३ निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः
०८१००३८१ तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा
०८१००३८३ रेणुर्दिशः खं द्युमणिं च छादयन्न्यवर्ततासृक्स्रुतिभिः परिप्लुतात्
०८१००३९१ शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः
०८१००३९३ महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूः करभोरुभिर्बभौ
०८१००४०१ कबन्धास्तत्र चोत्पेतुः पतितस्वशिरोऽक्षिभिः
०८१००४०३ उद्यतायुधदोर्दण्डैराधावन्तो भटान्मृधे
०८१००४११ बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः
०८१००४१३ चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत्
०८१००४२१ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः
०८१००४२३ चिच्छेद निशितैर्भल्लैरसम्प्राप्तान्हसन्निव
०८१००४३१ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे
०८१००४३३ तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः
०८१००४४१ ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः
०८१००४४३ यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः
०८१००४५१ ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः
०८१००४५३ ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो
०८१००४६१ ततो निपेतुस्तरवो दह्यमाना दवाग्निना
०८१००४६३ शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम्
०८१००४७१ महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः
०८१००४७३ सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजाः
०८१००४८१ यातुधान्यश्च शतशः शूलहस्ता विवाससः

०८१००४८३ छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो
०८१००४९१ ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः
०८१००४९३ अङ्गारान्मुमुचुर्वातैराहताः स्तनयित्नवः
०८१००५०१ सृष्टो दैत्येन सुमहान्वह्निः श्वसनसारथिः
०८१००५०३ सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक्
०८१००५११ ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत
०८१००५१३ प्रचण्डवातैरुद्धूत तरङ्गावर्तभीषणः
०८१००५२१ एवं दैत्यैर्महामायैरलक्ष्यगतिभी रणे
०८१००५२३ सृज्यमानासु मायासु विषेदुः सुरसैनिकाः
०८१००५३१ न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप
०८१००५३३ ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः
०८१००५४१ ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः
०८१००५४३ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः
०८१००५५१ तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः
०८१००५५३ स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम्
०८१००५६१ दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः
०८१००५६३ तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः
०८१००५७१ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम्
०८१००५७३ आहत्य तिग्मगदयाहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः
०८११००१० श्रीशुक उवाच
०८११००११ अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयानुकम्पया
०८११००१३ जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान्रणे यैरभिसंहताः पुरा
०८११००२१ वैरोचनाय संरब्धो भगवान्पाकशासनः
०८११००२३ उदयच्छद्यदा वज्रं प्रजा हा हेति चुक्रुशुः
०८११००३१ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितम्
०८११००३३ मनस्विनं सुसम्पन्नं विचरन्तं महामृधे
०८११००४१ नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसि
०८११००४३ जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम्
०८११००५१ आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम्
०८११००५३ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्च पदादधः
०८११००६१ सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा

०८११००६३ शिरो हरिष्ये मन्दात्मन्घटस्व ज्ञातिभिः सह
०८११००७० श्रीबलिरुवाच
०८११००७१ सङ्ग्रामे वर्तमानानां कालचोदितकर्मणाम्
०८११००७३ कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात्
०८११००८१ तदिदं कालरशनं जगत्पश्यन्ति सूरयः
०८११००८३ न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः
०८११००९१ न वयं मन्यमानानामात्मानं तत्र साधनम्
०८११००९३ गिरो वः साधुशोच्यानां गृह्णीमो मर्मताडनाः
०८११०१०० श्रीशुक उवाच
०८११०१०१ इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः
०८११०१०३ आकर्णपूर्णैरहनदाक्षेपैराह तं पुनः
०८११०१११ एवं निराकृतो देवो वैरिणा तथ्यवादिना
०८११०११३ नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः
०८११०१२१ प्राहरत्कुलिशं तस्मा अमोघं परमर्दनः
०८११०१२३ सयानो न्यपतद्भूमौ छिन्नपक्ष इवाचलः
०८११०१३१ सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत्
०८११०१३३ अभ्ययात्सौहृदं सख्युर्हतस्यापि समाचरन्
०८११०१४१ स सिंहवाह आसाद्य गदामुद्यम्य रंहसा
०८११०१४३ जत्रावताडयच्छक्रं गजं च सुमहाबलः
०८११०१५१ गदाप्रहारव्यथितो भृशं विह्वलितो गजः
०८११०१५३ जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ
०८११०१६१ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः
०८११०१६३ आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः
०८११०१७१ तस्य तत्पूजयन्कर्म यन्तुर्दानवसत्तमः
०८११०१७३ शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे
०८११०१८१ सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः
०८११०१८३ इन्द्रो जम्भस्य सङ्क्रुद्धो वज्रेणापाहरच्छिरः
०८११०१९१ जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः
०८११०१९३ नमुचिश्च बलः पाकस्तत्रापेतुस्त्वरान्विताः
०८११०२०१ वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य मर्मसु
०८११०२०३ शरैरवाकिरन्मेघा धाराभिरिव पर्वतम्

०८११०२११ हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः
०८११०२१३ तावद्भिरर्दयामास युगपल्लघुहस्तवान्
०८११०२२१ शताभ्यां मातलिं पाको रथं सावयवं पृथक्
०८११०२२३ सकृत्सन्धानमोक्षेण तदद्भुतमभूद्रणे
०८११०२३१ नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः
०८११०२३३ आहत्य व्यनदत्सङ्ख्ये सतोय इव तोयदः
०८११०२४१ सर्वतः शरकूटेन शक्रं सरथसारथिम्
०८११०२४३ छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः
०८११०२५१ अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः
०८११०२५३ अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो यथार्णवे
०८११०२६१ ततस्तुराषाडिषुबद्धपञ्जराद्विनिर्गतः साश्वरथध्वजाग्रणीः
०८११०२६३ बभौ दिशः खं पृथिवीं च रोचयन्स्वतेजसा सूर्य इव क्षपात्यये
०८११०२७१ निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे
०८११०२७३ उदयच्छद्रिपुं हन्तुं वज्रं वज्रधरो रुषा
०८११०२८१ स तेनैवाष्टधारेण शिरसी बलपाकयोः
०८११०२८३ ज्ञातीनां पश्यतां राजञ्जहार जनयन्भयम्
०८११०२९१ नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः
०८११०२९३ जिघांसुरिन्द्रं नृपते चकार परमोद्यमम्
०८११०३०१ अश्मसारमयं शूलं घण्टावद्धेमभूषणम्
०८११०३०३ प्रगृह्याभ्यद्रवत्क्रुद्धो हतोऽसीति वितर्जयन्
०८११०३०५ प्राहिणोद्देवराजाय निनदन्मृगराडिव
०८११०३११ तदापतद्गगनतले महाजवं विचिच्छिदे हरिरिषुभिः सहस्रधा
०८११०३१३ तमाहनन्नृप कुलिशेन कन्धरे रुषान्वितस्त्रिदशपतिः शिरो हरन्
०८११०३२१ न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः
०८११०३२३ तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा
०८११०३३१ तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः
०८११०३३३ किमिदं दैवयोगेन भूतं लोकविमोहनम्
०८११०३४१ येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये
०८११०३४३ कृतो निविशतां भारैः पतत्रैः पततां भुवि
०८११०३५१ तपःसारमयं त्वाष्ट्रं वृत्रो येन विपाटितः
०८११०३५३ अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः

०८११०३६१ सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके
०८११०३६३ नाहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम्
०८११०३७१ इति शक्रं विषीदन्तमाह वागशरीरिणी
०८११०३७३ नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः
०८११०३८१ मयास्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः
०८११०३८३ अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन्रिपोः
०८११०३९१ तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः
०८११०३९३ ध्यायन्फेनमथापश्यदुपायमुभयात्मकम्
०८११०४०१ न शुष्केण न चार्द्रेण जहार नमुचेः शिरः
०८११०४०३ तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुम्
०८११०४११ गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू
०८११०४१३ देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा
०८११०४२१ अन्येऽप्येवं प्रतिद्वन्द्वान्वाय्वग्निवरुणादयः
०८११०४२३ सूदयामासुरसुरान्मृगान्केसरिणो यथा
०८११०४३१ ब्रह्मणा प्रेषितो देवान्देवर्षिर्नारदो नृप
०८११०४३३ वारयामास विबुधान्दृष्ट्वा दानवसङ्क्षयम्
०८११०४४० श्रीनारद उवाच
०८११०४४१ भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः
०८११०४४३ श्रिया समेधिताः सर्व उपारमत विग्रहात्
०८११०४५० श्रीशुक उवाच
०८११०४५१ संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः
०८११०४५३ उपगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम्
०८११०४६१ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते
०८११०४६३ बलिं विपन्नमादाय अस्तं गिरिमुपागमन्
०८११०४७१ तत्राविनष्टावयवान्विद्यमानशिरोधरान्
०८११०४७३ उशना जीवयामास संजीवन्या स्वविद्यया
०८११०४८१ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः
०८११०४८३ पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः
०८१२००१० श्रीबादरायणिरुवाच
०८१२००११ वृषध्वजो निशम्येदं योषिद्रूपेण दानवान्
०८१२००१३ मोहयित्वा सुरगणान्हरिः सोममपाययत्

०८१२००२१ वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः
०८१२००२३ सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः
०८१२००३१ सभाजितो भगवता सादरं सोमया भवः
०८१२००३३ सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन्हरिम्
०८१२००४० श्रीमहादेव उवाच
०८१२००४१ देवदेव जगद्व्यापिञ्जगदीश जगन्मय
०८१२००४३ सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः
०८१२००५१ आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः
०८१२००५३ यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान्
०८१२००६१ तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः
०८१२००६३ विसृज्योभयतः सङ्गं मुनयः समुपासते
०८१२००७१ त्वं ब्रह्म पूर्णममृतं विगुणं विशोकम्
०८१२००७२ आनन्दमात्रमविकारमनन्यदन्यत्
०८१२००७३ विश्वस्य हेतुरुदयस्थितिसंयमानाम्
०८१२००७४ आत्मेश्वरश्च तदपेक्षतयानपेक्षः
०८१२००८१ एकस्त्वमेव सदसद्द्वयमद्वयं च
०८१२००८२ स्वर्णं कृताकृतमिवेह न वस्तुभेदः
०८१२००८३ अज्ञानतस्त्वयि जनैर्विहितो विकल्पो
०८१२००८४ यस्माद्गुणव्यतिकरो निरुपाधिकस्य
०८१२००९१ त्वां ब्रह्म केचिदवयन्त्युत धर्ममेके
०८१२००९२ एके परं सदसतोः पुरुषं परेशम्
०८१२००९३ अन्येऽवयन्ति नवशक्तियुतं परं त्वां
०८१२००९४ केचिन्महापुरुषमव्ययमात्मतन्त्रम्
०८१२०१०१ नाहं परायुर्ऋषयो न मरीचिमुख्या
०८१२०१०२ जानन्ति यद्विरचितं खलु सत्त्वसर्गाः
०८१२०१०३ यन्मायया मुषितचेतस ईश दैत्य
०८१२०१०४ मर्त्यादयः किमुत शश्वदभद्रवृत्ताः
०८१२०१११ स त्वं समीहितमदः स्थितिजन्मनाशं
०८१२०११२ भूतेहितं च जगतो भवबन्धमोक्षौ
०८१२०११३ वायुर्यथा विशति खं च चराचराख्यं
०८१२०११४ सर्वं तदात्मकतयावगमोऽवरुन्त्से

०८१२०१२१ अवतारा मया दृष्टा रममाणस्य ते गुणैः
०८१२०१२२ सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम्
०८१२०१३१ येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः
०८१२०१३२ तद्दिदृक्षव आयाताः परं कौतूहलं हि नः
०८१२०१४० श्रीशुक उवाच
०८१२०१४१ एवमभ्यर्थितो विष्णुर्भगवान्शूलपाणिना
०८१२०१४३ प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत
०८१२०१५० श्रीभगवानुवाच
०८१२०१५१ कौतूहलाय दैत्यानां योषिद्वेषो मया धृतः
०८१२०१५३ पश्यता सुरकार्याणि गते पीयूषभाजने
०८१२०१६१ तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम
०८१२०१६३ कामिनां बहु मन्तव्यं सङ्कल्पप्रभवोदयम्
०८१२०१७० श्रीशुक उवाच
०८१२०१७१ इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत
०८१२०१७३ सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया
०८१२०१८१ ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे
०८१२०१८३ विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम्
०८१२०१९१ आवर्तनोद्वर्तनकम्पितस्तन प्रकृष्टहारोरुभरैः पदे पदे
०८१२०१९३ प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः
०८१२०२०१ दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम्
०८१२०२०३ स्वकर्णविभ्राजितकुण्डलोल्लसत्कपोलनीलालकमण्डिताननाम्
०८१२०२११ श्लथद्दुकूलं कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना
०८१२०२१३ विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया
०८१२०२२१ तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः
०८१२०२२३ स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद
०८१२०२३१ तस्याः कराग्रात्स तु कन्दुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः
०८१२०२३३ वासः ससूत्रं लघु मारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः
०८१२०२४१ एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम्
०८१२०२४३ दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल
०८१२०२५१ तयापहृतविज्ञानस्तत्कृतस्मरविह्वलः
०८१२०२५३ भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ

०८१२०२६१ सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम्
०८१२०२६३ निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत
०८१२०२७१ तामन्वगच्छद्भगवान्भवः प्रमुषितेन्द्रियः
०८१२०२७३ कामस्य च वशं नीतः करेणुमिव यूथपः
०८१२०२८१ सोऽनुव्रज्यातिवेगेन गृहीत्वानिच्छतीं स्त्रियम्
०८१२०२८३ केशबन्ध उपानीय बाहुभ्यां परिषस्वजे
०८१२०२९१ सोपगूढा भगवता करिणा करिणी यथा
०८१२०२९३ इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा
०८१२०३०१ आत्मानं मोचयित्वाङ्ग सुरर्षभभुजान्तरात्
०८१२०३०३ प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता
०८१२०३११ तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः
०८१२०३१३ प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः
०८१२०३२१ तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः
०८१२०३२३ शुष्मिणो यूथपस्येव वासितामनुधावतः
०८१२०३३१ यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः
०८१२०३३३ तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते
०८१२०३४१ सरित्सरःसु शैलेषु वनेषूपवनेषु च
०८१२०३४३ यत्र क्व चासन्नृषयस्तत्र सन्निहितो हरः
०८१२०३५१ स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया
०८१२०३५३ जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात्
०८१२०३६१ अथावगतमाहात्म्य आत्मनो जगदात्मनः
०८१२०३६३ अपरिज्ञेयवीर्यस्य न मेने तदु हाद्भुतम्
०८१२०३७१ तमविक्लवमव्रीडमालक्ष्य मधुसूदनः
०८१२०३७३ उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम्
०८१२०३८० श्रीभगवानुवाच
०८१२०३८१ दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः
०८१२०३८३ यन्मे स्त्रीरूपया स्वैरं मोहितोऽप्यङ्ग मायया
०८१२०३९१ को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान्
०८१२०३९३ तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः
०८१२०४०१ सेयं गुणमयी माया न त्वामभिभविष्यति
०८१२०४०३ मया समेता कालेन कालरूपेण भागशः

०८१२०४१० श्रीशुक उवाच
०८१२०४११ एवं भगवता राजन्श्रीवत्साङ्केन सत्कृतः
०८१२०४१३ आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ
०८१२०४२१ आत्मांशभूतां तां मायां भवानीं भगवान्भवः
०८१२०४२३ सम्मतामृषिमुख्यानां प्रीत्याचष्टाथ भारत
०८१२०४३१ अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः
०८१२०४३३ अहं कलानामृषभोऽपि मुह्ये ययावशोऽन्ये किमुतास्वतन्त्राः
०८१२०४४१ यं मामपृच्छस्त्वमुपेत्य योगात्समासहस्रान्त उपारतं वै
०८१२०४४३ स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः
०८१२०४५० श्रीशुक उवाच
०८१२०४५१ इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः
०८१२०४५३ सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः
०८१२०४६१ एतन्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित्
०८१२०४६३ यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम्
०८१२०४७१ असदविषयमङ्घ्रिं भावगम्यं प्रपन्नान्
०८१२०४७३ अमृतममरवर्यानाशयत्सिन्धुमथ्यम्
०८१२०४७३ कपटयुवतिवेषो मोहयन्यः सुरारींस्
०८१२०४७४ तमहमुपसृतानां कामपूरं नतोऽस्मि
०८१३००१० श्रीशुक उवाच
०८१३००११ मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः
०८१३००१३ सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु
०८१३००२१ इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च
०८१३००२३ नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते
०८१३००३१ तरूषश्च पृषध्रश्च दशमो वसुमान्स्मृतः
०८१३००३३ मनोर्वैवस्वतस्यैते दशपुत्राः परन्तप
०८१३००४१ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः
०८१३००४३ अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः
०८१३००५१ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः
०८१३००५३ जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः
०८१३००६१ अत्रापि भगवज्जन्म कश्यपाददितेरभूत्
०८१३००६३ आदित्यानामवरजो विष्णुर्वामनरूपधृक्

०८१३००७१ सङ्क्षेपतो मयोक्तानि सप्तमन्वन्तराणि ते
०८१३००७३ भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्यान्वितानि च
०८१३००८१ विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे
०८१३००८३ संज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव
०८१३००९१ तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः
०८१३००९३ यमो यमी श्राद्धदेवश्छायायाश्च सुतान्छृणु
०८१३०१०१ सावर्णिस्तपती कन्या भार्या संवरणस्य या
०८१३०१०३ शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ
०८१३०१११ अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः
०८१३०११३ निर्मोकविरजस्काद्याः सावर्णितनया नृप
०८१३०१२१ तत्र देवाः सुतपसो विरजा अमृतप्रभाः
०८१३०१२३ तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति
०८१३०१३१ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम्
०८१३०१३३ राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति
०८१३०१४१ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः
०८१३०१४३ निवेशितोऽधिके स्वर्गादधुनास्ते स्वराडिव
०८१३०१५१ गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा
०८१३०१५३ ऋष्यशृङ्गः पितास्माकं भगवान्बादरायणः
०८१३०१६१ इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः
०८१३०१६३ इदानीमासते राजन्स्वे स्व आश्रममण्डले
०८१३०१७१ देवगुह्यात्सरस्वत्यां सार्वभौम इति प्रभुः
०८१३०१७३ स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वरः
०८१३०१८१ नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः
०८१३०१८३ भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप
०८१३०१९१ पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः
०८१३०१९३ द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः
०८१३०२०१ आयुष्मतोऽम्बुधारायामृषभो भगवत्कला
०८१३०२०३ भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः
०८१३०२११ दशमो ब्रह्मसावर्णिरुपश्लोकसुतो मनुः
०८१३०२१३ तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः
०८१३०२२१ हविष्मान्सुकृतः सत्यो जयो मूर्तिस्तदा द्विजाः

०८१३०२२३ सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः
०८१३०२३१ विष्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति
०८१३०२३३ जातः स्वांशेन भगवान्गृहे विश्वसृजो विभुः
०८१३०२४१ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान्
०८१३०२४३ अनागतास्तत्सुताश्च सत्यधर्मादयो दश
०८१३०२५१ विहङ्गमाः कामगमा निर्वाणरुचयः सुराः
०८१३०२५३ इन्द्रश्च वैधृतस्तेषामृषयश्चारुणादयः
०८१३०२६१ आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः
०८१३०२६३ वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति
०८१३०२७१ भविता रुद्रसावर्णी राजन्द्वादशमो मनुः
०८१३०२७३ देववानुपदेवश्च देवश्रेष्ठादयः सुताः
०८१३०२८१ ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः
०८१३०२८३ ऋषयश्च तपोमूर्तिस्तपस्व्याग्नीध्रकादयः
०८१३०२९१ स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः
०८१३०२९३ अन्तरं सत्यसहसः सुनृतायाः सुतो विभुः
०८१३०३०१ मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान्
०८१३०३०३ चित्रसेनविचित्राद्या देवसावर्णिदेहजाः
०८१३०३११ देवाः सुकर्मसुत्राम संज्ञा इन्द्रो दिवस्पतिः
०८१३०३१३ निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा
०८१३०३२१ देवहोत्रस्य तनय उपहर्ता दिवस्पतेः
०८१३०३२३ योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति
०८१३०३३१ मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति
०८१३०३३३ उरुगम्भीरबुधाद्या इन्द्रसावर्णिवीर्यजाः
०८१३०३४१ पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति
०८१३०३४३ अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः
०८१३०३५१ सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः
०८१३०३५३ वितानायां महाराज क्रियातन्तून्वितायिता
०८१३०३६१ राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते
०८१३०३६३ प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः
०८१४००१० श्रीराजोवाच
०८१४००११ मन्वन्तरेषु भगवन्यथा मन्वादयस्त्विमे

०८१४००१३ यस्मिन्कर्मणि ये येन नियुक्तास्तद्वदस्व मे
०८१४००२० श्रीऋषिरुवाच
०८१४००२१ मनवो मनुपुत्राश्च मुनयश्च महीपते
०८१४००२३ इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः
०८१४००३१ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप
०८१४००३३ मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः
०८१४००४१ चतुर्युगान्ते कालेन ग्रस्तान्छ्रुतिगणान्यथा
०८१४००४३ तपसा ऋषयोऽपश्यन्यतो धर्मः सनातनः
०८१४००५१ ततो धर्मं चतुष्पादं मनवो हरिणोदिताः
०८१४००५३ युक्ताः सञ्चारयन्त्यद्धा स्वे स्वे काले महीं नृप
०८१४००६१ पालयन्ति प्रजापाला यावदन्तं विभागशः
०८१४००६३ यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः
०८१४००७१ इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम्
०८१४००७३ भुञ्जानः पाति लोकांस्त्रीन्कामं लोके प्रवर्षति
०८१४००८१ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक्
०८१४००८३ ऋषिरूपधरः कर्म योगं योगेशरूपधृक्
०८१४००९१ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः
०८१४००९३ कालरूपेण सर्वेषामभावाय पृथग्गुणः
०८१४०१०१ स्तूयमानो जनैरेभिर्मायया नामरूपया
०८१४०१०३ विमोहितात्मभिर्नाना दर्शनैर्न च दृश्यते
०८१४०१११ एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम्
०८१४०११३ यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः
०८१५००१० श्रीराजोवाच
०८१५००११ बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत
०८१५००१३ भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम्
०८१५००२१ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः
०८१५००२३ यज्ञेश्वरस्य पूर्णस्य बन्धनं चाप्यनागसः
०८१५००३० श्रीशुक उवाच
०८१५००३१ पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन्भृगुभिः स जीवितः
०८१५००३३ सर्वात्मना तानभजद्भृगून्बलिः शिष्यो महात्मार्थनिवेदनेन
०८१५००४१ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्वजिता त्रिणाकम्

०८१५००४३ जिगीषमाणं विधिनाभिषिच्य महाभिषेकेण महानुभावाः
०८१५००५१ ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः
०८१५००५३ ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात्
०८१५००६१ धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम्
०८१५००६३ पितामहस्तस्य ददौ च मालाममम्लानपुष्पां जलजं च शुक्रः
०८१५००७१ एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान्
०८१५००७३ प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार
०८१५००८१ अथारुह्य रथं दिव्यं भृगुदत्तं महारथः
०८१५००८३ सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः
०८१५००९१ हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः
०८१५००९३ रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट्
०८१५०१०१ तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः
०८१५०१०३ पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव
०८१५०१११ वृतो विकर्षन्महतीमासुरीं ध्वजिनीं विभुः
०८१५०११३ ययाविन्द्रपुरीं स्वृद्धां कम्पयन्निव रोदसी
०८१५०१२१ रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः
०८१५०१२३ कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः
०८१५०१३१ प्रवालफलपुष्पोरु भारशाखामरद्रुमैः
०८१५०१३३ हंससारसचक्राह्व कारण्डवकुलाकुलाः
०८१५०१३५ नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः
०८१५०१४१ आकाशगङ्गया देव्या वृतां परिखभूतया
०८१५०१४३ प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च
०८१५०१५१ रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः
०८१५०१५३ जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम्
०८१५०१६१ सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम्
०८१५०१६३ शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः
०८१५०१७१ यत्र नित्यवयोरूपाः श्यामा विरजवाससः
०८१५०१७३ भ्राजन्ते रूपवन्नार्यो ह्यर्चिर्भिरिव वह्नयः
०८१५०१८१ सुरस्त्रीकेशविभ्रष्ट नवसौगन्धिकस्रजाम्
०८१५०१८३ यत्रामोदमुपादाय मार्ग आवाति मारुतः
०८१५०१९१ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना

०८१५०१९३ पाण्डुरेण प्रतिच्छन्न मार्गे यान्ति सुरप्रियाः
०८१५०२०१ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम्
०८१५०२०३ शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम्
०८१५०२११ मृदङ्गशङ्खानकदुन्दुभिस्वनैः सतालवीणामुरजेष्टवेणुभिः
०८१५०२१३ नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभाम्
०८१५०२२१ यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः
०८१५०२२३ मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्ति यत्
०८१५०२३१ तां देवधानीं स वरूथिनीपतिर्बहिः समन्ताद्रुरुधे पृतन्यया
०८१५०२३३ आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन्भयमिन्द्रयोषिताम्
०८१५०२४१ मघवांस्तमभिप्रेत्य बलेः परममुद्यमम्
०८१५०२४३ सर्वदेवगणोपेतो गुरुमेतदुवाच ह
०८१५०२५१ भगवन्नुद्यमो भूयान्बलेर्नः पूर्ववैरिणः
०८१५०२५३ अविषह्यमिमं मन्ये केनासीत्तेजसोर्जितः
०८१५०२६१ नैनं कश्चित्कुतो वापि प्रतिव्योढुमधीश्वरः
०८१५०२६३ पिबन्निव मुखेनेदं लिहन्निव दिशो दश
०८१५०२६५ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः
०८१५०२७१ ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः
०८१५०२७३ ओजः सहो बलं तेजो यत एतत्समुद्यमः
०८१५०२८० श्रीगुरुरुवाच
०८१५०२८१ जानामि मघवन्छत्रोरुन्नतेरस्य कारणम्
०८१५०२८३ शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः
०८१५०२९१ ओजस्विनं बलिं जेतुं न समर्थोऽस्ति कश्चन
०८१५०२९३ भवद्विधो भवान्वापि वर्जयित्वेश्वरं हरिम्
०८१५०३०१ विजेष्यति न कोऽप्येनं ब्रह्मतेजःसमेधितम्
०८१५०३०३ नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः
०८१५०३११ तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम्
०८१५०३१३ यात कालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः
०८१५०३२१ एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः
०८१५०३२३ तेषामेवापमानेन सानुबन्धो विनङ्क्ष्यति
०८१५०३३१ एवं सुमन्त्रितार्थास्ते गुरुणार्थानुदर्शिना
०८१५०३३३ हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः

०८१५०३४१ देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीम्
०८१५०३४३ देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम्
०८१५०३५१ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः
०८१५०३५३ शतेन हयमेधानामनुव्रतमयाजयन्
०८१५०३६१ ततस्तदनुभावेन भुवनत्रयविश्रुताम्
०८१५०३६३ कीर्तिं दिक्षुवितन्वानः स रेज उडुराडिव
०८१५०३७१ बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम्
०८१५०३७३ कृतकृत्यमिवात्मानं मन्यमानो महामनाः
०८१६००१० श्रीशुक उवाच
०८१६००११ एवं पुत्रेषु नष्टेषु देवमातादितिस्तदा
०८१६००१३ हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत्
०८१६००२१ एकदा कश्यपस्तस्या आश्रमं भगवानगात्
०८१६००२३ निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात्
०८१६००३१ स पत्नीं दीनवदनां कृतासनपरिग्रहः
०८१६००३३ सभाजितो यथान्यायमिदमाह कुरूद्वह
०८१६००४१ अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनागतम्
०८१६००४३ न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः
०८१६००५१ अपि वाकुशलं किञ्चिद्गृहेषु गृहमेधिनि
०८१६००५३ धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम्
०८१६००६१ अपि वातिथयोऽभ्येत्य कुटुम्बासक्तया त्वया
०८१६००६३ गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित्
०८१६००७१ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि
०८१६००७३ यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः
०८१६००८१ अप्यग्नयस्तु वेलायां न हुता हविषा सति
०८१६००८३ त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित्
०८१६००९१ यत्पूजया कामदुघान्याति लोकान्गृहान्वितः
०८१६००९३ ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्
०८१६०१०१ अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि
०८१६०१०३ लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम्
०८१६०११० श्रीअदितिरुवाच
०८१६०१११ भद्रं द्विजगवां ब्रह्मन्धर्मस्यास्य जनस्य च

०८१६०११३ त्रिवर्गस्य परं क्षेत्रं गृहमेधिन्गृहा इमे
०८१६०१२१ अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः
०८१६०१२३ सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति
०८१६०१३१ को नु मे भगवन्कामो न सम्पद्येत मानसः
०८१६०१३३ यस्या भवान्प्रजाध्यक्ष एवं धर्मान्प्रभाषते
०८१६०१४१ तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः
०८१६०१४३ समो भवांस्तास्वसुरादिषु प्रभो तथापि भक्तं भजते महेश्वरः
०८१६०१५१ तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत
०८१६०१५३ हृतश्रियो हृतस्थानान्सपत्नैः पाहि नः प्रभो
०८१६०१६१ परैर्विवासिता साहं मग्ना व्यसनसागरे
०८१६०१६३ ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम
०८१६०१७१ यथा तानि पुनः साधो प्रपद्येरन्ममात्मजाः
०८१६०१७३ तथा विधेहि कल्याणं धिया कल्याणकृत्तम
०८१६०१८० श्रीशुक उवाच
०८१६०१८१ एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव
०८१६०१८३ अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत्
०८१६०१९१ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः
०८१६०१९३ कस्य के पतिपुत्राद्या मोह एव हि कारणम्
०८१६०२०१ उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम्
०८१६०२०३ सर्वभूतगुहावासं वासुदेवं जगद्गुरुम्
०८१६०२११ स विधास्यति ते कामान्हरिर्दीनानुकम्पनः
०८१६०२१३ अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम
०८१६०२२० श्रीअदितिरुवाच
०८१६०२२१ केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम्
०८१६०२२३ यथा मे सत्यसङ्कल्पो विदध्यात्स मनोरथम्
०८१६०२३१ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम्
०८१६०२३१ आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः
०८१६०२४० श्रीकश्यप उवाच
०८१६०२४१ एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः
०८१६०२४३ यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम्
०८१६०२५१ फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतम्

०८१६०२५३ अर्चयेदरविन्दाक्षं भक्त्या परमयान्वितः
०८१६०२६१ सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया
०८१६०२६३ यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत्
०८१६०२७१ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता
०८१६०२७३ उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय
०८१६०२८१ निर्वर्तितात्मनियमो देवमर्चेत्समाहितः
०८१६०२८३ अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि
०८१६०२९१ नमस्तुभ्यं भगवते पुरुषाय महीयसे
०८१६०२९३ सर्वभूतनिवासाय वासुदेवाय साक्षिणे
०८१६०३०१ नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च
०८१६०३०३ चतुर्विंशद्गुणज्ञाय गुणसङ्ख्यानहेतवे
०८१६०३११ नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे
०८१६०३१३ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः
०८१६०३२१ नमः शिवाय रुद्राय नमः शक्तिधराय च
०८१६०३२३ सर्वविद्याधिपतये भूतानां पतये नमः
०८१६०३३१ नमो हिरण्यगर्भाय प्राणाय जगदात्मने
०८१६०३३३ योगैश्वर्यशरीराय नमस्ते योगहेतवे
०८१६०३४१ नमस्त आदिदेवाय साक्षिभूताय ते नमः
०८१६०३४३ नारायणाय ऋषये नराय हरये नमः
०८१६०३५१ नमो मरकतश्याम वपुषेऽधिगतश्रिये
०८१६०३५३ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे
०८१६०३६१ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ
०८१६०३६३ अतस्ते श्रेयसे धीराः पादरेणुमुपासते
०८१६०३७१ अन्ववर्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः
०८१६०३७३ स्पृहयन्त इवामोदं भगवान्मे प्रसीदताम्
०८१६०३८१ एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम्
०८१६०३८३ अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः
०८१६०३९१ अर्चित्वा गन्धमाल्याद्यैः पयसा स्नपयेद्विभुम्
०८१६०३९३ वस्त्रोपवीताभरण पाद्योपस्पर्शनैस्ततः
०८१६०३९५ गन्धधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया
०८१६०४०१ शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति

०८१६०४०३ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया
०८१६०४११ निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम्
०८१६०४१३ दत्त्वाचमनमर्चित्वा ताम्बूलं च निवेदयेत्
०८१६०४२१ जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम्
०८१६०४२३ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा
०८१६०४३१ कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः
०८१६०४३३ द्ब्यवरान्भोजयेद्विप्रान्पायसेन यथोचितम्
०८१६०४४१ भुञ्जीत तैरनुज्ञातः सेष्टः शेषं सभाजितैः
०८१६०४४३ ब्रह्मचार्यथ तद्रात्र्यां श्वो भूते प्रथमेऽहनि
०८१६०४५१ स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः
०८१६०४५३ पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनम्
०८१६०४६१ पयोभक्षो व्रतमिदं चरेद्विष्ण्वर्चनादृतः
०८१६०४६३ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत्
०८१६०४७१ एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतम्
०८१६०४७३ हरेराराधनं होममर्हणं द्विजतर्पणम्
०८१६०४८१ प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशीम्
०८१६०४८३ ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत्
०८१६०४९१ वर्जयेदसदालापं भोगानुच्चावचांस्तथा
०८१६०४९३ अहिंस्रः सर्वभूतानां वासुदेवपरायणः
०८१६०५०१ त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभोः
०८१६०५०३ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः
०८१६०५११ पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः
०८१६०५१३ चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे
०८१६०५२१ सूक्तेन तेन पुरुषं यजेत सुसमाहितः
०८१६०५२३ नैवेद्यं चातिगुणवद्दद्यात्पुरुषतुष्टिदम्
०८१६०५३१ आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः
०८१६०५३३ तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः
०८१६०५४१ भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते
०८१६०५४३ अन्यांश्च ब्राह्मणान्छक्त्या ये च तत्र समागताः
०८१६०५५१ दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः
०८१६०५५३ अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान्

०८१६०५६१ भुक्तवत्सु च सर्वेषु दीनान्धकृपणादिषु
०८१६०५६३ विष्णोस्तत्प्रीणनं विद्वान्भुञ्जीत सह बन्धुभिः
०८१६०५७१ नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः
०८१६०५७३ कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम्
०८१६०५८१ एतत्पयोव्रतं नाम पुरुषाराधनं परम्
०८१६०५८३ पितामहेनाभिहितं मया ते समुदाहृतम्
०८१६०५९१ त्वं चानेन महाभागे सम्यक्चीर्णेन केशवम्
०८१६०५९३ आत्मना शुद्धभावेन नियतात्मा भजाव्ययम्
०८१६०६०१ अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम्
०८१६०६०३ तपःसारमिदं भद्रे दानं चेश्वरतर्पणम्
०८१६०६११ त एव नियमाः साक्षात्त एव च यमोत्तमाः
०८१६०६१३ तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः
०८१६०६२१ तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धयाचर
०८१६०६२३ भगवान्परितुष्टस्ते वरानाशु विधास्यति
०८१७००१० श्रीशुक उवाच
०८१७००११ इत्युक्ता सादिती राजन्स्वभर्त्रा कश्यपेन वै
०८१७००१३ अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता
०८१७००२१ चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम्
०८१७००२३ प्रगृह्येन्द्रियदुष्टाश्वान्मनसा बुद्धिसारथिः
०८१७००३१ मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि
०८१७००३३ वासुदेवे समाधाय चचार ह पयोव्रतम्
०८१७००४१ तस्याः प्रादुरभूत्तात भगवानादिपुरुषः
०८१७००४३ पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः
०८१७००५१ तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम्
०८१७००५३ ननाम भुवि कायेन दण्डवत्प्रीतिविह्वला
०८१७००६१ सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा
०८१७००६३ बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः
०८१७००७१ प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह
०८१७००७३ उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम्
०८१७००८० श्रीअदितिरुवाच
०८१७००८१ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद

०८१७००८२ तीर्थश्रवः श्रवणमङ्गलनामधेय
०८१७००८३ आपन्नलोकवृजिनोपशमोदयाद्य
०८१७००८४ शं नः कृधीश भगवन्नसि दीननाथः
०८१७००९१ विश्वाय विश्वभवनस्थितिसंयमाय
०८१७००९२ स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने
०८१७००९३ स्वस्थाय शश्वदुपबृंहितपूर्णबोध
०८१७००९४ व्यापादितात्मतमसे हरये नमस्ते
०८१७०१०१ आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्
०८१७०१०२ द्योभूरसाः सकलयोगगुणास्त्रिवर्गः
०८१७०१०३ ज्ञानं च केवलमनन्त भवन्ति तुष्टात्
०८१७०१०४ त्वत्तो नृणां किमु सपत्नजयादिराशीः
०८१७०११० श्रीशुक उवाच
०८१७०१११ अदित्यैवं स्तुतो राजन्भगवान्पुष्करेक्षणः
०८१७०११३ क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत
०८१७०१२० श्रीभगवानुवाच
०८१७०१२१ देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम्
०८१७०१२३ यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः
०८१७०१३१ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान्
०८१७०१३३ प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम्
०८१७०१४१ इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम्
०८१७०१४३ स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः
०८१७०१५१ आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः
०८१७०१५३ नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि
०८१७०१६१ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः
०८१७०१६३ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति
०८१७०१७१ अथाप्युपायो मम देवि चिन्त्यः सन्तोषितस्य व्रतचर्यया ते
०८१७०१७३ ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात्
०८१७०१८१ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः
०८१७०१८३ स्वांशेन पुत्रत्वमुपेत्य ते सुतान्गोप्तास्मि मारीचतपस्यधिष्ठितः
०८१७०१९१ उपधाव पतिं भद्रे प्रजापतिमकल्मषम्
०८१७०१९३ मां च भावयती पत्यावेवं रूपमवस्थितम्

०८१७०२०१ नैतत्परस्मा आख्येयं पृष्टयापि कथञ्चन
०८१७०२०३ सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम्
०८१७०२१० श्रीशुक उवाच
०८१७०२११ एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत
०८१७०२१३ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः
०८१७०२२१ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत्
०८१७०२२३ स वै समाधियोगेन कश्यपस्तदबुध्यत
०८१७०२३१ प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः
०८१७०२३३ सोऽदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम्
०८१७०२३५ अमाहितमना राजन्दारुण्यग्निं यथानिलः
०८१७०२४१ अदितेर्धिष्ठितं गर्भं भगवन्तं सनातनम्
०८१७०२४३ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः
०८१७०२५० श्रीब्रह्मोवाच
०८१७०२५१ जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते
०८१७०२५३ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः
०८१७०२६१ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे
०८१७०२६३ त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे
०८१७०२७१ त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः
०८१७०२७३ कालो भवानाक्षिपतीश विश्वं स्रोतो यथान्तः पतितं गभीरम्
०८१७०२८१ त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्भविष्णुः
०८१७०२८३ दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु
०८१८००१० श्रीशुक उवाच
०८१८००११ इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम्
०८१८००१३ चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः
०८१८००२१ श्यामावदातो झषराजकुण्डल त्विषोल्लसच्छ्रीवदनाम्बुजः पुमान्
०८१८००२३ श्रीवत्सवक्षा बलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः
०८१८००३१ मधुव्रातव्रतविघुष्टया स्वया विराजितः श्रीवनमालया हरिः
०८१८००३३ प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कण्ठनिविष्टकौस्तुभः
०८१८००४१ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः
०८१८००४३ द्यौरन्तरीक्षं क्षितिरग्निजिह्वा गावो द्विजाः सञ्जहृषुर्नगाश्च
०८१८००५१ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः

०८१८००५३ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम्
०८१८००६१ द्वादश्यां सवितातिष्ठन्मध्यन्दिनगतो नृप
०८१८००६३ विजयानाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः
०८१८००७१ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः
०८१८००७३ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत्
०८१८००८१ प्रीताश्चाप्सरसोऽनृत्यन्गन्धर्वप्रवरा जगुः
०८१८००८३ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः
०८१८००९१ सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः
०८१८००९३ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः
०८१८०१०१ गायन्तोऽतिप्रशंसन्तो नृत्यन्तो विबुधानुगाः
०८१८०१०३ अदित्या आश्रमपदं कुसुमैः समवाकिरन्
०८१८०१११ दृष्ट्वादितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता
०८१८०११३ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः
०८१८०१२१ यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः
०८१८०१२३ बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः
०८१८०१३१ तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः
०८१८०१३३ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम्
०८१८०१४१ तस्योपनीयमानस्य सावित्रीं सविताब्रवीत्
०८१८०१४३ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात्
०८१८०१५१ ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः
०८१८०१५३ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः
०८१८०१६१ कमण्डलुं वेदगर्भः कुशान्सप्तर्षयो ददुः
०८१८०१६३ अक्षमालां महाराज सरस्वत्यव्ययात्मनः
०८१८०१७१ तस्मा इत्युपनीताय यक्षराट्पात्रिकामदात्
०८१८०१७३ भिक्षां भगवती साक्षादुमादादम्बिका सती
०८१८०१८१ स ब्रह्मवर्चसेनैवं सभां सम्भावितो वटुः
०८१८०१८३ ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः
०८१८०१९१ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम्
०८१८०१९३ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः
०८१८०२०१ श्रुत्वाश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः
०८१८०२०३ जगाम तत्राखिलसारसम्भृतो भारेण गां सन्नमयन्पदे पदे

०८१८०२११ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके
०८१८०२१३ प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविम्
०८१८०२२१ ते ऋत्विजो यजमानः सदस्या हतत्विषो वामनतेजसा नृप
०८१८०२२३ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः
०८१८०२३१ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः
०८१८०२३३ छत्रं सदण्डं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम्
०८१८०२४१ मौञ्ज्या मेखलया वीतमुपवीताजिनोत्तरम्
०८१८०२४३ जटिलं वामनं विप्रं मायामाणवकं हरिम्
०८१८०२५१ प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः
०८१८०२५३ प्रत्यगृह्णन्समुत्थाय सङ्क्षिप्तास्तस्य तेजसा
०८१८०२६१ यजमानः प्रमुदितो दर्शनीयं मनोरमम्
०८१८०२६३ रूपानुरूपावयवं तस्मा आसनमाहरत्
०८१८०२७१ स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः
०८१८०२७३ अवनिज्यार्चयामास मुक्तसङ्गमनोरमम्
०८१८०२८१ तत्पादशौचं जनकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्सुमङ्गलम्
०८१८०२८३ यद्देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या
०८१८०२९० श्रीबलिरुवाच
०८१८०२९१ स्वागतं ते नमस्तुभ्यं ब्रह्मन्किं करवाम ते
०८१८०२९३ ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्धरम्
०८१८०३०१ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम्
०८१८०३०३ अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान्
०८१८०३११ अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः
०८१८०३१३ हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव
०८१८०३२१ यद्यद्वटो वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये
०८१८०३२३ गां काञ्चनं गुणवद्धाम मृष्टं तथान्नपेयमुत वा विप्रकन्याम्
०८१८०३२५ ग्रामान्समृद्धांस्तुरगान्गजान्वा रथांस्तथार्हत्तम सम्प्रतीच्छ
०८१९००१० श्रीशुक उवाच
०८१९००११ इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम्
०८१९००१३ निशम्य भगवान्प्रीतः प्रतिनन्द्येदमब्रवीत्
०८१९००२० श्रीभगवानुवाच
०८१९००२१ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम्

०८१९००२३ यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः
०८१९००३१ न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान्
०८१९००३३ प्रत्याख्याता प्रतिश्रुत्य यो वादाता द्विजातये
०८१९००४१ न सन्ति तीर्थे युधि चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृप
०८१९००४३ युष्मत्कुले यद्यशसामलेन प्रह्लाद उद्भाति यथोडुपः खे
०८१९००५१ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम्
०८१९००५३ प्रतिवीरं दिग्विजये नाविन्दत गदायुधः
०८१९००६१ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम्
०८१९००६३ आत्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन्
०८१९००७१ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा
०८१९००७३ हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः
०८१९००८१ तमायान्तं समालोक्य शूलपाणिं कृतान्तवत्
०८१९००८३ चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः
०८१९००९१ यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव
०८१९००९३ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः
०८१९०१०१ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र
०८१९०१०३ श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः
०८१९०१११ स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद
०८१९०११३ क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः
०८१९०१२१ अपश्यन्निति होवाच मयान्विष्टमिदं जगत्
०८१९०१२३ भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान्
०८१९०१३१ वैरानुबन्ध एतावानामृत्योरिह देहिनाम्
०८१९०१३३ अज्ञानप्रभवो मन्युरहंमानोपबृंहितः
०८१९०१४१ पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः
०८१९०१४३ स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात्स याचितः
०८१९०१५१ भवानाचरितान्धर्मानास्थितो गृहमेधिभिः
०८१९०१५३ ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः
०८१९०१६१ तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात्
०८१९०१६३ पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम
०८१९०१७१ नान्यत्ते कामये राजन्वदान्याज्जगदीश्वरात्
०८१९०१७३ नैनः प्राप्नोति वै विद्वान्यावदर्थप्रतिग्रहः

०८१९०१८० श्रीबलिरुवाच

०८१९०१८१ अहो ब्राह्मणदायाद वाचस्ते वृद्धसम्मताः

०८१९०१८३ त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा

०८१९०१९१ मां वचोभिः समाराध्य लोकानामेकमीश्वरम्

०८१९०१९३ पदत्रयं वृणीते योऽबुद्धिमान्द्वीपदाशुषम्

०८१९०२०१ न पुमान्मामुपव्रज्य भूयो याचितुमर्हति

०८१९०२०३ तस्माद्वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे

०८१९०२१० श्रीभगवानुवाच

०८१९०२११ यावन्तो विषयाः प्रेष्ठास्त्रिलोक्यामजितेन्द्रियम्

०८१९०२१३ न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप

०८१९०२२१ त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते

०८१९०२२३ नववर्षसमेतेन सप्तद्वीपवरेच्छया

०८१९०२३१ सप्तद्वीपाधिपतयो नृपा वैण्यगयादयः

०८१९०२३३ अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम्

०८१९०२४१ यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम्

०८१९०२४३ नासन्तुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः

०८१९०२५१ पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः

०८१९०२५३ यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः

०८१९०२६१ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते

०८१९०२६३ तत्प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः

०८१९०२७१ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात्

०८१९०२७३ एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम्

०८१९०२८० श्रीशुक उवाच

०८१९०२८१ इत्युक्तः स हसन्नाह वाञ्छातः प्रतिगृह्यताम्

०८१९०२८३ वामनाय महीं दातुं जग्राह जलभाजनम्

०८१९०२९१ विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम्

०८१९०२९३ जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः

०८१९०३०० श्रीशुक्र उवाच

०८१९०३०१ एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः

०८१९०३०३ कश्यपाददितेर्जातो देवानां कार्यसाधकः

०८१९०३११ प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता

०८१९०३१३ न साधु मन्ये दैत्यानां महानुपगतोऽनयः
०८१९०३२१ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम्
०८१९०३२३ दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः
०८१९०३३१ त्रिभिः क्रमैरिमाल्लोकान्विश्वकायः क्रमिष्यति
०८१९०३३३ सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम्
०८१९०३४१ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः
०८१९०३४३ खं च कायेन महता तार्तीयस्य कुतो गतिः
०८१९०३५१ निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम्
०८१९०३५३ प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान्
०८१९०३६१ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते
०८१९०३६३ दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः
०८१९०३७१ धर्माय यशसेऽर्थाय कामाय स्वजनाय च
०८१९०३७३ पञ्चधा विभजन्वित्तमिहामुत्र च मोदते
०८१९०३८१ अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम
०८१९०३८३ सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत्
०८१९०३९१ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते
०८१९०३९३ वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः
०८१९०४०१ तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात्
०८१९०४०३ एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः
०८१९०४११ पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति
०८१९०४१३ यत्किञ्चिदोमिति ब्रूयात्तेन रिच्येत वै पुमान्
०८१९०४१५ भिक्षवे सर्वमों कुर्वन्नालं कामेन चात्मने
०८१९०४२१ अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः
०८१९०४२३ सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः
०८१९०४३१ स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे
०८१९०४३३ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्
०८२०००१० श्रीशुक उवाच
०८२०००११ बलिरेवं गृहपतिः कुलाचार्येण भाषितः
०८२०००१३ तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम्
०८२०००२० श्रीबलिरुवाच
०८२०००२१ सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम्

०८२०००२३ अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित्
०८२०००३१ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम्
०८२०००३३ प्रतिश्रुत्य ददामीति प्राह्रादिः कितवो यथा
०८२०००४१ न ह्यसत्यात्परोऽधर्म इति होवाच भूरियम्
०८२०००४३ सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम्
०८२०००५१ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात्
०८२०००५३ न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात्
०८२०००६१ यद्यद्धास्यति लोकेऽस्मिन्सम्परेतं धनादिकम्
०८२०००६३ तस्य त्यागे निमित्तं किं विप्रस्तुष्येन्न तेन चेत्
०८२०००७१ श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः
०८२०००७३ दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु
०८२०००८१ यैरियं बुभुजे ब्रह्मन्दैत्येन्द्रैरनिवर्तिभिः
०८२०००८३ तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि
०८२०००९१ सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः
०८२०००९३ न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः
०८२००१०१ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः
०८२००१०३ कुतः पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम्
०८२००१११ यजन्ति यज्ञं क्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः
०८२००११३ स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने
०८२००१२१ यद्यप्यसावधर्मेण मां बध्नीयादनागसम्
०८२००१२३ तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम्
०८२००१३१ एष वा उत्तमश्लोको न जिहासति यद्यशः
०८२००१३३ हत्वा मैनां हरेद्युद्धे शयीत निहतो मया
०८२००१४० श्रीशुक उवाच
०८२००१४१ एवमश्रद्धितं शिष्यमनादेशकरं गुरुः
०८२००१४३ शशाप दैवप्रहितः सत्यसन्धं मनस्विनम्
०८२००१५१ दृढं पण्डितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया
०८२००१५३ मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः
०८२००१६१ एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान्
०८२००१६३ वामनाय ददावेनामर्चित्वोदकपूर्वकम्
०८२००१७१ विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी

०८२००१७३ आनिन्ये कलशं हैममवनेजन्यपां भृतम्
०८२००१८१ यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा
०८२००१८३ अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः
०८२००१९१ तदासुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः
०८२००१९३ तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदान्विताः
०८२००२०१ नेदुर्मुहुर्दुन्दुभयः सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः
०८२००२०३ मनस्विनानेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम्
०८२००२११ तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम्
०८२००२१३ भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत
०८२००२२१ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत्
०८२००२२३ ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम्
०८२००२३१ रसामचष्टाङ्घ्रितलेऽथ पादयोर्महीं महीध्रान्पुरुषस्य जङ्घयोः
०८२००२३३ पतत्त्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्रसेनः
०८२००२४१ सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान्
०८२००२४३ नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि चर्क्षमालाम्
०८२००२५१ हृद्यङ्ग धर्मं स्तनयोर्मुरारेरृतं च सत्यं च मनस्यथेन्दुम्
०८२००२५३ श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान्
०८२००२६१ इन्द्रप्रधानानमरान्भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि
०८२००२६३ केशेषु मेघाञ्छ्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम्
०८२००२७१ वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु
०८२००२७३ अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम्
०८२००२८१ स्पर्शे च कामं नृप रेतसाम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम्
०८२००२८३ छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च
०८२००२९१ नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च
०८२००२९३ प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि ददर्श वीरः
०८२००३०१ सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग
०८२००३०३ सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम्
०८२००३११ पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी
०८२००३१३ विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च
०८२००३२१ सुनन्दमुख्या उपतस्थुरीशं पार्षदमुख्याः सहलोकपालाः
०८२००३२३ स्फुरत्किरीटाङ्गदमीनकुण्डलः श्रीवत्सरत्नोत्तममेखलाम्बरैः

०८२००३३१ मधुव्रतस्रग्वनमालयावृतो रराज राजन्भगवानुरुक्रमः
०८२००३३३ क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः
०८२००३४१ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि
०८२००३४३ उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः
०८२१००१० श्रीशुक उवाच
०८२१००११ सत्यं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात्
०८२१००१३ मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः
०८२१००२१ वेदोपवेदा नियमा यमान्वितास्तर्केतिहासाङ्गपुराणसंहिताः
०८२१००२३ ये चापरे योगसमीरदीपित ज्ञानाग्निना रन्धितकर्मकल्मषाः
०८२१००२५ ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम्
०८२१००३१ अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोऽर्हणोदकम्
०८२१००३३ समर्च्य भक्त्याभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः स्वयम्
०८२१००४१ धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र
०८२१००४३ स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः
०८२१००५१ ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः
०८२१००५३ सानुगा बलिमाजह्रुः सङ्क्षिप्तात्मविभूतये
०८२१००६१ तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः
०८२१००६३ धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः
०८२१००७१ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः
०८२१००७३ नृत्यवादित्रगीतैश्च शङ्खदुन्दुभिनिःस्वनैः
०८२१००८१ जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः
०८२१००८३ विजयं दिक्षु सर्वासु महोत्सवमघोषयत्
०८२१००९१ महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाञ्चया
०८२१००९३ ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः
०८२१०१०१ न वायं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः
०८२१०१०३ द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति
०८२१०१११ अनेन याचमानेन शत्रुणा वटुरूपिणा
०८२१०११३ सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि
०८२१०१२१ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः
०८२१०१२३ नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः
०८२१०१३१ तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः

०८२१०१३३ इत्यायुधानि जगृहुर्बलेरनुचरासुराः
०८२१०१४१ ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः
०८२१०१४३ अनिच्छन्तो बले राजन्प्राद्रवञ्जातमन्यवः
०८२१०१५१ तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप
०८२१०१५३ प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः
०८२१०१६१ नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः
०८२१०१६३ कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्त्रिराट्
०८२१०१७१ जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः
०८२१०१७३ सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीम्
०८२१०१८१ हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः
०८२१०१८३ वारयामास संरब्धान्काव्यशापमनुस्मरन्
०८२१०१९१ हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः
०८२१०१९३ मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत्
०८२१०२०१ यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये
०८२१०२०३ तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान्
०८२१०२११ यो नो भवाय प्रागासीदभवाय दिवौकसाम्
०८२१०२१३ स एव भगवानद्य वर्तते तद्विपर्ययम्
०८२१०२२१ बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभिः
०८२१०२२३ सामादिभिरुपायैश्च कालं नात्येति वै जनः
०८२१०२३१ भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः
०८२१०२३३ दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः
०८२१०२४१ एतान्वयं विजेष्यामो यदि दैवं प्रसीदति
०८२१०२४३ तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते
०८२१०२५० श्रीशुक उवाच
०८२१०२५१ पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः
०८२१०२५३ रसां निर्विविशू राजन्विष्णुपार्षद ताडिताः
०८२१०२६१ अथ तार्क्ष्यसुतो ज्ञात्वा विराट्प्रभुचिकीर्षितम्
०८२१०२६३ बबन्ध वारुणैः पाशैर्बलिं सूत्येऽहनि क्रतौ
०८२१०२७१ हाहाकारो महानासीद्रोदस्योः सर्वतो दिशम्
०८२१०२७३ निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना
०८२१०२८१ तं बद्धं वारुणैः पाशैर्भगवानाह वामनः

०८२१०२८३ नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप
०८२१०२९१ पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयासुर
०८२१०२९३ द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय
०८२१०३०१ यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः
०८२१०३०३ यावद्वर्षति पर्जन्यस्तावती भूरियं तव
०८२१०३११ पदैकेन मयाक्रान्तो भूर्लोकः खं दिशस्तनोः
०८२१०३१३ स्वर्लोकस्ते द्वितीयेन पश्यतस्ते स्वमात्मना
०८२१०३२१ प्रतिश्रुतमदातुस्ते निरये वास इष्यते
०८२१०३२३ विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः
०८२१०३३१ वृथा मनोरथस्तस्य दूरः स्वर्गः पतत्यधः
०८२१०३३३ प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते
०८२१०३४१ विप्रलब्धो ददामीति त्वयाहं चाढ्यमानिना
०८२१०३४३ तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समाः
०८२२००१० श्रीशुक उवाच
०८२२००११ एवं विप्रकृतो राजन्बलिर्भगवतासुरः
०८२२००१३ भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः
०८२२००२० श्रीबलिरुवाच
०८२२००२१ यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते
०८२२००२३ करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम्
०८२२००३१ बिभेमि नाहं निरयात्पदच्च्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात्
०८२२००३३ नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा
०८२२००४१ पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम्
०८२२००४३ यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि
०८२२००५१ त्वं नूनमसुराणां नः परोक्षः परमो गुरुः
०८२२००५३ यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत्
०८२२००६१ यस्मिन्वैरानुबन्धेन व्यूढेन विबुधेतराः
०८२२००६३ बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः
०८२२००७१ तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा
०८२२००७३ बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे
०८२२००८१ पितामहो मे भवदीयसम्मतः प्रह्राद आविष्कृतसाधुवादः
०८२२००८३ भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वं परमः स्वपित्रा

०८२२००९१ किमात्मनानेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः
०८२२००९३ किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः
०८२२०१०१ इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम्
०८२२०१०३ ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तम
०८२२०१११ अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः
०८२२०११३ इदं कृतान्तान्तिकवर्ति जीवितं ययाध्रुवं स्तब्धमतिर्न बुध्यते
०८२२०१२० श्रीशुक उवाच
०८२२०१२१ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः
०८२२०१२३ आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः
०८२२०१३१ तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम्
०८२२०१३३ प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं शुभगर्षभमैक्षत
०८२२०१४१ तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत्
०८२२०१४३ ननाम मूर्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह
०८२२०१५१ स तत्र हासीनमुदीक्ष्य सत्पतिं हरिं सुनन्दाद्यनुगैरुपासितम्
०८२२०१५३ उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविक्लवः
०८२२०१६० श्रीप्रह्लाद उवाच
०८२२०१६१ त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम्
०८२२०१६३ मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात्
०८२२०१७१ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा
०८२२०१७३ तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे
०८२२०१८० श्रीशुक उवाच
०८२२०१८१ तस्यानुश्रृण्वतो राजन्प्रह्लादस्य कृताञ्जलेः
०८२२०१८३ हिरण्यगर्भो भगवानुवाच मधुसूदनम्
०८२२०१९१ बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला
०८२२०१९३ प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप
०८२२०२०० श्रीविन्ध्यावलिरुवाच
०८२२०२०१ क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः
०८२२०२०३ कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः
०८२२०२१० श्रीब्रह्मोवाच
०८२२०२११ भूतभावन भूतेश देवदेव जगन्मय
०८२२०२१३ मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम्

०८२२०२२१ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये
०८२२०२२३ निवेदितं च सर्वस्वमात्माविक्लवया धिया
०८२२०२३१ यत्पादयोरशठधीः सलिलं प्रदाय
०८२२०२३२ दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम्
०८२२०२३३ अप्युत्तमां गतिमसौ भजते त्रिलोकीं
०८२२०२३४ दाश्वानविक्लवमनाः कथमार्तिमृच्छेत्
०८२२०२४० श्रीभगवानुवाच
०८२२०२४१ ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहम्
०८२२०२४३ यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते
०८२२०२५१ यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः
०८२२०२५३ नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत्
०८२२०२६१ जन्मकर्मवयोरूप विद्यैश्वर्यधनादिभिः
०८२२०२६३ यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः
०८२२०२७१ मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः
०८२२०२७३ सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः
०८२२०२८१ एष दानवदैत्यानामग्रनीः कीर्तिवर्धनः
०८२२०२८३ अजैषीदजयां मायां सीदन्नपि न मुह्यति
०८२२०२९१ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः
०८२२०२९३ ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः
०८२२०३०१ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः
०८२२०३०३ छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक्
०८२२०३११ एष मे प्रापितः स्थानं दुष्प्रापममरैरपि
०८२२०३१३ सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः
०८२२०३२१ तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम्
०८२२०३२३ यदाधयो व्याधयश्च क्लमस्तन्द्रा पराभवः
०८२२०३२५ नोपसर्गा निवसतां सम्भवन्ति ममेक्षया
०८२२०३३१ इन्द्रसेन महाराज याहि भो भद्रमस्तु ते
०८२२०३३३ सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः
०८२२०३४१ न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे
०८२२०३४३ त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति
०८२२०३५१ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम्

०८२२०३५३ सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान्
०८२२०३६१ तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः
०८२२०३६३ दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यति
०८२३००१० श्रीशुक उवाच
०८२३००११ इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः
०८२३००१३ बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराब्रवीत्
०८२३००२० श्रीबलिरुवाच
०८२३००२१ अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः
०८२३००२३ यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः
०८२३००३० श्रीशुक उवाच
०८२३००३१ इत्युक्त्वा हरिमानत्य ब्रह्माणं सभवं ततः
०८२३००३३ विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः
०८२३००४१ एवमिन्द्राय भगवान्प्रत्यानीय त्रिविष्टपम्
०८२३००४३ पूरयित्वादितेः काममशासत्सकलं जगत्
०८२३००५१ लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम्
०८२३००५३ निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत्
०८२३००६० श्रीप्रह्लाद उवाच
०८२३००६१ नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरेऽन्ये
०८२३००६३ यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः
०८२३००७१ यत्पादपद्ममकरन्दनिषेवणेन
०८२३००७२ ब्रह्मादयः शरणदाश्नुवते विभूतीः
०८२३००७३ कस्माद्वयं कुसृतयः खलयोनयस्ते
०८२३००७४ दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः
०८२३००८१ चित्रं तवेहितमहोऽमितयोगमाया
०८२३००८२ लीलाविसृष्टभुवनस्य विशारदस्य
०८२३००८३ सर्वात्मनः समदृशोऽविषमः स्वभावो
०८२३००८४ भक्तप्रियो यदसि कल्पतरुस्वभावः
०८२३००९० श्रीभगवानुवाच
०८२३००९१ वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम्
०८२३००९३ मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह
०८२३०१०१ नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम्

०८२३०१०३ मद्दर्शनमहाह्लाद ध्वस्तकर्मनिबन्धनः
०८२३०११० श्रीशुक उवाच
०८२३०१११ आज्ञां भगवतो राजन्प्रह्लादो बलिना सह
०८२३०११३ बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः
०८२३०१२१ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः
०८२३०१२३ प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम्
०८२३०१३१ अथाहोशनसं राजन्हरिर्नारायणोऽन्तिके
०८२३०१३३ आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम्
०८२३०१४१ ब्रह्मन्सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः
०८२३०१४३ यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत्
०८२३०१५० श्रीशुक्र उवाच
०८२३०१५१ कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान्
०८२३०१५३ यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः
०८२३०१६१ मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः
०८२३०१६३ सर्वं करोति निश्छिद्रमनुसङ्कीर्तनं तव
०८२३०१७१ तथापि वदतो भूमन्करिष्याम्यनुशासनम्
०८२३०१७३ एतच्छ्रेयः परं पुंसां यत्तवाज्ञानुपालनम्
०८२३०१८० श्रीशुक उवाच
०८२३०१८१ प्रतिनन्द्य हरेराज्ञामुशना भगवानिति
०८२३०१८३ यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह
०८२३०१९१ एवं बलेर्महीं राजन्भिक्षित्वा वामनो हरिः
०८२३०१९३ ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम्
०८२३०२०१ प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः
०८२३०२०३ दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च
०८२३०२११ कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च
०८२३०२१३ लोकानां लोकपालानामकरोद्वामनं पतिम्
०८२३०२२१ वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः
०८२३०२२३ मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः
०८२३०२३१ उपेन्द्रं कल्पयां चक्रे पतिं सर्वविभूतये
०८२३०२३३ तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप
०८२३०२४१ ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम्

०८२३०२४३ लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः
०८२३०२५१ प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः
०८२३०२५३ श्रिया परमया जुष्टो मुमुदे गतसाध्वसः
०८२३०२६१ ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप
०८२३०२६३ पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये
०८२३०२७१ सुमहत्कर्म तद्विष्णोर्गायन्तः परमद्भुतम्
०८२३०२७३ धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे
०८२३०२८१ सर्वमेतन्मयाख्यातं भवतः कुलनन्दन
०८२३०२८३ उरुक्रमस्य चरितं श्रोतॄणामघमोचनम्
०८२३०२९१ पारं महिम्न उरुविक्रमतो गृणानो
०८२३०२९२ यः पार्थिवानि विममे स रजांसि मर्त्यः
०८२३०२९३ किं जायमान उत जात उपैति मर्त्य
०८२३०२९४ इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य
०८२३०३०१ य इदं देवदेवस्य हरेरद्भुतकर्मणः
०८२३०३०३ अवतारानुचरितं शृण्वन्याति परां गतिम्
०८२३०३११ क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे
०८२३०३१३ यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः
०८२४००१० श्रीराजोवाच
०८२४००११ भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः
०८२४००१३ अवतारकथामाद्यां मायामत्स्यविडम्बनम्
०८२४००२१ यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम्
०८२४००२३ तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः
०८२४००३१ एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि
०८२४००३३ उत्तमश्लोकचरितं सर्वलोकसुखावहम्
०८२४००४० श्रीसूत उवाच
०८२४००४१ इत्युक्तो विष्णुरातेन भगवान्बादरायणिः
०८२४००४३ उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम्
०८२४००५० श्रीशुक उवाच
०८२४००५१ गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः
०८२४००५३ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि
०८२४००६१ उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः

०८२४००६३ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः
०८२४००७१ आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः
०८२४००७३ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप
०८२४००८१ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली
०८२४००८३ मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत्
०८२४००९१ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम्
०८२४००९३ दधार शफरीरूपं भगवान्हरिरीश्वरः
०८२४०१०१ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान्
०८२४०१०३ नारायणपरोऽतपत्तपः स सलिलाशनः
०८२४०१११ योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः
०८२४०११३ श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः
०८२४०१२१ एकदा कृतमालायां कुर्वतो जलतर्पणम्
०८२४०१२३ तस्याञ्जल्युदके काचिच्छफर्येकाभ्यपद्यत
०८२४०१३१ सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत
०८२४०१३३ उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः
०८२४०१४१ तमाह सातिकरुणं महाकारुणिकं नृपम्
०८२४०१४३ यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल
०८२४०१४५ कथं विसृजसे राजन्भीतामस्मिन्सरिज्जले
०८२४०१५१ तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम्
०८२४०१५३ अजानन्रक्षणार्थाय शफर्याः स मनो दधे
०८२४०१६१ तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः
०८२४०१६३ कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम्
०८२४०१७१ सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ
०८२४०१७३ अलब्ध्वात्मावकाशं वा इदमाह महीपतिम्
०८२४०१८१ नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे
०८२४०१८३ कल्पयौकः सुविपुलं यत्राहं निवसे सुखम्
०८२४०१९१ स एनां तत आदाय न्यधादौदञ्चनोदके
०८२४०१९३ तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत
०८२४०२०१ न म एतदलं राजन्सुखं वस्तुमुदञ्चनम्
०८२४०२०३ पृथु देहि पदं मह्यं यत्त्वाहं शरणं गता
०८२४०२११ तत आदाय सा राज्ञा क्षिप्ता राजन्सरोवरे

०८२४०२१३ तदावृत्यात्मना सोऽयं महामीनोऽन्ववर्धत
०८२४०२२१ नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः
०८२४०२२३ निधेहि रक्षायोगेन ह्रदे मामविदासिनि
०८२४०२३१ इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि
०८२४०२३३ जलाशयेऽसम्मितं तं समुद्रे प्राक्षिपज्झषम्
०८२४०२४१ क्षिप्यमाणस्तमाहेदमिह मां मकरादयः
०८२४०२४३ अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि
०८२४०२५१ एवं विमोहितस्तेन वदता वल्गुभारतीम्
०८२४०२५३ तमाह को भवानस्मान्मत्स्यरूपेण मोहयन्
०८२४०२६१ नैवं वीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा
०८२४०२६३ यो भवान्योजनशतमह्नाभिव्यानशे सरः
०८२४०२७१ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः
०८२४०२७३ अनुग्रहाय भूतानां धत्से रूपं जलौकसाम्
०८२४०२८१ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर
०८२४०२८३ भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो
०८२४०२९१ सर्वे लीलावतारास्ते भूतानां भूतिहेतवः
०८२४०२९३ ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम्
०८२४०३०१ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः
०८२४०३०३ यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः
०८२४०३१० श्रीशुक उवाच
०८२४०३११ इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये
०८२४०३१३ विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकान्तजनप्रियः प्रियम्
०८२४०३२० श्रीभगवानुवाच
०८२४०३२१ सप्तमे ह्यद्यतनादूर्ध्वमहन्येतदरिन्दम
०८२४०३२३ निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम्
०८२४०३३१ त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा
०८२४०३३३ उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता
०८२४०३४१ त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च
०८२४०३४३ सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः
०८२४०३५१ आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः
०८२४०३५३ एकार्णवे निरालोके ऋषीणामेव वर्चसा

०८२४०३६१ दोधूयमानां तां नावं समीरेण बलीयसा
०८२४०३६३ उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना
०८२४०३७१ अहं त्वामृषिभिः सार्धं सहनावमुदन्वति
०८२४०३७३ विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो
०८२४०३८१ मदीयं महिमानं च परं ब्रह्मेति शब्दितम्
०८२४०३८३ वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि
०८२४०३९१ इत्थमादिश्य राजानं हरिरन्तरधीयत
०८२४०३९३ सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत्
०८२४०४०१ आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः
०८२४०४०३ निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः
०८२४०४११ ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम्
०८२४०४१३ वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत
०८२४०४२१ ध्यायन्भगवदादेशं ददृशे नावमागताम्
०८२४०४२३ तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः
०८२४०४३१ तमूचुर्मुनयः प्रीता राजन्ध्यायस्व केशवम्
०८२४०४३३ स वै नः सङ्कटादस्मादविता शं विधास्यति
०८२४०४४१ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे
०८२४०४४३ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः
०८२४०४५१ निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा
०८२४०४५३ वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम्
०८२४०४६० श्रीराजोवाच
०८२४०४६१ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः
०८२४०४६३ यदृच्छयोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान्
०८२४०४७१ जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम्
०८२४०४७३ यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः
०८२४०४८१ यत्सेवयाग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः
०८२४०४८३ भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः
०८२४०४९१ न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम्
०८२४०४९३ कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये
०८२४०५०१ अचक्षुरन्धस्य यथाग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः
०८२४०५०३ त्वमर्कदृक्सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम्

०८२४०५११ जनो जनस्यादिशतेऽसतीं गतिं यया प्रपद्येत दुरत्ययं तमः
०८२४०५१३ त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम्
०८२४०५२१ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः
०८२४०५२३ तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः
०८२४०५३१ तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय
०८२४०५३३ छिन्ध्यर्थदीपैर्भगवन्वचोभिर्ग्रन्थीन्हृदय्यान्विवृणु स्वमोकः
०८२४०५४० श्रीशुक उवाच
०८२४०५४१ इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः
०८२४०५४३ मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत्
०८२४०५५१ पुराणसंहितां दिव्यां साङ्ख्ययोगक्रियावतीम्
०८२४०५५३ सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः
०८२४०५६१ अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम्
०८२४०५६३ नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम्
०८२४०५७१ अतीतप्रलयापाय उत्थिताय स वेधसे
०८२४०५७३ हत्वासुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः
०८२४०५८१ स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः
०८२४०५८३ विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः
०८२४०५९१ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः
०८२४०५९३ संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात्
०८२४०६०१ अवतारं हरेर्योऽयं कीर्तयेदन्वहं नरः
०८२४०६०३ सङ्कल्पास्तस्य सिध्यन्ति स याति परमां गतिम्
०८२४०६११ प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः
०८२४०६१२ श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा
०८२४०६१३ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां
०८२४०६१४ तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि
०९०१००१० श्रीराजोवाच
०९०१००११ मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे
०९०१००१२ वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च
०९०१००२१ योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः
०९०१००२२ ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया
०९०१००३१ स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम्

०९०१००३२ त्वत्तस्तस्य सुताः प्रोक्ता इक्ष्वाकुप्रमुखा नृपाः
०९०१००४१ तेषां वंशं पृथग्ब्रह्मन्वंशानुचरितानि च
०९०१००४२ कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः
०९०१००५१ ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये
०९०१००५२ तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान्
०९०१००६० श्रीसूत उवाच
०९०१००६१ एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम्
०९०१००६२ पृष्टः प्रोवाच भगवाञ्छुकः परमधर्मवित्
०९०१००७० श्रीशुक उवाच
०९०१००७१ श्रूयतां मानवो वंशः प्राचुर्येण परन्तप
०९०१००७२ न शक्यते विस्तरतो वक्तुं वर्षशतैरपि
०९०१००८१ परावरेषां भूतानामात्मा यः पुरुषः परः
०९०१००८२ स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन
०९०१००९१ तस्य नाभेः समभवत्पद्मकोषो हिरण्मयः
०९०१००९२ तस्मिञ्जज्ञे महाराज स्वयम्भूश्चतुराननः
०९०१०१०१ मरीचिर्मनसस्तस्य जज्ञे तस्यापि कश्यपः
०९०१०१०२ दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः
०९०१०१११ ततो मनुः श्राद्धदेवः संज्ञायामास भारत
०९०१०११२ श्रद्धायां जनयामास दश पुत्रान्स आत्मवान्
०९०१०१२१ इक्ष्वाकुनृगशर्याति दिष्टधृष्टकरूषकान्
०९०१०१२२ नरिष्यन्तं पृषध्रं च नभगं च कविं विभुः
०९०१०१३१ अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान्किल
०९०१०१३२ मित्रावरुणयोरिष्टिं प्रजार्थमकरोद्विभुः
०९०१०१४१ तत्र श्रद्धा मनोः पत्नी होतारं समयाचत
०९०१०१४२ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता
०९०१०१५१ प्रेषितोऽध्वर्युणा होता व्यचरत्तत्समाहितः
०९०१०१५२ गृहीते हविषि वाचा वषट्कारं गृणन्द्विजः
०९०१०१६१ होतुस्तद्व्यभिचारेण कन्येला नाम साभवत्
०९०१०१६२ तां विलोक्य मनुः प्राह नातितुष्टमना गुरुम्
०९०१०१७१ भगवन्किमिदं जातं कर्म वो ब्रह्मवादिनाम्
०९०१०१७२ विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया

०९०१०१८१ यूयं ब्रह्मविदो युक्तास्तपसा दग्धकिल्बिषाः
०९०१०१८२ कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव
०९०१०१९१ निशम्य तद्वचस्तस्य भगवान्प्रपितामहः
०९०१०१९२ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम्
०९०१०२०१ एतत्सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः
०९०१०२०२ तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा
०९०१०२११ एवं व्यवसितो राजन्भगवान्स महायशाः
०९०१०२१२ अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया
०९०१०२२१ तस्मै कामवरं तुष्टो भगवान्हरिरीश्वरः
०९०१०२२२ ददाविलाभवत्तेन सुद्युम्नः पुरुषर्षभः
०९०१०२३१ स एकदा महाराज विचरन्मृगयां वने
०९०१०२३२ वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम्
०९०१०२४१ प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान्
०९०१०२४२ दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम्
०९०१०२५१ सुकुमारवनं मेरोरधस्तात्प्रविवेश ह
०९०१०२५२ यत्रास्ते भगवाञ्छर्वो रममाणः सहोमया
०९०१०२६१ तस्मिन्प्रविष्ट एवासौ सुद्युम्नः परवीरहा
०९०१०२६२ अपश्यत्स्त्रियमात्मानमश्वं च वडवां नृप
०९०१०२७१ तथा तदनुगाः सर्वे आत्मलिङ्गविपर्ययम्
०९०१०२७२ दृष्ट्वा विमनसोऽभूवन्वीक्षमाणाः परस्परम्
०९०१०२८० श्रीराजोवाच
०९०१०२८१ कथमेवं गुणो देशः केन वा भगवन्कृतः
०९०१०२८२ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः
०९०१०२९० श्रीशुक उवाच
०९०१०२९१ एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः
०९०१०२९२ दिशो वितिमिराभासाः कुर्वन्तः समुपागमन्
०९०१०३०१ तान्विलोक्याम्बिका देवी विवासा व्रीडिता भृशम्
०९०१०३०२ भर्तुरङ्कात्समुत्थाय नीवीमाश्वथ पर्यधात्
०९०१०३११ ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः
०९०१०३१२ निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम्
०९०१०३२१ तदिदं भगवानाह प्रियायाः प्रियकाम्यया

०९०१०३२२ स्थानं यः प्रविशेदेतत्स वै योषिद्भवेदिति
०९०१०३३१ तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्ति हि
०९०१०३३२ सा चानुचरसंयुक्ता विचचार वनाद्वनम्
०९०१०३४१ अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम्
०९०१०३४२ स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान्बुधः
०९०१०३५१ सापि तं चकमे सुभ्रूः सोमराजसुतं पतिम्
०९०१०३५२ स तस्यां जनयामास पुरूरवसमात्मजम्
०९०१०३६१ एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः
०९०१०३६२ सस्मार स कुलाचार्यं वसिष्ठमिति शुश्रुम
०९०१०३७१ स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः
०९०१०३७२ सुद्युम्नस्याशयन्पुंस्त्वमुपाधावत शङ्करम्
०९०१०३८१ तुष्टस्तस्मै स भगवानृषये प्रियमावहन्
०९०१०३८२ स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते
०९०१०३९१ मासं पुमान्स भविता मासं स्त्री तव गोत्रजः
०९०१०३९२ इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम्
०९०१०४०१ आचार्यानुग्रहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया
०९०१०४०२ पालयामास जगतीं नाभ्यनन्दन्स्म तं प्रजाः
०९०१०४११ तस्योत्कलो गयो राजन्विमलश्च त्रयः सुताः
०९०१०४१२ दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः
०९०१०४२१ ततः परिणते काले प्रतिष्ठानपतिः प्रभुः
०९०१०४२२ पुरूरवस उत्सृज्य गां पुत्राय गतो वनम्
०९०२००१० श्रीशुक उवाच
०९०२००११ एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते
०९०२००१२ पुत्रकामस्तपस्तेपे यमुनायां शतं समाः
०९०२००२१ ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम्
०९०२००२२ इक्ष्वाकुपूर्वजान्पुत्राल्लेभे स्वसदृशान्दश
०९०२००३१ पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः
०९०२००३२ पालयामास गा यत्तो रात्र्यां वीरासनव्रतः
०९०२००४१ एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति
०९०२००४२ शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे
०९०२००५१ एकां जग्राह बलवान्सा चुक्रोश भयातुरा

०९०२००५२ तस्यास्तु क्रन्दितं श्रुत्वा पृषध्रोऽनुससार ह
०९०२००६१ खड्गमादाय तरसा प्रलीनोडुगणे निशि
०९०२००६२ अजानन्नच्छिनोद्बभ्रोः शिरः शार्दूलशङ्कया
०९०२००७१ व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः
०९०२००७२ निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन्
०९०२००८१ मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा
०९०२००८२ अद्राक्षीत्स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः
०९०२००९१ तं शशाप कुलाचार्यः कृतागसमकामतः
०९०२००९२ न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भवितामुना
०९०२०१०१ एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृताञ्जलिः
०९०२०१०२ अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम्
०९०२०१११ वासुदेवे भगवति सर्वात्मनि परेऽमले
०९०२०११२ एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः
०९०२०१२१ विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः
०९०२०१२२ यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः
०९०२०१३१ आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः
०९०२०१३२ विचचार महीमेतां जडान्धबधिराकृतिः
०९०२०१४१ एवं वृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम्
०९०२०१४२ तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः
०९०२०१५१ कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यं सह बन्धुभिर्वनम्
०९०२०१५२ निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः
०९०२०१६१ करूषान्मानवादासन्कारूषाः क्षत्रजातयः
०९०२०१६२ उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः
०९०२०१७१ धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ
०९०२०१७२ नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः
०९०२०१८१ वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता
०९०२०१८२ कन्या चौघवती नाम सुदर्शन उवाह ताम्
०९०२०१९१ चित्रसेनो नरिष्यन्ताद्दक्षस्तस्य सुतोऽभवत्
०९०२०१९२ तस्य मीढ्वांस्ततः पूर्ण इन्द्रसेनस्तु तत्सुतः
०९०२०२०१ वीतिहोत्रस्त्विन्द्रसेनात्तस्य सत्यश्रवा अभूत्
०९०२०२०२ उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत्

०९०२०२११ ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः
०९०२०२१२ कानीन इति विख्यातो जातूकर्ण्यो महानृषिः
०९०२०२२१ ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप
०९०२०२२२ नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु
०९०२०२३१ नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः
०९०२०२३२ भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात्
०९०२०२४१ वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः
०९०२०२४२ खनित्रः प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः
०९०२०२५१ विविंशतेः सुतो रम्भः खनीनेत्रोऽस्य धार्मिकः
०९०२०२५२ करन्धमो महाराज तस्यासीदात्मजो नृप
०९०२०२६१ तस्यावीक्षित्सुतो यस्य मरुत्तश्चक्रवर्त्यभूत्
०९०२०२६२ संवर्तोऽयाजयद्यं वै महायोग्यङ्गिरःसुतः
०९०२०२७१ मरुत्तस्य यथा यज्ञो न तथान्योऽस्ति कश्चन
०९०२०२७२ सर्वं हिरण्मयं त्वासीद्यत्किञ्चिच्चास्य शोभनम्
०९०२०२८१ अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः
०९०२०२८२ मरुतः परिवेष्टारो विश्वेदेवाः सभासदः
०९०२०२९१ मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्धनः
०९०२०२९२ सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः
०९०२०३०१ तत्सुतः केवलस्तस्माद्धुन्धुमान्वेगवांस्ततः
०९०२०३०२ बुधस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः
०९०२०३११ तं भेजेऽलम्बुषा देवी भजनीयगुणालयम्
०९०२०३१२ वराप्सरा यतः पुत्राः कन्या चेलविलाभवत्
०९०२०३२१ यस्यामुत्पादयामास विश्रवा धनदं सुतम्
०९०२०३२२ प्रादाय विद्यां परमामृषिर्योगेश्वरः पितुः
०९०२०३३१ विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः
०९०२०३३२ विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम्
०९०२०३४१ हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः
०९०२०३४२ तत्पुत्रात्संयमादासीत्कृशाश्वः सहदेवजः
०९०२०३५१ कृशाश्वात्सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम्
०९०२०३५२ इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रिताम्
०९०२०३६१ सौमदत्तिस्तु सुमतिस्तत्पुत्रो जनमेजयः

०९०२०३६२ एते वैशालभूपालास्तृणबिन्दोर्यशोधराः
०९०३००१० श्रीशुक उवाच
०९०३००११ शर्यातिर्मानवो राजा ब्रह्मिष्ठः सम्बभूव ह
०९०३००१२ यो वा अङ्गिरसां सत्रे द्वितीयमहरूचिवान्
०९०३००२१ सुकन्या नाम तस्यासीत्कन्या कमललोचना
०९०३००२२ तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम्
०९०३००३१ सा सखीभिः परिवृता विचिन्वन्त्यङ्घ्रिपान्वने
०९०३००३२ वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी
०९०३००४१ ते दैवचोदिता बाला ज्योतिषी कण्टकेन वै
०९०३००४२ अविध्यन्मुग्धभावेन सुस्रावासृक्ततो बहिः
०९०३००५१ शकृन्मूत्रनिरोधोऽभूत्सैनिकानां च तत्क्षणात्
०९०३००५२ राजर्षिस्तमुपालक्ष्य पुरुषान्विस्मितोऽब्रवीत्
०९०३००६१ अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम्
०९०३००६२ व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम्
०९०३००७१ सुकन्या प्राह पितरं भीता किञ्चित्कृतं मया
०९०३००७२ द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै
०९०३००८१ दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः
०९०३००८२ मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः
०९०३००९१ तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः
०९०३००९२ कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात्समाहितः
०९०३०१०१ सुकन्या च्यवनं प्राप्य पतिं परमकोपनम्
०९०३०१०२ प्रीणयामास चित्तज्ञा अप्रमत्तानुवृत्तिभिः
०९०३०१११ कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ
०९०३०११२ तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ
०९०३०१२१ ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः
०९०३०१२२ क्रियतां मे वयोरूपं प्रमदानां यदीप्सितम्
०९०३०१३१ बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ
०९०३०१३२ निमज्जतां भवानस्मिन्ह्रदे सिद्धविनिर्मिते
०९०३०१४१ इत्युक्तो जरया ग्रस्त देहो धमनिसन्ततः
०९०३०१४२ ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविग्रहः
०९०३०१५१ पुरुषास्त्रय उत्तस्थुरपीव्या वनिताप्रियाः

०९०३०१५२ पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः
०९०३०१६१ तान्निरीक्ष्य वरारोहा सरूपान्सूर्यवर्चसः
०९०३०१६२ अजानती पतिं साध्वी अश्विनौ शरणं ययौ
०९०३०१७१ दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ
०९०३०१७२ ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम्
०९०३०१८१ यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः
०९०३०१८२ ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम्
०९०३०१९१ राजा दुहितरं प्राह कृतपादाभिवन्दनाम्
०९०३०१९२ आशिषश्चाप्रयुञ्जानो नातिप्रीतिमना इव
०९०३०२०१ चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः
०९०३०२०२ यत्त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम्
०९०३०२११ कथं मतिस्तेऽवगतान्यथा सतां कुलप्रसूते कुलदूषणं त्विदम्
०९०३०२१२ बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः
०९०३०२२१ एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता
०९०३०२२२ उवाच तात जामाता तवैष भृगुनन्दनः
०९०३०२३१ शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम्
०९०३०२३२ विस्मितः परमप्रीतस्तनयां परिषस्वजे
०९०३०२४१ सोमेन याजयन्वीरं ग्रहं सोमस्य चाग्रहीत्
०९०३०२४२ असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा
०९०३०२५१ हन्तुं तमाददे वज्रं सद्यो मन्युरमर्षितः
०९०३०२५२ सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः
०९०३०२६१ अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः
०९०३०२६२ भिषजाविति यत्पूर्वं सोमाहुत्या बहिष्कृतौ
०९०३०२७१ उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः
०९०३०२७२ शर्यातेरभवन्पुत्रा आनर्ताद्रेवतोऽभवत्
०९०३०२८१ सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम्
०९०३०२८२ आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम
०९०३०२९१ तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम्
०९०३०२९२ ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः
०९०३०३०१ पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम्
०९०३०३०२ आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम्

०९०३०३११ तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत्
०९०३०३१२ तच्छ्रुत्वा भगवान्ब्रह्मा प्रहस्य तमुवाच ह
०९०३०३२१ अहो राजन्निरुद्धास्ते कालेन हृदि ये कृताः
०९०३०३२२ तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे
०९०३०३३१ कालोऽभियातस्त्रिणव चतुर्युगविकल्पितः
०९०३०३३२ तद्गच्छ देवदेवांशो बलदेवो महाबलः
०९०३०३४१ कन्यारत्नमिदं राजन्नररत्नाय देहि भोः
०९०३०३४२ भुवो भारावताराय भगवान्भूतभावनः
०९०३०३५१ अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः
०९०३०३५२ इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः
०९०३०३५३ त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः
०९०३०३६१ सुतां दत्त्वानवद्याङ्गीं बलाय बलशालिने
०९०३०३६२ बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम्
०९०४००१० श्रीशुक उवाच
०९०४००११ नाभागो नभगापत्यं यं ततं भ्रातरः कविम्
०९०४००१२ यविष्ठं व्यभजन्दायं ब्रह्मचारिणमागतम्
०९०४००२१ भ्रातरोऽभाङ्क्ष किं मह्यं भजाम पितरं तव
०९०४००२२ त्वां ममार्यास्तताभाङ्क्षुर्मा पुत्रक तदादृथाः
०९०४००३१ इमे अङ्गिरसः सत्रमासतेऽद्य सुमेधसः
०९०४००३२ षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि
०९०४००४१ तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः
०९०४००४२ ते स्वर्यन्तो धनं सत्र परिशेषितमात्मनः
०९०४००५१ दास्यन्ति तेऽथ तानर्च्छ तथा स कृतवान्यथा
०९०४००५२ तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषणम्
०९०४००६१ तं कश्चित्स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः
०९०४००६२ उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु
०९०४००७१ ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः
०९०४००७२ स्यान्नौ ते पितरि प्रश्नः पृष्टवान्पितरं यथा
०९०४००८१ यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित्
०९०४००८२ चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति
०९०४००९१ नाभागस्तं प्रणम्याह तवेश किल वास्तुकम्

०९०४००९२ इत्याह मे पिता ब्रह्मञ्छिरसा त्वां प्रसादये
०९०४०१०१ यत्ते पितावदद्धर्मं त्वं च सत्यं प्रभाषसे
०९०४०१०२ ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम्
०९०४०१११ गृहाण द्रविणं दत्तं मत्सत्रपरिशेषितम्
०९०४०११२ इत्युक्त्वान्तर्हितो रुद्रो भगवान्धर्मवत्सलः
०९०४०१२१ य एतत्संस्मरेत्प्रातः सायं च सुसमाहितः
०९०४०१२२ कविर्भवति मन्त्रज्ञो गतिं चैव तथात्मनः
०९०४०१३१ नाभागादम्बरीषोऽभून्महाभागवतः कृती
०९०४०१३२ नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित्
०९०४०१४० श्रीराजोवाच
०९०४०१४१ भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः
०९०४०१४२ न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः
०९०४०१५० श्रीशुक उवाच
०९०४०१५१ अम्बरीषो महाभागः सप्तद्वीपवतीं महीम्
०९०४०१५२ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि
०९०४०१६१ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम्
०९०४०१६२ विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान्
०९०४०१७१ वासुदेवे भगवति तद्भक्तेषु च साधुषु
०९०४०१७२ प्राप्तो भावं परं विश्वं येनेदं लोष्ट्रवत्स्मृतम्
०९०४०१८१ स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने
०९०४०१८२ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये
०९०४०१९१ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्
०९०४०१९२ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते
०९०४०२०१ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने
०९०४०२०२ कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः
०९०४०२११ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे
०९०४०२१२ सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह
०९०४०२२१ ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः
०९०४०२२२ ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम्
०९०४०२३१ यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः
०९०४०२३२ तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः

०९०४०२४१ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः
०९०४०२४२ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम्
०९०४०२५१ संवर्धयन्ति यत्कामाः स्वाराज्यपरिभाविताः
०९०४०२५२ दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः
०९०४०२६१ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः
०९०४०२६२ स्वधर्मेण हरिं प्रीणन्सर्वान्कामान्शनैर्जहौ
०९०४०२७१ गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिवस्तुषु
०९०४०२७२ अक्षय्यरत्नाभरणाम्बरादिष्वनन्तकोशेष्वकरोदसन्मतिम्
०९०४०२८१ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम्
०९०४०२८२ एकान्तभक्तिभावेन प्रीतो भक्ताभिरक्षणम्
०९०४०२९१ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया
०९०४०२९२ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम्
०९०४०३०१ व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः
०९०४०३०२ स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत्
०९०४०३११ महाभिषेकविधिना सर्वोपस्करसम्पदा
०९०४०३१२ अभिषिच्याम्बराकल्पैर्गन्धमाल्यार्हणादिभिः
०९०४०३२१ तद्गतान्तरभावेन पूजयामास केशवम्
०९०४०३२२ ब्राह्मणांश्च महाभागान्सिद्धार्थानपि भक्तितः
०९०४०३३१ गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम्
०९०४०३३२ पयःशीलवयोरूप वत्सोपस्करसम्पदाम्
०९०४०३४१ प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट्
०९०४०३४२ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम्
०९०४०३५१ लब्धकामैरनुज्ञातः पारणायोपचक्रमे
०९०४०३५२ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत्
०९०४०३६१ तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः
०९०४०३६२ ययाचेऽभ्यवहाराय पादमूलमुपागतः
०९०४०३७१ प्रतिनन्द्य स तां याच्ञां कर्तुमावश्यकं गतः
०९०४०३७२ निममज्ज बृहद्ध्यायन्कालिन्दीसलिले शुभे
०९०४०३८१ मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति
०९०४०३८२ चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे
०९०४०३९१ ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे

०९०४०३९२ यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत्
०९०४०४०१ अम्भसा केवलेनाथ करिष्ये व्रतपारणम्
०९०४०४०२ आहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत्
०९०४०४११ इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाच्युतम्
०९०४०४१२ प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः
०९०४०४२१ दुर्वासा यमुनाकूलात्कृतावश्यक आगतः
०९०४०४२२ राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया
०९०४०४३१ मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः
०९०४०४३२ बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत
०९०४०४४१ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत
०९०४०४४२ धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः
०९०४०४५१ यो मामतिथिमायातमातिथ्येन निमन्त्र्य च
०९०४०४५२ अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम्
०९०४०४६१ एवं ब्रुवाण उत्कृत्य जटां रोषप्रदीपितः
०९०४०४६२ तया स निर्ममे तस्मै कृत्यां कालानलोपमाम्
०९०४०४७१ तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम्
०९०४०४७२ वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः
०९०४०४८१ प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना
०९०४०४८२ ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः
०९०४०४९१ तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम्
०९०४०४९२ दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया
०९०४०५०१ तमन्वधावद्भगवद्रथाङ्गं दावाग्निरुद्धूतशिखो यथाहिम्
०९०४०५०२ तथानुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः
०९०४०५११ दिशो नभः क्ष्मां विवरान्समुद्रान्लोकान्सपालांस्त्रिदिवं गतः सः
०९०४०५१२ यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श
०९०४०५२१ अलब्धनाथः स सदा कुतश्चित्सन्त्रस्तचित्तोऽरणमेषमाणः
०९०४०५२२ देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम्
०९०४०५३० श्रीब्रह्मोवाच
०९०४०५३१ स्थानं मदीयं सहविश्वमेतत्क्रीडावसाने द्विपरार्धसंज्ञे
०९०४०५३२ भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरोभविष्यति
०९०४०५४१ अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः

०९०४०५४२ सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यार्पितं लोकहितं वहामः
०९०४०५५१ प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः
०९०४०५५२ दुर्वासाः शरणं यातः शर्वं कैलासवासिनम्
०९०४०५६० श्रीशङ्कर उवाच
०९०४०५६१ वयं न तात प्रभवाम भूम्नि यस्मिन्परेऽन्येऽप्यजजीवकोशाः
०९०४०५६२ भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः
०९०४०५७१ अहं सनत्कुमारश्च नारदो भगवानजः
०९०४०५७२ कपिलोऽपान्तरतमो देवलो धर्म आसुरिः
०९०४०५८१ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः
०९०४०५८२ विदाम न वयं सर्वे यन्मायां माययावृताः
०९०४०५९१ तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः
०९०४०५९२ तमेवं शरणं याहि हरिस्ते शं विधास्यति
०९०४०६०१ ततो निराशो दुर्वासाः पदं भगवतो ययौ
०९०४०६०२ वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह
०९०४०६११ सन्दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः
०९०४०६१२ आहाच्युतानन्त सदीप्सित प्रभो कृतागसं मावहि विश्वभावन
०९०४०६२१ अजानता ते परमानुभावं कृतं मयाघं भवतः प्रियाणाम्
०९०४०६२२ विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि
०९०४०६३० श्रीभगवानुवाच
०९०४०६३१ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज
०९०४०६३२ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः
०९०४०६४१ नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना
०९०४०६४२ श्रियं चात्यन्तिकीं ब्रह्मन्येषां गतिरहं परा
०९०४०६५१ ये दारागारपुत्राप्त प्राणान्वित्तमिमं परम्
०९०४०६५२ हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे
०९०४०६६१ मयि निर्बद्धहृदयाः साधवः समदर्शनाः
०९०४०६६२ वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा
०९०४०६७१ मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम्
०९०४०६७२ नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम्
०९०४०६८१ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्
०९०४०६८२ मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि

०९०४०६९१ उपायं कथयिष्यामि तव विप्र शृणुष्व तत्

०९०४०६९२ अयं ह्यात्माभिचारस्ते यतस्तं याहि मा चिरम्

०९०४०६९३ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम्

०९०४०७०१ तपो विद्या च विप्राणां निःश्रेयसकरे उभे

०९०४०७०२ ते एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा

०९०४०७११ ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम्

०९०४०७१२ क्षमापय महाभागं ततः शान्तिर्भविष्यति

०९०५००१० श्रीशुक उवाच

०९०५००११ एवं भगवतादिष्टो दुर्वासाश्चक्रतापितः

०९०५००१२ अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत्

०९०५००२१ तस्य सोद्यममावीक्ष्य पादस्पर्शविलज्जितः

०९०५००२२ अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम्

०९०५००३० अम्बरीष उवाच

०९०५००३१ त्वमग्निर्भगवान्सूर्यस्त्वं सोमो ज्योतिषां पतिः

०९०५००३२ त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च

०९०५००४१ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय

०९०५००४२ सर्वास्त्रघातिन्विप्राय स्वस्ति भूया इडस्पते

०९०५००५१ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक्

०९०५००५२ त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम्

०९०५००६१ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे

०९०५००६२ त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे

०९०५००७१ त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च दृशो महात्मनाम्

०९०५००७२ दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम्

०९०५००८१ यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम्

०९०५००८२ बाहूदरोर्वङ्घ्रिशिरोधराणि वृश्चन्नजस्रं प्रधने विराजसे

०९०५००९१ स त्वं जगत्त्राण खलप्रहाणये निरूपितः सर्वसहो गदाभृता

०९०५००९२ विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः

०९०५०१०१ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः

०९०५०१०२ कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः

०९०५०१११ यदि नो भगवान्प्रीत एकः सर्वगुणाश्रयः

०९०५०११२ सर्वभूतात्मभावेन द्विजो भवतु विज्वरः

०९०५०१२० श्रीशुक उवाच
०९०५०१२१ इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम्
०९०५०१२२ अशाम्यत्सर्वतो विप्रं प्रदहद्राजयाञ्चया
०९०५०१३१ स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः
०९०५०१३२ प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः
०९०५०१४० दुर्वासा उवाच
०९०५०१४१ अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे
०९०५०१४२ कृतागसोऽपि यद्राजन्मङ्गलानि समीहसे
०९०५०१५१ दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम्
०९०५०१५२ यैः सङ्गृहीतो भगवान्सात्वतामृषभो हरिः
०९०५०१६१ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः
०९०५०१६२ तस्य तीर्थपदः किं वा दासानामवशिष्यते
०९०५०१७१ राजन्ननुगृहीतोऽहं त्वयातिकरुणात्मना
०९०५०१७२ मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः
०९०५०१८१ राजा तमकृताहारः प्रत्यागमनकाङ्क्षया
०९०५०१८२ चरणावुपसङ्गृह्य प्रसाद्य समभोजयत्
०९०५०१९१ सोऽशित्वादृतमानीतमातिथ्यं सार्वकामिकम्
०९०५०१९२ तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम्
०९०५०२०१ प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै
०९०५०२०२ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा
०९०५०२११ कर्मावदातमेतत्ते गायन्ति स्वःस्त्रियो मुहुः
०९०५०२१२ कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम्
०९०५०२२० श्रीशुक उवाच
०९०५०२२१ एवं सङ्कीर्त्य राजानं दुर्वासाः परितोषितः
०९०५०२२२ ययौ विहायसामन्त्र्य ब्रह्मलोकमहैतुकम्
०९०५०२३१ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः
०९०५०२३२ मुनिस्तद्दर्शनाकाङ्क्षो राजाब्भक्षो बभूव ह
०९०५०२४१ गतेऽथ दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरत्
०९०५०२४२ ऋषेर्विमोक्षं व्यसनं च वीक्ष्य मेने स्ववीर्यं च परानुभावम्
०९०५०२५१ एवं विधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे
०९०५०२५२ क्रियाकलापैः समुवाह भक्तिं ययाविरिञ्च्यान्निरयांश्चकार

०९०५०२६० श्रीशुक उवाच
०९०५०२६१ अथाम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः
०९०५०२६२ वनं विवेशात्मनि वासुदेवे मनो दधद्ध्वस्तगुणप्रवाहः
०९०५०२७१ इत्येतत्पुण्यमाख्यानमम्बरीषस्य भूपते
०९०५०२७२ सङ्कीर्तयन्ननुध्यायन्भक्तो भगवतो भवेत्
०९०५०२८१ अम्बरीषस्य चरितं ये शृण्वन्ति महात्मनः
०९०५०२८२ मुक्तिं प्रयान्ति ते सर्वे भक्त्या विष्णोः प्रसादतः
०९०६००१० श्रीशुक उवाच
०९०६००११ विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः
०९०६००१२ विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः
०९०६००२१ रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः
०९०६००२२ अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान्
०९०६००३१ एते क्षेत्रप्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः
०९०६००३२ रथीतराणां प्रवराः क्षेत्रोपेता द्विजातयः
०९०६००४१ क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः
०९०६००४२ तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः
०९०६००५१ तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप
०९०६००५२ पञ्चविंशतिः पश्चाच्च त्रयो मध्येऽपरेऽन्यतः
०९०६००६१ स एकदाष्टकाश्राद्धे इक्ष्वाकुः सुतमादिशत्
०९०६००६२ मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम्
०९०६००७१ तथेति स वनं गत्वा मृगान्हत्वा क्रियार्हणान्
०९०६००७२ श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः
०९०६००८१ शेषं निवेदयामास पित्रे तेन च तद्गुरुः
०९०६००८२ चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम्
०९०६००९१ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाभिहितं नृपः
०९०६००९२ देशान्निःसारयामास सुतं त्यक्तविधिं रुषा
०९०६०१०१ स तु विप्रेण संवादं ज्ञापकेन समाचरन्
०९०६०१०२ त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम्
०९०६०१११ पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम्
०९०६०११२ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः
०९०६०१२१ पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः

०९०६०१२२ ककुत्स्थ इति चाप्युक्तः श्रृणु नामानि कर्मभिः
०९०६०१३१ कृतान्त आसीत्समरो देवानां सह दानवैः
०९०६०१३२ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः
०९०६०१४१ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः
०९०६०१४२ वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः
०९०६०१५१ स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्छितान्
०९०६०१५२ स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः
०९०६०१६१ तेजसाप्यायितो विष्णोः पुरुषस्य महात्मनः
०९०६०१६२ प्रतीच्यां दिशि दैत्यानां न्यरुणत्रिदशैः पुरम्
०९०६०१७१ तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम्
०९०६०१७२ यमाय भल्लैरनयद्दैत्यानभिययुर्मृधे
०९०६०१८१ तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम्
०९०६०१८२ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम्
०९०६०१९१ जित्वा परं धनं सर्वं सस्त्रीकं वज्रपाणये
०९०६०१९२ प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः
०९०६०२०१ पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः
०९०६०२०२ विश्वगन्धिस्ततश्चन्द्रो युवनाश्वस्तु तत्सुतः
०९०६०२११ श्रावस्तस्तत्सुतो येन श्रावस्ती निर्ममे पुरी
०९०६०२१२ बृहदश्वस्तु श्रावस्तिस्ततः कुवलयाश्वकः
०९०६०२२१ यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली
०९०६०२२२ सुतानामेकविंशत्या सहस्रैरहनद्वृतः
०९०६०२३१ धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः
०९०६०२३२ धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः
०९०६०२४१ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत
०९०६०२४२ दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः
०९०६०२५१ बहुलाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित्
०९०६०२५२ युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः
०९०६०२६१ भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः
०९०६०२६२ इष्टिं स्म वर्तयां चक्रुरैन्द्रीं ते सुसमाहिताः
०९०६०२७१ राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः
०९०६०२७२ दृष्ट्वा शयानान्विप्रांस्तान्पपौ मन्त्रजलं स्वयम्

०९०६०२८१ उत्थितास्ते निशम्याथ व्युदकं कलशं प्रभो
०९०६०२८२ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम्
०९०६०२९१ राज्ञा पीतं विदित्वा वै ईश्वरप्रहितेन ते
०९०६०२९२ ईश्वराय नमश्चक्रुरहो दैवबलं बलम्
०९०६०३०१ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम्
०९०६०३०२ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह
०९०६०३११ कं धास्यति कुमारोऽयं स्तन्ये रोरूयते भृशम्
०९०६०३१२ मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात्
०९०६०३२१ न ममार पिता तस्य विप्रदेवप्रसादतः
०९०६०३२२ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात्
०९०६०३३१ त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम यस्य वै
०९०६०३३२ यस्मात्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः
०९०६०३४१ यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः
०९०६०३४२ सप्तद्वीपवतीमेकः शशासाच्युततेजसा
०९०६०३५१ ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः
०९०६०३५२ सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम्
०९०६०३६१ द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः
०९०६०३६२ धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम्
०९०६०३७१ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति
०९०६०३७२ तत्सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते
०९०६०३८१ शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः
०९०६०३८२ पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम्
०९०६०३८३ तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम्
०९०६०३९१ यमुनान्तर्जले मग्नस्तप्यमानः परं तपः
०९०६०३९२ निर्वृतिं मीनराजस्य दृष्ट्वा मैथुनधर्मिणः
०९०६०४०१ जातस्पृहो नृपं विप्रः कन्यामेकामयाचत
०९०६०४०२ सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्या स्वयंवरे
०९०६०४११ स विचिन्त्याप्रियं स्त्रीणां जरठोऽहमसन्मतः
०९०६०४१२ वलीपलित एजत्क इत्यहं प्रत्युदाहृतः
०९०६०४२१ साधयिष्ये तथात्मानं सुरस्त्रीणामभीप्सितम्
०९०६०४२२ किं पुनर्मनुजेन्द्राणामिति व्यवसितः प्रभुः

०९०६०४३१ मुनिः प्रवेशितः क्षत्रा कन्यान्तःपुरमृद्धिमत्
०९०६०४३२ वृतः स राजकन्याभिरेकं पञ्चाशता वरः
०९०६०४४१ तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम्
०९०६०४४२ ममानुरूपो नायं व इति तद्गतचेतसाम्
०९०६०४५१ स बह्वृचस्ताभिरपारणीय तपःश्रियानर्घ्यपरिच्छदेषु
०९०६०४५२ गृहेषु नानोपवनामलाम्भः सरःसु सौगन्धिककाननेषु
०९०६०४६१ महार्हशय्यासनवस्त्रभूषण स्नानानुलेपाभ्यवहारमाल्यकैः
०९०६०४६२ स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गवन्दिषु
०९०६०४७१ यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः
०९०६०४७२ विस्मितः स्तम्भमजहात्सार्वभौमश्रियान्वितम्
०९०६०४८१ एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः
०९०६०४८२ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः
०९०६०४९१ स कदाचिदुपासीन आत्मापह्नवमात्मनः
०९०६०४९२ ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम्
०९०६०५०१ अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य
०९०६०५०२ अन्तर्जले वारिचरप्रसङ्गात्प्रच्यावितं ब्रह्म चिरं धृतं यत्
०९०६०५११ सङ्गं त्यजेत मिथुनव्रतीनां मुमुक्षुः
०९०६०५१२ सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि
०९०६०५१३ एकश्चरन्रहसि चित्तमनन्त ईशे
०९०६०५१४ युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः
०९०६०५२१ एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात्
०९०६०५२२ पञ्चाशदासमुत पञ्चसहस्रसर्गः
०९०६०५२३ नान्तं व्रजाम्युभयकृत्यमनोरथानां
०९०६०५२४ मायागुणैर्हृतमतिर्विषयेऽर्थभावः
०९०६०५३१ एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः
०९०६०५३२ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः
०९०६०५४१ तत्र तप्त्वा तपस्तीक्ष्णमात्मदर्शनमात्मवान्
०९०६०५४२ सहैवाग्निभिरात्मानं युयोज परमात्मनि
०९०६०५५१ ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम्
०९०६०५५२ अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः
०९०७००१० श्रीशुक उवाच

०९०७००११ मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः
०९०७००१२ पितामहेन प्रवृतो यौवनाश्वस्तु तत्सुतः
०९०७००१३ हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे
०९०७००२१ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः
०९०७००२२ तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया
०९०७००३१ गन्धर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक्
०९०७००३२ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम्
०९०७००४१ त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत्
०९०७००४२ हर्यश्वस्तत्सुतस्तस्मात्प्रारुणोऽथ त्रिबन्धनः
०९०७००५१ तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः
०९०७००५२ प्राप्तश्चाण्डालतां शापाद्गुरोः कौशिकतेजसा
०९०७००६१ सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते
०९०७००६२ पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात्
०९०७००७१ त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः
०९०७००७२ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम्
०९०७००८१ सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः
०९०७००८२ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो
०९०७००९१ यदि वीरो महाराज तेनैव त्वां यजे इति
०९०७००९२ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः
०९०७०१०१ जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत्
०९०७०१०२ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति
०९०७०१११ निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत्
०९०७०११२ दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति
०९०७०१२१ दन्ता जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत्
०९०७०१२२ यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति
०९०७०१३१ पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत्
०९०७०१३२ यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः
०९०७०१४१ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत्
०९०७०१४२ सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः
०९०७०१५१ इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा
०९०७०१५२ कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत

०९०७०१६१ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम्
०९०७०१६२ प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत
०९०७०१७१ पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम्
०९०७०१७२ रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत
०९०७०१८१ भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः
०९०७०१८२ रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत्समाम्
०९०७०१९१ एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा
०९०७०१९२ अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाह वृत्रहा
०९०७०२०१ षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम्
०९०७०२०२ उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम्
०९०७०२११ शुनःशेफं पशुं पित्रे प्रदाय समवन्दत
०९०७०२१२ ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः
०९०७०२२१ मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः
०९०७०२२२ विश्वामित्रोऽभवत्तस्मिन्होता चाध्वर्युरात्मवान्
०९०७०२३१ जमदग्निरभूद्ब्रह्मा वसिष्ठोऽयास्यः सामगः
०९०७०२३२ तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम्
०९०७०२४१ शुनःशेफस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते
०९०७०२४२ सत्यं सारं धृतिं दृष्ट्वा सभार्यस्य च भूपतेः
०९०७०२५१ विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम्
०९०७०२५२ मनः पृथिव्यां तामद्भिस्तेजसापोऽनिलेन तत्
०९०७०२६१ खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि
०९०७०२६२ तस्मिन्ज्ञानकलां ध्यात्वा तयाज्ञानं विनिर्दहन्
०९०७०२७१ हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा
०९०७०२७२ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः
०९०८००१० श्रीशुक उवाच
०९०८००११ हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्मिता
०९०८००१२ चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः
०९०८००२१ भरुकस्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः
०९०८००२२ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत्
०९०८००३१ वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती
०९०८००३२ और्वेण जानतात्मानं प्रजावन्तं निवारिता

०९०८००४१ आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह
०९०८००४२ सह तेनैव सञ्जातः सगराख्यो महायशाः
०९०८००५१ सगरश्चक्रवर्त्यासीत्सागरो यत्सुतैः कृतः
०९०८००५२ यस्तालजङ्घान्यवनाञ्छकान्हैहयबर्बरान्
०९०८००६१ नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः
०९०८००६२ मुण्डाञ्छ्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुण्डितान्
०९०८००७१ अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान्
०९०८००७२ सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम्
०९०८००८१ और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम्
०९०८००८२ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः
०९०८००९१ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः
०९०८००९२ हयमन्वेषमाणास्ते समन्तान्न्यखनन्महीम्
०९०८०१०१ प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके
०९०८०१०२ एष वाजिहरश्चौर आस्ते मीलितलोचनः
०९०८०१११ हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः
०९०८०११२ उदायुधा अभिययुरुन्मिमेष तदा मुनिः
०९०८०१२१ स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः
०९०८०१२२ महद्व्यतिक्रमहता भस्मसादभवन्क्षणात्
०९०८०१३१ न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्त्वधामनि
०९०८०१३२ कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः
०९०८०१४१ यस्येरिता साङ्ख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम्
०९०८०१४२ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः
०९०८०१५१ योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः
०९०८०१५२ तस्य पुत्रोऽंशुमान्नाम पितामहहिते रतः
०९०८०१६१ असमञ्जस आत्मानं दर्शयन्नसमञ्जसम्
०९०८०१६२ जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः
०९०८०१७१ आचरन्गर्हितं लोके ज्ञातीनां कर्म विप्रियम्
०९०८०१७२ सरय्वां क्रीडतो बालान्प्रास्यदुद्वेजयञ्जनम्
०९०८०१८१ एवं वृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै
०९०८०१८२ योगैश्वर्येण बालांस्तान्दर्शयित्वा ततो ययौ
०९०८०१९१ अयोध्यावासिनः सर्वे बालकान्पुनरागतान्

०९०८०१९२ दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत
०९०८०२०१ अंशुमांश्चोदितो राज्ञा तुरगान्वेषणे ययौ
०९०८०२०२ पितृव्यखातानुपथं भस्मान्ति ददृशे हयम्
०९०८०२११ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम्
०९०८०२१२ अस्तौत्समाहितमनाः प्राञ्जलिः प्रणतो महान्
०९०८०२२० अंशुमानुवाच
०९०८०२२१ न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः
०९०८०२२२ कुतोऽपरे तस्य मनःशरीरधी विसर्गसृष्टा वयमप्रकाशाः
०९०८०२३१ ये देहभाजस्त्रिगुणप्रधाना गुणान्विपश्यन्त्युत वा तमश्च
०९०८०२३२ यन्मायया मोहितचेतसस्त्वां विदुः स्वसंस्थं न बहिःप्रकाशाः
०९०८०२४१ तं त्वां अहं ज्ञानघनं स्वभाव प्रध्वस्तमायागुणभेदमोहैः
०९०८०२४२ सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं विमूढः परिभावयामि
०९०८०२५१ प्रशान्त मायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम्
०९०८०२५२ ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम्
०९०८०२६१ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु
०९०८०२६२ भ्रमन्ति कामलोभेर्ष्या मोहविभ्रान्तचेतसः
०९०८०२७१ अद्य नः सर्वभूतात्मन्कामकर्मेन्द्रियाशयः
०९०८०२७२ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात्
०९०८०२८० श्रीशुक उवाच
०९०८०२८१ इत्थं गीतानुभावस्तं भगवान्कपिलो मुनिः
०९०८०२८२ अंशुमन्तमुवाचेदमनुग्राह्य धिया नृप
०९०८०२९० श्रीभगवानुवाच
०९०८०२९१ अश्वोऽयं नीयतां वत्स पितामहपशुस्तव
०९०८०२९२ इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत्
०९०८०३०१ तं परिक्रम्य शिरसा प्रसाद्य हयमानयत्
०९०८०३०२ सगरस्तेन पशुना यज्ञशेषं समापयत्
०९०८०३११ राज्यमंशुमते न्यस्य निःस्पृहो मुक्तबन्धनः
०९०८०३१२ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम्
०९०९००१० श्रीशुक उवाच
०९०९००११ अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया
०९०९००१२ कालं महान्तं नाशक्नोत्ततः कालेन संस्थितः

०९०९००२१ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान्
०९०९००२२ भगीरथस्तस्य सुतस्तेपे स सुमहत्तपः
०९०९००३१ दर्शयामास तं देवी प्रसन्ना वरदास्मि ते
०९०९००३२ इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः
०९०९००४१ कोऽपि धारयिता वेगं पतन्त्या मे महीतले
०९०९००४२ अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम्
०९०९००५१ किं चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम्
०९०९००५२ मृजामि तदघं क्वाहं राजंस्तत्र विचिन्त्यताम्
०९०९००६० श्रीभगीरथ उवाच
०९०९००६१ साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः
०९०९००६२ हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः
०९०९००७१ धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम्
०९०९००७२ यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु
०९०९००८१ इत्युक्त्वा स नृपो देवं तपसातोषयच्छिवम्
०९०९००८२ कालेनाल्पीयसा राजंस्तस्येशश्चाश्वतुष्यत
०९०९००९१ तथेति राज्ञाभिहितं सर्वलोकहितः शिवः
०९०९००९२ दधारावहितो गङ्गां पादपूतजलां हरेः
०९०९०१०१ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम्
०९०९०१०२ यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते
०९०९०१११ रथेन वायुवेगेन प्रयान्तमनुधावती
०९०९०११२ देशान्पुनन्ती निर्दग्धानासिञ्चत्सगरात्मजान्
०९०९०१२१ यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि
०९०९०१२२ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः
०९०९०१३१ भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः
०९०९०१३२ किं पुनः श्रद्धया देवीं सेवन्ते ये धृतव्रताः
०९०९०१४१ न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम्
०९०९०१४२ अनन्तचरणाम्भोज प्रसूताया भवच्छिदः
०९०९०१५१ सन्निवेश्य मनो यस्मिञ्छ्रद्धया मुनयोऽमलाः
०९०९०१५२ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम्
०९०९०१६१ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत्
०९०९०१६२ सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत्

०९०९०१७१ ऋतूपर्णो नलसखो योऽश्वविद्यामयान्नलात्
०९०९०१७२ दत्त्वाक्षहृदयं चास्मै सर्वकामस्तु तत्सुतम्
०९०९०१८१ ततः सुदासस्तत्पुत्रो दमयन्तीपतिर्नृपः
०९०९०१८२ आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित्
०९०९०१८३ वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा
०९०९०१९० श्रीराजोवाच
०९०९०१९१ किं निमित्तो गुरोः शापः सौदासस्य महात्मनः
०९०९०१९२ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि
०९०९०२०० श्रीशुक उवाच
०९०९०२०१ सौदासो मृगयां किञ्चिच्चरन्रक्षो जघान ह
०९०९०२०२ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया
०९०९०२११ सञ्चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे
०९०९०२१२ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम्
०९०९०२२१ परिवेक्ष्यमाणं भगवान्विलोक्याभक्ष्यमञ्जसा
०९०९०२२२ राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि
०९०९०२३१ रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम्
०९०९०२३२ सोऽप्यपोऽञ्जलिमादाय गुरुं शप्तुं समुद्यतः
०९०९०२४१ वारितो मदयन्त्यापो रुशतीः पादयोर्जहौ
०९०९०२४२ दिशः खमवनीं सर्वं पश्यञ्जीवमयं नृपः
०९०९०२५१ राक्षसं भावमापन्नः पादे कल्माषतां गतः
०९०९०२५२ व्यवायकाले ददृशे वनौकोदम्पती द्विजौ
०९०९०२६१ क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत्
०९०९०२६२ न भवान्राक्षसः साक्षादिक्ष्वाकूणां महारथः
०९०९०२७१ मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि
०९०९०२७२ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम्
०९०९०२८१ देहोऽयं मानुषो राजन्पुरुषस्याखिलार्थदः
०९०९०२८२ तस्मादस्य वधो वीर सर्वार्थवध उच्यते
०९०९०२९१ एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः
०९०९०२९२ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम्
०९०९०२९३ सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः
०९०९०३०१ सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो

०९०९०३०२ कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः
०९०९०३११ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः
०९०९०३१२ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान्
०९०९०३२१ यद्ययं क्रियते भक्ष्यस्तर्हि मां खाद पूर्वतः
०९०९०३२२ न जीविष्ये विना येन क्षणं च मृतकं यथा
०९०९०३३१ एवं करुणभाषिण्या विलपन्त्या अनाथवत्
०९०९०३३२ व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः
०९०९०३४१ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम्
०९०९०३४२ शोचन्त्यात्मानमुर्वीशमशपत्कुपिता सती
०९०९०३५१ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया
०९०९०३५२ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः
०९०९०३६१ एवं मित्रसहं शप्त्वा पतिलोकपरायणा
०९०९०३६२ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता
०९०९०३७१ विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः
०९०९०३७२ विज्ञाप्य ब्राह्मणीशापं महिष्या स निवारितः
०९०९०३८१ अत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाप्रजाः
०९०९०३८२ वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात्
०९०९०३९१ सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत
०९०९०३९२ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते
०९०९०४०१ अश्मकाद्बालिको जज्ञे यः स्त्रीभिः परिरक्षितः
०९०९०४०२ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत्
०९०९०४११ ततो दशरथस्तस्मात्पुत्र ऐडविडिस्ततः
०९०९०४१२ राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत्
०९०९०४२१ यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः
०९०९०४२२ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः
०९०९०४३१ न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः
०९०९०४३२ न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः
०९०९०४४१ न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित्
०९०९०४४२ नापश्यमुत्तमश्लोकादन्यत्किञ्चन वस्त्वहम्
०९०९०४५१ देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः
०९०९०४५२ न वृणे तमहं कामं भूतभावनभावनः

०९०९०४६१ ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम्
०९०९०४६२ न विन्दन्ति प्रियं शश्वदात्मानं किमुतापरे
०९०९०४७१ अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु
०९०९०४७२ रूढं प्रकृत्यात्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये
०९०९०४८१ इति व्यवसितो बुद्ध्या नारायणगृहीतया
०९०९०४८२ हित्वान्यभावमज्ञानं ततः स्वं भावमास्थितः
०९०९०४९१ यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम्
०९०९०४९२ भगवान्वासुदेवेति यं गृणन्ति हि सात्वताः
०९१०००१० श्रीशुक उवाच
०९१०००११ खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः
०९१०००१२ अजस्ततो महाराजस्तस्माद्दशरथोऽभवत्
०९१०००२१ तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः
०९१०००२२ अंशांशेन चतुर्धागात्पुत्रत्वं प्रार्थितः सुरैः
०९१०००२३ रामलक्ष्मणभरत शत्रुघ्ना इति संज्ञया
०९१०००३१ तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः
०९१०००३२ श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः
०९१०००४१ गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
०९१०००४२ पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम्
०९१०००४३ वैरूप्याच्छूर्पणख्याः प्रियविरहरुषारोपितभ्रूविजृम्भ
०९१०००४४ त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः
०९१०००५१ विश्वामित्राध्वरे येन मारीचाद्या निशाचराः
०९१०००५२ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः
०९१०००६१ यो लोकवीरसमितौ धनुरैशमुग्रं
०९१०००६२ सीतास्वयंवरगृहे त्रिशतोपनीतम्
०९१०००६३ आदाय बालगजलील इवेक्षुयष्टिं
०९१०००६४ सज्ज्यीकृतं नृप विकृष्य बभञ्ज मध्ये
०९१०००७१ जित्वानुरूपगुणशीलवयोऽङ्गरूपां
०९१०००७२ सीताभिधां श्रियमुरस्यभिलब्धमानाम्
०९१०००७३ मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं
०९१०००७४ दर्पं महीमकृत यस्त्रिरराजबीजाम्
०९१०००८१ यः सत्यपाशपरिवीतपितुर्निदेशं

०९१०००८२ स्त्रैणस्य चापि शिरसा जगृहे सभार्यः
०९१०००८३ राज्यं श्रियं प्रणयिनः सुहृदो निवासं
०९१०००८४ त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः
०९१०००९१ रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्
०९१०००९२ तस्याः खरत्रिशिरदूषणमुख्यबन्धून्
०९१०००९३ जघ्ने चतुर्दशसहस्रमपारणीय
०९१०००९४ कोदण्डपाणिरटमान उवास कृच्छ्रम्
०९१००१०१ सीताकथाश्रवणदीपितहृच्छयेन
०९१००१०२ सृष्टं विलोक्य नृपते दशकन्धरेण
०९१००१०३ जघ्नेऽद्भुतैणवपुषाश्रमतोऽपकृष्टो
०९१००१०४ मारीचमाशु विशिखेन यथा कमुग्रः
०९१००१११ रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं
०९१००११२ वैदेहराजदुहितर्यपयापितायाम्
०९१००११३ भ्रात्रा वने कृपणवत्प्रियया वियुक्तः
०९१००११४ स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार
०९१००१२१ दग्ध्वात्मकृत्यहतकृत्यमहन्कबन्धं
०९१००१२२ सख्यं विधाय कपिभिर्दयितागतिं तैः
०९१००१२३ बुद्ध्वाथ वालिनि हते प्लवगेन्द्रसैन्यैर्
०९१००१२४ वेलामगात्स मनुजोऽजभवार्चिताङ्घ्रिः
०९१००१३१ यद्रोषविभ्रमविवृत्तकटाक्षपात
०९१००१३२ सम्भ्रान्तनक्रमकरो भयगीर्णघोषः
०९१००१३३ सिन्धुः शिरस्यर्हणं परिगृह्य रूपी
०९१००१३४ पादारविन्दमुपगम्य बभाष एतत्
०९१००१४१ न त्वां वयं जडधियो नु विदाम भूमन्
०९१००१४२ कूटस्थमादिपुरुषं जगतामधीशम्
०९१००१४३ यत्सत्त्वतः सुरगणा रजसः प्रजेशा
०९१००१४४ मन्योश्च भूतपतयः स भवान्गुणेशः
०९१००१५१ कामं प्रयाहि जहि विश्रवसोऽवमेहं
०९१००१५२ त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम्
०९१००१५३ बध्नीहि सेतुमिह ते यशसो वितत्यै
०९१००१५४ गायन्ति दिग्विजयिनो यमुपेत्य भूपाः

०९१००१६१ बद्धोदधौ रघुपतिर्विविधाद्रिकूटैः
०९१००१६२ सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः
०९१००१६३ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्
०९१००१६४ लङ्कां विभीषणदृशाविशदग्रदग्धाम्
०९१००१७१ सा वानरेन्द्रबलरुद्धविहारकोष्ठ
०९१००१७२ श्रीद्वारगोपुरसदोवलभीविटङ्का
०९१००१७३ निर्भज्यमानधिषणध्वजहेमकुम्भ
०९१००१७४ शृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा
०९१००१८१ रक्षःपतिस्तदवलोक्य निकुम्भकुम्भ
०९१००१८२ धूम्राक्षदुर्मुखसुरान्तकनरान्तकादीन्
०९१००१८३ पुत्रं प्रहस्तमतिकायविकम्पनादीन्
०९१००१८४ सर्वानुगान्समहिनोदथ कुम्भकर्णम्
०९१००१९१ तां यातुधानपृतनामसिशूलचाप
०९१००१९२ प्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम्
०९१००१९३ सुग्रीवलक्ष्मणमरुत्सुतगन्धमाद
०९१००१९४ नीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात्
०९१००२०१ तेऽनीकपा रघुपतेरभिपत्य सर्वे
०९१००२०२ द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः
०९१००२०३ जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः
०९१००२०४ सीताभिमर्षहतमङ्गलरावणेशान्
०९१००२११ रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट
०९१००२१२ आरुह्य यानकमथाभिससार रामम्
०९१००२१३ स्वःस्यन्दने द्युमति मातलिनोपनीते
०९१००२१४ विभ्राजमानमहनन्निशितैः क्षुरप्रैः
०९१००२२१ रामस्तमाह पुरुषादपुरीष यन्नः
०९१००२२२ कान्तासमक्षमसतापहृता श्ववत्ते
०९१००२२३ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य
०९१००२२४ यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः
०९१००२३१ एवं क्षिपन्धनुषि सन्धितमुत्ससर्ज
०९१००२३२ बाणं स वज्रमिव तद्धृदयं बिभेद
०९१००२३३ सोऽसृग्वमन्दशमुखैर्न्यपतद्विमानाद्

०९१००२३४ धाहेति जल्पति जने सुकृतीव रिक्तः
०९१००२४१ ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः
०९१००२४२ मन्दोदर्या समं तत्र प्ररुदन्त्य उपाद्रवन्
०९१००२५१ स्वान्स्वान्बन्धून्परिष्वज्य लक्ष्मणेषुभिरर्दितान्
०९१००२५२ रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना
०९१००२६१ हा हताः स्म वयं नाथ लोकरावण रावण
०९१००२६२ कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता
०९१००२७१ न वै वेद महाभाग भवान्कामवशं गतः
०९१००२७२ तेजोऽनुभावं सीताया येन नीतो दशामिमाम्
०९१००२८१ कृतैषा विधवा लङ्का वयं च कुलनन्दन
०९१००२८२ देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे
०९१००२९० श्रीशुक उवाच
०९१००२९१ स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः
०९१००२९२ पितृमेधविधानेन यदुक्तं साम्परायिकम्
०९१००३०१ ततो ददर्श भगवानशोकवनिकाश्रमे
०९१००३०२ क्षामां स्वविरहव्याधिं शिंशपामूलमाश्रिताम्
०९१००३११ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत
०९१००३१२ आत्मसन्दर्शनाह्लाद विकसन्मुखपङ्कजाम्
०९१००३२१ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः
०९१००३२२ विभीषणाय भगवान्दत्त्वा रक्षोगणेशताम्
०९१००३३१ लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम्
०९१००३३२ अवकीर्यमाणः सुकुसुमैर्लोकपालार्पितैः पथि
०९१००३४१ उपगीयमानचरितः शतधृत्यादिभिर्मुदा
०९१००३४२ गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम्
०९१००३५१ महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम्
०९१००३५२ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः
०९१००३६१ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम्
०९१००३६२ नन्दिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः
०९१००३७१ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः
०९१००३७२ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः
०९१००३८१ सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः

०९१००३८२ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः
०९१००३९१ पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च
०९१००३९२ पादयोर्न्यपतत्प्रेम्णा प्रक्लिन्नहृदयेक्षणः
०९१००४०१ पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः
०९१००४०२ तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः
०९१००४११ रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः
०९१००४१२ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः
०९१००४२१ धुन्वन्त उत्तरासङ्गान्पतिं वीक्ष्य चिरागतम्
०९१००४२२ उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा
०९१००४३१ पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे
०९१००४३२ विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः
०९१००४४१ धनुर्निषङ्गान्छत्रुघ्नः सीता तीर्थकमण्डलुम्
०९१००४४२ अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप
०९१००४५१ पुष्पकस्थो नुतः स्त्रीभिः स्तूयमानश्च वन्दिभिः
०९१००४५२ विरेजे भगवान्राजन्ग्रहैश्चन्द्र इवोदितः
०९१००४६१ भ्रात्राभिनन्दितः सोऽथ सोत्सवां प्राविशत्पुरीम्
०९१००४६२ प्रविश्य राजभवनं गुरुपत्नीः स्वमातरम्
०९१००४७१ गुरून्वयस्यावरजान्पूजितः प्रत्यपूजयत्
०९१००४७२ वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः
०९१००४८१ पुत्रान्स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः
०९१००४८२ आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः
०९१००४९१ जटा निर्मुच्य विधिवत्कुलवृद्धैः समं गुरुः
०९१००४९२ अभ्यषिञ्चद्यथैवेन्द्रं चतुःसिन्धुजलादिभिः
०९१००५०१ एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलङ्कृतः
०९१००५०२ स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ
०९१००५११ अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः
०९१००५१२ प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः
०९१००५१३ जुगोप पितृवद्रामो मेनिरे पितरं च तम्
०९१००५२१ त्रेतायां वर्तमानायां कालः कृतसमोऽभवत्
०९१००५२२ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे
०९१००५३१ वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः

०९१००५३२ सर्वे कामदुघा आसन्प्रजानां भरतर्षभ
०९१००५४१ नाधिव्याधिजराग्लानि दुःखशोकभयक्लमाः
०९१००५४२ मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे
०९१००५५१ एकपत्नीव्रतधरो राजर्षिचरितः शुचिः
०९१००५५२ स्वधर्मं गृहमेधीयं शिक्षयन्स्वयमाचरत्
०९१००५६१ प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती
०९१००५६२ भिया ह्रिया च भावज्ञा भर्तुः सीताहरन्मनः
०९१११०१० श्रीशुक उवाच
०९१११०११ भगवानात्मनात्मानं राम उत्तमकल्पकैः
०९१११०१२ सर्वदेवमयं देवमीजेऽथाचार्यवान्मखैः
०९१११०२१ होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः
०९१११०२२ अध्वर्यवे प्रतीचीं वा उत्तरां सामगाय सः
०९१११०३१ आचार्याय ददौ शेषां यावती भूस्तदन्तरा
०९१११०३२ अन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः
०९१११०४१ इत्ययं तदलङ्कार वासोभ्यामवशेषितः
०९१११०४२ तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता
०९१११०५१ ते तु ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य संस्तुतम्
०९१११०५२ प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे
०९१११०६१ अप्रत्तं नस्त्वया किं नु भगवन्भुवनेश्वर
०९१११०६२ यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरोचिषा
०९१११०७१ नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे
०९१११०७२ उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये
०९१११०८१ कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः
०९१११०८२ चरन्वाचोऽश्रृणोद्रामो भार्यामुद्दिश्य कस्यचित्
०९१११०९१ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम्
०९१११०९२ स्त्रैणो हि बिभृयात्सीतां रामो नाहं भजे पुनः
०९१११०१०१ इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः
०९१११०१०२ पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम्
०९१११०१११ अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ
०९१११०११२ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः
०९१११०१२१ अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ

०९११०१२२ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते
०९११०१३१ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः
०९११०१३२ गन्धर्वान्कोटिशो जघ्ने भरतो विजये दिशाम्
०९११०१४१ तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत्
०९११०१४२ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम्
०९११०१४३ हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम्
०९११०१५१ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता
०९११०१५२ ध्यायन्ती रामचरणौ विवरं प्रविवेश ह
०९११०१६१ तच्छ्रुत्वा भगवान्रामो रुन्धन्नपि धिया शुचः
०९११०१६२ स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः
०९११०१७१ स्त्रीपुंप्रसङ्ग एतादृक्सर्वत्र त्रासमावहः
०९११०१७२ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः
०९११०१८१ तत ऊर्ध्वं ब्रह्मचर्यं धार्यन्नजुहोत्प्रभुः
०९११०१८२ त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम्
०९११०१९१ स्मरतां हृदि विन्यस्य विद्धं दण्डककण्टकैः
०९११०१९२ स्वपादपल्लवं राम आत्मज्योतिरगात्ततः
०९११०२०१ नेदं यशो रघुपतेः सुरयाच्ञयात्त
०९११०२०२ लीलातनोरधिकसाम्यविमुक्तधाम्नः
०९११०२०३ रक्षोवधो जलधिबन्धनमस्त्रपूगैः
०९११०२०४ किं तस्य शत्रुहनने कपयः सहायाः
०९११०२११ यस्यामलं नृपसदःसु यशोऽधुनापि
०९११०२१२ गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम्
०९११०२१३ तं नाकपालवसुपालकिरीटजुष्ट
०९११०२१४ पादाम्बुजं रघुपतिं शरणं प्रपद्ये
०९११०२२१ स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा
०९११०२२२ कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः
०९११०२३१ पुरुषो रामचरितं श्रवणैरुपधारयन्
०९११०२३२ आनृशंस्यपरो राजन्कर्मबन्धैर्विमुच्यते
०९११०२४० श्रीराजोवाच
०९११०२४१ कथं स भगवान्रामो भ्रात्वा स्वयमात्मनः
०९११०२४२ तस्मिन्वा तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे

०९११०२५० श्रीबादरायणिरुवाच
०९११०२५१ अथादिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः
०९११०२५२ आत्मानं दर्शयन्स्वानां पुरीमैक्षत सानुगः
०९११०२६१ आसिक्तमार्गां गन्धोदैः करिणां मदशीकरैः
०९११०२६२ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव
०९११०२७१ प्रासादगोपुरसभा चैत्यदेवगृहादिषु
०९११०२७२ विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम्
०९११०२८१ पूगैः सवृन्तै रम्भाभिः पट्टिकाभिः सुवाससाम्
०९११०२८२ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम्
०९११०२९१ तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः
०९११०२९२ आशिषो युयुजुर्देव पाहीमां प्राक्त्वयोद्धृताम्
०९११०३०१ ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः
०९११०३०२ आरुह्य हर्म्याण्यरविन्दलोचनमतृप्तनेत्राः कुसुमैरवाकिरन्
०९११०३११ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः
०९११०३१२ अनन्ताखिलकोषाढ्यमनर्घ्योरुपरिच्छदम्
०९११०३२१ विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः
०९११०३२२ स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः
०९११०३३१ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः
०९११०३३२ मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः
०९११०३४१ धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डनैः
०९११०३४२ स्त्रीपुम्भिः सुरसङ्काशैर्जुष्टं भूषणभूषणैः
०९११०३५१ तस्मिन्स भगवान्रामः स्निग्धया प्रिययेष्टया
०९११०३५२ रेमे स्वारामधीराणामृषभः सीतया किल
०९११०३६१ बुभुजे च यथाकालं कामान्धर्ममपीडयन्
०९११०३६२ वर्षपूगान्बहून्नॄणामभिध्याताङ्घ्रिपल्लवः
०९१२००१० श्रीशुक उवाच
०९१२००११ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः
०९१२००१२ पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाभवत्ततः
०९१२००२१ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः
०९१२००२२ ततो बलस्थलस्तस्माद्वज्रनाभोऽर्कसम्भवः
०९१२००३१ सगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः

०९१२००३२ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः
०९१२००४१ शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः
०९१२००४२ योगं महोदयमृषिर्हृदयग्रन्थिभेदकम्
०९१२००५१ पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत्
०९१२००५२ सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः
०९१२००६१ सोऽसावास्ते योगसिद्धः कलापग्राममास्थितः
०९१२००६२ कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः
०९१२००७१ तस्मात्प्रसुश्रुतस्तस्य सन्धिस्तस्याप्यमर्षणः
०९१२००७२ महस्वांस्तत्सुतस्तस्माद्विश्वबाहुरजायत
०९१२००८१ ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः
०९१२००८२ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः
०९१२००९१ एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान्
०९१२००९२ बृहद्बलस्य भविता पुत्रो नाम्ना बृहद्रणः
०९१२०१०१ ऊरुक्रियः सुतस्तस्य वत्सवृद्धो भविष्यति
०९१२०१०२ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः
०९१२०१११ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान्
०९१२०११२ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः
०९१२०१२१ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः
०९१२०१२२ तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित्
०९१२०१३१ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतञ्जयः
०९१२०१३२ रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः
०९१२०१४१ तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः
०९१२०१४२ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः
०९१२०१५१ रणको भविता तस्मात्सुरथस्तनयस्ततः
०९१२०१५२ सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्वयाः
०९१२०१६१ इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति
०९१२०१६२ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ
०९१३००१० श्रीशुक उवाच
०९१३००११ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम्
०९१३००१२ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः
०९१३००२१ तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय

०९१३००२२ तूष्णीमासीद्गृहपतिः सोऽपीन्द्रस्याकरोन्मखम्
०९१३००३१ निमित्तश्चलमिदं विद्वान्सत्रमारभतामात्मवान्
०९१३००३२ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः
०९१३००४१ शिष्यव्यतिक्रमं वीक्ष्य तं निर्वर्त्यागतो गुरुः
०९१३००४२ अशपत्पतताद्देहो निमेः पण्डितमानिनः
०९१३००५१ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने
०९१३००५२ तवापि पतताद्देहो लोभाद्धर्ममजानतः
०९१३००६१ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः
०९१३००६२ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः
०९१३००७१ गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः
०९१३००७२ समाप्ते सत्रयागे च देवानूचुः समागतान्
०९१३००८१ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि
०९१३००८२ तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम्
०९१३००९१ यस्य योगं न वाञ्छन्ति वियोगभयकातराः
०९१३००९२ भजन्ति चरणाम्भोजं मुनयो हरिमेधसः
०९१३०१०१ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम्
०९१३०१०२ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा
०९१३०११० देवा ऊचुः
०९१३०१११ विदेह उष्यतां कामं लोचनेषु शरीरिणाम्
०९१३०११२ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः
०९१३०१२१ अराजकभयं नृणां मन्यमाना महर्षयः
०९१३०१२२ देहं ममन्थुः स्म निमेः कुमारः समजायत
०९१३०१३१ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः
०९१३०१३२ मिथिलो मथनाज्जातो मिथिला येन निर्मिता
०९१३०१४१ तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः
०९१३०१४२ ततः सुकेतुस्तस्यापि देवरातो महीपते
०९१३०१५१ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृत्पिता
०९१३०१५२ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः
०९१३०१६१ मरोः प्रतीपकस्तस्माज्जातः कृतरथो यतः
०९१३०१६२ देवमीढस्तस्य पुत्रो विश्रुतोऽथ महाधृतिः
०९१३०१७१ कृतिरातस्ततस्तस्मान्महारोमा च तत्सुतः

०९१३०१७२ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत
०९१३०१८१ ततः शीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम्
०९१३०१८२ सीता शीराग्रतो जाता तस्मात्शीरध्वजः स्मृतः
०९१३०१९१ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः
०९१३०१९२ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ
०९१३०२०१ कृतध्वजात्केशिध्वजः खाण्डिक्यस्तु मितध्वजात्
०९१३०२०२ कृतध्वजसुतो राजन्नात्मविद्याविशारदः
०९१३०२११ खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्द्रुतः
०९१३०२१२ भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः
०९१३०२२१ शुचिस्तु तनयस्तस्मात्सनद्वाजः सुतोऽभवत्
०९१३०२२२ ऊर्जकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः
०९१३०२३१ अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः
०९१३०२३२ ततश्चित्ररथो यस्य क्षेमाधिर्मिथिलाधिपः
०९१३०२४१ तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः
०९१३०२४२ आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः
०९१३०२५१ वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः
०९१३०२५२ श्रुतस्ततो जयस्तस्माद्विजयोऽस्माद्दतः सुतः
०९१३०२६१ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः
०९१३०२६२ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी
०९१३०२७१ एते वै मैथिला राजन्नात्मविद्याविशारदाः
०९१३०२७२ योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि
०९१४००१० श्रीशुक उवाच
०९१४००११ अथातः श्रूयतां राजन्वंशः सोमस्य पावनः
०९१४००१२ यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः
०९१४००२१ सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात्
०९१४००२२ जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः
०९१४००३१ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल
०९१४००३२ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः
०९१४००४१ सोऽयजद्राजसूयेन विजित्य भुवनत्रयम्
०९१४००४२ पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात्
०९१४००५१ यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात्

०९१४००५२ नात्यजत्तत्कृते जज्ञे सुरदानवविग्रहः
०९१४००६१ शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम्
०९१४००६२ हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः
०९१४००७१ सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात्
०९१४००७२ सुरासुरविनाशोऽभूत्समरस्तारकामयः
०९१४००८१ निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत्
०९१४००८२ तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः
०९१४००९१ त्यज त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः
०९१४००९२ नाहं त्वां भस्मसात्कुर्यां स्त्रियं सान्तानिकेऽसति
०९१४०१०१ तत्याज व्रीडिता तारा कुमारं कनकप्रभम्
०९१४०१०२ स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च
०९१४०१११ ममायं न तवेत्युच्चैस्तस्मिन्विवदमानयोः
०९१४०११२ पप्रच्छुरृषयो देवा नैवोचे व्रीडिता तु सा
०९१४०१२१ कुमारो मातरं प्राह कुपितोऽलीकलज्जया
०९१४०१२२ किं न वचस्यसद्वृत्ते आत्मावद्यं वदाशु मे
०९१४०१३१ ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन्
०९१४०१३२ सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत्
०९१४०१४१ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप
०९१४०१४२ बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण्मुदम्
०९१४०१५१ ततः पुरूरवा जज्ञे इलायां य उदाहृतः
०९१४०१५२ तस्य रूपगुणौदार्य शीलद्रविणविक्रमान्
०९१४०१६१ श्रुत्वोर्वशीन्द्रभवने गीयमानान्सुरर्षिणा
०९१४०१६२ तदन्तिकमुपेयाय देवी स्मरशरार्दिता
०९१४०१७१ मित्रावरुणयोः शापादापन्ना नरलोकताम्
०९१४०१७२ निशम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम्
०९१४०१७३ धृतिं विष्टभ्य ललना उपतस्थे तदन्तिके
०९१४०१८१ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः
०९१४०१८२ उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः
०९१४०१९० श्रीराजोवाच
०९१४०१९१ स्वागतं ते वरारोहे आस्यतां करवाम किम्
०९१४०१९२ संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः

०९१४०२०० उर्वश्युवाच
०९१४०२०१ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर
०९१४०२०२ यदङ्गान्तरमासाद्य च्यवते ह रिरंसया
०९१४०२११ एतावुरणकौ राजन्न्यासौ रक्षस्व मानद
०९१४०२१२ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः
०९१४०२२१ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वान्यत्र मैथुनात्
०९१४०२२२ विवाससं तत्तथेति प्रतिपेदे महामनाः
०९१४०२३१ अहो रूपमहो भावो नरलोकविमोहनम्
०९१४०२३२ को न सेवेत मनुजो देवीं त्वां स्वयमागताम्
०९१४०२४१ तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः
०९१४०२४२ रेमे सुरविहारेषु कामं चैत्ररथादिषु
०९१४०२५१ रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया
०९१४०२५२ तन्मुखामोदमुषितो मुमुदेऽहर्गणान्बहून्
०९१४०२६१ अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान्समचोदयत्
०९१४०२६२ उर्वशीरहितं मह्यमास्थानं नातिशोभते
०९१४०२७१ ते उपेत्य महारात्रे तमसि प्रत्युपस्थिते
०९१४०२७२ उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया
०९१४०२८१ निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः
०९१४०२८२ हतास्म्यहं कुनाथेन नपुंसा वीरमानिना
०९१४०२९१ यद्विश्रम्भादहं नष्टा हृतापत्या च दस्युभिः
०९१४०२९२ यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान्
०९१४०३०१ इति वाक्सायकैर्बिद्धः प्रतोत्त्रैरिव कुञ्जरः
०९१४०३०२ निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा
०९१४०३११ ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः
०९१४०३१२ आदाय मेषावायान्तं नग्नमैक्षत सा पतिम्
०९१४०३२१ ऐलोऽपि शयने जायामपश्यन्विमना इव
०९१४०३२२ तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम्
०९१४०३३१ स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः
०९१४०३३२ पञ्च प्रहृष्टवदनः प्राह सूक्तं पुरूरवाः
०९१४०३४१ अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि
०९१४०३४२ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै

०९१४०३५१ सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया
०९१४०३५२ खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम्
०९१४०३६० उर्वश्युवाच
०९१४०३६१ मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाद्युर्वृका इमे
०९१४०३६२ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा
०९१४०३७१ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः
०९१४०३७२ घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत
०९१४०३८१ विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः
०९१४०३८२ नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः
०९१४०३९१ संवत्सरान्ते हि भवानेकरात्रं मयेश्वरः
०९१४०३९२ रंस्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः
०९१४०४०१ अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम्
०९१४०४०२ पुनस्तत्र गतोऽब्दान्ते उर्वशीं वीरमातरम्
०९१४०४११ उपलभ्य मुदा युक्तः समुवास तया निशाम्
०९१४०४१२ अथैनमुर्वशी प्राह कृपणं विरहातुरम्
०९१४०४२१ गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति
०९१४०४२२ तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप
०९१४०४२३ उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन्वने
०९१४०४३१ स्थालीं न्यस्य वने गत्वा गृहानाध्यायतो निशि
०९१४०४३२ त्रेतायां सम्प्रवृत्तायां मनसि त्रय्यवर्तत
०९१४०४४१ स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः
०९१४०४४२ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया
०९१४०४५१ उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम्
०९१४०४५२ आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः
०९१४०४६१ तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः
०९१४०४६२ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत्
०९१४०४७१ तेनायजत यज्ञेशं भगवन्तमधोक्षजम्
०९१४०४७२ उर्वशीलोकमन्विच्छन्सर्वदेवमयं हरिम्
०९१४०४८१ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः
०९१४०४८२ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च
०९१४०४९१ पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप

०९१४०४९२ अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान्
०९१५००१० श्रीबादरायणिरुवाच
०९१५००११ ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप
०९१५००१२ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः
०९१५००२१ श्रुतायोर्वसुमान्पुत्रः सत्यायोश्च श्रुतञ्जयः
०९१५००२२ रयस्य सुत एकश्च जयस्य तनयोऽमितः
०९१५००३१ भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः
०९१५००३२ तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत्
०९१५००३३ जह्नोस्तु पुरुस्तस्याथ बलाकश्चात्मजोऽजकः
०९१५००४१ ततः कुशः कुशस्यापि कुशाम्बुस्तनयो वसुः
०९१५००४२ कुशनाभश्च चत्वारो गाधिरासीत्कुशाम्बुजः
०९१५००५१ तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः
०९१५००५२ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत्
०९१५००६१ एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्
०९१५००६२ सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम्
०९१५००७१ इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम्
०९१५००७२ आनीय दत्त्वा तानश्वानुपयेमे वराननाम्
०९१५००८१ स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया
०९१५००८२ श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः
०९१५००९१ तावत्सत्यवती मात्रा स्वचरुं याचिता सती
०९१५००९२ श्रेष्ठं मत्वा तयायच्छन्मात्रे मातुरदत्स्वयम्
०९१५०१०१ तद्विदित्वा मुनिः प्राह पत्नीं कष्टमकारषीः
०९१५०१०२ घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः
०९१५०१११ प्रसादितः सत्यवत्या मैवं भूरिति भार्गवः
०९१५०११२ अथ तर्हि भवेत्पौत्रोजमदग्निस्ततोऽभवत्
०९१५०१२१ सा चाभूत्सुमहत्पुण्या कौशिकी लोकपावनी
०९१५०१२२ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम्
०९१५०१३१ तस्यां वै भार्गवऋषेः सुता वसुमदादयः
०९१५०१३२ यवीयाञ्जज्ञ एतेषां राम इत्यभिविश्रुतः
०९१५०१४१ यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्
०९१५०१४२ त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम्

०९१५०१५१ दृप्तं क्षत्रं भुवो भारमब्रह्मण्यमनीनशत्
०९१५०१५२ रजस्तमोवृतमहन्फल्गुन्यपि कृतेऽंहसि
०९१५०१६० श्रीराजोवाच
०९१५०१६१ किं तदंहो भगवतो राजन्यैरजितात्मभिः
०९१५०१६२ कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः
०९१५०१७० श्रीबादरायणिरुवाच
०९१५०१७१ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः
०९१५०१७२ दत्तं नारायणांशांशमाराध्य परिकर्मभिः
०९१५०१८१ बाहून्दशशतं लेभे दुर्धर्षत्वमरातिषु
०९१५०१८२ अव्याहतेन्द्रियौजः श्री तेजोवीर्ययशोबलम्
०९१५०१९१ योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः
०९१५०१९२ चचाराव्याहतगतिर्लोकेषु पवनो यथा
०९१५०२०१ स्त्रीरत्नैरावृतः क्रीडन्रेवाम्भसि मदोत्कटः
०९१५०२०२ वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः
०९१५०२११ विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः
०९१५०२१२ नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः
०९१५०२२१ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः
०९१५०२२२ माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा
०९१५०२३१ स एकदा तु मृगयां विचरन्विजने वने
०९१५०२३२ यदृच्छयाश्रमपदं जमदग्नेरुपाविशत्
०९१५०२४१ तस्मै स नरदेवाय मुनिरर्हणमाहरत्
०९१५०२४२ ससैन्यामात्यवाहाय हविष्मत्या तपोधनः
०९१५०२५१ स वै रत्नं तु तद्दृष्ट्वा आत्मैश्वर्यातिशायनम्
०९१५०२५२ तन्नाद्रियताग्निहोत्र्यां साभिलाषः सहैहयः
०९१५०२६१ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत्
०९१५०२६२ ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात्
०९१५०२७१ अथ राजनि निर्याते राम आश्रम आगतः
०९१५०२७२ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः
०९१५०२८१ घोरमादाय परशुं सतूणं वर्म कार्मुकम्
०९१५०२८२ अन्वधावत दुर्मर्षो मृगेन्द्र इव यूथपम्
०९१५०२९१ तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम्

०९१५०२९२ ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन्
०९१५०३०१ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः
०९१५०३०२ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत्
०९१५०३११ यतो यतोऽसौ प्रहरत्परश्वधो मनोऽनिलौजाः परचक्रसूदनः
०९१५०३१२ ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः
०९१५०३२१ दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः
०९१५०३२२ विवृक्णवर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा
०९१५०३३१ अथार्जुनः पञ्चशतेषु बाहुभिर्धनुःषु बाणान्युगपत्स सन्दधे
०९१५०३३२ रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम्
०९१५०३४१ पुनः स्वहस्तैरचलान्मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि
०९१५०३४२ भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव
०९१५०३५१ कृत्तबाहोः शिरस्तस्य गिरेः शृङ्गमिवाहरत्
०९१५०३५२ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात्
०९१५०३६१ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा
०९१५०३६२ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत्
०९१५०३७१ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च
०९१५०३७२ वर्णयामास तच्छ्रुत्वाजमदग्निरभाषत
०९१५०३८१ राम राम महाबाहो भवान्पापमकारषीत्
०९१५०३८२ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा
०९१५०३९१ वयं हि ब्राह्मणास्तात क्षमयार्हणतां गताः
०९१५०३९२ यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम्
०९१५०४०१ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा
०९१५०४०२ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः
०९१५०४११ राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः
०९१५०४१२ तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः
०९१६००१० श्रीशुक उवाच
०९१६००११ पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन
०९१६००१२ संवत्सरं तीर्थयात्रां चरित्वाश्रममाव्रजत्
०९१६००२१ कदाचिद्रेणुका याता गङ्गायां पद्ममालिनम्
०९१६००२२ गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत
०९१६००३१ विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता

०९१६००३२ होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा
०९१६००४१ कालात्ययं तं विलोक्य मुनेः शापविशङ्किता
०९१६००४२ आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः
०९१६००५१ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत्
०९१६००५२ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे
०९१६००६१ रामः सञ्चोदितः पित्रा भ्रात्ःमात्रा सहावधीत्
०९१६००६२ प्रभावज्ञो मुनेः सम्यक्समाधेस्तपसश्च सः
०९१६००७१ वरेण च्छन्दयामास प्रीतः सत्यवतीसुतः
०९१६००७२ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे
०९१६००८१ उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा
०९१६००८२ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम्
०९१६००९१ येऽर्जुनस्य सुता राजन्स्मरन्तः स्वपितुर्वधम्
०९१६००९२ रामवीर्यपराभूता लेभिरे शर्म न क्वचित्
०९१६०१०१ एकदाश्रमतो रामे सभ्रातरि वनं गते
०९१६०१०२ वैरं सिषाधयिषवो लब्धच्छिद्रा उपागमन्
०९१६०१११ दृष्ट्वाग्न्यागार आसीनमावेशितधियं मुनिम्
०९१६०११२ भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः
०९१६०१२१ याच्यमानाः कृपणया राममात्रातिदारुणाः
०९१६०१२२ प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबन्धवः
०९१६०१३१ रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना
०९१६०१३२ राम रामेति तातेति विचुक्रोशोच्चकैः सती
०९१६०१४१ तदुपश्रुत्य दूरस्था हा रामेत्यार्तवत्स्वनम्
०९१६०१४२ त्वरयाश्रममासाद्य ददृशुः पितरं हतम्
०९१६०१५१ ते दुःखरोषामर्षार्ति शोकवेगविमोहिताः
०९१६०१५२ हा तात साधो धर्मिष्ठ त्यक्त्वास्मान्स्वर्गतो भवान्
०९१६०१६१ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम्
०९१६०१६२ प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे
०९१६०१७१ गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम्
०९१६०१७२ तेषां स शीर्षभी राजन्मध्ये चक्रे महागिरिम्
०९१६०१८१ तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम्
०९१६०१८२ हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि

०९१६०१९१ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः
०९१६०१९२ समन्तपञ्चके चक्रे शोणितोदान्ह्रदान्नव
०९१६०२०१ पितुः कायेन सन्धाय शिर आदाय बर्हिषि
०९१६०२०२ सर्वदेवमयं देवमात्मानमयजन्मखैः
०९१६०२११ ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम्
०९१६०२१२ अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम्
०९१६०२२१ अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः
०९१६०२२२ आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम्
०९१६०२३१ ततश्चावभृथस्नान विधूताशेषकिल्बिषः
०९१६०२३२ सरस्वत्यां महानद्यां रेजे व्यब्भ्र इवांशुमान्
०९१६०२४१ स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम्
०९१६०२४२ ऋषीणां मण्डले सोऽभूत्सप्तमो रामपूजितः
०९१६०२५१ जामदग्न्योऽपि भगवान्रामः कमललोचनः
०९१६०२५२ आगामिन्यन्तरे राजन्वर्तयिष्यति वै बृहत्
०९१६०२६१ आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः
०९१६०२६२ उपगीयमानचरितः सिद्धगन्धर्वचारणैः
०९१६०२७१ एवं भृगुषु विश्वात्मा भगवान्हरिरीश्वरः
०९१६०२७२ अवतीर्य परं भारं भुवोऽहन्बहुशो नृपान्
०९१६०२८१ गाधेरभून्महातेजाः समिद्ध इव पावकः
०९१६०२८२ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्
०९१६०२९१ विश्वामित्रस्य चैवासन्पुत्रा एकशतं नृप
०९१६०२९२ मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते
०९१६०३०१ पुत्रं कृत्वा शुनःशेफं देवरातं च भार्गवम्
०९१६०३०२ आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम्
०९१६०३११ यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः
०९१६०३१२ स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबन्धनात्
०९१६०३२१ यो रातो देवयजने देवैर्गाधिषु तापसः
०९१६०३२२ देवरात इति ख्यातः शुनःशेफस्तु भार्गवः
०९१६०३३१ ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत्
०९१६०३३२ अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः
०९१६०३४१ स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः

०९१६०३४२ यन्नो भवान्सञ्जानीते तस्मिंस्तिष्ठामहे वयम्
०९१६०३५१ ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि
०९१६०३५२ विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ
०९१६०३५३ ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम्
०९१६०३६१ एष वः कुशिका वीरो देवरातस्तमन्वित
०९१६०३६२ अन्ये चाष्टकहारीत जयक्रतुमदादयः
०९१६०३७१ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम्
०९१६०३७२ प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम्
०९१७००१० श्रीबादरायणिरुवाच
०९१७००११ यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः
०९१७००१२ नहुषः क्षत्रवृद्धश्च रजी राभश्च वीर्यवान्
०९१७००२१ अनेना इति राजेन्द्र शृणु क्षत्रवृधोऽन्वयम्
०९१७००२२ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः
०९१७००३१ काश्यः कुशो गृत्समद इति गृत्समदादभूत्
०९१७००३२ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः
०९१७००४१ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता
०९१७००४२ धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्तकः
०९१७००५१ यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः
०९१७००५२ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः
०९१७००६१ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः
०९१७००६२ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः
०९१७००६३ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः
०९१७००७१ षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च
०९१७००७२ नालर्कादपरो राजन्बुभुजे मेदिनीं युवा
०९१७००८१ अलर्कात्सन्ततिस्तस्मात्सुनीथोऽथ निकेतनः
०९१७००८२ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत
०९१७००९१ धृष्टकेतुस्ततस्तस्मात्सुकुमारः क्षितीश्वरः
०९१७००९२ वीतिहोत्रोऽस्य भर्गोऽतो भार्गभूमिरभून्नृप
०९१७०१०१ इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः
०९१७०१०२ राभस्य रभसः पुत्रो गम्भीरश्चाक्रियस्ततः
०९१७०१११ तद्गोत्रं ब्रह्मविज्जज्ञे शृणु वंशमनेनसः

०९१७०११२ शुद्धस्ततः शुचिस्तस्माच्चित्रकृद्धर्मसारथिः
०९१७०१२१ ततः शान्तरजो जज्ञे कृतकृत्यः स आत्मवान्
०९१७०१२२ रजेः पञ्चशतान्यासन्पुत्राणाममितौजसाम्
०९१७०१३१ देवैरभ्यर्थितो दैत्यान्हत्वेन्द्रायाददाद्दिवम्
०९१७०१३२ इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः
०९१७०१४१ आत्मानमर्पयामास प्रह्लादाद्यरिशङ्कितः
०९१७०१४२ पितर्युपरते पुत्रा याचमानाय नो ददुः
०९१७०१५१ त्रिविष्टपं महेन्द्राय यज्ञभागान्समाददुः
०९१७०१५२ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः
०९१७०१६१ अवधीद्भ्रंशितान्मार्गान्न कश्चिदवशेषितः
०९१७०१६२ कुशात्प्रतिः क्षात्रवृद्धात्सञ्जयस्तत्सुतो जयः
०९१७०१७१ ततः कृतः कृतस्यापि जज्ञे हर्यबलो नृपः
०९१७०१७२ सहदेवस्ततो हीनो जयसेनस्तु तत्सुतः
०९१७०१८१ सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः
०९१७०१८२ क्षत्रवृद्धान्वया भूपा इमे श‍ृण्वथ नाहुषान्
०९१८००१० श्रीशुक उवाच
०९१८००११ यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः
०९१८००१२ षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनः
०९१८००२१ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित्
०९१८००२२ यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते
०९१८००३१ पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद्द्विजैः
०९१८००३२ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः
०९१८००४१ चतसृष्वादिशद्दिक्षु भ्रात‍ॄन्भ्राता यवीयसः
०९१८००४२ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः
०९१८००५० श्रीराजोवाच
०९१८००५१ ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबन्धुश्च नाहुषः
०९१८००५२ राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः
०९१८००६० श्रीशुक उवाच
०९१८००६१ एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका
०९१८००६२ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी
०९१८००७१ देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले

०९१८००७२ व्यचरत्कलगीतालि नलिनीपुलिनेऽबला
०९१८००८१ ता जलाशयमासाद्य कन्याः कमललोचनाः
०९१८००८२ तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः
०९१८००९१ वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम्
०९१८००९२ सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः
०९१८०१०१ शर्मिष्ठाजानती वासो गुरुपुत्र्याः समव्ययत्
०९१८०१०२ स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत्
०९१८०१११ अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसाम्प्रतम्
०९१८०११२ अस्मद्धार्यं धृतवती शुनीव हविरध्वरे
०९१८०१२१ यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये
०९१८०१२२ धार्यते यैरिह ज्योतिः शिवः पन्थाः प्रदर्शितः
०९१८०१३१ यान्वन्दन्त्युपतिष्ठन्ते लोकनाथाः सुरेश्वराः
०९१८०१३२ भगवानपि विश्वात्मा पावनः श्रीनिकेतनः
०९१८०१४१ वयं तत्रापि भृगवः शिष्योऽस्या नः पितासुरः
०९१८०१४२ अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती
०९१८०१५१ एवं क्षिपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत
०९१८०१५२ रुषा श्वसन्त्युरङ्गीव धर्षिता दष्टदच्छदा
०९१८०१६१ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि
०९१८०१६२ किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा
०९१८०१७१ एवंविधैः सुपरुषैः क्षिप्त्वाचार्यसुतां सतीम्
०९१८०१७२ शर्मिष्ठा प्राक्षिपत्कूपे वासश्चादाय मन्युना
०९१८०१८१ तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन्
०९१८०१८२ प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह
०९१८०१९१ दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे
०९१८०१९२ गृहीत्वा पाणिना पाणिमुज्जहार दयापरः
०९१८०२०१ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा
०९१८०२०२ राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय
०९१८०२११ हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे
०९१८०२१२ एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः
०९१८०२१३ यदिदं कूपमग्नाया भवतो दर्शनं मम
०९१८०२२१ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज

०९१८०२२२ कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा
०९१८०२३१ ययातिरनभिप्रेतं दैवोपहृतमात्मनः
०९१८०२३२ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः
०९१८०२४१ गते राजनि सा धीरे तत्र स्म रुदती पितुः
०९१८०२४२ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम्
०९१८०२५१ दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन्
०९१८०२५२ स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात्
०९१८०२६१ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम्
०९१८०२६२ गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि
०९१८०२७१ क्षणार्धमन्युर्भगवान्शिष्यं व्याचष्ट भार्गवः
०९१८०२७२ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे
०९१८०२८१ तथेत्यवस्थिते प्राह देवयानी मनोगतम्
०९१८०२८२ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु
०९१८०२९१ पित्रा दत्ता देवयान्यै शर्मिष्ठा सानुगा तदा
०९१८०२९२ स्वानां तत्सङ्कटं वीक्ष्य तदर्थस्य च गौरवम्
०९१८०२९३ देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत्
०९१८०३०१ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशना
०९१८०३०२ तमाह राजन्छर्मिष्ठामाधास्तल्पे न कर्हिचित्
०९१८०३११ विलोक्यौशनसीं राजञ्छर्मिष्ठा सुप्रजां क्वचित्
०९१८०३१२ तमेव वव्रे रहसि सख्याः पतिमृतौ सती
०९१८०३२१ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित्
०९१८०३२२ स्मरन्छुक्रवचः काले दिष्टमेवाभ्यपद्यत
०९१८०३३१ यदुं च तुर्वसुं चैव देवयानी व्यजायत
०९१८०३३२ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी
०९१८०३४१ गर्भसम्भवमासुर्या भर्तुर्विज्ञाय मानिनी
०९१८०३४२ देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता
०९१८०३५१ प्रियामनुगतः कामी वचोभिरुपमन्त्रयन्
०९१८०३५२ न प्रसादयितुं शेके पादसंवाहनादिभिः
०९१८०३६१ शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष
०९१८०३६२ त्वां जरा विशतां मन्द विरूपकरणी नृणाम्
०९१८०३७० श्रीययातिरुवाच

०९१८०३७१ अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्दुहितरि स्म ते
०९१८०३७२ व्यत्यस्यतां यथाकामं वयसा योऽभिधास्यति
०९१८०३८१ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत
०९१८०३८२ यदो तात प्रतीच्छेमां जरां देहि निजं वयः
०९१८०३९१ मातामहकृतां वत्स न तृप्तो विषयेष्वहम्
०९१८०३९२ वयसा भवदीयेन रंस्ये कतिपयाः समाः
०९१८०४०० श्रीयदुरुवाच
०९१८०४०१ नोत्सहे जरसा स्थातुमन्तरा प्राप्तया तव
०९१८०४०२ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः
०९१८०४११ तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत
०९१८०४१२ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः
०९१८०४२१ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम्
०९१८०४२२ न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि
०९१८०४३० श्रीपूरुरुवाच
०९१८०४३१ को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान्
०९१८०४३२ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम्
०९१८०४४१ उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः
०९१८०४४२ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः
०९१८०४५१ इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः
०९१८०४५२ सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप
०९१८०४६१ सप्तद्वीपपतिः संयक्पितृवत्पालयन्प्रजाः
०९१८०४६२ यथोपजोषं विषयाञ्जुजुषेऽव्याहतेन्द्रियः
०९१८०४७१ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः
०९१८०४७२ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः
०९१८०४८१ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः
०९१८०४८२ सर्वदेवमयं देवं सर्ववेदमयं हरिम्
०९१८०४९१ यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः
०९१८०४९२ नानेव भाति नाभाति स्वप्नमायामनोरथः
०९१८०५०१ तमेव हृदि विन्यस्य वासुदेवं गुहाशयम्
०९१८०५०२ नारायणमणीयांसं निराशीरयजत्प्रभुम्
०९१८०५११ एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम्

०९१८०५१२ विदधानोऽपि नातृप्यत्सार्वभौमः कदिन्द्रियैः
०९१९००१० श्रीशुक उवाच
०९१९००११ स इत्थमाचरन्कामान्स्त्रैणोऽपह्नवमात्मनः
०९१९००१२ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत
०९१९००२१ शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि
०९१९००२२ धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः
०९१९००३१ बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः
०९१९००३२ ददर्श कूपे पतितां स्वकर्मवशगामजाम्
०९१९००४१ तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन्
०९१९००४२ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसी
०९१९००५१ सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल
०९१९००५२ तया वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः
०९१९००६१ पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम्
०९१९००६२ स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः
०९१९००६३ रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत
०९१९००७१ तमेव प्रेष्ठतमया रममाणमजान्यया
०९१९००७२ विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत्
०९१९००८१ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम्
०९१९००८२ इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ
०९१९००९१ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम्
०९१९००९२ कुर्वन्निडविडाकारं नाशक्नोत्पथि सन्धितुम्
०९१९०१०१ तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा
०९१९०१०२ लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित्
०९१९०१११ सम्बद्धवृषणः सोऽपि ह्यजया कूपलब्धया
०९१९०११२ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति
०९१९०१२१ तथाहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः
०९१९०१२२ आत्मानं नाभिजानामि मोहितस्तव मायया
०९१९०१३१ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः
०९१९०१३२ न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते
०९१९०१४१ न जातु कामः कामानामुपभोगेन शांयति
०९१९०१४२ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते

०९१९०१५१ यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम्
०९१९०१५२ समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः
०९१९०१६१ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते
०९१९०१६२ तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत्
०९१९०१७१ मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत्
०९१९०१७२ बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति
०९१९०१८१ पूर्णं वर्षसहस्रं मे विषयान्सेवतोऽसकृत्
०९१९०१८२ तथापि चानुसवनं तृष्णा तेषूपजायते
०९१९०१९१ तस्मादेतामहं त्यक्त्वा ब्रह्मण्यध्याय मानसम्
०९१९०१९२ निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह
०९१९०२०१ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न सन्दिशेत्
०९१९०२०२ संसृतिं चात्मनाशं च तत्र विद्वान्स आत्मदृक्
०९१९०२११ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः
०९१९०२१२ दत्त्वा स्वजरसं तस्मादाददे विगतस्पृहः
०९१९०२२१ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम्
०९१९०२२२ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम्
०९१९०२३१ भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम्
०९१९०२३२ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ
०९१९०२४१ आसेवितं वर्षपूगान्षड्वर्गं विषयेषु सः
०९१९०२४२ क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः
०९१९०२५१ स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः
०९१९०२५२ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः
०९१९०२६१ श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः
०९१९०२६२ स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम्
०९१९०२७१ सा सन्निवासं सुहृदां प्रपायामिव गच्छताम्
०९१९०२७२ विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः
०९१९०२८१ सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी
०९१९०२८२ कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः
०९१९०२९१ नमस्तुभ्यं भगवते वासुदेवाय वेधसे
०९१९०२९२ सर्वभूताधिवासाय शान्ताय बृहते नमः
०९२०००१० श्रीबादरायणिरुवाच

०९२०००११ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत
०९२०००१२ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे
०९२०००२१ जनमेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः
०९२०००२२ प्रवीरोऽथ मनुस्युर्वै तस्माच्चारुपदोऽभवत्
०९२०००३१ तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः
०९२०००३२ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः
०९२०००४१ ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयुकः
०९२०००४२ जलेयुः सन्नतेयुश्च धर्मसत्यव्रतेयवः
०९२०००५१ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः
०९२०००५२ घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः
०९२०००६१ ऋतेयो रन्तिनावोऽभूत्त्रयस्तस्यात्मजा नृप
०९२०००६२ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः
०९२०००७१ तस्य मेधातिथिस्तस्मात्प्रस्कन्नाद्या द्विजातयः
०९२०००७२ पुत्रोऽभूत्सुमते रेभिर्दुष्मन्तस्तत्सुतो मतः
०९२०००८१ दुष्मन्तो मृगयां यातः कण्वाश्रमपदं गतः
०९२०००८२ तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव
०९२०००९१ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम्
०९२०००९२ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः
०९२००१०१ तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः
०९२००१०२ पप्रच्छ कामसन्तप्तः प्रहसञ्श्लक्ष्णया गिरा
०९२००१११ का त्वं कमलपत्राक्षि कस्यासि हृदयङ्गमे
०९२००११२ किं स्विच्चिकीर्षितं तत्र भवत्या निर्जने वने
०९२००१२१ व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे
०९२००१२२ न हि चेतः पौरवाणामधर्मे रमते क्वचित्
०९२००१३० श्रीशकुन्तलोवाच
०९२००१३१ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने
०९२००१३२ वेदैतद्भगवान्कण्वो वीर किं करवाम ते
०९२००१४१ आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः
०९२००१४२ भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते
०९२००१५० श्रीदुष्मन्त उवाच
०९२००१५१ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये

०९२००१५२ स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम्
०९२००१६१ ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम्
०९२००१६२ गान्धर्वविधिना राजा देशकालविधानवित्
०९२००१७१ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे
०९२००१७२ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम्
०९२००१८१ कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः
०९२००१८२ बद्ध्वा मृगेन्द्रं तरसा क्रीडति स्म स बालकः
०९२००१९१ तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा
०९२००१९२ हरेरंशांशसम्भूतं भर्तुरन्तिकमागमत्
०९२००२०१ यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ
०९२००२०२ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी
०९२००२११ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः
०९२००२१२ भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलाम्
०९२००२२१ रेतोधाः पुत्रो नयति नरदेव यमक्षयात्
०९२००२२२ त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला
०९२००२३१ पितर्युपरते सोऽपि चक्रवर्ती महायशाः
०९२००२३२ महिमा गीयते तस्य हरेरंशभुवो भुवि
०९२००२४१ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः
०९२००२४२ ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड्विभुः
०९२००२५१ पञ्चपञ्चाशता मेध्यैर्गङ्गायामनु वाजिभिः
०९२००२५२ मामतेयं पुरोधाय यमुनामनु च प्रभुः
०९२००२६१ अष्टसप्ततिमेध्याश्वान्बबन्ध प्रददद्वसु
०९२००२६२ भरतस्य हि दौष्मन्तेरग्निः साचीगुणे चितः
०९२००२६३ सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे
०९२००२७१ त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन्नृपान्
०९२००२७२ दौष्मन्तिरत्यगान्मायां देवानां गुरुमाययौ
०९२००२८१ मृगाञ्छुक्लदतः कृष्णान्हिरण्येन परीवृतान्
०९२००२८२ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश
०९२००२९१ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः
०९२००२९२ नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा
०९२००३०१ किरातहूणान्यवनान्पौण्ड्रान्कङ्कान्खशाञ्छकान्

०९२००३०२ अब्रह्मण्यनृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान्
०९२००३११ जित्वा पुरासुरा देवान्ये रसौकांसि भेजिरे
०९२००३१२ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत्
०९२००३२१ सर्वान्कामान्दुदुहतुः प्रजानां तस्य रोदसी
०९२००३२२ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत्
०९२००३३१ स संराड्लोकपालाख्यमैश्वर्यमधिराड्श्रियम्
०९२००३३२ चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह
०९२००३४१ तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः
०९२००३४२ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते
०९२००३५१ तस्यैवं वितथे वंशे तदर्थं यजतः सुतम्
०९२००३५२ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः
०९२००३६१ अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः
०९२००३६२ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमुपासृजत्
०९२००३७१ तं त्यक्तुकामां ममतां भर्तुस्त्यागविशङ्किताम्
०९२००३७२ नामनिर्वाचनं तस्य श्लोकमेनं सुरा जगुः
०९२००३८१ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते
०९२००३८२ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम्
०९२००३९१ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम्
०९२००३९२ व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये
०९२१००१० श्रीशुक उवाच
०९२१००११ वितथस्य सुतान्मन्योर्बृहत्क्षत्रो जयस्ततः
०९२१००१२ महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः
०९२१००२१ गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन
०९२१००२२ रन्तिदेवस्य महिमा इहामुत्र च गीयते
०९२१००३१ वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः
०९२१००३२ निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः
०९२१००४१ व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल
०९२१००४२ घृतपायससंयावं तोयं प्रातरुपस्थितम्
०९२१००५१ कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः
०९२१००५२ अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत्
०९२१००६१ तस्मै संव्यभजत्सोऽन्नमादृत्य श्रद्धयान्वितः

०९२१००६२ हरिं सर्वत्र सम्पश्यन्स भुक्त्वा प्रययौ द्विजः
०९२१००७१ अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः
०९२१००७२ विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन्
०९२१००८१ याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः
०९२१००८२ राजन्मे दीयतामन्नं सगणाय बुभुक्षते
०९२१००९१ स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतम्
०९२१००९२ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः
०९२१०१०१ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम्
०९२१०१०२ पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभाय मे
०९२१०१११ तस्य तां करुणां वाचं निशम्य विपुलश्रमाम्
०९२१०११२ कृपया भृशसन्तप्त इदमाहामृतं वचः
०९२१०१२१ न कामयेऽहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा
०९२१०१२२ आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः
०९२१०१३१ क्षुत्तृड्भ्रमो गात्रपरिभ्रमश्च दैन्यं क्लमः शोकविषादमोहाः
०९२१०१३२ सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे
०९२१०१४१ इति प्रभाष्य पानीयं म्रियमाणः पिपासया
०९२१०१४२ पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः
०९२१०१५१ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम्
०९२१०१५२ आत्मानं दर्शयां चक्रुर्माया विष्णुविनिर्मिताः
०९२१०१६१ स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः
०९२१०१६२ वासुदेवे भगवति भक्त्या चक्रे मनः परम्
०९२१०१७१ ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः
०९२१०१७२ माया गुणमयी राजन्स्वप्नवत्प्रत्यलीयत
०९२१०१८१ तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः
०९२१०१८२ अभवन्योगिनः सर्वे नारायणपरायणाः
०९२१०१९१ गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत
०९२१०१९२ दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः
०९२१०२०१ पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः
०९२१०२०२ बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम्
०९२१०२११ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः
०९२१०२१२ अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः

०९२१०२२१ अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः
०९२१०२२२ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः
०९२१०२३१ तत्सुतो विशदस्तस्य स्येनजित्समजायत
०९२१०२३२ रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः
०९२१०२४१ रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः
०९२१०२४२ पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत्
०९२१०२५१ स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत्
०९२१०२५२ योगी स गवि भार्यायां विष्वक्सेनमधात्सुतम्
०९२१०२६१ जैगीषव्योपदेशेन योगतन्त्रं चकार ह
०९२१०२६२ उदक्सेनस्ततस्तस्माद्भल्लाटो बार्हदीषवाः
०९२१०२७१ यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः
०९२१०२७२ नाम्ना सत्यधृतिस्तस्य दृढनेमिः सुपार्श्वकृत्
०९२१०२८१ सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः
०९२१०२८२ कृती हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट्
०९२१०२९१ संहिताः प्राच्यसाम्नां वै नीपो ह्युद्ग्रायुधस्ततः
०९२१०२९२ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः
०९२१०३०१ ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत्
०९२१०३०२ नलिन्यामजमीढस्य नीलः शान्तिस्तु तत्सुतः
०९२१०३११ शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत्
०९२१०३१२ भर्म्याश्वस्तनयस्तस्य पञ्चासन्मुद्गलादयः
०९२१०३२१ यवीनरो बृहद्विश्वः काम्पिल्लः सञ्जयः सुताः
०९२१०३२२ भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि
०९२१०३३१ विषयाणामलमिमे इति पञ्चालसंज्ञिताः
०९२१०३३२ मुद्गलाद्ब्रह्मनिर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम्
०९२१०३४१ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत्
०९२१०३४२ अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात्
०९२१०३५१ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः
०९२१०३५२ शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल
०९२१०३६१ शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम्
०९२१०३६२ तद्दृष्ट्वा कृपयागृह्णाच्छान्तनुर्मृगयां चरन्
०९२१०३६३ कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी

०९२२००१० श्रीशुक उवाच
०९२२००११ मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप
०९२२००१२ सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत्
०९२२००२१ तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः
०९२२००२२ स तस्माद्द्रुपदो जज्ञे सर्वसम्पत्समन्वितः
०९२२००२३ द्रुपदाद्द्रौपदी तस्य धृष्टद्युम्नादयः सुताः
०९२२००३१ धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पाञ्चालका इमे
०९२२००३२ योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः
०९२२००४१ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः
०९२२००४२ परीक्षिः सुधनुर्जह्नुर्निषधश्च कुरोः सुताः
०९२२००५१ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती
०९२२००५२ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः
०९२२००६१ कुशाम्बमत्स्यप्रत्यग्र चेदिपाद्याश्च चेदिपाः
०९२२००६२ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः
०९२२००७१ जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः
०९२२००७२ अन्यस्यामपि भार्यायां शकले द्वे बृहद्रथात्
०९२२००८१ ये मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते
०९२२००८२ जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत्सुतः
०९२२००९१ ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः
०९२२००९२ परीक्षिरनपत्योऽभूत्सुरथो नाम जाह्नवः
०९२२०१०१ ततो विदूरथस्तस्मात्सार्वभौमस्ततोऽभवत्
०९२२०१०२ जयसेनस्तत्तनयो राधिकोऽतोऽयुताय्वभूत्
०९२२०१११ ततश्चाक्रोधनस्तस्माद्देवातिथिरमुष्य च
०९२२०११२ ऋक्षस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः
०९२२०१२१ देवापिः शान्तनुस्तस्य बाह्लीक इति चात्मजाः
०९२२०१२२ पितृराज्यं परित्यज्य देवापिस्तु वनं गतः
०९२२०१३१ अभवच्छान्तनू राजा प्राङ्महाभिषसंज्ञितः
०९२२०१३२ यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः
०९२२०१४१ शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शान्तनुः
०९२२०१४२ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः
०९२२०१५१ शान्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक्

०९२२०१५२ राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये
०९२२०१६१ एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत्
०९२२०१६२ तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा
०९२२०१७१ वेदवादातिवादान्वै तदा देवो ववर्ष ह
०९२२०१७२ देवापिर्योगमास्थाय कलापग्राममाश्रितः
०९२२०१८१ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति
०९२२०१८२ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः
०९२२०१९१ शलश्च शान्तनोरासीद्गङ्गायां भीष्म आत्मवान्
०९२२०१९२ सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः
०९२२०२०१ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः
०९२२०२०२ शान्तनोर्दासकन्यायां जज्ञे चित्राङ्गदः सुतः
०९२२०२११ विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः
०९२२०२१२ यस्यां पराशरात्साक्षादवतीर्णो हरेः कला
०९२२०२२१ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम्
०९२२०२२२ हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः
०९२२०२३१ मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ
०९२२०२३२ विचित्रवीर्योऽथोवाह काशीराजसुते बलात्
०९२२०२४१ स्वयंवरादुपानीते अम्बिकाम्बालिके उभे
०९२२०२४२ तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः
०९२२०२५१ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः
०९२२०२५२ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत्
०९२२०२६१ गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप
०९२२०२६२ तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका
०९२२०२७१ शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः
०९२२०२७२ जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः
०९२२०२८१ नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः
०९२२०२८२ द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन्
०९२२०२९१ युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो वृकोदरात्
०९२२०२९२ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः
०९२२०३०१ सहदेवसुतो राजन्छ्रुतकर्मा तथापरे
०९२२०३०२ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः

०९२२०३११ भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः
०९२२०३१२ सहदेवात्सुहोत्रं तु विजयासूत पार्वती
०९२२०३२१ करेणुमत्यां नकुलो नरमित्रं तथार्जुनः
०९२२०३२२ इरावन्तमुलुप्यां वै सुतायां बभ्रुवाहनम्
०९२२०३२३ मणिपुरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः
०९२२०३३१ तव तातः सुभद्रायामभिमन्युरजायत
०९२२०३३२ सर्वातिरथजिद्वीर उत्तरायां ततो भवान्
०९२२०३४१ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा
०९२२०३४२ त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात्
०९२२०३५१ तवेमे तनयास्तात जनमेजयपूर्वकाः
०९२२०३५२ श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान्
०९२२०३६१ जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम्
०९२२०३६२ सर्पान्वै सर्पयागाग्नौ स होष्यति रुषान्वितः
०९२२०३७१ कालषेयं पुरोधाय तुरं तुरगमेधषाट्
०९२२०३७२ समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः
०९२२०३८१ तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन्
०९२२०३८२ अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति
०९२२०३९१ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः
०९२२०३९२ असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः
०९२२०४०१ गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति
०९२२०४०२ उक्तस्ततश्चित्ररथस्तस्माच्छुचिरथः सुतः
०९२२०४११ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः
०९२२०४१२ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः
०९२२०४२१ परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः
०९२२०४२२ नृपञ्जयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति
०९२२०४३१ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः
०९२२०४३२ शतानीकाद्दुर्दमनस्तस्यापत्यं महीनरः
०९२२०४४१ दण्डपाणिर्निमिस्तस्य क्षेमको भविता यतः
०९२२०४४२ ब्रह्मक्षत्रस्य वै योनिर्वंशो देवर्षिसत्कृतः
०९२२०४५१ क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ
०९२२०४५२ अथ मागधराजानो भाविनो ये वदामि ते

०९२२०४६१ भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः
०९२२०४६२ ततो युतायुस्तस्यापि निरमित्रोऽथ तत्सुतः
०९२२०४७१ सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित्
०९२२०४७२ ततः सुतञ्जयाद्विप्रः शुचिस्तस्य भविष्यति
०९२२०४८१ क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः समस्ततः
०९२२०४८२ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः
०९२२०४९१ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुञ्जयः
०९२२०४९२ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम्
०९२३००१० श्रीशुक उवाच
०९२३००११ अनोः सभानरश्चक्षुः परेष्णुश्च त्रयः सुताः
०९२३००१२ सभानरात्कालनरः सृञ्जयस्तत्सुतस्ततः
०९२३००२१ जनमेजयस्तस्य पुत्रो महाशालो महामनाः
०९२३००२२ उशीनरस्तितिक्षुश्च महामनस आत्मजौ
०९२३००३१ शिबिर्वरः कृमिर्दक्षश्चत्वारोशीनरात्मजाः
०९२३००३२ वृषादर्भः सुधीरश्च मद्रः केकय आत्मवान्
०९२३००४१ शिबेश्चत्वार एवासंस्तितिक्षोश्च रुषद्रथः
०९२३००४२ ततो होमोऽथ सुतपा बलिः सुतपसोऽभवत्
०९२३००५१ अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रौड्रसंज्ञिताः
०९२३००५२ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः
०९२३००६१ चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्यकांश्च ते
०९२३००६२ खलपानोऽङ्गतो जज्ञे तस्माद्दिविरथस्ततः
०९२३००७१ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः
०९२३००७२ रोमपाद इति ख्यातस्तस्मै दशरथः सखा
०९२३००८१ शान्तां स्वकन्यां प्रायच्छदृष्यश्रृङ्ग उवाह याम्
०९२३००८२ देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम्
०९२३००९१ नाट्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः
०९२३००९२ स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वते
०९२३०१०१ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः
०९२३०१०२ चतुरङ्गो रोमपादात्पृथुलाक्षस्तु तत्सुतः
०९२३०१११ बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः
०९२३०११२ आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः

०९२३०१२१ विजयस्तस्य सम्भूत्यां ततो धृतिरजायत
०९२३०१२२ ततो धृतव्रतस्तस्य सत्कर्माधिरथस्ततः
०९२३०१३१ योऽसौ गङ्गातटे क्रीडन्मञ्जूषान्तर्गतं शिशुम्
०९२३०१३२ कुन्त्यापविद्धं कानीनमनपत्योऽकरोत्सुतम्
०९२३०१४१ वृषसेनः सुतस्तस्य कर्णस्य जगतीपते
०९२३०१४२ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः
०९२३०१५१ आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः
०९२३०१५२ धृतस्य दुर्मदस्तस्मात्प्रचेताः प्राचेतसः शतम्
०९२३०१६१ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः
०९२३०१६२ तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान्
०९२३०१७१ त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः
०९२३०१७२ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत्
०९२३०१८१ दुष्मन्तः स पुनर्भेजे स्ववंशं राज्यकामुकः
०९२३०१८२ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ
०९२३०१९१ वर्णयामि महापुण्यं सर्वपापहरं नृणाम्
०९२३०१९२ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते
०९२३०२०१ यत्रावतीर्णो भगवान्परमात्मा नराकृतिः
०९२३०२०२ यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः
०९२३०२११ चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः
०९२३०२१२ महाहयो रेणुहयो हैहयश्चेति तत्सुताः
०९२३०२२१ धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः
०९२३०२२२ सोहञ्जिरभवत्कुन्तेर्महिष्मान्भद्रसेनकः
०९२३०२३१ दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः
०९२३०२३२ कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः
०९२३०२४१ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत्
०९२३०२४२ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः
०९२३०२५१ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः
०९२३०२५२ यज्ञदानतपोयोगैः श्रुतवीर्यदयादिभिः
०९२३०२६१ पञ्चाशीति सहस्राणि ह्यव्याहतबलः समाः
०९२३०२६२ अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु
०९२३०२७१ तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे

०९२३०२७२ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः
०९२३०२८१ जयध्वजात्तालजङ्घस्तस्य पुत्रशतं त्वभूत्
०९२३०२८२ क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम्
०९२३०२९१ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः
०९२३०२९२ तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं यतः कुलम्
०९२३०३०१ माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः
०९२३०३०२ यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः
०९२३०३११ स्वाहितोऽतो विषद्गुर्वै तस्य चित्ररथस्ततः
०९२३०३१२ शशबिन्दुर्महायोगी महाभागो महानभूत्
०९२३०३२१ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः
०९२३०३२२ तस्य पत्नीसहस्राणां दशानां सुमहायशाः
०९२३०३३१ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत्
०९२३०३३२ तेषां तु षद्प्रधानानां पृथुश्रवस आत्मजः
०९२३०३४१ धर्मो नामोशना तस्य हयमेधशतस्य याट्
०९२३०३४२ तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु
०९२३०३५१ पुरुजिद्रुक्मरुक्मेषु पृथुज्यामघसंज्ञिताः
०९२३०३५२ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात्
०९२३०३६१ नाविन्दच्छत्रुभवनाद्भोज्यां कन्यामहारषीत्
०९२३०३६२ रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता
०९२३०३७१ केयं कुहक मत्स्थानं रथमारोपितेति वै
०९२३०३७२ स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत्
०९२३०३८१ अहं बन्ध्यासपत्नी च स्नुषा मे युज्यते कथम्
०९२३०३८२ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते
०९२३०३९१ अन्वमोदन्त तद्विश्वे देवाः पितर एव च
०९२३०३९२ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम्
०९२३०३९३ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम्
०९२४००१० श्रीशुक उवाच
०९२४००११ तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ
०९२४००१२ तृतीयं रोमपादं च विदर्भकुलनन्दनम्
०९२४००२१ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत
०९२४००२२ उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृपाः

०९२४००३१ क्रथस्य कुन्तिः पुत्रोऽभूद्वृष्णिस्तस्याथ निर्वृतिः
०९२४००३२ ततो दशार्हो नाम्नाभूत्तस्य व्योमः सुतस्ततः
०९२४००४१ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः
०९२४००४२ ततो नवरथः पुत्रो जातो दशरथस्ततः
०९२४००५१ करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः
०९२४००५२ देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः
०९२४००६१ पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः
०९२४००६२ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः
०९२४००७१ सात्वतस्य सुताः सप्त महाभोजश्च मारिष
०९२४००७२ भजमानस्य निम्लोचिः किङ्कणो धृष्टिरेव च
०९२४००८१ एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः
०९२४००८२ शताजिच्च सहस्राजिदयुताजिदिति प्रभो
०९२४००९१ बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू
०९२४००९२ यथैव श्रृणुमो दूरात्सम्पश्यामस्तथान्तिकात्
०९२४०१०१ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः
०९२४०१०२ पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च
०९२४०१११ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि
०९२४०११२ महाभोजोऽतिधर्मात्मा भोजा आसंस्तदन्वये
०९२४०१२१ वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप
०९२४०१२२ शिनिस्तस्यानमित्रश्च निघ्नोऽभूदनमित्रतः
०९२४०१३१ सत्राजितः प्रसेनश्च निघ्नस्याथासतुः सुतौ
०९२४०१३२ अनमित्रसुतो योऽन्यः शिनिस्तस्य च सत्यकः
०९२४०१४१ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः
०९२४०१४२ युगन्धरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः
०९२४०१५१ श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः
०९२४०१५२ अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः
०९२४०१६१ आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः
०९२४०१६२ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः
०९२४०१७१ शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश
०९२४०१७२ तेषां स्वसा सुचाराख्या द्वावक्रूरसुतावपि
०९२४०१८१ देववानुपदेवश्च तथा चित्ररथात्मजाः

०९२४०१८२ पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः
०९२४०१९१ कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः
०९२४०१९२ कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः
०९२४०२०१ कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः
०९२४०२०२ अन्धकाद्दुन्दुभिस्तस्मादविद्योतः पुनर्वसुः
०९२४०२११ तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ
०९२४०२१२ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः
०९२४०२२१ देववानुपदेवश्च सुदेवो देववर्धनः
०९२४०२२२ तेषां स्वसारः सप्तासन्धृतदेवादयो नृप
०९२४०२३१ शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता
०९२४०२३२ सहदेवा देवकी च वसुदेव उवाह ताः
०९२४०२४१ कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा
०९२४०२४२ राष्ट्रपालोऽथ धृष्टिश्च तुष्टिमानौग्रसेनयः
०९२४०२५१ कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका
०९२४०२५२ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः
०९२४०२६१ शूरो विदूरथादासीद्भजमानस्तु तत्सुतः
०९२४०२६२ शिनिस्तस्मात्स्वयं भोजो हृदिकस्तत्सुतो मतः
०९२४०२७१ देवमीढः शतधनुः कृतवर्मेति तत्सुताः
०९२४०२७२ देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत्
०९२४०२८१ तस्यां स जनयामास दश पुत्रानकल्मषान्
०९२४०२८२ वसुदेवं देवभागं देवश्रवसमानकम्
०९२४०२९१ सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम्
०९२४०२९२ देवदुन्दुभयो नेदुरानका यस्य जन्मनि
०९२४०३०१ वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम्
०९२४०३०२ पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः
०९२४०३११ राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः
०९२४०३१२ कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात्
०९२४०३२१ साप दुर्वाससो विद्यां देवहूतीं प्रतोषितात्
०९२४०३२२ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः
०९२४०३३१ तदैवोपागतं देवं वीक्ष्य विस्मितमानसा
०९२४०३३२ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे

०९२४०३४१ अमोघं देवसन्दर्शमादधे त्वयि चात्मजम्
०९२४०३४२ योनिर्यथा न दुष्येत कर्ताहं ते सुमध्यमे
०९२४०३५१ इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः
०९२४०३५२ सद्यः कुमारः सञ्जज्ञे द्वितीय इव भास्करः
०९२४०३६१ तं सात्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती
०९२४०३६२ प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः
०९२४०३७१ श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत्
०९२४०३७२ यस्यामभूद्दन्तवक्र ऋषिशप्तो दितेः सुतः
०९२४०३८१ कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत
०९२४०३८२ सन्तर्दनादयस्तस्यां पञ्चासन्कैकयाः सुताः
०९२४०३९१ राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह
०९२४०३९२ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत्
०९२४०४०१ शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः
०९२४०४०२ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ
०९२४०४११ कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा
०९२४०४१२ बकः कङ्कात्तु कङ्कायां सत्यजित्पुरुजित्तथा
०९२४०४२१ सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान्
०९२४०४२२ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः
०९२४०४३१ मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा
०९२४०४३२ तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे
०९२४०४४१ सुमित्रार्जुनपालादीन्समीकात्तु सुदामनी
०९२४०४४२ आनकः कर्णिकायां वै ऋतधामाजयावपि
०९२४०४५१ पौरवी रोहिणी भद्रा मदिरा रोचना इला
०९२४०४५२ देवकीप्रमुखाश्चासन्पत्न्य आनकदुन्दुभेः
०९२४०४६१ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम्
०९२४०४६२ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्
०९२४०४७१ सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च
०९२४०४७२ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन्
०९२४०४८१ नन्दोपनन्दकृतक शूराद्या मदिरात्मजाः
०९२४०४८२ कौशल्या केशिनं त्वेकमसूत कुलनन्दनम्
०९२४०४९१ रोचनायामतो जाता हस्तहेमाङ्गदादयः

०९२४०४९२ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत्
०९२४०५०१ विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः
०९२४०५०२ शान्तिदेवात्मजा राजन्प्रशमप्रसितादयः
०९२४०५११ राजन्यकल्पवर्षाद्या उपदेवासुता दश
०९२४०५१२ वसुहंससुवंशाद्याः श्रीदेवायास्तु षड्सुताः
०९२४०५२१ देवरक्षितया लब्धा नव चात्र गदादयः
०९२४०५२२ वसुदेवः सुतानष्टावादधे सहदेवया
०९२४०५३१ प्रवरश्रुतमुख्यांश्च साक्षाद्धर्मो वसूनिव
०९२४०५३२ वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत्
०९२४०५४१ कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः
०९२४०५४२ ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम्
०९२४०५५१ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल
०९२४०५५२ सुभद्रा च महाभागा तव राजन्पितामही
०९२४०५६१ यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः
०९२४०५६२ तदा तु भगवानीश आत्मानं सृजते हरिः
०९२४०५७१ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते
०९२४०५७२ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः
०९२४०५८१ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि
०९२४०५८२ अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते
०९२४०५९१ अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः
०९२४०५९२ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः
०९२४०६०१ कर्माण्यपरिमेयाणि मनसापि सुरेश्वरैः
०९२४०६०२ सहसङ्कर्षणश्चक्रे भगवान्मधुसूदनः
०९२४०६११ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम्
०९२४०६१२ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः
०९२४०६२१ यस्मिन्सत्कर्णपीयुषे यशस्तीर्थवरे सकृत्
०९२४०६२२ श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम्
०९२४०६३१ भोजवृष्ण्यन्धकमधु शूरसेनदशार्हकैः
०९२४०६३२ श्लाघनीयेहितः शश्वत्कुरुसृञ्जयपाण्डुभिः
०९२४०६४१ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया
०९२४०६४२ नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया

०९२४०६५१ यस्याननं मकरकुण्डलचारुकर्ण भ्राजत्कपोलसुभगं सविलासहासम्
०९२४०६५२ नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च
०९२४०६६१ जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः
०९२४०६६२ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयञ्जनेषु
०९२४०६७१ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामन्तःसमुत्थकलिना युधि भूपचम्वः
०९२४०६७२ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम
१००१००१० श्रीराजोवाच
१००१००११ कथितो वंशविस्तारो भवता सोमसूर्ययोः
१००१००१३ राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम्
१००१००२१ यदोश्च धर्मशीलस्य नितरां मुनिसत्तम
१००१००२३ तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः
१००१००३१ अवतीर्य यदोर्वंशे भगवान्भूतभावनः
१००१००३३ कृतवान्यानि विश्वात्मा तानि नो वद विस्तरात्
१००१००४१ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात्
१००१००४३ क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात्
१००१००५१ पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः
१००१००५३ दुरत्ययं कौरवसैन्यसागरं कृत्वातरन्वत्सपदं स्म यत्प्लवाः
१००१००६१ द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम्
१००१००६३ जुगोप कुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः
१००१००७१ वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः
१००१००७३ प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन्
१००१००८१ रोहिण्यास्तनयः प्रोक्तो रामः सङ्कर्षणस्त्वया
१००१००८३ देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना
१००१००९१ कस्मान्मुकुन्दो भगवान्पितुर्गेहाद्व्रजं गतः
१००१००९३ क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतां पतिः
१००१०१०१ व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः
१००१०१०३ भ्रातरं चावधीत्कंसं मातुरद्धातदर्हणम्
१००१०१११ देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः
१००१०११३ यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभोः
१००१०१२१ एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम्
१००१०१२३ वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम्

१००१०१३१ नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते
१००१०१३३ पिबन्तं त्वन्मुखाम्भोज च्युतं हरिकथामृतम्
१००१०१४० सूत उवाच
१००१०१४१ एवं निशम्य भृगुनन्दन साधुवादं
१००१०१४२ वैयासकिः स भगवानथ विष्णुरातम्
१००१०१४३ प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं
१००१०१४४ व्याहर्तुमारभत भागवतप्रधानः
१००१०१५० श्रीशुक उवाच
१००१०१५१ सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम
१००१०१५३ वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः
१००१०१६१ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि
१००१०१६३ वक्तारं प्रच्छकं श्रोतृंस्तत्पादसलिलं यथा
१००१०१७१ भूमिर्दृप्तनृपव्याज दैत्यानीकशतायुतैः
१००१०१७३ आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ
१००१०१८१ गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः
१००१०१८३ उपस्थितान्तिके तस्मै व्यसनं समवोचत
१००१०१९१ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह
१००१०१९३ जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः
१००१०२०१ तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम्
१००१०२०३ पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः
१००१०२११ गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह
१००१०२१३ गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम्
१००१०२२१ पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम्
१००१०२२३ स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि
१००१०२३१ वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः
१००१०२३३ जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः
१००१०२४१ वासुदेवकलानन्तः सहस्रवदनः स्वराट्
१००१०२४३ अग्रतो भविता देवो हरेः प्रियचिकीर्षया
१००१०२५१ विष्णोर्माया भगवती यया सम्मोहितं जगत्
१००१०२५३ आदिष्टा प्रभुणांशेन कार्यार्थे सम्भविष्यति
१००१०२६० श्रीशुक उवाच

१००१०२६१ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः
१००१०२६३ आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ
१००१०२७१ शूरसेनो यदुपतिर्मथुरामावसन्पुरीम्
१००१०२७३ माथुराञ्छूरसेनांश्च विषयान्बुभुजे पुरा
१००१०२८१ राजधानी ततः साभूत्सर्वयादवभूभुजाम्
१००१०२८३ मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः
१००१०२९१ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः
१००१०२९३ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत्
१००१०३०१ उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया
१००१०३०३ रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः
१००१०३११ चतुःशतं पारिबर्हं गजानां हेममालिनाम्
१००१०३१३ अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम्
१००१०३२१ दासीनां सुकुमारीणां द्वे शते समलङ्कृते
१००१०३२३ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः
१००१०३३१ शङ्खतूर्यमृदङ्गाश्च नेदुर्दुन्दुभयः समम्
१००१०३३३ प्रयाणप्रक्रमे तात वरवध्वोः सुमङ्गलम्
१००१०३४१ पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक्
१००१०३४३ अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध
१००१०३५१ इत्युक्तः स खलः पापो भोजानां कुलपांसनः
१००१०३५३ भगिनीं हन्तुमारब्धं खड्गपाणिः कचेऽग्रहीत्
१००१०३६१ तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम्
१००१०३६३ वसुदेवो महाभाग उवाच परिसान्त्वयन्
१००१०३७० श्रीवसुदेव उवाच
१००१०३७१ श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः
१००१०३७३ स कथं भगिनीं हन्यात्स्त्रियमुद्वाहपर्वणि
१००१०३८१ मृत्युर्जन्मवतां वीर देहेन सह जायते
१००१०३८३ अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः
१००१०३९१ देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः
१००१०३९३ देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः
१००१०४०१ व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति
१००१०४०३ यथा तृणजलौकैवं देही कर्मगतिं गतः

१००१०४११ स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः
१००१०४१३ दृष्टश्रुताभ्यां मनसानुचिन्तयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः
१००१०४२१ यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु
१००१०४२३ गुणेषु मायारोचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते
१००१०४३१ ज्योतिर्यथैवोदकपार्थिवेष्वदः
१००१०४३२ समीरवेगानुगतं विभाव्यते
१००१०४३३ एवं स्वमायारचितेष्वसौ पुमान्
१००१०४३४ गुणेषु रागानुगतो विमुह्यति
१००१०४४१ तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः
१००१०४४३ आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम्
१००१०४५१ एषा तवानुजा बाला कृपणा पुत्रिकोपमा
१००१०४५३ हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः
१००१०४६० श्रीशुक उवाच
१००१०४६१ एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः
१००१०४६३ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः
१००१०४७१ निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः
१००१०४७३ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत
१००१०४८१ मृत्युर्बुद्धिमतापोह्यो यावद्बुद्धिबलोदयम्
१००१०४८३ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः
१००१०४९१ प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम्
१००१०४९३ सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत्
१००१०५०१ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया
१००१०५०३ उपस्थितो निवर्तेत निवृत्तः पुनरापतेत्
१००१०५११ अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति
१००१०५१३ एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः
१००१०५२१ एवं विमृश्य तं पापं यावदात्मनिदर्शनम्
१००१०५२३ पूजयामास वै शौरिर्बहुमानपुरःसरम्
१००१०५३१ प्रसन्नवदनाम्भोजो नृशंसं निरपत्रपम्
१००१०५३३ मनसा दूयमानेन विहसन्निदमब्रवीत्
१००१०५४० श्रीवसुदेव उवाच
१००१०५४१ न ह्यस्यास्ते भयं सौम्य यद्वै साहाशरीरवाक्

१००१०५४३ पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम्
१००१०५५० श्रीशुक उवाच
१००१०५५१ स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित्
१००१०५५३ वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम्
१००१०५६१ अथ काल उपावृत्ते देवकी सर्वदेवता
१००१०५६३ पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम्
१००१०५७१ कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः
१००१०५७३ अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः
१००१०५८१ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम्
१००१०५८३ किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम्
१००१०५९१ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम्
१००१०५९३ कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत्
१००१०६०१ प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम्
१००१०६०३ अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल
१००१०६११ तथेति सुतमादाय ययावानकदुन्दुभिः
१००१०६१३ नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः
१००१०६२१ नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः
१००१०६२३ वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः
१००१०६३१ सर्वे वै देवताप्राया उभयोरपि भारत
१००१०६३३ ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः
१००१०६४१ एतत्कंसाय भगवाञ्छशंसाभ्येत्य नारदः
१००१०६४३ भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम्
१००१०६५१ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति
१००१०६५३ देवक्या गर्भसम्भूतं विष्णुं च स्ववधं प्रति
१००१०६६१ देवकीं वसुदेवं च निगृह्य निगडैर्गृहे
१००१०६६३ जातं जातमहन्पुत्रं तयोरजनशङ्कया
१००१०६७१ मातरं पितरं भ्रातॄन्सर्वांश्च सुहृदस्तथा
१००१०६७३ घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि
१००१०६८१ आत्मानमिह सञ्जातं जानन्प्राग्विष्णुना हतम्
१००१०६८३ महासुरं कालनेमिं यदुभिः स व्यरुध्यत
१००१०६९१ उग्रसेनं च पितरं यदुभोजान्धकाधिपम्

१००१०६९३ स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः
१००२००१० श्रीशुक उवाच
१००२००११ प्रलम्बबकचाणूर तृणावर्तमहाशनैः
१००२००१३ मुष्टिकारिष्टद्विविद पूतनाकेशीधेनुकैः
१००२००२१ अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः
१००२००२३ यदूनां कदनं चक्रे बली मागधसंश्रयः
१००२००३१ ते पीडिता निविविशुः कुरुपञ्चालकेकयान्
१००२००३३ शाल्वान्विदर्भान्निषधान्विदेहान्कोशलानपि
१००२००४१ एके तमनुरुन्धाना ज्ञातयः पर्युपासते
१००२००४३ हतेषु षड्सु बालेषु देवक्या औग्रसेनिना
१००२००५१ सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते
१००२००५३ गर्भो बभूव देवक्या हर्षशोकविवर्धनः
१००२००६१ भगवानपि विश्वात्मा विदित्वा कंसजं भयम्
१००२००६३ यदूनां निजनाथानां योगमायां समादिशत्
१००२००७१ गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम्
१००२००७३ रोहिणी वसुदेवस्य भार्यास्ते नन्दगोकुले
१००२००७५ अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि
१००२००८१ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्
१००२००८३ तत्सन्निकृष्य रोहिण्या उदरे सन्निवेशय
१००२००९१ अथाहमंशभागेन देवक्याः पुत्रतां शुभे
१००२००९३ प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि
१००२०१०१ अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम्
१००२०१०३ धूपोपहारबलिभिः सर्वकामवरप्रदाम्
१००२०१११ नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि
१००२०११३ दुर्गेति भद्रकालीति विजया वैष्णवीति च
१००२०१२१ कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च
१००२०१२३ माया नारायणीशानी शारदेत्यम्बिकेति च
१००२०१३१ गर्भसङ्कर्षणात्तं वै प्राहुः सङ्कर्षणं भुवि
१००२०१३३ रामेति लोकरमणाद्बलभद्रं बलोच्छ्रयात्
१००२०१४१ सन्दिष्टैवं भगवता तथेत्योमिति तद्वचः
१००२०१४३ प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत्

१००२०१५१ गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया

१००२०१५३ अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः

१००२०१६१ भगवानपि विश्वात्मा भक्तानामभयङ्करः

१००२०१६३ आविवेशांशभागेन मन आनकदुन्दुभेः

१००२०१७१ स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः

१००२०१७३ दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह

१००२०१८१ ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी

१००२०१८३ दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः

१००२०१९१ सा देवकी सर्वजगन्निवास निवासभूता नितरां न रेजे

१००२०१९३ भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती

१००२०२०१ तां वीक्ष्य कंसः प्रभयाजितान्तरां

१००२०२०२ विरोचयन्तीं भवनं शुचिस्मिताम्

१००२०२०३ आहैष मे प्राणहरो हरिर्गुहां

१००२०२०४ ध्रुवं श्रितो यन्न पुरेयमीदृशी

१००२०२११ किमद्य तस्मिन्करणीयमाशु मे यदर्थतन्त्रो न विहन्ति विक्रमम्

१००२०२१३ स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकालमायुः

१००२०२२१ स एष जीवन्खलु सम्परेतो वर्तेत योऽत्यन्तनृशंसितेन

१००२०२२३ देहे मृते तं मनुजाः शपन्ति गन्ता तमोऽन्धं तनुमानिनो ध्रुवम्

१००२०२३१ इति घोरतमाद्भावात्सन्निवृत्तः स्वयं प्रभुः

१००२०२३३ आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत्

१००२०२४१ आसीनः संविशंस्तिष्ठन्भुञ्जानः पर्यटन्महीम्

१००२०२४३ चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत्

१००२०२५१ ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः

१००२०२५३ देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन्

१००२०२६१ सत्यव्रतं सत्यपरं त्रिसत्यं

१००२०२६२ सत्यस्य योनिं निहितं च सत्ये

१००२०२६३ सत्यस्य सत्यमृतसत्यनेत्रं

१००२०२६४ सत्यात्मकं त्वां शरणं प्रपन्नाः

१००२०२७१ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा

१००२०२७३ सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः

१००२०२८१ त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च

१००२०२८३ त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये
१००२०२९१ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य
१००२०२९३ सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम्
१००२०३०१ त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनावेशितचेतसैके
१००२०३०३ त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम्
१००२०३११ स्वयं समुत्तीर्य सुदुस्तरं द्युमन्
१००२०३१२ भवार्णवं भीममदभ्रसौहृदाः
१००२०३१३ भवत्पदाम्भोरुहनावमत्र ते
१००२०३१४ निधाय याताः सदनुग्रहो भवान्
१००२०३२१ येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्
१००२०३२२ त्वय्यस्तभावादविशुद्धबुद्धयः
१००२०३२३ आरुह्य कृच्छ्रेण परं पदं ततः
१००२०३२४ पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः
१००२०३३१ तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः
१००२०३३३ त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो
१००२०३४१ सत्त्वं विशुद्धं श्रयते भवान्स्थितौ
१००२०३४२ शरीरिणां श्रेयौपायनं वपुः
१००२०३४३ वेदक्रियायोगतपःसमाधिभिस्
१००२०३४४ तवार्हणं येन जनः समीहते
१००२०३५१ सत्त्वं न चेद्धातरिदं निजं भवेद्
१००२०३५२ विज्ञानमज्ञानभिदापमार्जनम्
१००२०३५३ गुणप्रकाशैरनुमीयते भवान्
१००२०३५४ प्रकाशते यस्य च येन वा गुणः
१००२०३६१ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः
१००२०३६३ मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि
१००२०३७१ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्
१००२०३७२ नामानि रूपाणि च मङ्गलानि ते
१००२०३७३ क्रियासु यस्त्वच्चरणारविन्दयोर्
१००२०३७४ आविष्टचेता न भवाय कल्पते
१००२०३८१ दिष्ट्या हरेऽस्या भवतः पदो भुवो
१००२०३८२ भारोऽपनीतस्तव जन्मनेशितुः

१००२०३८३ दिष्ट्याङ्कितां त्वत्पदकैः सुशोभनैर्
१००२०३८४ द्रक्ष्याम गां द्यां च तवानुकम्पिताम्
१००२०३९१ न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे
१००२०३९३ भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि
१००२०४०१ मत्स्याश्वकच्छपनृसिंहवराहहंस
१००२०४०२ राजन्यविप्रविबुधेषु कृतावतारः
१००२०४०३ त्वं पासि नस्त्रिभुवनं च यथाधुनेश
१००२०४०४ भारं भुवो हर यदूत्तम वन्दनं ते
१००२०४११ दिष्ट्याम्ब ते कुक्षिगतः परः पुमान्
१००२०४१२ अंशेन साक्षाद्भगवान्भवाय नः
१००२०४१३ माभूद्भयं भोजपतेर्मुमूर्षोर्
१००२०४१४ गोप्ता यदूनां भविता तवात्मजः
१००२०४२० श्रीशुक उवाच
१००२०४२१ इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा
१००२०४२३ ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम्
१००३००१० श्रीशुक उवाच
१००३००११ अथ सर्वगुणोपेतः कालः परमशोभनः
१००३००१३ यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम्
१००३००२१ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम्
१००३००२३ मही मङ्गलभूयिष्ठ पुरग्रामव्रजाकरा
१००३००३१ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः
१००३००३३ द्विजालिकुलसन्नाद स्तवका वनराजयः
१००३००४१ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः
१००३००४३ अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत
१००३००५१ मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम्
१००३००५३ जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयः समम्
१००३००६१ जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः
१००३००६३ विद्याधर्यश्च ननृतुरप्सरोभिः समं मुदा
१००३००७१ मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः
१००३००७३ मन्दं मन्दं जलधरा जगर्जुरनुसागरम्
१००३००८१ निशीथे तमौद्भूते जायमाने जनार्दने

१००३००८३ देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः
१००३००८५ आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः
१००३००९१ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्
१००३००९३ श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्
१००३०१०१ महार्हवैदूर्यकिरीटकुण्डल त्विषा परिष्वक्तसहस्रकुन्तलम्
१००३०१०३ उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत
१००३०१११ स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा
१००३०११३ कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्
१००३०१२१ अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः
१००३०१२३ स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित्
१००३०१३० श्रीवसुदेव उवाच
१००३०१३१ विदितोऽसि भवान्साक्षात्पुरुषः प्रकृतेः परः
१००३०१३३ केवलानुभवानन्द स्वरूपः सर्वबुद्धिदृक्
१००३०१४१ स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम्
१००३०१४३ तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे
१००३०१५१ यथेमेऽविकृता भावास्तथा ते विकृतैः सह
१००३०१५३ नानावीर्याः पृथग्भूता विराजं जनयन्ति हि
१००३०१६१ सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव
१००३०१६३ प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः
१००३०१७१ एवं भवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः
१००३०१७३ अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः
१००३०१८१ य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः
१००३०१८३ विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान्
१००३०१९१ त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो
१००३०१९२ वदन्त्यनीहादगुणादविक्रियात्
१००३०१९३ त्वयीश्वरे ब्रह्मणि नो विरुध्यते
१००३०१९४ त्वदाश्रयत्वादुपचर्यते गुणैः
१००३०२०१ स त्वं त्रिलोकस्थितये स्वमायया
१००३०२०२ बिभर्षि शुक्लं खलु वर्णमात्मनः
१००३०२०३ सर्गाय रक्तं रजसोपबृंहितं
१००३०२०४ कृष्णं च वर्णं तमसा जनात्यये

१००३०२११ त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर
१००३०२१३ राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः
१००३०२२१ अयं त्वसभ्यस्तव जन्म नौ गृहे
१००३०२२२ श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर
१००३०२२३ स तेऽवतारं पुरुषैः समर्पितं
१००३०२२४ श्रुत्वाधुनैवाभिसरत्युदायुधः
१००३०२३० श्रीशुक उवाच
१००३०२३१ अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम्
१००३०२३३ देवकी तमुपाधावत्कंसाद्भीता सुविस्मिता
१००३०२४० श्रीदेवक्युवाच
१००३०२४१ रूपं यत्तत्प्राहुरव्यक्तमाद्यं
१००३०२४२ ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्
१००३०२४३ सत्तामात्रं निर्विशेषं निरीहं
१००३०२४४ स त्वं साक्षाद्विष्णुरध्यात्मदीपः
१००३०२५१ नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु
१००३०२५३ व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यतेऽशेषसंज्ञः
१००३०२६१ योऽयं कालस्तस्य तेऽव्यक्तबन्धो
१००३०२६२ चेष्टामाहुश्चेष्टते येन विश्वम्
१००३०२६३ निमेषादिर्वत्सरान्तो महीयांस्
१००३०२६४ तं त्वेशानं क्षेमधाम प्रपद्ये
१००३०२७१ मर्त्यो मृत्युव्यालभीतः पलायन्लोकान्सर्वान्निर्भयं नाध्यगच्छत्
१००३०२७३ त्वत्पादाब्जं प्राप्य यदृच्छयाद्य सुस्थः शेते मृत्युरस्मादपैति
१००३०२८१ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहासि
१००३०२८३ रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः
१००३०२९१ जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन
१००३०२९३ समुद्विजे भवद्धेतोः कंसादहमधीरधीः
१००३०३०१ उपसंहर विश्वात्मन्नदो रूपमलौकिकम्
१००३०३०३ शङ्खचक्रगदापद्म श्रिया जुष्टं चतुर्भुजम्
१००३०३११ विश्वं यदेतत्स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान्
१००३०३१३ बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत्
१००३०३२० श्रीभगवानुवाच

१००३०३२१ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति
१००३०३२३ तदायं सुतपा नाम प्रजापतिरकल्मषः
१००३०३३१ युवां वै ब्रह्मणादिष्टौ प्रजासर्गे यदा ततः
१००३०३३३ सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः
१००३०३४१ वर्षवातातपहिम घर्मकालगुणाननु
१००३०३४३ सहमानौ श्वासरोध विनिर्धूतमनोमलौ
१००३०३५१ शीर्णपर्णानिलाहारावुपशान्तेन चेतसा
१००३०३५३ मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः
१००३०३६१ एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम्
१००३०३६३ दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः
१००३०३७१ तदा वां परितुष्टोऽहममुना वपुषानघे
१००३०३७३ तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः
१००३०३८१ प्रादुरासं वरदराड्युवयोः कामदित्सया
१००३०३८३ व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः
१००३०३९१ अजुष्टग्राम्यविषयावनपत्यौ च दम्पती
१००३०३९३ न वव्राथेऽपवर्गं मे मोहितौ देवमायया
१००३०४०१ गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम्
१००३०४०३ ग्राम्यान्भोगानभुञ्जाथां युवां प्राप्तमनोरथौ
१००३०४११ अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम्
१००३०४१३ अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः
१००३०४२१ तयोर्वां पुनरेवाहमदित्यामास कश्यपात्
१००३०४२३ उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः
१००३०४३१ तृतीयेऽस्मिन्भवेऽहं वै तेनैव वपुषाथ वाम्
१००३०४३३ जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति
१००३०४४१ एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे
१००३०४४३ नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते
१००३०४५१ युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत्
१००३०४५३ चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम्
१००३०४६० श्रीशुक उवाच
१००३०४६१ इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया
१००३०४६३ पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः

१००३०४७१ ततश्च शौरिर्भगवत्प्रचोदितः
१००३०४७२ सुतं समादाय स सूतिकागृहात्
१००३०४७३ यदा बहिर्गन्तुमियेष तर्ह्यजा
१००३०४७४ या योगमायाजनि नन्दजायया
१००३०४८१ तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ
१००३०४८३ द्वारश्च सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृङ्खलैः
१००३०४९१ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यन्त यथा तमो रवेः
१००३०४९३ ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद्वारि निवारयन्फणैः
१००३०५०१ मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला
१००३०५०३ भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः
१००३०५११ नन्दव्रजं शौरिरुपेत्य तत्र तान्
१००३०५१२ गोपान्प्रसुप्तानुपलभ्य निद्रया
१००३०५१३ सुतं यशोदाशयने निधाय तत्
१००३०५१४ सुतामुपादाय पुनर्गृहानगात्
१००३०५२१ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम्
१००३०५२३ प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः
१००३०५३१ यशोदा नन्दपत्नी च जातं परमबुध्यत
१००३०५३३ न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः
१००४००१० श्रीशुक उवाच
१००४००११ बहिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः
१००४००१३ ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः
१००४००२१ ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत्
१००४००२३ आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते
१००४००३१ स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः
१००४००३३ सूतीगृहमगात्तूर्णं प्रस्खलन्मुक्तमूर्धजः
१००४००४१ तमाह भ्रातरं देवी कृपणा करुणं सती
१००४००४३ स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि
१००४००५१ बहवो हिंसिता भ्रातः शिशवः पावकोपमाः
१००४००५३ त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम्
१००४००६१ नन्वहं ते ह्यवरजा दीना हतसुता प्रभो
१००४००६३ दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम्

१००४००७० श्रीशुक उवाच
१००४००७१ उपगुह्यात्मजामेवं रुदत्या दीनदीनवत्
१००४००७३ याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः
१००४००८१ तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम्
१००४००८३ अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः
१००४००९१ सा तद्धस्तात्समुत्पत्य सद्यो देव्यम्बरं गता
१००४००९३ अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा
१००४०१०१ दिव्यस्रगम्बरालेप रत्नाभरणभूषिता
१००४०१०३ धनुःशूलेषुचर्मासि शङ्खचक्रगदाधरा
१००४०१११ सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः
१००४०११३ उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत्
१००४०१२१ किं मया हतया मन्द जातः खलु तवान्तकृत्
१००४०१२३ यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान्वृथा
१००४०१३१ इति प्रभाष्य तं देवी माया भगवती भुवि
१००४०१३३ बहुनामनिकेतेषु बहुनामा बभूव ह
१००४०१४१ तयाभिहितमाकर्ण्य कंसः परमविस्मितः
१००४०१४३ देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत्
१००४०१५१ अहो भगिन्यहो भाम मया वां बत पाप्मना
१००४०१५३ पुरुषाद इवापत्यं बहवो हिंसिताः सुताः
१००४०१६१ स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः
१००४०१६३ कान्लोकान्वै गमिष्यामि ब्रह्महेव मृतः श्वसन्
१००४०१७१ दैवमप्यनृतं वक्ति न मर्त्या एव केवलम्
१००४०१७३ यद्विश्रम्भादहं पापः स्वसुर्निहतवाञ्छिशून्
१००४०१८१ मा शोचतं महाभागावात्मजान्स्वकृतं भुजः
१००४०१८३ जान्तवो न सदैकत्र दैवाधीनास्तदासते
१००४०१९१ भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च
१००४०१९३ नायमात्मा तथैतेषु विपर्येति यथैव भूः
१००४०२०१ यथानेवंविदो भेदो यत आत्मविपर्ययः
१००४०२०३ देहयोगवियोगौ च संसृतिर्न निवर्तते
१००४०२११ तस्माद्भद्रे स्वतनयान्मया व्यापादितानपि
१००४०२१३ मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः

१००४०२२१ यावद्धतोऽस्मि हन्तास्मी त्यात्मानं मन्यतेऽस्वदृक्
१००४०२२३ तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात्
१००४०२३१ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः
१००४०२३३ इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत्
१००४०२४१ मोचयामास निगडाद्विश्रब्धः कन्यकागिरा
१००४०२४३ देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम्
१००४०२५१ भ्रातुः समनुतप्तस्य क्षान्तरोषा च देवकी
१००४०२५३ व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह
१००४०२६१ एवमेतन्महाभाग यथा वदसि देहिनाम्
१००४०२६३ अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः
१००४०२७१ शोकहर्षभयद्वेष लोभमोहमदान्विताः
१००४०२७३ मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः
१००४०२८० श्रीशुक उवाच
१००४०२८१ कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः
१००४०२८३ देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम्
१००४०२९१ तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः
१००४०२९३ तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया
१००४०३०१ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः
१००४०३०३ देवान्प्रति कृतामर्षा दैतेया नातिकोविदाः
१००४०३११ एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु
१००४०३१३ अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून्
१००४०३२१ किमुद्यमैः करिष्यन्ति देवाः समरभीरवः
१००४०३२३ नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव
१००४०३३१ अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः
१००४०३३३ जिजीविषव उत्सृज्य पलायनपरा ययुः
१००४०३४१ केचित्प्राञ्जलयो दीना न्यस्तशस्त्रा दिवौकसः
१००४०३४३ मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः
१००४०३५१ न त्वं विस्मृतशस्त्रास्त्रान्विरथान्भयसंवृतान्
१००४०३५३ हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः
१००४०३६१ किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः
१००४०३६३ रहोजुषा किं हरिणा शम्भुना वा वनौकसा

१००४०३६५ किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता
१००४०३७१ तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे
१००४०३७३ ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान्
१००४०३८१ यथामयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम्
१००४०३८३ यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान्बद्धबलो न चाल्यते
१००४०३९१ मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः
१००४०३९३ तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः
१००४०४०१ तस्मात्सर्वात्मना राजन्ब्राह्मणान्ब्रह्मवादिनः
१००४०४०३ तपस्विनो यज्ञशीलान्गाश्च हन्मो हविर्दुघाः
१००४०४११ विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः
१००४०४१३ श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः
१००४०४२१ स हि सर्वसुराध्यक्षो ह्यसुरद्विड्गुहाशयः
१००४०४२३ तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः
१००४०४२५ अयं वै तद्वधोपायो यदृषीणां विहिंसनम्
१००४०४३० श्रीशुक उवाच
१००४०४३१ एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः
१००४०४३३ ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः
१००४०४४१ सन्दिश्य साधुलोकस्य कदने कदनप्रियान्
१००४०४४३ कामरूपधरान्दिक्षु दानवान्गृहमाविशत्
१००४०४५१ ते वै रजःप्रकृतयस्तमसा मूढचेतसः
१००४०४५३ सतां विद्वेषमाचेरुरारादागतमृत्यवः
१००४०४६१ आयुः श्रियं यशो धर्मं लोकानाशिष एव च
१००४०४६३ हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः
१००५००१० श्रीशुक उवाच
१००५००११ नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः
१००५००१३ आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलङ्कृतः
१००५००२१ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै
१००५००२३ कारयामास विधिवत्पितृदेवार्चनं तथा
१००५००३१ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलङ्कृते
१००५००३३ तिलाद्रीन्सप्त रत्नौघ शातकौम्भाम्बरावृतान्
१००५००४१ कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया

१००५००४३ शुध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्मात्मविद्यया

१००५००५१ सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः

१००५००५३ गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः

१००५००६१ व्रजः सम्मृष्टसंसिक्त द्वाराजिरगृहान्तरः

१००५००६३ चित्रध्वजपताकास्रक् चैलपल्लवतोरणैः

१००५००७१ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः

१००५००७३ विचित्रधातुबर्हस्रग् वस्त्रकाञ्चनमालिनः

१००५००८१ महार्हवस्त्राभरण कञ्चुकोष्णीषभूषिताः

१००५००८३ गोपाः समाययू राजन्नानोपायनपाणयः

१००५००९१ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम्

१००५००९३ आत्मानं भूषयां चक्रुर्वस्त्राकल्पाञ्जनादिभिः

१००५०१०१ नवकुङ्कुमकिञ्जल्क मुखपङ्कजभूतयः

१००५०१०३ बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः

१००५०१११ गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्

१००५०११२ चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः

१००५०११३ नन्दालयं सवलया व्रजतीर्विरेजुर्

१००५०११४ व्यालोलकुण्डलपयोधरहारशोभाः

१००५०१२१ ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके

१००५०१२३ हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्योऽजनमुज्जगुः

१००५०१३१ अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे

१००५०१३३ कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमागते

१००५०१४१ गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः

१००५०१४३ आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः

१००५०१५१ नन्दो महामनास्तेभ्यो वासोऽलङ्कारगोधनम्

१००५०१५३ सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः

१००५०१६१ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत्

१००५०१६३ विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च

१००५०१७१ रोहिणी च महाभागा नन्दगोपाभिनन्दिता

१००५०१७३ व्यचरद्दिव्यवासस्रक् कण्ठाभरणभूषिता

१००५०१८१ तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान्

१००५०१८३ हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप

१००५०१९१ गोपान्गोकुलरक्षायां निरूप्य मथुरां गतः
१००५०१९३ नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह
१००५०२०१ वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम्
१००५०२०३ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम्
१००५०२११ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम्
१००५०२१३ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः
१००५०२२१ पूजितः सुखमासीनः पृष्ट्वानामयमादृतः
१००५०२२३ प्रसक्तधीः स्वात्मजयोरिदमाह विशाम्पते
१००५०२३१ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते
१००५०२३३ प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत
१००५०२४१ दिष्ट्या संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः
१००५०२४३ उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम्
१००५०२५१ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम्
१००५०२५३ ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा
१००५०२६१ कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम्
१००५०२६३ बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः
१००५०२७१ भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे
१००५०२७३ तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः
१००५०२८१ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः
१००५०२८३ न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते
१००५०२९० श्रीनन्द उवाच
१००५०२९१ अहो ते देवकीपुत्राः कंसेन बहवो हताः
१००५०२९३ एकावशिष्टावरजा कन्या सापि दिवं गता
१००५०३०१ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः
१००५०३०३ अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति
१००५०३१० श्रीवसुदेव उवाच
१००५०३११ करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः
१००५०३१३ नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले
१००५०३२० श्रीशुक उवाच
१००५०३२१ इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः
१००५०३२३ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम्

१००६००१० श्रीशुक उवाच
१००६००११ नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन्
१००६००१३ हरिं जगाम शरणमुत्पातागमशङ्कितः
१००६००२१ कंसेन प्रहिता घोरा पूतना बालघातिनी
१००६००२३ शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु
१००६००३१ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु
१००६००३३ कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि
१००६००४१ सा खेचर्येकदोत्पत्य पूतना नन्दगोकुलम्
१००६००४३ योषित्वा माययात्मानं प्राविशत्कामचारिणी
१००६००५१ तां केशबन्धव्यतिषक्तमल्लिकां
१००६००५२ बृहन्नितम्बस्तनकृच्छ्रमध्यमाम्
१००६००५३ सुवाससं कल्पितकर्णभूषण
१००६००५४ त्विषोल्लसत्कुन्तलमण्डिताननाम्
१००६००६१ वल्गुस्मितापाङ्गविसर्गवीक्षितैर्
१००६००६२ मनो हरन्तीं वनितां व्रजौकसाम्
१००६००६३ अमंसताम्भोजकरेण रूपिणीं
१००६००६४ गोप्यः श्रियं द्रष्टुमिवागतां पतिम्
१००६००७१ बालग्रहस्तत्र विचिन्वती शिशून्यदृच्छया नन्दगृहेऽसदन्तकम्
१००६००७३ बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि
१००६००८१ विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः
१००६००८३ अनन्तमारोपयदङ्कमन्तकं यथोरगं सुप्तमबुद्धिरज्जुधीः
१००६००९१ तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तरा कोषपरिच्छदासिवत्
१००६००९३ वरस्त्रियं तत्प्रभया च धर्षिते निरीक्ष्यमाणे जननी ह्यतिष्ठताम्
१००६०१०१ तस्मिन्स्तनं दुर्जरवीर्यमुल्बणं
१००६०१०२ घोराङ्कमादाय शिशोर्ददावथ
१००६०१०३ गाढं कराभ्यां भगवान्प्रपीड्य तत्
१००६०१०४ प्राणैः समं रोषसमन्वितोऽपिबत्
१००६०१११ सा मुञ्च मुञ्चालमिति प्रभाषिणी निष्पीड्यमानाखिलजीवमर्मणि
१००६०११३ विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह
१००६०१२१ तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा
१००६०१२३ रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कया

१००६०१३१ निशाचरीत्थं व्यथितस्तना व्यसुर्
१००६०१३२ व्यादाय केशांश्चरणौ भुजावपि
१००६०१३३ प्रसार्य गोष्ठे निजरूपमास्थिता
१००६०१३४ वज्राहतो वृत्र इवापतन्नृप
१००६०१४१ पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान्
१००६०१४३ चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम्
१००६०१५१ ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम्
१००६०१५३ गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम्
१००६०१६१ अन्धकूपगभीराक्षं पुलिनारोहभीषणम्
१००६०१६३ बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम्
१००६०१७१ सन्तत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम्
१००६०१७३ पूर्वं तु तन्निःस्वनित भिन्नहृत्कर्णमस्तकाः
१००६०१८१ बालं च तस्या उरसि क्रीडन्तमकुतोभयम्
१००६०१८३ गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः
१००६०१९१ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः
१००६०१९३ रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः
१००६०२०१ गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम्
१००६०२०३ रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः
१००६०२११ गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक्
१००६०२१३ न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत
१००६०२२१ अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू
१००६०२२२ यज्ञोऽच्युतः कटितटं जठरं हयास्यः
१००६०२२३ हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं
१००६०२२४ विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम्
१००६०२३१ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्
१००६०२३२ त्वत्पार्श्वयोर्धनुरसी मधुहाजनश्च
१००६०२३३ कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्
१००६०२३४ तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात्
१००६०२४१ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु
१००६०२४३ श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु
१००६०२५१ पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः

१००६०२५३ क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः
१००६०२६१ व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः
१००६०२६३ भुञ्जानं यज्ञभुक्पातु सर्वग्रहभयङ्करः
१००६०२७१ डाकिन्यो यातुधान्यश्च कुष्माण्डा येऽर्भकग्रहाः
१००६०२७३ भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः
१००६०२८१ कोटरा रेवती ज्येष्ठा पूतना मातृकादयः
१००६०२८३ उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः
१००६०२९१ स्वप्नदृष्टा महोत्पाता वृद्धा बालग्रहाश्च ये
१००६०२९३ सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः
१००६०३०० श्रीशुक उवाच
१००६०३०१ इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम्
१००६०३०३ पाययित्वा स्तनं माता सन्न्यवेशयदात्मजम्
१००६०३११ तावन्नन्दादयो गोपा मथुराया व्रजं गताः
१००६०३१३ विलोक्य पूतनादेहं बभूवुरतिविस्मिताः
१००६०३२१ नूनं बतर्षिः सञ्जातो योगेशो वा समास सः
१००६०३२३ स एव दृष्टो ह्युत्पातो यदाहानकदुन्दुभिः
१००६०३३१ कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः
१००६०३३३ दूरे क्षिप्त्वावयवशो न्यदहन्काष्ठवेष्टितम्
१००६०३४१ दह्यमानस्य देहस्य धूमश्चागुरुसौरभः
१००६०३४३ उत्थितः कृष्णनिर्भुक्त सपद्याहतपाप्मनः
१००६०३५१ पूतना लोकबालघ्नी राक्षसी रुधिराशना
१००६०३५३ जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम्
१००६०३६१ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने
१००६०३६३ यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा
१००६०३७१ पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः
१००६०३७३ अङ्गं यस्याः समाक्रम्य भगवानपि तत्स्तनम्
१००६०३८१ यातुधान्यपि सा स्वर्गमवाप जननीगतिम्
१००६०३८३ कृष्णभुक्तस्तनक्षीराः किमु गावोऽनुमातरः
१००६०३९१ पयांसि यासामपिबत्पुत्रस्नेहस्नुतान्यलम्
१००६०३९३ भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः
१००६०४०१ तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम्

१००६०४०३ न पुनः कल्पते राजन्संसारोऽज्ञानसम्भवः
१००६०४११ कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः
१००६०४१३ किमिदं कुत एवेति वदन्तो व्रजमाययुः
१००६०४२१ ते तत्र वर्णितं गोपैः पूतनागमनादिकम्
१००६०४२३ श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मिताः
१००६०४३१ नन्दः स्वपुत्रमादाय प्रेत्यागतमुदारधीः
१००६०४३३ मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह
१००६०४४१ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम्
१००६०४४३ शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम्
१००७००१० श्रीराजोवाच
१००७००११ येन येनावतारेण भगवान्हरिरीश्वरः
१००७००१३ करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो
१००७००२१ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः
१००७००२३ भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत्
१००७००३१ अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम्
१००७००३३ मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः
१००७००४० श्रीशुक उवाच
१००७००४१ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम्
१००७००४३ वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती
१००७००५१ नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः
१००७००५३ अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जातनिद्राक्षमशीशयच्छनैः
१००७००६१ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः
१००७००६३ नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत्
१००७००७१ अधःशयानस्य शिशोरनोऽल्पक प्रवालमृद्वङ्घ्रिहतं व्यवर्तत
१००७००७३ विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम्
१००७००८१ दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय
१००७००८२ औत्थानिके कर्मणि याः समागताः
१००७००८३ नन्दादयश्चाद्भुतदर्शनाकुलाः
१००७००८४ कथं स्वयं वै शकटं विपर्यगात्
१००७००९१ ऊचुरव्यवसितमतीन्गोपान्गोपीश्च बालकाः
१००७००९३ रुदतानेन पादेन क्षिप्तमेतन्न संशयः

१००७०१०१ न ते श्रद्दधिरे गोपा बालभाषितमित्युत
१००७०१०३ अप्रमेयं बलं तस्य बालकस्य न ते विदुः
१००७०१११ रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता
१००७०११३ कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत्
१००७०१२१ पूर्ववत्स्थापितं गोपैर्बलिभिः सपरिच्छदम्
१००७०१२३ विप्रा हुत्वार्चयां चक्रुर्दध्यक्षतकुशाम्बुभिः
१००७०१३१ येऽसूयानृतदम्भेर्षा हिंसामानविवर्जिताः
१००७०१३३ न तेषां सत्यशीलानामाशिषो विफलाः कृताः
१००७०१४१ इति बालकमादाय सामर्ग्यजुरुपाकृतैः
१००७०१४३ जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः
१००७०१५१ वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः
१००७०१५३ हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम्
१००७०१६१ गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः
१००७०१६३ आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुञ्जत
१००७०१७१ विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाशिषः
१००७०१७३ ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम्
१००७०१८१ एकदारोहमारूढं लालयन्ती सुतं सती
१००७०१८३ गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत्
१००७०१९१ भूमौ निधाय तं गोपी विस्मिता भारपीडिता
१००७०१९३ महापुरुषमादध्यौ जगतामास कर्मसु
१००७०२०१ दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः
१००७०२०३ चक्रवातस्वरूपेण जहारासीनमर्भकम्
१००७०२११ गोकुलं सर्वमावृण्वन्मुष्णंश्चक्षूंषि रेणुभिः
१००७०२१३ ईरयन्सुमहाघोर शब्देन प्रदिशो दिशः
१००७०२२१ मुहूर्तमभवद्गोष्ठं रजसा तमसावृतम्
१००७०२२३ सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः
१००७०२३१ नापश्यत्कश्चनात्मानं परं चापि विमोहितः
१००७०२३३ तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः
१००७०२४१ इति खरपवनचक्रपांशुवर्षे सुतपदवीमबलाविलक्ष्य माता
१००७०२४३ अतिकरुणमनुस्मरन्त्यशोचद्भुवि पतिता मृतवत्सका यथा गौः
१००७०२५१ रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः

१००७०२५३ रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांशुवर्षवेगे
१००७०२६१ तृणावर्तः शान्तरयो वात्यारूपधरो हरन्
१००७०२६३ कृष्णं नभोगतो गन्तुं नाशक्नोद्भूरिभारभृत्
१००७०२७१ तमश्मानं मन्यमान आत्मनो गुरुमत्तया
१००७०२७३ गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम्
१००७०२८१ गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः
१००७०२८३ अव्यक्तरावो न्यपतत्सहबालो व्यसुर्व्रजे
१००७०२९१ तमन्तरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम्
१००७०२९३ पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः
१००७०३०१ प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम्
१००७०३०३ तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम्
१००७०३०५ गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम्
१००७०३११ अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः
१००७०३१३ हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते
१००७०३२१ किं नस्तपश्चीर्णमधोक्षजार्चनं
१००७०३२२ पूर्तेष्टदत्तमुत भूतसौहृदम्
१००७०३२३ यत्सम्परेतः पुनरेव बालको
१००७०३२४ दिष्ट्या स्वबन्धून्प्रणयन्नुपस्थितः
१००७०३३१ दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने
१००७०३३३ वसुदेववचो भूयो मानयामास विस्मितः
१००७०३४१ एकदार्भकमादाय स्वाङ्कमारोप्य भामिनी
१००७०३४३ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता
१००७०३५१ पीतप्रायस्य जननी सुतस्य रुचिरस्मितम्
१००७०३५३ मुखं लालयती राजञ्जृम्भतो ददृशे इदम्
१००७०३६१ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च
१००७०३६३ द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि
१००७०३७१ सा वीक्ष्य विश्वं सहसा राजन्सञ्जातवेपथुः
१००७०३७३ सम्मील्य मृगशावाक्षी नेत्रे आसीत्सुविस्मिता
१००८००१० श्रीशुक उवाच
१००८००११ गर्गः पुरोहितो राजन्यदूनां सुमहातपाः
१००८००१३ व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः

१००८००२१ तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः
१००८००२३ आनर्चाधोक्षजधिया प्रणिपातपुरःसरम्
१००८००३१ सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम्
१००८००३३ नन्दयित्वाब्रवीद्ब्रह्मन्पूर्णस्य करवाम किम्
१००८००४१ महद्विचलनं नृणां गृहिणां दीनचेतसाम्
१००८००४३ निःश्रेयसाय भगवन्कल्पते नान्यथा क्वचित्
१००८००५१ ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम्
१००८००५३ प्रणीतं भवता येन पुमान्वेद परावरम्
१००८००६१ त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि
१००८००६३ बालयोरनयोर्नृणां जन्मना ब्राह्मणो गुरुः
१००८००७० श्रीगर्ग उवाच
१००८००७१ यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा
१००८००७३ सुतं मया संस्कृतं ते मन्यते देवकीसुतम्
१००८००८१ कंसः पापमतिः सख्यं तव चानकदुन्दुभेः
१००८००८३ देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति
१००८००९१ इति सञ्चिन्तयञ्छ्रुत्वा देवक्या दारिकावचः
१००८००९३ अपि हन्ता गताशङ्कस्तर्हि तन्नोऽनयो भवेत्
१००८०१०० श्रीनन्द उवाच
१००८०१०१ अलक्षितोऽस्मिन्रहसि मामकैरपि गोव्रजे
१००८०१०३ कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम्
१००८०११० श्रीशुक उवाच
१००८०१११ एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत्
१००८०११३ चकार नामकरणं गूढो रहसि बालयोः
१००८०१२० श्रीगर्ग उवाच
१००८०१२१ अयं हि रोहिणीपुत्रो रमयन्सुहृदो गुणैः
१००८०१२३ आख्यास्यते राम इति बलाधिक्याद्बलं विदुः
१००८०१२५ यदूनामपृथग्भावात्सङ्कर्षणमुशन्त्यपि
१००८०१३१ आसन्वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः
१००८०१३३ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः
१००८०१४१ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः
१००८०१४३ वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते

१००८०१५१ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते
१००८०१५३ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः
१००८०१६१ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः
१००८०१६३ अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ
१००८०१७१ पुरानेन व्रजपते साधवो दस्युपीडिताः
१००८०१७३ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः
१००८०१८१ य एतस्मिन्महाभागाः प्रीतिं कुर्वन्ति मानवाः
१००८०१८३ नारयोऽभिभवन्त्येतान्विष्णुपक्षानिवासुराः
१००८०१९१ तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः
१००८०१९३ श्रिया कीर्त्यानुभावेन गोपायस्व समाहितः
१००८०२०० श्रीशुक उवाच
१००८०२०१ इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते
१००८०२०३ नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम्
१००८०२११ कालेन व्रजताल्पेन गोकुले रामकेशवौ
१००८०२१३ जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजह्रतुः
१००८०२२१ तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ
१००८०२२२ घोषप्रघोषरुचिरं व्रजकर्दमेषु
१००८०२२३ तन्नादहृष्टमनसावनुसृत्य लोकं
१००८०२२४ मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः
१००८०२३१ तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ
१००८०२३२ पङ्काङ्गरागरुचिरावुपगृह्य दोर्भ्याम्
१००८०२३३ दत्त्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य
१००८०२३४ मुग्धस्मिताल्पदशनं ययतुः प्रमोदम्
१००८०२४१ यर्ह्यङ्गनादर्शनीयकुमारलीलाव्
१००८०२४२ अन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः
१००८०२४३ वत्सैरितस्तत उभावनुकृष्यमाणौ
१००८०२४४ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः
१००८०२५१ शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः
१००८०२५२ क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम्
१००८०२५३ गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ
१००८०२५४ शेकात आपतुरलं मनसोऽनवस्थाम्

१००८०२६१ कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले
१००८०२६३ अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा
१००८०२७१ ततस्तु भगवान्कृष्णो वयस्यैर्व्रजबालकैः
१००८०२७३ सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम्
१००८०२८१ कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम्
१००८०२८३ शृण्वन्त्याः किल तन्मातुरिति होचुः समागताः
१००८०२९१ वत्सान्मुञ्चन्क्वचिदसमये क्रोशसञ्जातहासः
१००८०२९२ स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पितैः स्तेययोगैः
१००८०२९३ मर्कान्भोक्ष्यन्विभजति स चेन्नात्ति भाण्डं भिन्नत्ति
१००८०२९४ द्रव्यालाभे सगृहकुपितो यात्युपक्रोश्य तोकान्
१००८०३०१ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्
१००८०३०२ छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित्
१००८०३०३ ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं
१००८०३०४ काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः
१००८०३११ एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ
१००८०३१२ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथास्ते
१००८०३१३ इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्
१००८०३१४ व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत्
१००८०३२१ एकदा क्रीडमानास्ते रामाद्या गोपदारकाः
१००८०३२३ कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन्
१००८०३३१ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी
१००८०३३३ यशोदा भयसम्भ्रान्त प्रेक्षणाक्षमभाषत
१००८०३४१ कस्मान्मृदमदान्तात्मन्भवान्भक्षितवान्रहः
१००८०३४३ वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम्
१००८०३५१ नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः
१००८०३५३ यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम्
१००८०३६१ यद्येवं तर्हि व्यादेही त्युक्तः स भगवान्हरिः
१००८०३६३ व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः
१००८०३७१ सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः
१००८०३७३ साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम्
१००८०३८१ ज्योतिश्चक्रं जलं तेजो नभस्वान्वियदेव च

१००८०३८३ वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः
१००८०३९१ एतद्विचित्रं सहजीवकाल स्वभावकर्माशयलिङ्गभेदम्
१००८०३९३ सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम्
१००८०४०१ किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः
१००८०४०३ अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः
१००८०४११ अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा
१००८०४१३ यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदम्
१००८०४२१ अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती
१००८०४२३ गोप्यश्च गोपाः सहगोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः
१००८०४३१ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः
१००८०४३३ वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः
१००८०४४१ सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम्
१००८०४४३ प्रवृद्धस्नेहकलिल हृदयासीद्यथा पुरा
१००८०४५१ त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्वतैः
१००८०४५३ उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजम्
१००८०४६० श्रीराजोवाच
१००८०४६१ नन्दः किमकरोद्ब्रह्मन्श्रेय एवं महोदयम्
१००८०४६३ यशोदा च महाभागा पपौ यस्याः स्तनं हरिः
१००८०४७१ पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम्
१००८०४७३ गायन्त्यद्यापि कवयो यल्लोकशमलापहम्
१००८०४८० श्रीशुक उवाच
१००८०४८१ द्रोणो वसूनां प्रवरो धरया भार्यया सह
१००८०४८३ करिष्यमाण आदेशान्ब्रह्मणस्तमुवाच ह
१००८०४९१ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ
१००८०४९३ भक्तिः स्यात्परमा लोके ययाञ्जो दुर्गतिं तरेत्
१००८०५०१ अस्त्वित्युक्तः स भगवान्व्रजे द्रोणो महायशाः
१००८०५०३ जज्ञे नन्द इति ख्यातो यशोदा सा धराभवत्
१००८०५११ ततो भक्तिर्भगवति पुत्रीभूते जनार्दने
१००८०५१३ दम्पत्योर्नितरामासीद्गोपगोपीषु भारत
१००८०५२१ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः
१००८०५२३ सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया

१००९००१० श्रीशुक उवाच
१००९००११ एकदा गृहदासीषु यशोदा नन्दगेहिनी
१००९००१३ कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि
१००९००२१ यानि यानीह गीतानि तद्बालचरितानि च
१००९००२३ दधिनिर्मन्थने काले स्मरन्ती तान्यगायत
१००९००३१ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं
१००९००३२ पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः
१००९००३३ रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च
१००९००३४ स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ
१००९००४१ तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः
१००९००४३ गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन्
१००९००५१ तमङ्कमारूढमपाययत्स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम्
१००९००५३ अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते
१००९००६१ सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमन्थभाजनम्
१००९००६३ भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः
१००९००७१ उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम्
१००९००७३ भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती
१००९००८१ उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम्
१००९००८३ हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः
१००९००९१ तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्
१००९००९२ ततोऽवरुह्यापससार भीतवत्
१००९००९३ गोप्यन्वधावन्न यमाप योगिनां
१००९००९४ क्षमं प्रवेष्टुं तपसेरितं मनः
१००९०१०१ अन्वञ्चमाना जननी बृहच्चलच् छ्रोणीभराक्रान्तगतिः सुमध्यमा
१००९०१०३ जवेन विस्रंसितकेशबन्धन च्युतप्रसूनानुगतिः परामृशत्
१००९०१११ कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना
१००९०११३ उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत्
१००९०१२१ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला
१००९०१२३ इयेष किल तं बद्धुं दाम्नातद्वीर्यकोविदा
१००९०१३१ न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम्
१००९०१३३ पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः

१००९०१४१ तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम्
१००९०१४३ गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा
१००९०१५१ तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः
१००९०१५३ द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका
१००९०१६१ यदासीत्तदपि न्यूनं तेनान्यदपि सन्दधे
१००९०१६३ तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम्
१००९०१७१ एवं स्वगेहदामानि यशोदा सन्दधत्यपि
१००९०१७३ गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताभवत्
१००९०१८१ स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः
१००९०१८३ दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने
१००९०१९१ एवं सन्दर्शिता ह्यङ्ग हरिणा भृत्यवश्यता
१००९०१९३ स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे
१००९०२०१ नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया
१००९०२०३ प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात्
१००९०२११ नायं सुखापो भगवान्देहिनां गोपिकासुतः
१००९०२१३ ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह
१००९०२२१ कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः
१००९०२२३ अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ
१००९०२३१ पुरा नारदशापेन वृक्षतां प्रापितौ मदात्
१००९०२३३ नलकूवरमणिग्रीवाविति ख्यातौ श्रियान्वितौ
१०१०००१० श्रीराजोवाच
१०१०००११ कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम्
१०१०००१३ यत्तद्विगर्हितं कर्म येन वा देवर्षेस्तमः
१०१०००२० श्रीशुक उवाच
१०१०००२१ रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ
१०१०००२३ कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ
१०१०००३१ वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ
१०१०००३३ स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने
१०१०००४१ अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि
१०१०००४३ चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः
१०१०००५१ यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव

१०१०००५३ अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत
१०१०००६१ तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः
१०१०००६३ वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ
१०१०००७१ तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ
१०१०००७३ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ
१०१०००८० श्रीनारद उवाच
१०१०००८१ न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः
१०१०००८३ श्रीमदादाभिजात्यादिर्यत्र स्त्री द्यूतमासवः
१०१०००९१ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः
१०१०००९३ मन्यमानैरिमं देहमजरामृत्यु नश्वरम्
१०१००१०१ देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम्
१०१००१०३ भूतध्रुक्तत्कृते स्वार्थं किं वेद निरयो यतः
१०१००१११ देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव च
१०१००११३ मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा
१०१००१२१ एवं साधारणं देहमव्यक्तप्रभवाप्ययम्
१०१००१२३ को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसतः
१०१००१३१ असतः श्रीमदान्धस्य दारिद्र्यं परमञ्जनम्
१०१००१३३ आत्मौपम्येन भूतानि दरिद्रः परमीक्षते
१०१००१४१ यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम्
१०१००१४३ जीवसाम्यं गतो लिङ्गैर्न तथाविद्धकण्टकः
१०१००१५१ दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह
१०१००१५३ कृच्छ्रं यदृच्छयाप्नोति तद्धि तस्य परं तपः
१०१००१६१ नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकाङ्क्षिणः
१०१००१६३ इन्द्रियाण्यनुशुष्यन्ति हिंसापि विनिवर्तते
१०१००१७१ दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः
१०१००१७३ सद्भिः क्षिणोति तं तर्षं तत आराद्विशुद्ध्यति
१०१००१८१ साधूनां समचित्तानां मुकुन्दचरणैषिणाम्
१०१००१८३ उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः
१०१००१९१ तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः
१०१००१९३ तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः
१०१००२०१ यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ

१०१००२०३ न विवाससमात्मानं विजानीतः सुदुर्मदौ
१०१००२११ अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः
१०१००२१३ स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात्
१०१००२२१ वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते
१०१००२२३ वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः
१०१००२३० श्रीशुक उवाच
१०१००२३१ एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम्
१०१००२३३ नलकूवरमणिग्रीवावासतुर्यमलार्जुनौ
१०१००२४१ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः
१०१००२४३ जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ
१०१००२५१ देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ
१०१००२५३ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना
१०१००२६१ इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ
१०१००२६३ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम्
१०१००२७१ बालेन निष्कर्षयतान्वगुलूखलं तद्
१०१००२७२ दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ
१०१००२७३ निष्पेततुः परमविक्रमितातिवेप
१०१००२७४ स्कन्धप्रवालविटपौ कृतचण्डशब्दौ
१०१००२८१ तत्र श्रिया परमया ककुभः स्फुरन्तौ
१०१००२८२ सिद्धावुपेत्य कुजयोरिव जातवेदाः
१०१००२८३ कृष्णं प्रणम्य शिरसाखिललोकनाथं
१०१००२८४ बद्धाञ्जली विरजसाविदमूचतुः स्म
१०१००२९१ कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः
१०१००२९३ व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः
१०१००३०१ त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः
१०१००३०३ त्वमेव कालो भगवान्विष्णुरव्यय ईश्वरः
१०१००३११ त्वं महान्प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी
१०१००३१३ त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित्
१०१००३२१ गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः
१०१००३२३ को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः
१०१००३३१ तस्मै तुभ्यं भगवते वासुदेवाय वेधसे

१०१००३३३ आत्मद्योतगुणैश्छन्न महिम्ने ब्रह्मणे नमः
१०१००३४१ यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः
१०१००३४३ तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः
१०१००३५१ स भवान्सर्वलोकस्य भवाय विभवाय च
१०१००३५३ अवतीर्णोंऽशभागेन साम्प्रतं पतिराशिषाम्
१०१००३६१ नमः परमकल्याण नमः परममङ्गल
१०१००३६३ वासुदेवाय शान्ताय यदूनां पतये नमः
१०१००३७१ अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ
१०१००३७३ दर्शनं नौ भगवत ऋषेरासीदनुग्रहात्
१०१००३८१ वाणी गुणानुकथने श्रवणौ कथायां
१०१००३८२ हस्तौ च कर्मसु मनस्तव पादयोर्नः
१०१००३८३ स्मृत्यां शिरस्तव निवासजगत्प्रणामे
१०१००३८४ दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्
१०१००३९० श्रीशुक उवाच
१०१००३९१ इत्थं सङ्कीर्तितस्ताभ्यां भगवान्गोकुलेश्वरः
१०१००३९३ दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ
१०१००४०० श्रीभगवानुवाच
१०१००४०१ ज्ञातं मम पुरैवैतदृषिणा करुणात्मना
१०१००४०३ यच्छ्रीमदान्धयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः
१०१००४११ साधूनां समचित्तानां सुतरां मत्कृतात्मनाम्
१०१००४१३ दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोः सवितुर्यथा
१०१००४२१ तद्गच्छतं मत्परमौ नलकूवर सादनम्
१०१००४२३ सञ्जातो मयि भावो वामीप्सितः परमोऽभवः
१०१००४३० श्रीशुक उवाच
१०१००४३१ इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः
१०१००४३३ बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम्
१०११००१० श्रीशुक उवाच
१०११००११ गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम्
१०११००१३ तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः
१०११००२१ भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ
१०११००२३ बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम्

१०११००३१ उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम्
१०११००३३ कस्येदं कुत आश्चर्यमुत्पात इति कातराः
१०११००४१ बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम्
१०११००४३ विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि
१०११००५१ न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत्
१०११००५३ बालस्योत्पाटनं तर्वोः केचित्सन्दिग्धचेतसः
१०११००६१ उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम्
१०११००६३ विलोक्य नन्दः प्रहसद् वदनो विमुमोच ह
१०११००७१ गोपीभिः स्तोभितोऽनृत्यद्भगवान्बालवत्क्वचित्
१०११००७३ उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत्
१०११००८१ बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम्
१०११००८३ बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन्
१०११००९१ दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम्
१०११००९३ व्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः
१०११०१०१ क्रीणीहि भोः फलानीति श्रुत्वा सत्वरमच्युतः
१०११०१०३ फलार्थी धान्यमादाय ययौ सर्वफलप्रदः
१०११०१११ फलविक्रयिणी तस्य च्युतधान्यकरद्वयम्
१०११०११३ फलैरपूरयद्रत्नैः फलभाण्डमपूरि च
१०११०१२१ सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत्
१०११०१२३ रामं च रोहिणी देवी क्रीडन्तं बालकैर्भृशम्
१०११०१३१ नोपेयातां यदाहूतौ क्रीडासङ्गेन पुत्रकौ
१०११०१३३ यशोदां प्रेषयामास रोहिणी पुत्रवत्सलाम्
१०११०१४१ क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम्
१०११०१४३ यशोदाजोहवीत्कृष्णं पुत्रस्नेहस्नुतस्तनी
१०११०१५१ कृष्ण कृष्णारविन्दाक्ष तात एहि स्तनं पिब
१०११०१५३ अलं विहारैः क्षुत्क्षान्तः क्रीडाश्रान्तोऽसि पुत्रक
१०११०१६१ हे रामागच्छ ताताशु सानुजः कुलनन्दन
१०११०१६३ प्रातरेव कृताहारस्तद्भवान्भोक्तुमर्हति
१०११०१७१ प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः
१०११०१७३ एह्यावयोः प्रियं धेहि स्वगृहान्यात बालकाः
१०११०१८१ धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह

१०११०१८३ जन्मर्क्षं तेऽद्य भवति विप्रेभ्यो देहि गाः शुचिः
१०११०१९१ पश्य पश्य वयस्यांस्ते मातृमृष्टान्स्वलङ्कृतान्
१०११०१९३ त्वं च स्नातः कृताहारो विहरस्व स्वलङ्कृतः
१०११०२०१ इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप
१०११०२०३ हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम्
१०११०२१० श्रीशुक उवाच
१०११०२११ गोपवृद्धा महोत्पातानन्भूय बृहद्वने
१०११०२१३ नन्दादयः समागम्य व्रजकार्यममन्त्रयन्
१०११०२२१ तत्रोपानन्दनामाह गोपो ज्ञानवयोऽधिकः
१०११०२२३ देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः
१०११०२३१ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः
१०११०२३३ आयान्त्यत्र महोत्पाता बालानां नाशहेतवः
१०११०२४१ मुक्तः कथञ्चिद्राक्षस्या बालघ्न्या बालको ह्यसौ
१०११०२४३ हरेरनुग्रहान्नूनमनश्चोपरि नापतत्
१०११०२५१ चक्रवातेन नीतोऽयं दैत्येन विपदं वियत्
१०११०२५३ शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः
१०११०२६१ यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः
१०११०२६३ असावन्यतमो वापि तदप्यच्युतरक्षणम्
१०११०२७१ यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः
१०११०२७३ तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः
१०११०२८१ वनं वृन्दावनं नाम पशव्यं नवकाननम्
१०११०२८३ गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम्
१०११०२९१ तत्तत्राद्यैव यास्यामः शकटान्युङ्क्त मा चिरम्
१०११०२९३ गोधनान्यग्रतो यान्तु भवतां यदि रोचते
१०११०३०१ तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः
१०११०३०३ व्रजान्स्वान्स्वान्समायुज्य ययू रूढपरिच्छदाः
१०११०३११ वृद्धान्बालान्स्त्रियो राजन्सर्वोपकरणानि च
१०११०३१३ अनःस्वारोप्य गोपाला यत्ता आत्तशरासनाः
१०११०३२१ गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः
१०११०३२३ तूर्यघोषेण महता ययुः सहपुरोहिताः
१०११०३३१ गोप्यो रूढरथा नूत्न कुचकुङ्कुमकान्तयः

१०११०३३३ कृष्णलीला जगुः प्रीत्या निष्ककण्ठ्यः सुवाससः
१०११०३४१ तथा यशोदारोहिण्यावेकं शकटमास्थिते
१०११०३४३ रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके
१०११०३५१ वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम्
१०११०३५३ तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत्
१०११०३६१ वृन्दावनं गोवर्धनं यमुनापुलिनानि च
१०११०३६३ वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप
१०११०३७१ एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः
१०११०३७३ कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः
१०११०३८१ अविदूरे व्रजभुवः सह गोपालदारकैः
१०११०३८३ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ
१०११०३९१ क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित्
१०११०३९३ क्वचित्पादैः किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः
१०११०४०१ वृषायमाणौ नर्दन्तौ युयुधाते परस्परम्
१०११०४०३ अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा
१०११०४११ कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः
१०११०४१३ वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत्
१०११०४२१ तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः
१०११०४२३ दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत्
१०११०४३१ गृहीत्वापरपादाभ्यां सहलाङ्गूलमच्युतः
१०११०४३३ भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम्
१०११०४३५ स कपित्थैर्महाकायः पात्यमानैः पपात ह
१०११०४४१ तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति
१०११०४४३ देवाश्च परिसन्तुष्टा बभूवुः पुष्पवर्षिणः
१०११०४५१ तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ
१०११०४५३ सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः
१०११०४६१ स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा
१०११०४६३ गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम्
१०११०४७१ ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम्
१०११०४७३ तत्रसुर्वज्रनिर्भिन्नं गिरेः शृङ्गमिव च्युतम्
१०११०४८१ स वै बको नाम महानसुरो बकरूपधृक्

१०११०४८३ आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली
१०११०४९१ कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः
१०११०४९३ बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः
१०११०५०१ तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः
१०११०५०३ चच्छर्द सद्योऽतिरुषाक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत
१०११०५११ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां पतिः
१०११०५१३ पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम्
१०११०५२१ तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः
१०११०५२३ समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे
१०११०५३१ मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवेन्द्रियो गणः
१०११०५३३ स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान्व्रजमेत्य तज्जगुः
१०११०५४१ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः
१०११०५४३ प्रेत्यागतमिवोत्सुक्यादैक्षन्त तृषितेक्षणाः
१०११०५५१ अहो बतास्य बालस्य बहवो मृत्यवोऽभवन्
१०११०५५३ अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम्
१०११०५६१ अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः
१०११०५६३ जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत्
१०११०५७१ अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित्
१०११०५७३ गर्गो यदाह भगवानन्वभावि तथैव तत्
१०११०५८१ इति नन्दादयो गोपाः कृष्णरामकथां मुदा
१०११०५८३ कुर्वन्तो रममाणाश्च नाविन्दन्भववेदनाम्
१०११०५९१ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे
१०११०५९३ निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः
१०१२००१० श्रीशुक उवाच
१०१२००११ क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान्
१०१२००१३ प्रबोधयञ्छृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः
१०१२००२१ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः
१०१२००२३ स्वान्स्वान्सहस्रोपरिसङ्ख्ययान्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा
१०१२००३१ कृष्णवत्सैरसङ्ख्यातैर्यूथीकृत्य स्ववत्सकान्
१०१२००३३ चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह
१०१२००४१ फलप्रबालस्तवक सुमनःपिच्छधातुभिः

१०१२००४३ काचगुञ्जामणिस्वर्ण भूषिता अप्यभूषयन्
१०१२००५१ मुष्णन्तोऽन्योन्यशिक्यादीन्ज्ञातानाराच्च चिक्षिपुः
१०१२००५३ तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः
१०१२००६१ यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम्
१०१२००६३ अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे
१०१२००७१ केचिद्वेणून्वादयन्तो ध्मान्तः शृङ्गाणि केचन
१०१२००७३ केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे
१०१२००८१ विच्छायाभिः प्रधावन्तो गच्छन्तः साधुहंसकैः
१०१२००८३ बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः
१०१२००९१ विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान्
१०१२००९३ विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु
१०१२०१०१ साकं भेकैर्विलङ्घन्तः सरितः स्रवसम्प्लुताः
१०१२०१०३ विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान्
१०१२०१११ इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन
१०१२०११३ मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः
१०१२०१२१ यत्पादपांसुर्बहुजन्मकृच्छ्रतो
१०१२०१२२ धृतात्मभिर्योगिभिरप्यलभ्यः
१०१२०१२३ स एव यद्दृग्विषयः स्वयं स्थितः
१०१२०१२४ किं वर्ण्यते दिष्टमतो व्रजौकसाम्
१०१२०१३१ अथाघनामाभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः
१०१२०१३३ नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते
१०१२०१४१ दृष्ट्वार्भकान्कृष्णमुखानघासुरः
१०१२०१४२ कंसानुशिष्टः स बकीबकानुजः
१०१२०१४३ अयं तु मे सोदरनाशकृत्तयोर्
१०१२०१४४ द्वयोर्ममैनं सबलं हनिष्ये
१०१२०१५१ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः
१०१२०१५३ प्राणे गते वर्ष्मसु का नु चिन्ता प्रजासवः प्राणभृतो हि ये ते
१०१२०१६१ इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम्
१०१२०१६३ धृत्वाद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः
१०१२०१७१ धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः
१०१२०१७३ ध्वान्तान्तरास्यो वितताध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः

१०१२०१८१ दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम्
१०१२०१८३ व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया
१०१२०१९१ अहो मित्राणि गदत सत्त्वकूटं पुरः स्थितम्
१०१२०१९३ अस्मत्सङ्ग्रसनव्यात्त व्यालतुण्डायते न वा
१०१२०२०१ सत्यमर्ककरारक्तमुत्तराहनुवद्धनम्
१०१२०२०३ अधराहनुवद्रोधस्तत्प्रतिच्छाययारुणम्
१०१२०२११ प्रतिस्पर्धेते सृक्कभ्यां सव्यासव्ये नगोदरे
१०१२०२१३ तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत
१०१२०२२१ आस्तृतायाममार्गोऽयं रसनां प्रतिगर्जति
१०१२०२२३ एषां अन्तर्गतं ध्वान्तमेतदप्यन्तराननम्
१०१२०२३१ दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत
१०१२०२३३ तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत्
१०१२०२४१ अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति
१०१२०२४३ क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः
१०१२०२५१ इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं
१०१२०२५२ श्रुत्वा विचिन्त्येत्यमृषा मृषायते
१०१२०२५३ रक्षो विदित्वाखिलभूतहृत्स्थितः
१०१२०२५४ स्वानां निरोद्धुं भगवान्मनो दधे
१०१२०२६१ तावत्प्रविष्टास्त्वसुरोदरान्तरं परं न गीर्णाः शिशवः सवत्साः
१०१२०२६३ प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा
१०१२०२७१ तान्वीक्ष्य कृष्णः सकलाभयप्रदो
१०१२०२७२ ह्यनन्यनाथान्स्वकरादवच्युतान्
१०१२०२७३ दीनांश्च मृत्योर्जठराग्निघासान्
१०१२०२७४ घृणार्दितो दिष्टकृतेन विस्मितः
१०१२०२८१ कृत्यं किमत्रास्य खलस्य जीवनं
१०१२०२८२ न वा अमीषां च सतां विहिंसनम्
१०१२०२८३ द्वयं कथं स्यादिति संविचिन्त्य
१०१२०२८४ ज्ञात्वाविशत्तुण्डमशेषदृग्घरिः
१०१२०२९१ तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः
१०१२०२९३ जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः
१०१२०३०१ तच्छ्रुत्वा भगवान्कृष्णस्त्वव्ययः सार्भवत्सकम्

१०१२०३०३ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले
१०१२०३११ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः
१०१२०३१३ पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन्विनिर्भिद्य विनिर्गतो बहिः
१०१२०३२१ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान्सुहृदः परेतान्
१०१२०३२३ दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान्विनिर्ययौ
१०१२०३३१ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश
१०१२०३३३ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन्मिषतां दिवौकसाम्
१०१२०३४१ ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं
१०१२०३४२ पुष्पैः सुगा अप्सरसश्च नर्तनैः
१०१२०३४३ गीतैः सुरा वाद्यधराश्च वाद्यकैः
१०१२०३४४ स्तवैश्च विप्रा जयनिःस्वनैर्गणाः
१०१२०३५१ तदद्भुतस्तोत्रसुवाद्यगीतिका जयादिनैकोत्सवमङ्गलस्वनान्
१०१२०३५३ श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम्
१०१२०३६१ राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतम्
१०१२०३६३ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम्
१०१२०३७१ एतत्कौमारजं कर्म हरेरात्माहिमोक्षणम्
१०१२०३७३ मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे
१०१२०३८१ नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः
१०१२०३८३ अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम्
१०१२०३९१ सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम्
१०१२०३९३ स एव नित्यात्मसुखानुभूत्यभि व्युदस्तमायोऽन्तर्गतो हि किं पुनः
१०१२०४०० श्रीसूत उवाच
१०१२०४०१ इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम्
१०१२०४०३ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः
१०१२०४१० श्रीराजोवाच
१०१२०४११ ब्रह्मन्कालान्तरकृतं तत्कालीनं कथं भवेत्
१०१२०४१३ यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः
१०१२०४२१ तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो
१०१२०४२३ नूनमेतद्धरेरेव माया भवति नान्यथा
१०१२०४३१ वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः
१०१२०४३३ वयं पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम्

१०१२०४४० श्रीसूत उवाच

१०१२०४४१ इत्थं स्म पृष्टः स तु बादरायणिस्

१०१२०४४२ तत्स्मारितानन्तहृताखिलेन्द्रियः

१०१२०४४३ कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः

१०१२०४४४ प्रत्याह तं भागवतोत्तमोत्तम

१०१३००१० श्रीशुक उवाच

१०१३००११ साधु पृष्टं महाभाग त्वया भागवतोत्तम

१०१३००१३ यन्नूतनयसीशस्य श‍ृण्वन्नपि कथां मुहुः

१०१३००२१ सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि

१०१३००२३ प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधु वार्ता

१०१३००३१ श‍ृणुष्वावहितो राजन्नपि गुह्यं वदामि ते

१०१३००३३ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत

१०१३००४१ तथाघवदनान्मृत्यो रक्षित्वा वत्सपालकान्

१०१३००४३ सरित्पुलिनमानीय भगवानिदमब्रवीत्

१०१३००५१ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसम्पन्मृदुलाच्छबालुकम्

१०१३००५३ स्फुटत्सरोगन्धहृतालिपत्रिक ध्वनिप्रतिध्वानलसद्द्रुमाकुलम्

१०१३००६१ अत्र भोक्तव्यमस्माभिर्दिवारूढं क्षुधार्दिताः

१०१३००६३ वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम्

१०१३००७१ तथेति पाययित्वार्भा वत्सानारुध्य शाद्वले

१०१३००७३ मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा

१०१३००८१ कृष्णस्य विष्वक्पुरुराजिमण्डलैर्

१०१३००८२ अभ्याननाः फुल्लदृशो व्रजार्भकाः

१०१३००८३ सहोपविष्टा विपिने विरेजुश्

१०१३००८४ छदा यथाम्भोरुहकर्णिकायाः

१०१३००९१ केचित्पुष्पैर्दलैः केचित्पल्लवैरङ्कुरैः फलैः

१०१३००९३ शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः

१०१३०१०१ सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक्

१०१३०१०३ हसन्तो हासयन्तश्चा भ्यवजह्रुः सहेश्वराः

१०१३०१११ बिभ्रद्वेणुं जठरपटयोः श‍ृङ्गवेत्रे च कक्षे

१०१३०११२ वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु

१०१३०११३ तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः

१०१३०११४ स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः
१०१३०१२१ भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु
१०१३०१२३ वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः
१०१३०१३१ तान्दृष्ट्वा भयसन्त्रस्तानूचे कृष्णोऽस्य भीभयम्
१०१३०१३३ मित्राण्याशान्मा विरमते हानेष्ये वत्सकानहम्
१०१३०१४१ इत्युक्त्वाद्रिदरीकुञ्ज गह्वरेष्वात्मवत्सकान्
१०१३०१४३ विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ
१०१३०१५१ अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितुर्
१०१३०१५२ द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान्
१०१३०१५३ नीत्वान्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा
१०१३०१५४ दृष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम्
१०१३०१६१ ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान्
१०१३०१६३ उभावपि वने कृष्णो विचिकाय समन्ततः
१०१३०१७१ क्वाप्यदृष्ट्वान्तर्विपिने वत्सान्पालांश्च विश्ववित्
१०१३०१७३ सर्वं विधिकृतं कृष्णः सहसावजगाम ह
१०१३०१८१ ततः कृष्णो मुदं कर्तुं तन्मातृणां च कस्य च
१०१३०१८३ उभयायितमात्मानं चक्रे विश्वकृदीश्वरः
१०१३०१९१ यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं
१०१३०१९२ यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम्
१०१३०१९३ यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं
१०१३०१९४ सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ
१०१३०२०१ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः
१०१३०२०३ क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद्व्रजम्
१०१३०२११ तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः
१०१३०२१३ तत्तदात्माभवद्राजंस्तत्तत्सद्म प्रविष्टवान्
१०१३०२२१ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम्
१०१३०२२३ स्नेहस्नुतस्तन्यपयःसुधासवं मत्वा परं ब्रह्म सुतानपाययन्
१०१३०२३१ ततो नृपोन्मर्दनमज्जलेपना लङ्कारक्षातिलकाशनादिभिः
१०१३०२३३ संलालितः स्वाचरितैः प्रहर्षयन्सायं गतो यामयमेन माधवः
१०१३०२४१ गावस्ततो गोष्ठमुपेत्य सत्वरं हुङ्कारघोषैः परिहूतसङ्गतान्
१०१३०२४३ स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहन्त्यः स्रवदौधसं पयः

१०१३०२५१ गोगोपीनां मातृतास्मिन्नासीत्स्नेहर्धिकां विना
१०१३०२५३ पुरोवदास्वपि हरेस्तोकता मायया विना
१०१३०२६१ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम्
१०१३०२६३ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत्
१०१३०२७१ इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः
१०१३०२७३ पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः
१०१३०२८१ एकदा चारयन्वत्सान्सरामो वनमाविशत्
१०१३०२८३ पञ्चषासु त्रियामासु हायनापूरणीष्वजः
१०१३०२९१ ततो विदूराच्चरतो गावो वत्सानुपव्रजम्
१०१३०२९३ गोवर्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम्
१०१३०३०१ दृष्ट्वाथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः
१०१३०३०३ द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुङ्कृतैरास्नुपया जवेन
१०१३०३११ समेत्य गावोऽधो वत्सान्वत्सवत्योऽप्यपाययन्
१०१३०३१३ गिलन्त्य इव चाङ्गानि लिहन्त्यः स्वौधसं पयः
१०१३०३२१ गोपास्तद्रोधनायास मौघ्यलज्जोरुमन्युना
१०१३०३२३ दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान्
१०१३०३३१ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान्
१०१३०३३३ उदुह्य दोर्भिः परिरभ्य मूर्धनि घ्राणैरवापुः परमां मुदं ते
१०१३०३४१ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः
१०१३०३४३ कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः
१०१३०३५१ व्रजस्य रामः प्रेमर्धेर्वीक्ष्यौत्कण्ठ्यमनुक्षणम्
१०१३०३५३ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिन्तयत्
१०१३०३६१ किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि
१०१३०३६३ व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते
१०१३०३७१ केयं वा कुत आयाता दैवी वा नार्युतासुरी
१०१३०३७३ प्रायो मायास्तु मे भर्तुर्नान्या मेऽपि विमोहिनी
१०१३०३८१ इति सञ्चिन्त्य दाशार्हो वत्सान्सवयसानपि
१०१३०३८३ सर्वानाचष्ट वैकुण्ठं चक्षुषा वयुनेन सः
१०१३०३९१ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि
१०१३०३९३ सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत्
१०१३०४०१ तावदेत्यात्मभूरात्म मानेन त्रुट्यनेहसा

१०१३०४०३ पुरोवदाब्दं क्रीडन्तं ददृशे सकलं हरिम्
१०१३०४११ यावन्तो गोकुले बालाः सवत्साः सर्व एव हि
१०१३०४१३ मायाशये शयाना मे नाद्यापि पुनरुत्थिताः
१०१३०४२१ इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे
१०१३०४२३ तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समम्
१०१३०४३१ एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः
१०१३०४३३ सत्याः के कतरे नेति ज्ञातुं नेष्टे कथञ्चन
१०१३०४४१ एवं सम्मोहयन्विष्णुं विमोहं विश्वमोहनम्
१०१३०४४३ स्वयैव माययाजोऽपि स्वयमेव विमोहितः
१०१३०४५१ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि
१०१३०४५३ महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः
१०१३०४६१ तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात्
१०१३०४६३ व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः
१०१३०४७१ चतुर्भुजाः शङ्खचक्र गदाराजीवपाणयः
१०१३०४७३ किरीटिनः कुण्डलिनो हारिणो वनमालिनः
१०१३०४८१ श्रीवत्साङ्गददोरत्न कम्बुकङ्कणपाणयः
१०१३०४८३ नूपुरैः कटकैर्भाताः कटिसूत्राङ्गुलीयकैः
१०१३०४९१ आङ्घ्रिमस्तकमापूर्णास्तुलसीनवदामभिः
१०१३०४९३ कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः
१०१३०५०१ चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः
१०१३०५०३ स्वकार्थानामिव रजः सत्त्वाभ्यां स्रष्टृपालकाः
१०१३०५११ आत्मादिस्तम्बपर्यन्तैर्मूर्तिमद्भिश्चराचरैः
१०१३०५१३ नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः
१०१३०५२१ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः
१०१३०५२३ चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः
१०१३०५३१ कालस्वभावसंस्कार कामकर्मगुणादिभिः
१०१३०५३३ स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः
१०१३०५४१ सत्यज्ञानानन्तानन्द मात्रैकरसमूर्तयः
१०१३०५४३ अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम्
१०१३०५५१ एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान्
१०१३०५५३ यस्य भासा सर्वमिदं विभाति सचराचरम्

१०१३०५६१ ततोऽतिकुतुकोद्वृत्य स्तिमितैकादशेन्द्रियः
१०१३०५६३ तद्धाम्नाभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्रिका
१०१३०५७१ इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके
१०१३०५७२ परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ
१०१३०५७३ अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति
१०१३०५७४ चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम्
१०१३०५८१ ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः
१०१३०५८३ कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना
१०१३०५९१ सपद्येवाभितः पश्यन्दिशोऽपश्यत्पुरःस्थितम्
१०१३०५९३ वृन्दावनं जनाजीव्य द्रुमाकीर्णं समाप्रियम्
१०१३०६०१ यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः
१०१३०६०३ मित्राणीवाजितावास द्रुतरुट्तर्षकादिकम्
१०१३०६११ तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं
१०१३०६१२ ब्रह्माद्वयं परमनन्तमगाधबोधम्
१०१३०६१३ वत्सान्सखीनिव पुरा परितो विचिन्वद्
१०१३०६१४ एकं सपाणिकवलं परमेष्ठ्यचष्ट
१०१३०६२१ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य
१०१३०६२२ पृथ्व्यां वपुः कनकदण्डमिवाभिपात्य
१०१३०६२३ स्पृष्ट्वा चतुर्मुकुटकोटिभिरङ्घ्रियुग्मं
१०१३०६२४ नत्वा मुदश्रुसुजलैरकृताभिषेकम्
१०१३०६३१ उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन्
१०१३०६३३ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः
१०१३०६४१ शनैरथोत्थाय विमृज्य लोचने मुकुन्दमुद्वीक्ष्य विनम्रकन्धरः
१०१३०६४३ कृताञ्जलिः प्रश्रयवान्समाहितः सवेपथुर्गद्गदयैलतेलया
१०१४००१० श्रीब्रह्मोवाच
१०१४००११ नौमीड्य तेऽभ्रवपुषे तडिदम्बराय
१०१४००१२ गुञ्जावतंसपरिपिच्छलसन्मुखाय
१०१४००१३ वन्यस्रजे कवलवेत्रविषाणवेणु
१०१४००१४ लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय
१०१४००२१ अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि
१०१४००२३ नेशे महि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः

१०१४००३१ ज्ञाने प्रयासमुदपास्य नमन्त एव
१०१४००३२ जीवन्ति सन्मुखरितां भवदीयवार्ताम्
१०१४००३३ स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्
१०१४००३४ ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्
१०१४००४१ श्रेयःसृतिं भक्तिमुदस्य ते विभो
१०१४००४२ क्लिश्यन्ति ये केवलबोधलब्धये
१०१४००४३ तेषामसौ क्लेशल एव शिष्यते
१०१४००४४ नान्यद्यथा स्थूलतुषावघातिनाम्
१०१४००५१ पुरेह भूमन्बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया
१०१४००५३ विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्
१०१४००६१ तथापि भूमन्महिमागुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः
१०१४००६३ अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा
१०१४००७१ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य
१०१४००७३ कालेन यैर्वा विमिताः सुकल्पैर्भूपांशवः खे मिहिका द्युभासः
१०१४००८१ तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्
१०१४००८३ हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्
१०१४००९१ पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि
१०१४००९३ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ
१०१४०१०१ अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः
१०१४०१०३ अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति
१०१४०१११ क्वाहं तमोमहदहंखचराग्निवार्भू
१०१४०११२ संवेष्टिताण्डघटसप्तवितस्तिकायः
१०१४०११३ क्वेदृग्विधाविगणिताण्डपराणुचर्या
१०१४०११४ वाताध्वरोमविवरस्य च ते महित्वम्
१०१४०१२१ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे
१०१४०१२३ किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः
१०१४०१३१ जगत्त्रयान्तोदधिसम्प्लवोदे नारायणस्योदरनाभिनालात्
१०१४०१३३ विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किन्त्वीश्वर त्वन्न विनिर्गतोऽस्मि
१०१४०१४१ नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी
१०१४०१४३ नारायणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया
१०१४०१५१ तच्चेज्जलस्थं तव सज्जगद्वपुः

१०१४०१५२ किं मे न दृष्टं भगवंस्तदैव
१०१४०१५३ किं वा सुदृष्टं हृदि मे तदैव
१०१४०१५४ किं नो सपद्येव पुनर्व्यदर्शि
१०१४०१६१ अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य
१०१४०१६३ कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते
१०१४०१७१ यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा
१०१४०१७३ तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना
१०१४०१८१ अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितम्
१०१४०१८२ एकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि
१०१४०१८३ तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्
१०१४०१८४ तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते
१०१४०१९१ अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायाम्
१०१४०१९३ सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः
१०१४०२०१ सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादःस्वपि तेऽजनस्य
१०१४०२०३ जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च
१०१४०२११ को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम्
१०१४०२१३ क्व वा कथं वा कति वा कदेति विस्तारयन्क्रीडसि योगमायाम्
१०१४०२२१ तस्मादिदं जगदशेषमसत्स्वरूपं
१०१४०२२२ स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्
१०१४०२२३ त्वय्येव नित्यसुखबोधतनावनन्ते
१०१४०२२४ मायात उद्यदपि यत्सदिवावभाति
१०१४०२३१ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः
१०१४०२३३ नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णाद्वयो मुक्त उपाधितोऽमृतः
१०१४०२४१ एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते
१०१४०२४३ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम्
१०१४०२५१ आत्मानमेवात्मतयाविजानतां तेनैव जातं निखिलं प्रपञ्चितम्
१०१४०२५३ ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा
१०१४०२६१ अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात्
१०१४०२६३ अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी
१०१४०२७१ त्वामात्मानं परं मत्वा परमात्मानमेव च
१०१४०२७३ आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता

१०१४०२८१ अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः
१०१४०२८३ असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः
१०१४०२९१ अथापि ते देव पदाम्बुजद्वय प्रसादलेशानुगृहीत एव हि
१०१४०२९३ जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्
१०१४०३०१ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम्
१०१४०३०३ येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्
१०१४०३११ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा
१०१४०३१३ यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः
१०१४०३२१ अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्
१०१४०३२३ यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्
१०१४०३३१ एषां तु भाग्यमहिमाच्युत तावदास्ताम्
१०१४०३३२ एकादशैव हि वयं बत भूरिभागाः
१०१४०३३३ एतद्धृषीकचषकैरसकृत्पिबामः
१०१४०३३४ शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते
१०१४०३४१ तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
१०१४०३४२ यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्
१०१४०३४३ यज्जीवितं तु निखिलं भगवान्मुकुन्दस्
१०१४०३४४ त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव
१०१४०३५१ एषां घोषनिवासिनामुत भवान्किं देव रातेति नश्
१०१४०३५२ चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति
१०१४०३५३ सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता
१०१४०३५४ यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते
१०१४०३६१ तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम्
१०१४०३६३ तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः
१०१४०३७१ प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले
१०१४०३७३ प्रपन्नजनतानन्द सन्दोहं प्रथितुं प्रभो
१०१४०३८१ जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो
१०१४०३८३ मनसो वपुषो वाचो वैभवं तव गोचरः
१०१४०३९१ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक्
१०१४०३९३ त्वमेव जगतां नाथो जगदेतत्तवार्पितम्
१०१४०४०१ श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन्

१०१४०४०२ क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन्
१०१४०४०३ उद्धर्मशार्वरहर क्षितिराक्षसध्रुग्
१०१४०४०४ आकल्पमार्कमर्हन्भगवन्नमस्ते
१०१४०४१० श्रीशुक उवाच
१०१४०४११ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः
१०१४०४१३ नत्वाभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत
१०१४०४२१ ततोऽनुज्ञाप्य भगवान्स्वभुवं प्रागवस्थितान्
१०१४०४२३ वत्सान्पुलिनमानिन्ये यथापूर्वसखं स्वकम्
१०१४०४३१ एकस्मिन्नपि यातेऽब्दे प्राणेशं चान्तरात्मनः
१०१४०४३३ कृष्णमायाहता राजन्क्षणार्धं मेनिरेऽर्भकाः
१०१४०४४१ किं किं न विस्मरन्तीह मायामोहितचेतसः
१०१४०४४३ यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम्
१०१४०४५१ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा
१०१४०४५३ नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम्
१०१४०४६१ ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः
१०१४०४६३ दर्शयंश्चर्माजगरं न्यवर्तत वनाद्व्रजम्
१०१४०४७१ बर्हप्रसूनवनधातुविचित्रिताङ्गः
१०१४०४७२ प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः
१०१४०४७३ वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्
१०१४०४७४ गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम्
१०१४०४८१ अद्यानेन महाव्यालो यशोदानन्दसूनुना
१०१४०४८३ हतोऽविता वयं चास्मादिति बाला व्रजे जगुः
१०१४०४९० श्रीराजोवाच
१०१४०४९१ ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत्
१०१४०४९३ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम्
१०१४०५०० श्रीशुक उवाच
१०१४०५०१ सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः
१०१४०५०३ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि
१०१४०५११ तद्राजेन्द्र यथा स्नेहः स्वस्वकात्मनि देहिनाम्
१०१४०५१३ न तथा ममतालम्बि पुत्रवित्तगृहादिषु
१०१४०५२१ देहात्मवादिनां पुंसामपि राजन्यसत्तम

१०१४०५२३ यथा देहः प्रियतमस्तथा न ह्यनु ये च तम्
१०१४०५३१ देहोऽपि ममताभाक्चेत्तर्ह्यसौ नात्मवत्प्रियः
१०१४०५३३ यज्जीर्यत्यपि देहेऽस्मिञ्जीविताशा बलीयसी
१०१४०५४१ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम्
१०१४०५४३ तदर्थमेव सकलं जगदेतच्चराचरम्
१०१४०५५१ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्
१०१४०५५३ जगद्धिताय सोऽप्यत्र देहीवाभाति मायया
१०१४०५६१ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च
१०१४०५६३ भगवद्रूपमखिलं नान्यद्वस्त्विह किञ्चन
१०१४०५७१ सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः
१०१४०५७३ तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम्
१०१४०५८१ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः
१०१४०५८३ भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम्
१०१४०५९१ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया
१०१४०५९३ तत्कौमारे हरिकृतं पौगण्डे परिकीर्तितम्
१०१४०६०१ एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च
१०१४०६०३ व्यक्तेतरद्रूपमजोर्वभिष्टवं श‍ृण्वन्गृणन्नेति नरोऽखिलार्थान्
१०१४०६११ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे
१०१४०६१३ निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः
१०१५००१० श्रीशुक उवाच
१०१५००११ ततश्च पौगण्डवयःश्रीतौ व्रजे
१०१५००१२ बभूवतुस्तौ पशुपालसम्मतौ
१०१५००१३ गाश्चारयन्तौ सखिभिः समं पदैर्
१०१५००१४ वृन्दावनं पुण्यमतीव चक्रतुः
१०१५००२१ तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः
१०१५००२३ पशून्पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम्
१०१५००३१ तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयःसरस्वता
१०१५००३३ वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान्मनो दधे
१०१५००४१ स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः
१०१५००४३ स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः
१०१५००५० श्रीभगवानुवाच

१०१५००५१ अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम्
१०१५००५३ नमन्त्युपादाय शिखाभिरात्मनस्तमोऽपहत्यै तरुजन्म यत्कृतम्
१०१५००६१ एतेऽलिनस्तव यशोऽखिललोकतीर्थं
१०१५००६२ गायन्त आदिपुरुषानुपथं भजन्ते
१०१५००६३ प्रायो अमी मुनिगणा भवदीयमुख्या
१०१५००६४ गूढं वनेऽपि न जहत्यनघात्मदैवम्
१०१५००७१ नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः
१०१५००७२ कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन
१०१५००७३ सूक्तैश्च कोकिलगणा गृहमागताय
१०१५००७४ धन्या वनौकस इयान्हि सतां निसर्गः
१०१५००८१ धन्येयमद्य धरणी तृणवीरुधस्त्वत्
१०१५००८२ पादस्पृशो द्रुमलताः करजाभिमृष्टाः
१०१५००८३ नद्योऽद्रयः खगमृगाः सदयावलोकैर्
१०१५००८४ गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः
१०१५००९० श्रीशुक उवाच
१०१५००९१ एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून्
१०१५००९३ रेमे सञ्चारयन्नद्रेः सरिद्रोधःसु सानुगः
१०१५०१०१ क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः
१०१५०१०३ उपगीयमानचरितः पथि सङ्कर्षणान्वितः
१०१५०१११ अनुजल्पति जल्पन्तं कलवाक्यैः शुकं क्वचित्
१०१५०११३ क्वचित्सवल्गु कूजन्तमनुकूजति कोकिलम्
१०१५०११५ क्वचिच्च कालहंसानामनुकूजति कूजितम्
१०१५०११७ अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित्
१०१५०१२१ मेघगम्भीरया वाचा नामभिर्दूरगान्पशून्
१०१५०१२३ क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया
१०१५०१३१ चकोरक्रौञ्चचक्राह्व भारद्वाजांश्च बर्हिणः
१०१५०१३३ अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः
१०१५०१४१ क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम्
१०१५०१४३ स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः
१०१५०१५१ नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः
१०१५०१५३ गृहीतहस्तौ गोपालान्हसन्तौ प्रशशंसतुः

१०१५०१६१ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः
१०१५०१६३ वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः
१०१५०१७१ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः
१०१५०१७३ अपरे हतपाप्मानो व्यजनैः समवीजयन्
१०१५०१८१ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः
१०१५०१८३ गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः
१०१५०१९१ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन्
१०१५०१९३ रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः
१०१५०२०१ श्रीदामा नाम गोपालो रामकेशवयोः सखा
१०१५०२०३ सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन्
१०१५०२११ राम राम महाबाहो कृष्ण दुष्टनिबर्हण
१०१५०२१३ इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम्
१०१५०२२१ फलानि तत्र भूरीणि पतन्ति पतितानि च
१०१५०२२३ सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना
१०१५०२३१ सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक्
१०१५०२३३ आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः
१०१५०२४१ तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन्
१०१५०२४३ न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम्
१०१५०२५१ विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च
१०१५०२५३ एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते
१०१५०२६१ प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम्
१०१५०२६३ वाञ्छास्ति महती राम गम्यतां यदि रोचते
१०१५०२७१ एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया
१०१५०२७३ प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू
१०१५०२८१ बलः प्रविश्य बाहुभ्यां तालान्सम्परिकम्पयन्
१०१५०२८३ फलानि पातयामास मतङ्गज इवौजसा
१०१५०२९१ फलानां पततां शब्दं निशम्यासुररासभः
१०१५०२९३ अभ्यधावत्क्षितितलं सनगं परिकम्पयन्
१०१५०३०१ समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली
१०१५०३०३ निहत्योरसि काशब्दं मुञ्चन्पर्यसरत्खलः
१०१५०३११ पुनरासाद्य संरब्ध उपक्रोष्टा पराक्स्थितः

१०१५०३१३ चरणावपरौ राजन्बलाय प्राक्षिपद्रुषा
१०१५०३२१ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना
१०१५०३२३ चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम्
१०१५०३३१ तेनाहतो महातालो वेपमानो बृहच्छिराः
१०१५०३३३ पार्श्वस्थं कम्पयन्भग्नः स चान्यं सोऽपि चापरम्
१०१५०३४१ बलस्य लीलयोत्सृष्ट खरदेहहताहताः
१०१५०३४३ तालाश्चकम्पिरे सर्वे महावातेरिता इव
१०१५०३५१ नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे
१०१५०३५३ ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः
१०१५०३६१ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये
१०१५०३६३ क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः
१०१५०३७१ तांस्तानापततः कृष्णो रामश्च नृप लीलया
१०१५०३७३ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु
१०१५०३८१ फलप्रकरसङ्कीर्णं दैत्यदेहैर्गतासुभिः
१०१५०३८३ रराज भूः सतालाग्रैर्घनैरिव नभस्तलम्
१०१५०३९१ तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः
१०१५०३९३ मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः
१०१५०४०१ अथ तालफलान्यादन्मनुष्या गतसाध्वसाः
१०१५०४०३ तृणं च पशवश्चेरुर्हतधेनुककानने
१०१५०४११ कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः
१०१५०४१३ स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत्
१०१५०४२१ तं गोरजश्छुरितकुन्तलबद्धबर्ह
१०१५०४२२ वन्यप्रसूनरुचिरेक्षणचारुहासम्
१०१५०४२३ वेणुम्क्वणन्तमनुगैरुपगीतकीर्तिं
१०१५०४२४ गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः
१०१५०४३१ पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्
१०१५०४३२ तापं जहुर्विरहजं व्रजयोषितोऽह्नि
१०१५०४३३ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं
१०१५०४३४ सव्रीडहासविनयं यदपाङ्गमोक्षम्
१०१५०४४१ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले
१०१५०४४३ यथाकामं यथाकालं व्यधत्तां परमाशिषः

१०१५०४५१ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः
१०१५०४५३ नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ
१०१५०४६१ जनन्युपहृतं प्राश्य स्वाद्यन्नमुपलालितौ
१०१५०४६३ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे
१०१५०४७१ एवं स भगवान्कृष्णो वृन्दावनचरः क्वचित्
१०१५०४७३ ययौ राममृते राजन्कालिन्दीं सखिभिर्वृतः
१०१५०४८१ अथ गावश्च गोपाश्च निदाघातपपीडिताः
१०१५०४८३ दुष्टं जलं पपुस्तस्यास्तृष्णार्ता विषदूषितम्
१०१५०४९१ विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः
१०१५०४९३ निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह
१०१५०५०१ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः
१०१५०५०३ ईक्षयामृतवर्षिण्या स्वनाथान्समजीवयत्
१०१५०५११ ते सम्प्रतीतस्मृतयः समुत्थाय जलान्तिकात्
१०१५०५१३ आसन्सुविस्मिताः सर्वे वीक्षमाणाः परस्परम्
१०१५०५२१ अन्वमंसत तद्राजन्गोविन्दानुग्रहेक्षितम्
१०१५०५२३ पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः
१०१६००१० श्रीशुक उवाच
१०१६००११ विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः
१०१६००१३ तस्या विशुद्धिमन्विच्छन्सर्पं तमुदवासयत्
१०१६००२० श्रीराजोवाच
१०१६००२१ कथमन्तर्जलेऽगाधे न्यगृह्णाद्भगवानहिम्
१०१६००२३ स वै बहुयुगावासं यथासीद्विप्र कथ्यताम्
१०१६००३१ ब्रह्मन्भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः
१०१६००३३ गोपालोदारचरितं कस्तृप्येतामृतं जुषन्
१०१६००४० श्रीशुक उवाच
१०१६००४१ कालिन्द्यां कालियस्यासीध्रदः कश्चिद्विषाग्निना
१०१६००४३ श्रप्यमाणपया यस्मिन्पतन्त्युपरिगाः खगाः
१०१६००५१ विप्रुष्मता विषदोर्मि मारुतेनाभिमर्शिताः
१०१६००५३ म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः
१०१६००६१ तं चण्डवेगविषवीर्यमवेक्ष्य तेन
१०१६००६२ दुष्टां नदीं च खलसंयमनावतारः

१०१६००६३ कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गम्
१०१६००६४ आस्फोट्य गाढरशनो न्यपतद्विषोदे
१०१६००७१ सर्पह्रदः पुरुषसारनिपातवेग
१०१६००७२ सङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः
१०१६००७३ पर्यक्प्लुतो विषकषायबिभीषणोर्मिर्
१०१६००७४ धावन्धनुःशतमनन्तबलस्य किं तत्
१०१६००८१ तस्य ह्रदे विहरतो भुजदण्डघूर्ण
१०१६००८२ वार्घोषमङ्ग वरवारणविक्रमस्य
१०१६००८३ आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य
१०१६००८४ चक्षुःश्रवाः समसरत्तदमृष्यमाणः
१०१६००९१ तं प्रेक्षणीयसुकुमारघनावदातं
१०१६००९२ श्रीवत्सपीतवसनं स्मितसुन्दरास्यम्
१०१६००९३ क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं
१०१६००९४ सन्दश्य मर्मसु रुषा भुजया चछाद
१०१६०१०१ तं नागभोगपरिवीतमदृष्टचेष्टम्
१०१६०१०२ आलोक्य तत्प्रियसखाः पशुपा भृशार्ताः
१०१६०१०३ कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा
१०१६०१०४ दुःखानुशोकभयमूढधियो निपेतुः
१०१६०१११ गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः
१०१६०११३ कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे
१०१६०१२१ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः
१०१६०१२३ उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः
१०१६०१३१ तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः
१०१६०१३३ विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम्
१०१६०१४१ तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः
१०१६०१४३ तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः
१०१६०१५१ आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः
१०१६०१५३ निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः
१०१६०१६१ तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः
१०१६०१६३ प्रहस्य किञ्चिन्नोवाच प्रभावज्ञोऽनुजस्य सः
१०१६०१७१ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः

१०१६०१७३ भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम्
१०१६०१८१ ते तत्र तत्राब्जयवाङ्कुशाशनि ध्वजोपपन्नानि पदानि विश्पतेः
१०१६०१८३ मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः
१०१६०१९१ अन्तर्ह्रदे भुजगभोगपरीतमारात्
१०१६०१९२ कृष्णं निरीहमुपलभ्य जलाशयान्ते
१०१६०१९३ गोपांश्च मूढधिषणान्परितः पशूंश्च
१०१६०१९४ सङ्क्रन्दतः परमकश्मलमापुरार्ताः
१०१६०२०१ गोप्योऽनुरक्तमनसो भगवत्यनन्ते
१०१६०२०२ तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः
१०१६०२०३ ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः
१०१६०२०४ शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम्
१०१६०२११ ताः कृष्णमातरमपत्यमनुप्रविष्टां
१०१६०२१२ तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः
१०१६०२१३ तास्ता व्रजप्रियकथाः कथयन्त्य आसन्
१०१६०२१४ कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः
१०१६०२२१ कृष्णप्राणान्निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम्
१०१६०२२३ प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित्
१०१६०२३१ इत्थम्स्वगोकुलमनन्यगतिं निरीक्ष्य
१०१६०२३२ सस्त्रीकुमारमतिदुःखितमात्महेतोः
१०१६०२३३ आज्ञाय मर्त्यपदवीमनुवर्तमानः
१०१६०२३४ स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात्
१०१६०२४१ तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्
१०१६०२४२ त्यक्त्वोन्नमय्य कुपितः स्वफणान्भुजङ्गः
१०१६०२४३ तस्थौ श्वसञ्छ्वसनरन्ध्रविषाम्बरीष
१०१६०२४४ स्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः
१०१६०२५१ तं जिह्वया द्विशिखया परिलेलिहानं
१०१६०२५२ द्वे सृक्कणी ह्यतिकरालविषाग्निदृष्टिम्
१०१६०२५३ क्रीडन्नमुं परिससार यथा खगेन्द्रो
१०१६०२५४ बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः
१०१६०२६१ एवं परिभ्रमहतौजसमुन्नतांसम्
१०१६०२६२ आनम्य तत्पृथुशिरःस्वधिरूढ आद्यः

१०१६०२६३ तन्मूर्धरत्ननिकरस्पर्शातिताम्र
१०१६०२६४ पादाम्बुजोऽखिलकलादिगुरुर्ननर्त
१०१६०२७१ तं नर्तुमुद्यतमवेक्ष्य तदा तदीय
१०१६०२७२ गन्धर्वसिद्धमुनिचारणदेववध्वः
१०१६०२७३ प्रीत्या मृदङ्गपणवानकवाद्यगीत
१०१६०२७४ पुष्पोपहारनुतिभिः सहसोपसेदुः
१०१६०२८१ यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्
१०१६०२८२ तत्तन्ममर्द खरदण्डधरोऽङ्घ्रिपातैः
१०१६०२८३ क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्
१०१६०२८४ नस्तो वमन्परमकश्मलमाप नागः
१०१६०२९१ तस्याक्षिभिर्गरलमुद्वमतः शिरःसु
१०१६०२९२ यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः
१०१६०२९३ नृत्यन्पदानुनमयन्दमयां बभूव
१०१६०२९४ पुष्पैः प्रपूजित इवेह पुमान्पुराणः
१०१६०३०१ तच्चित्रताण्डवविरुग्नफणासहस्रो
१०१६०३०२ रक्तं मुखैरुरु वमन्नृप भग्नगात्रः
१०१६०३०३ स्मृत्वा चराचरगुरुं पुरुषं पुराणं
१०१६०३०४ नारायणं तमरणं मनसा जगाम
१०१६०३११ कृष्णस्य गर्भजगतोऽतिभरावसन्नं
१०१६०३१२ पार्ष्णिप्रहारपरिरुग्नफणातपत्रम्
१०१६०३१३ दृष्ट्वाहिमाद्यमुपसेदुरमुष्य पत्न्य
१०१६०३१४ आर्ताः श्लथद्वसनभूषणकेशबन्धाः
१०१६०३२१ तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः
१०१६०३२२ कायं निधाय भुवि भूतपतिं प्रणेमुः
१०१६०३२३ साध्व्यः कृताञ्जलिपुटाः शमलस्य भर्तुर्
१०१६०३२४ मोक्षेप्सवः शरणदं शरणं प्रपन्नाः
१०१६०३३० नागपत्न्य ऊचुः
१०१६०३३१ न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्
१०१६०३३२ तवावतारः खलनिग्रहाय
१०१६०३३३ रिपोः सुतानामपि तुल्यदृष्टिर्
१०१६०३३४ धत्से दमं फलमेवानुशंसन्

१०१६०३४१ अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः
१०१६०३४३ यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः
१०१६०३५१ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन
१०१६०३५३ धर्मोऽथ वा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः
१०१६०३६१ कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्परशाधिकारः
१०१६०३६३ यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान्सुचिरं धृतव्रता
१०१६०३७१ न नाकपृष्ठं न च सार्वभौमं
१०१६०३७२ न पारमेष्ठ्यं न रसाधिपत्यम्
१०१६०३७३ न योगसिद्धीरपुनर्भवं वा
१०१६०३७४ वाञ्छन्ति यत्पादरजःप्रपन्नाः
१०१६०३८१ तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः
१०१६०३८३ संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः
१०१६०३९१ नमस्तुभ्यं भगवते पुरुषाय महात्मने
१०१६०३९३ भूतावासाय भूताय पराय परमात्मने
१०१६०४०१ ज्ञानविज्ञाननीधये ब्रह्मणेऽनन्तशक्तये
१०१६०४०३ अगुणायाविकाराय नमस्ते प्राकृताय च
१०१६०४११ कालाय कालनाभाय कालावयवसाक्षिणे
१०१६०४१३ विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे
१०१६०४२१ भूतमात्रेन्द्रियप्राण मनोबुद्ध्याशयात्मने
१०१६०४२३ त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये
१०१६०४३१ नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते
१०१६०४३३ नानावादानुरोधाय वाच्यवाचकशक्तये
१०१६०४४१ नमः प्रमाणमूलाय कवये शास्त्रयोनये
१०१६०४४३ प्रवृत्ताय निवृत्ताय निगमाय नमो नमः
१०१६०४५१ नमः कृष्णाय रामाय वसुदेवसुताय च
१०१६०४५३ प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः
१०१६०४६१ नमो गुणप्रदीपाय गुणात्मच्छादनाय च
१०१६०४६३ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे
१०१६०४७१ अव्याकृतविहाराय सर्वव्याकृतसिद्धये
१०१६०४७३ हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने
१०१६०४८१ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः

१०१६०४८३ अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे
१०१६०४९१ त्वं ह्यस्य जन्मस्थितिसंयमान्विभो
१०१६०४९२ गुणैरनीहोऽकृतकालशक्तिधृक्
१०१६०४९३ तत्तत्स्वभावान्प्रतिबोधयन्सतः
१०१६०४९४ समीक्षयामोघविहार ईहसे
१०१६०५०१ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां
१०१६०५०२ शान्ता अशान्ता उत मूढयोनयः
१०१६०५०३ शान्ताः प्रियास्ते ह्यधुनावितुं सतां
१०१६०५०४ स्थातुश्च ते धर्मपरीप्सयेहतः
१०१६०५११ अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः
१०१६०५१३ क्षन्तुमर्हसि शान्तात्मन्मूढस्य त्वामजानतः
१०१६०५२१ अनुगृह्णीष्व भगवन्प्राणांस्त्यजति पन्नगः
१०१६०५२३ स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम्
१०१६०५३१ विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया
१०१६०५३३ यच्छ्रद्धयानुतिष्ठन्वै मुच्यते सर्वतो भयात्
१०१६०५४० श्रीशुक उवाच
१०१६०५४१ इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः
१०१६०५४३ मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः
१०१६०५५१ प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम्
१०१६०५५३ कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णं प्राह कृताञ्जलिः
१०१६०५६० कालिय उवाच
१०१६०५६१ वयं खलाः सहोत्पत्त्या तमसा दीर्घमन्यवः
१०१६०५६३ स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः
१०१६०५७१ त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम्
१०१६०५७३ नानास्वभाववीर्यौजो योनिबीजाशयाकृति
१०१६०५८१ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः
१०१६०५८३ कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम्
१०१६०५९१ भवान्हि कारणं तत्र सर्वज्ञो जगदीश्वरः
१०१६०५९३ अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः
१०१६०६०० श्रीशुक उवाच
१०१६०६०१ इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः

१०१६०६०३ नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम्
१०१६०६०५ स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यते नदी
१०१६०६११ य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम्
१०१६०६१३ कीर्तयन्नुभयोः सन्ध्योर्न युष्मद्भयमाप्नुयात्
१०१६०६२१ योऽस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः
१०१६०६२३ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते
१०१६०६३१ द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः
१०१६०६३३ यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम्
१०१६०६४० श्रीऋषिरुवाच
१०१६०६४१ मुक्तो भगवता राजन्कृष्णेनाद्भुतकर्मणा
१०१६०६४३ तं पूजयामास मुदा नागपत्न्यश्च सादरम्
१०१६०६५१ दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः
१०१६०६५३ दिव्यगन्धानुलेपैश्च महत्योत्पलमालया
१०१६०६६१ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम्
१०१६०६६३ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम्
१०१६०६७१ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह
१०१६०६७३ तदैव सामृतजला यमुना निर्विषाभवत्
१०१६०६७७ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः
१०१७००१० श्रीराजोवाच
१०१७००११ नागालयं रमणकं कथं तत्याज कालियः
१०१७००१३ कृतं किं वा सुपर्णस्य तेनैकेनासमञ्जसम्
१०१७००२० श्रीशुक उवाच
१०१७००२१ उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः
१०१७००२३ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः
१०१७००३१ स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि
१०१७००३३ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने
१०१७००४१ विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः
१०१७००४३ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम्
१०१७००५१ तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः
१०१७००५३ विजिघांसुर्महावेगः कालियं समपाद्रवत्
१०१७००६१ तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुत्थितनैकमस्तकः

१०१७००६३ दद्भिः सुपर्णं व्यदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः
१०१७००७१ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्
१०१७००७२ प्रचण्डवेगो मधुसूदनासनः
१०१७००७३ पक्षेण सव्येन हिरण्यरोचिषा
१०१७००७४ जघान कद्रुसुतमुग्रविक्रमः
१०१७००८१ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः
१०१७००८३ ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम्
१०१७००९१ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम्
१०१७००९३ निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत्
१०१७०१०१ मीनान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते
१०१७०१०३ कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन्
१०१७०१११ अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति
१०१७०११३ सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम्
१०१७०१२१ तत्कालियः परं वेद नान्यः कश्चन लेलिहः
१०१७०१२३ अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः
१०१७०१३१ कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम्
१०१७०१३३ महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम्
१०१७०१४१ उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः
१०१७०१४३ प्रमोदनिभृतात्मानो गोपाः प्रीत्याभिरेभिरे
१०१७०१५१ यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव
१०१७०१५३ कृष्णं समेत्य लब्धेहा आसन्शुष्का नगा अपि
१०१७०१६१ रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित्
१०१७०१६३ प्रेम्णा तमङ्कमारोप्य पुनः पुनरुदैक्षत
१०१७०१६५ गावो वृषा वत्सतर्यो लेभिरे परमां मुदम्
१०१७०१७१ नन्दं विप्राः समागत्य गुरवः सकलत्रकाः
१०१७०१७३ ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः
१०१७०१८१ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे
१०१७०१८३ नन्दः प्रीतमना राजन्गाः सुवर्णं तदादिशत्
१०१७०१९१ यशोदापि महाभागा नष्टलब्धप्रजा सती
१०१७०१९३ परिष्वज्याङ्कमारोप्य मुमोचाश्रुकलां मुहुः
१०१७०२०१ तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्षिताः

१०१७०२०३ ऊषुर्व्रयौकसो गावः कालिन्द्या उपकूलतः
१०१७०२११ तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम्
१०१७०२१३ सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे
१०१७०२२१ तत उत्थाय सम्भ्रान्ता दह्यमाना व्रजौकसः
१०१७०२२३ कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम्
१०१७०२३१ कृष्ण कृष्ण महाभग हे रामामितविक्रम
१०१७०२३३ एष घोरतमो वह्निस्तावकान्ग्रसते हि नः
१०१७०२४१ सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो
१०१७०२४३ न शक्नुमस्त्वच्चरणं सन्त्यक्तुमकुतोभयम्
१०१७०२५१ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः
१०१७०२५३ तमग्निमपिबत्तीव्रमनन्तोऽनन्तशक्तिधृक्
१०१८००१० श्रीशुक उवाच
१०१८००११ अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः
१०१८००१३ अनुगीयमानो न्यविशद्व्रजं गोकुलमण्डितम्
१०१८००२१ व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया
१०१८००२३ ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्छरीरिणाम्
१०१८००३१ स च वृन्दावनगुणैर्वसन्त इव लक्षितः
१०१८००३३ यत्रास्ते भगवान्साक्षाद्रामेण सह केशवः
१०१८००४१ यत्र निर्झरनिर्ह्राद निवृत्तस्वनझिल्लिकम्
१०१८००४३ शश्वत्तच्छीकरर्जीष द्रुममण्डलमण्डितम्
१०१८००५१ सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा
१०१८००५३ न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले
१०१८००६१ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समन्ततः
१०१८००६३ न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते
१०१८००७१ वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम्
१०१८००७३ गायन्मयूरभ्रमरं कूजत्कोकिलसारसम्
१०१८००८१ क्रीडिष्यमाणस्तत्कृष्णो भगवान्बलसंयुतः
१०१८००८३ वेणुं विरणयन्गोपैर्गोधनैः संवृतोऽविशत्
१०१८००९१ प्रवालबर्हस्तबक स्रग्धातुकृतभूषणाः
१०१८००९३ रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः
१०१८०१०१ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन्

१०१८०१०३ वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे
१०१८०१११ गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणौ
१०१८०११३ ईडिरे कृष्णरामौ च नटा इव नटं नृप
१०१८०१२१ भ्रमणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः
१०१८०१२३ चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित्
१०१८०१३१ क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम्
१०१८०१३३ शशंसतुर्महाराज साधु साध्विति वादिनौ
१०१८०१४१ क्वचिद्बिल्वैः क्वचित्कुम्भैः क्वचामलकमुष्टिभिः
१०१८०१४३ अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया
१०१८०१५१ क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः
१०१८०१५३ कदाचित्स्यन्दोलिकया कर्हिचिन्नृपचेष्टया
१०१८०१६१ एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने
१०१८०१६३ नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरःसु च
१०१८०१७१ पशूंश्चारयतोर्गोपैस्तद्वने रामकृष्णयोः
१०१८०१७३ गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया
१०१८०१८१ तं विद्वानपि दाशार्हो भगवान्सर्वदर्शनः
१०१८०१८३ अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन्
१०१८०१९१ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित्
१०१८०१९३ हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम्
१०१८०२०१ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ
१०१८०२०३ कृष्णसङ्घट्टिनः केचिदासन्रामस्य चापरे
१०१८०२११ आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः
१०१८०२१३ यत्रारोहन्ति जेतारो वहन्ति च पराजिताः
१०१८०२२१ वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम्
१०१८०२२३ भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः
१०१८०२३१ रामसङ्घट्टिनो यर्हि श्रीदामवृषभादयः
१०१८०२३३ क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप
१०१८०२४१ उवाह कृष्णो भगवान्श्रीदामानं पराजितः
१०१८०२४३ वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम्
१०१८०२५१ अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः
१०१८०२५३ वहन्द्रुततरं प्रागादवरोहणतः परम्

१०१८०२६१ तमुद्वहन्धरणिधरेन्द्रगौरवं
१०१८०२६२ महासुरो विगतरयो निजं वपुः
१०१८०२६३ स आस्थितः पुरटपरिच्छदो बभौ
१०१८०२६४ तडिद्द्युमानुडुपतिवाडिवाम्बुदः
१०१८०२७१ निरीक्ष्य तद्वपुरलमम्बरे चरत्
१०१८०२७२ प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम्
१०१८०२७३ ज्वलच्छिखं कटककिरीटकुण्डल
१०१८०२७४ त्विषाद्भुतं हलधर ईषदत्रसत्
१०१८०२८१ अथागतस्मृतिरभयो रिपुं बलो विहाय सार्थमिव हरन्तमात्मनः
१०१८०२८३ रुषाहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा
१०१८०२९१ स आहतः सपदि विशीर्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽसुरः
१०१८०२९३ महारवं व्यसुरपतत्समीरयन्गिरिर्यथा मघवत आयुधाहतः
१०१८०३०१ दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना
१०१८०३०३ गोपाः सुविस्मिता आसन्साधु साध्विति वादिनः
१०१८०३११ आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तदर्हणम्
१०१८०३१३ प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः
१०१८०३२१ पापे प्रलम्बे निहते देवाः परमनिर्वृताः
१०१८०३२३ अभ्यवर्षन्बलं माल्यैः शशंसुः साधु साध्विति
१०१९००१० श्रीशुक उवाच
१०१९००११ क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः
१०१९००१३ स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम्
१०१९००२१ अजा गावो महिष्यश्च निर्विशन्त्यो वनाद्वनम्
१०१९००२३ ईषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः
१०१९००३१ तेऽपश्यन्तः पशून्गोपाः कृष्णरामादयस्तदा
१०१९००३३ जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम्
१०१९००४१ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम्
१०१९००४३ मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः
१०१९००५१ मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम्
१०१९००५३ सम्प्राप्य तृषिताः श्रान्तास्ततस्ते सन्न्यवर्तयन्
१०१९००६१ ता आहूता भगवता मेघगम्भीरया गिरा
१०१९००६३ स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः

१०१९००७१ ततः समन्ताद्दवधूमकेतुर्यदृच्छयाभूत्क्षयकृद्वनौकसाम्
१०१९००७३ समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान्महान्
१०१९००८१ तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः
१०१९००८३ ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः
१०१९००९१ कृष्ण कृष्ण महावीर हे रामामोघ विक्रम
१०१९००९३ दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः
१०१९०१०१ नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसादितुम्
१०१९०१०३ वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः
१०१९०११० श्रीशुक उवाच
१०१९०१११ वचो निशम्य कृपणं बन्धूनां भगवान्हरिः
१०१९०११३ निमीलयत मा भैष्ट लोचनानीत्यभाषत
१०१९०१२१ तथेति मीलिताक्षेषु भगवानग्निमुल्बणम्
१०१९०१२३ पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत्
१०१९०१३१ ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः
१०१९०१३३ निशम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः
१०१९०१४१ कृष्णस्य योगवीर्यं तद्योगमायानुभावितम्
१०१९०१४३ दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम्
१०१९०१५१ गाः सन्निवर्त्य सायाह्ने सहरामो जनार्दनः
१०१९०१५३ वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः
१०१९०१६१ गोपीनां परमानन्द आसीद्गोविन्ददर्शने
१०१९०१६३ क्षणं युगशतमिव यासां येन विनाभवत्
१०२०००१० श्रीशुक उवाच
१०२०००११ तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः
१०२०००१३ गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च
१०२०००२१ गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः
१०२०००२३ मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ
१०२०००३१ ततः प्रावर्तत प्रावृट्सर्वसत्त्वसमुद्भवा
१०२०००३३ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला
१०२०००४१ सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः
१०२०००४३ अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ
१०२०००५१ अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु

१०२०००५३ स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते
१०२०००६१ तडिद्वन्तो महामेघाश्चण्ड श्वसन वेपिताः
१०२०००६३ प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव
१०२०००७१ तपःकृशा देवमीढा आसीद्वर्षीयसी मही
१०२०००७३ यथैव काम्यतपसस्तनुः सम्प्राप्य तत्फलम्
१०२०००८१ निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः
१०२०००८३ यथा पापेन पाषण्डा न हि वेदाः कलौ युगे
१०२०००९१ श्रुत्वा पर्जन्यनिनदं मण्डुकाः ससृजुर्गिरः
१०२०००९३ तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये
१०२००१०१ आसन्नुत्पथगामिन्यः क्षुद्रनद्योऽनुशुष्यतीः
१०२००१०३ पुंसो यथास्वतन्त्रस्य देहद्रविण सम्पदः
१०२००१११ हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता
१०२००११३ उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत्
१०२००१२१ क्षेत्राणि शष्यसम्पद्भिः कर्षकाणां मुदं ददुः
१०२००१२३ मानिनामनुतापं वै दैवाधीनमजानताम्
१०२००१३१ जलस्थलौकसः सर्वे नववारिनिषेवया
१०२००१३३ अबिभ्रन्रुचिरं रूपं यथा हरिनिषेवया
१०२००१४१ सरिद्भिः सङ्गतः सिन्धुश्चुक्षोभ श्वसनोर्मिमान्
१०२००१४३ अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा
१०२००१५१ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः
१०२००१५३ अभिभूयमाना व्यसनैर्यथाधोक्षजचेतसः
१०२००१६१ मार्गा बभूवुः सन्दिग्धास्तृणैश्छन्ना ह्यसंस्कृताः
१०२००१६३ नाभ्यस्यमानाः श्रुतयो द्विजैः कालेन चाहताः
१०२००१७१ लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः
१०२००१७३ स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव
१०२००१८१ धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात्
१०२००१८३ व्यक्ते गुणव्यतिकरेऽगुणवान्पुरुषो यथा
१०२००१९१ न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः
१०२००१९३ अहंमत्या भासितया स्वभासा पुरुषो यथा
१०२००२०१ मेघागमोत्सवा हृष्टाः प्रत्यनन्दञ्छिखण्डिनः
१०२००२०३ गृहेषु तप्तनिर्विण्णा यथाच्युतजनागमे

१०२००२११ पीत्वापः पादपाः पद्भिरासन्नानात्ममूर्तयः
१०२००२१३ प्राक्क्षामास्तपसा श्रान्ता यथा कामानुसेवया
१०२००२२१ सरःस्वशान्तरोधःसु न्यूषुरङ्गापि सारसाः
१०२००२२३ गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः
१०२००२३१ जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे
१०२००२३३ पाषण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा
१०२००२४१ व्यमुञ्चन्वायुभिर्नुन्ना भूतेभ्यश्चामृतं घनाः
१०२००२४३ यथाशिषो विश्पतयः काले काले द्विजेरिताः
१०२००२५१ एवं वनं तद्वर्षिष्ठं पक्वखर्जुरजम्बुमत्
१०२००२५३ गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः
१०२००२६१ धेनवो मन्दगामिन्य ऊधोभारेण भूयसा
१०२००२६३ ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनाः
१०२००२७१ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः
१०२००२७३ जलधारा गिरेर्नादादासन्ना ददृशे गुहाः
१०२००२८१ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति
१०२००२८३ निर्विश्य भगवान्रेमे कन्दमूलफलाशनः
१०२००२९१ दध्योदनं समानीतं शिलायां सलिलान्तिके
१०२००२९३ सम्भोजनीयैर्बुभुजे गोपैः सङ्कर्षणान्वितः
१०२००३०१ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान्
१०२००३०३ तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः
१०२००३११ प्रावृड्श्रियं च तां वीक्ष्य सर्वकालसुखावहाम्
१०२००३१३ भगवान्पूजयां चक्रे आत्मशक्त्युपबृंहिताम्
१०२००३२१ एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे
१०२००३२३ शरत्समभवद्व्यभ्रा स्वच्छाम्ब्वपरुषानिला
१०२००३३१ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः
१०२००३३३ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया
१०२००३४१ व्योम्नोऽब्भ्रं भूतशाबल्यं भुवः पङ्कमपां मलम्
१०२००३४३ शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाशुभम्
१०२००३५१ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः
१०२००३५३ यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः
१०२००३६१ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्

१०२००३६३ यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा
१०२००३७१ नैवाविदन्क्षीयमाणं जलं गाधजलेचराः
१०२००३७३ यथायुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः
१०२००३८१ गाधवारिचरास्तापमविन्दञ्छरदर्कजम्
१०२००३८३ यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः
१०२००३९१ शनैः शनैर्जहुः पङ्कं स्थलान्यामं च वीरुधः
१०२००३९३ यथाहंममतां धीराः शरीरादिष्वनात्मसु
१०२००४०१ निश्चलाम्बुरभूत्तूष्णीं समुद्रः शरदागमे
१०२००४०३ आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः
१०२००४११ केदारेभ्यस्त्वपोऽगृह्णन्कर्षका दृढसेतुभिः
१०२००४१३ यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः
१०२००४२१ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत्
१०२००४२३ देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम्
१०२००४३१ खमशोभत निर्मेघं शरद्विमलतारकम्
१०२००४३३ सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम्
१०२००४४१ अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी
१०२००४४३ यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि
१०२००४५१ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम्
१०२००४५३ जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः
१०२००४६१ गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाभवन्
१०२००४६३ अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव
१०२००४७१ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना
१०२००४७३ राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप
१०२००४८१ पुरग्रामेष्वाग्रयणैरिन्द्रियैश्च महोत्सवैः
१०२००४८३ बभौ भूः पक्वशष्याढ्या कलाभ्यां नितरां हरेः
१०२००४९१ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे
१०२००४९३ वर्षरुद्धा यथा सिद्धाः स्वपिण्डान्काल आगते
१०२१००१० श्रीशुक उवाच
१०२१००११ इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना
१०२१००१३ न्यविशद्वायुना वातं स गोगोपालकोऽच्युतः
१०२१००२१ कुसुमितवनराजिशुष्मिभृङ्ग द्विजकुलघुष्टसरःसरिन्महीध्रम्

१०२१००२३ मधुपतिरवगाह्य चारयन्गाः सहपशुपालबलश्चुकूज वेणुम्
१०२१००३१ तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम्
१०२१००३३ काश्चित्परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन्
१०२१००४१ तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम्
१०२१००४३ नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप
१०२१००५१ बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
१०२१००५२ बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम्
१०२१००५३ रन्ध्रान्वेणोरधरसुधयापूरयन्गोपवृन्दैर्
१०२१००५४ वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः
१०२१००६१ इति वेणुरवं राजन्सर्वभूतमनोहरम्
१०२१००६३ श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे
१०२१००७० श्रीगोप्य ऊचुः
१०२१००७१ अक्षण्वतां फलमिदं न परं विदामः
१०२१००७२ सख्यः पशूननविवेशयतोर्वयस्यैः
१०२१००७३ वक्त्रं व्रजेशसुतयोरनवेणुजुष्टं
१०२१००७४ यैर्वा निपीतमनुरक्तकटाक्षमोक्षम्
१०२१००८१ चूतप्रवालबर्हस्तबकोत्पलाब्ज मालानुपृक्तपरिधानविचित्रवेशौ
१०२१००८३ मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्वच गायमानौ
१०२१००९१ गोप्यः किमाचरदयं कुशलं स्म वेणुर्
१०२१००९२ दामोदराधरसुधामपि गोपिकानाम्
१०२१००९३ भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो
१०२१००९४ हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्यः
१०२१०१०१ वृन्दावनं सखि भुवो वितनोति कीर्तिं
१०२१०१०२ यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि
१०२१०१०३ गोविन्दवेणुमनु मत्तमयूरनृत्यं
१०२१०१०४ प्रेक्ष्याद्रिसान्ववरतान्यसमस्तसत्त्वम्
१०२१०१११ धन्याः स्म मूढगतयोऽपि हरिण्य एता
१०२१०११२ या नन्दनन्दनमुपात्तविचित्रवेशम्
१०२१०११३ आकर्ण्य वेणुरणितं सहकृष्णसाराः
१०२१०११४ पूजां दधुर्विरचितां प्रणयावलोकैः
१०२१०१२१ कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं

१०२१०१२२ श्रुत्वा च तत्क्वणितवेणुविविक्तगीतम्
१०२१०१२३ देव्यो विमानगतयः स्मरनुन्नसारा
१०२१०१२४ भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः
१०२१०१३१ गावश्च कृष्णमुखनिर्गतवेणुगीत
१०२१०१३२ पीयूषमुत्तभितकर्णपुटैः पिबन्त्यः
१०२१०१३३ शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्
१०२१०१३४ गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः
१०२१०१४१ प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन्
१०२१०१४२ कृष्णेक्षितं तदुदितं कलवेणुगीतम्
१०२१०१४३ आरुह्य ये द्रुमभुजान्रुचिरप्रवालान्
१०२१०१४४ शृण्वन्ति मीलितदृशो विगतान्यवाचः
१०२१०१५१ नद्यस्तदा तदुपधार्य मुकुन्दगीतम्
१०२१०१५२ आवर्तलक्षितमनोभवभग्नवेगाः
१०२१०१५३ आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्
१०२१०१५४ गृह्णन्ति पादयुगलं कमलोपहाराः
१०२१०१६१ दृष्ट्वातपे व्रजपशून्सह रामगोपैः
१०२१०१६२ सञ्चारयन्तमनु वेणुमुदीरयन्तम्
१०२१०१६३ प्रेमप्रवृद्ध उदितः कुसुमावलीभिः
१०२१०१६४ सख्युर्व्यधात्स्ववपुषाम्बुद आतपत्रम्
१०२१०१७१ पूर्णाः पुलिन्द्य उरुगायपदाब्जराग
१०२१०१७२ श्रीकुङ्कुमेन दयितास्तनमण्डितेन
१०२१०१७३ तद्दर्शनस्मररुजस्तृणरूषितेन
१०२१०१७४ लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्
१०२१०१८१ हन्तायमद्रिरबला हरिदासवर्यो
१०२१०१८२ यद्रामकृष्णचरणस्परशप्रमोदः
१०२१०१८३ मानं तनोति सहगोगणयोस्तयोर्यत्
१०२१०१८४ पानीयसूयवसकन्दरकन्दमूलैः
१०२१०१९१ गा गोपकैरनुवनं नयतोरुदार
१०२१०१९२ वेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः
१०२१०१९३ अस्पन्दनं गतिमतां पुलकस्तरुणां
१०२१०१९४ निर्योगपाशकृतलक्षणयोर्विचित्रम्

१०२१०२०१ एवंविधा भगवतो या वृन्दावनचारिणः
१०२१०२०३ वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः
१०२२००१० श्रीशुक उवाच
१०२२००११ हेमन्ते प्रथमे मासि नन्दव्रजकमारिकाः
१०२२००१३ चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम्
१०२२००२१ आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे
१०२२००२३ कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम्
१०२२००३१ गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः
१०२२००३३ उच्चावचैश्चोपहारैः प्रवालफलतण्डुलैः
१०२२००४१ कात्यायनि महामाये महायोगिन्यधीश्वरि
१०२२००४३ नन्दगोपसुतं देवि पतिं मे कुरु ते नमः
१०२२००४५ इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कमारिकाः
१०२२००५१ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः
१०२२००५३ भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः
१०२२००६१ ऊषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः
१०२२००६३ कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम्
१०२२००७१ नद्याः कदाचिदागत्य तीरे निक्षिप्य पूर्ववत्
१०२२००७३ वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा
१०२२००८१ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः
१०२२००८३ वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये
१०२२००९१ तासां वासांस्युपादाय नीपमारुह्य सत्वरः
१०२२००९३ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह
१०२२०१०१ अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम्
१०२२०१०३ सत्यं ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः
१०२२०१११ न मयोदितपूर्वं वा अनृतं तदिमे विदुः
१०२२०११३ एकैकशः प्रतीच्छध्वं सहैवेति सुमध्यमाः
१०२२०१२१ तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः
१०२२०१२३ व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः
१०२२०१३१ एवं ब्रुवति गोविन्दे नर्मणाक्षिप्तचेतसः
१०२२०१३३ आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन्
१०२२०१४१ मानयं भोः कृथास्त्वां तु नन्दगोपसुतं प्रियम्

१०२२०१४३ जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः
१०२२०१५१ श्यामसुन्दर ते दास्यः करवाम तवोदितम्
१०२२०१५३ देहि वासांसि धर्मज्ञ नो चेद्राज्ञे ब्रुवाम हे
१०२२०१६० श्रीभगवानुवाच
१०२२०१६१ भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ
१०२२०१६३ अत्रागत्य स्ववासांसि प्रतीच्छत शुचिस्मिताः
१०२२०१६५ नो चेन्नाहं प्रदास्ये किं क्रुद्धो राजा करिष्यति
१०२२०१७१ ततो जलाशयात्सर्वा दारिकाः शीतवेपिताः
१०२२०१७३ पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः
१०२२०१८१ भगवानाहता वीक्ष्य शुद्ध भावप्रसादितः
१०२२०१८३ स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम्
१०२२०१९१ यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम्
१०२२०१९३ बद्ध्वाञ्जलिं मूर्ध्न्यपनुत्तयेऽंहसः कृत्वा नमोऽधोवसनं प्रगृह्यताम्
१०२२०२०१ इत्यच्युतेनाभिहितं व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम्
१०२२०२०३ तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग्यतः
१०२२०२११ तास्तथावनता दृष्ट्वा भगवान्देवकीसुतः
१०२२०२१३ वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः
१०२२०२२१ दृढं प्रलब्धास्त्रपया च हापिताः
१०२२०२२२ प्रस्तोभिताः क्रीडनवच्च कारिताः
१०२२०२२३ वस्त्राणि चैवापहृतान्यथाप्यमुं
१०२२०२२४ ता नाभ्यसूयन्प्रियसङ्गनिर्वृताः
१०२२०२३१ परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः
१०२२०२३३ गृहीतचित्ता नो चेलुस्तस्मिन्लज्जायितेक्षणाः
१०२२०२४१ तासां विज्ञाय भगवान्स्वपादस्पर्शकाम्यया
१०२२०२४३ धृतव्रतानां सङ्कल्पमाह दामोदरोऽबलाः
१०२२०२५१ सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चनम्
१०२२०२५३ मयानुमोदितः सोऽसौ सत्यो भवितुमर्हति
१०२२०२६१ न मय्यावेशितधियां कामः कामाय कल्पते
१०२२०२६३ भर्जिता क्वथिता धानाः प्रायो बीजाय नेशते
१०२२०२७१ याताबला व्रजं सिद्धा मयेमा रंस्यथा क्षपाः
१०२२०२७३ यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः

१०२२०२८० श्रीशुक उवाच
१०२२०२८१ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः
१०२२०२८३ ध्यायन्त्यस्तत्पदाम्भोजम्कृच्छ्रान्निर्विविशुर्व्रजम्
१०२२०२९१ अथ गोपैः परिवृतो भगवान्देवकीसुतः
१०२२०२९३ वृन्दावनाद्गतो दूरं चारयन्गाः सहाग्रजः
१०२२०३०१ निदघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः
१०२२०३०३ आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः
१०२२०३११ हे स्तोककृष्ण हे अंशो श्रीदामन्सुबलार्जुन
१०२२०३१३ विशाल वृषभौजस्विन्देवप्रस्थ वरूथप
१०२२०३२१ पश्यतैतान्महाभागान्परार्थैकान्तजीवितान्
१०२२०३२३ वातवर्षातपहिमान्सहन्तो वारयन्ति नः
१०२२०३३१ अहो एषां वरं जन्म सर्व प्राण्युपजीवनम्
१०२२०३३३ सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः
१०२२०३४१ पत्रपुष्पफलच्छाया मूलवल्कलदारुभिः
१०२२०३४३ गन्धनिर्यासभस्मास्थि तोक्मैः कामान्वितन्वते
१०२२०३५१ एतावज्जन्मसाफल्यं देहिनामिह देहिषु
१०२२०३५३ प्राणैरर्थैर्धिया वाचा श्रेयआचरणं सदा
१०२२०३६१ इति प्रवालस्तबक फलपुष्पदलोत्करैः
१०२२०३६३ तरूणां नम्रशाखानां मध्यतो यमुनां गतः
१०२२०३७१ तत्र गाः पाययित्वापः सुमृष्टाः शीतलाः शिवाः
१०२२०३७३ ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम्
१०२२०३८१ तस्या उपवने कामं चारयन्तः पशून्नृप
१०२२०३८३ कृष्णरामावुपागम्य क्षुधार्ता इदमब्रवन्
१०२३००१० श्रीगोप ऊचुः
१०२३००११ राम राम महाबाहो कृष्ण दुष्टनिबर्हण
१०२३००१३ एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः
१०२३००२० श्रीशुक उवाच
१०२३००२१ इति विज्ञापितो गोपैर्भगवान्देवकीसुतः
१०२३००२३ भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत्
१०२३००३१ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः
१०२३००३३ सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया

१०२३००४१ तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः
१०२३००४३ कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम्
१०२३००५१ इत्यादिष्टा भगवता गत्वा याचन्त ते तथा
१०२३००५३ कृताञ्जलिपुटा विप्रान्दण्डवत्पतिता भुवि
१०२३००६१ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः
१०२३००६३ प्राप्ताञ्जानीत भद्रं वो गोपान्नो रामचोदितान्
१०२३००७१ गाश्चारयन्तावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ
१०२३००७३ तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः
१०२३००८१ दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः
१०२३००८३ अन्यत्र दीक्षितस्यापि नान्नमश्नन्हि दुष्यति
१०२३००९१ इति ते भगवद्याञ्चां शृण्वन्तोऽपि न शुश्रुवुः
१०२३००९३ क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः
१०२३०१०१ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः
१०२३०१०३ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः
१०२३०१११ तं ब्रह्म परमं साक्षाद्भगवन्तमधोक्षजम्
१०२३०११३ मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे
१०२३०१२१ न ते यदोमिति प्रोचुर्न नेति च परन्तप
१०२३०१२३ गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः
१०२३०१३१ तदुपाकर्ण्य भगवान्प्रहस्य जगदीश्वरः
१०२३०१३३ व्याजहार पुनर्गोपान्दर्शयन्लौकिकीं गतिम्
१०२३०१४१ मां ज्ञापयत पत्नीभ्यः ससङ्कर्षणमागतम्
१०२३०१४३ दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया
१०२३०१५१ गत्वाथ पत्नीशालायां दृष्ट्वासीनाः स्वलङ्कृताः
१०२३०१५३ नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन्
१०२३०१६१ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः
१०२३०१६३ इतोऽविदूरे चरता कृष्णेनेहेषिता वयम्
१०२३०१७१ गाश्चारयन्स गोपालैः सरामो दूरमागतः
१०२३०१७३ बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम्
१०२३०१८१ श्रुत्वाच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः
१०२३०१८३ तत्कथाक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः
१०२३०१९१ चतुर्विधं बहुगुणमन्नमादाय भाजनैः

१०२३०१९३ अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः
१०२३०२०१ निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः सुतैः
१०२३०२०३ भगवत्युत्तमश्लोके दीर्घश्रुत धृताशयाः
१०२३०२११ यमुनोपवनेऽशोक नवपल्लवमण्डिते
१०२३०२१३ विचरन्तं वृतं गोपैः साग्रजं ददृशुः स्त्रियः
१०२३०२२१ श्यामं हिरण्यपरिधिं वनमाल्यबर्ह
१०२३०२२२ धातुप्रवालनटवेषमनव्रतांसे
१०२३०२२३ विन्यस्तहस्तमितरेण धुनानमब्जं
१०२३०२२४ कर्णोत्पलालककपोलमुखाब्जहासम्
१०२३०२३१ प्रायःश्रुतप्रियतमोदयकर्णपूरैर्
१०२३०२३२ यस्मिन्निमग्नमनसस्तमथाक्षिरन्ध्रैः
१०२३०२३३ अन्तः प्रवेश्य सुचिरं परिरभ्य तापं
१०२३०२३४ प्राज्ञं यथाभिमतयो विजहुर्नरेन्द्र
१०२३०२४१ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया
१०२३०२४३ विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः
१०२३०२५१ स्वागतं वो महाभागा आस्यतां करवाम किम्
१०२३०२५३ यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः
१०२३०२६१ नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शिनः
१०२३०२६३ अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा
१०२३०२७१ प्राणबुद्धिमनःस्वात्म दारापत्यधनादयः
१०२३०२७३ यत्सम्पर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः
१०२३०२८१ तद्यात देवयजनं पतयो वो द्विजातयः
१०२३०२८३ स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः
१०२३०२९० श्रीपत्न्य ऊचुः
१०२३०२९१ मैवं विभोऽर्हति भवान्गदितुं नृशंसं
१०२३०२९२ सत्यं कुरुष्व निगमं तव पदमूलम्
१०२३०२९३ प्राप्ता वयं तुलसिदाम पदावसृष्टं
१०२३०२९४ केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून्
१०२३०३०१ गृह्णन्ति नो न पतयः पितरौ सुता वा
१०२३०३०२ न भ्रातृबन्धुसुहृदः कुत एव चान्ये
१०२३०३०३ तस्माद्भवत्प्रपदयोः पतितात्मनां नो

१०२३०३०४ नान्या भवेद्गतिररिन्दम तद्विधेहि
१०२३०३१० श्रीभगवानुवाच
१०२३०३११ पतयो नाभ्यसूयेरन्पितृभ्रातृसुतादयः
१०२३०३१३ लोकाश्च वो मयोपेता देवा अप्यनुमन्वते
१०२३०३२१ न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह
१०२३०३२३ तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ
१०२३०३३१ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्
१०२३०३३३ न तथा सन्निकर्षेण प्रतियात ततो गृहान्
१०२३०३४० श्रीशुक उवाच
१०२३०३४१ इत्युक्ता द्विजपत्न्यस्ता यज्ञवाटं पुनर्गताः
१०२३०३४३ ते चानसूयवस्ताभिः स्त्रीभिः सत्रमपारयन्
१०२३०३५१ तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम्
१०२३०३५३ हृडोपगुह्य विजहौ देहं कर्मानुबन्धनम्
१०२३०३६१ भगवानपि गोविन्दस्तेनैवान्नेन गोपकान्
१०२३०३६३ चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः
१०२३०३७१ एवं लीलानरवपुर्न्लोकमनुशीलयन्
१०२३०३७३ रेमे गोगोपगोपीनां रमयन्रूपवाक्कृतैः
१०२३०३८१ अथानुस्मृत्य विप्रास्ते अन्वतप्यन्कृतागसः
१०२३०३८३ यद्विश्वेश्वरयोर्याञ्चामहन्म नृविडम्बयोः
१०२३०३९१ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्
१०२३०३९३ आत्मानं च तया हीनमनुतप्ता व्यगर्हयन्
१०२३०४०१ धिग्जन्म नस्त्रिवृद्यत्तद्धिग्व्रतं धिग्बहुज्ञताम्
१०२३०४०३ धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे
१०२३०४११ नूनं भगवतो माया योगिनामपि मोहिनी
१०२३०४१३ यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः
१०२३०४२१ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ
१०२३०४२३ दुरन्तभावं योऽविध्यन्मृत्युपाशान्गृहाभिधान्
१०२३०४३१ नासां द्विजातिसंस्कारो न निवासो गुरावपि
१०२३०४३३ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः
१०२३०४४१ तथापि ह्युत्तमःश्लोके कृष्णे योगेश्वरेश्वरे
१०२३०४४३ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि

१०२३०४५१ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया
१०२३०४५३ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः
१०२३०४६१ अन्यथा पूर्णकामस्य कैवल्याद्यशिषां पतेः
१०२३०४६३ ईशितव्यैः किमस्माभिरीशस्यैतद्विडम्बनम्
१०२३०४७१ हित्वान्यान्भजते यं श्रीः पादस्पर्शाशयासकृत्
१०२३०४७३ स्वात्मदोषापवर्गेण तद्याञ्चा जनमोहिनी
१०२३०४८१ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः
१०२३०४८३ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः
१०२३०४९१ स एव भगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः
१०२३०४९३ जातो यदुष्वित्याशृण्म ह्यपि मूढा न विद्महे
१०२३०५०१ तस्मै नमो भगवते कृष्णायाकुण्ठमेधसे
१०२३०५०३ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु
१०२३०५११ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम्
१०२३०५१३ अविज्ञतानुभावानां क्षन्तुमर्हत्यतिक्रमम्
१०२३०५२१ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः
१०२३०५२३ दिदृक्षवो व्रजमथ कंसाद्भीता न चाचलन्
१०२४००१० श्रीशुक उवाच
१०२४००११ भगवानपि तत्रैव बलदेवेन संयुतः
१०२४००१३ अपश्यन्निवसन्गोपानिन्द्रयागकृतोद्यमान्
१०२४००२१ तदभिज्ञोऽपि भगवान्सर्वात्मा सर्वदर्शनः
१०२४००२३ प्रश्रयावनतोऽपृच्छद्वृद्धान्नन्दपुरोगमान्
१०२४००३१ कथ्यतां मे पितः कोऽयं सम्भ्रमो व उपागतः
१०२४००३३ किं फलं कस्य वोद्देशः केन वा साध्यते मखः
१०२४००४१ एतद्ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः
१०२४००४३ न हि गोप्यं हि सधूनां कृत्यं सर्वात्मनामिह
१०२४००४५ अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम्
१०२४००५१ उदासीनोऽरिवद्वर्ज्य
१०२४००५२ आत्मवत्सुहृदुच्यते
१०२४००६१ ज्ञत्वाज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति
१०२४००६३ विदुषः कर्मसिद्धिः स्याद्यथा नाविदुषो भवेत्
१०२४००७१ तत्र तावत्क्रियायोगो भवतां किं विचारितः

१०२४००७३ अथ वा लौकिकस्तन्मे पृच्छतः साधु भण्यताम्
१०२४००८० श्रीनन्द उवाच
१०२४००८१ पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः
१०२४००८३ तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः
१०२४००९१ तं तात वयमन्ये च वार्मुचां पतिमीश्वरम्
१०२४००९३ द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः
१०२४०१०१ तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे
१०२४०१०३ पुंसां पुरुषकाराणां पर्जन्यः फलभावनः
१०२४०१११ य एनं विसृजेद्धर्मं परम्पर्यागतं नरः
१०२४०११३ कामाद्द्वेषाद्भयाल्लोभात्स वै नाप्नोति शोभनम्
१०२४०१२० श्रीशुक उवाच
१०२४०१२१ वचो निशम्य नन्दस्य तथान्येषां व्रजौकसाम्
१०२४०१२३ इन्द्राय मन्युं जनयन्पितरं प्राह केशवः
१०२४०१३० श्रीभगवानुवाच
१०२४०१३१ कर्मणा जायते जन्तुः कर्मणैव प्रलीयते
१०२४०१३३ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते
१०२४०१४१ अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम्
१०२४०१४३ कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः
१०२४०१५१ किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्
१०२४०१५३ अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम्
१०२४०१६१ स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते
१०२४०१६३ स्वभावस्थमिदं सर्वं सदेवासुरमानुषम्
१०२४०१७१ देहानुच्चावचाञ्जन्तुः प्राप्योत्सृजति कर्मणा
१०२४०१७३ शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः
१०२४०१८१ तस्मात्सम्पूजयेत्कर्म स्वभावस्थः स्वकर्मकृत्
१०२४०१८३ अञ्जसा येन वर्तेत तदेवास्य हि दैवतम्
१०२४०१९१ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति
१०२४०१९३ न तस्माद्विन्दते क्षेमं जारान्नार्यसती यथा
१०२४०२०१ वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः
१०२४०२०३ वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया
१०२४०२११ कृषिवाणिज्यगोरक्षा कुसीदं तूर्यमुच्यते

१०२४०२१३ वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्
१०२४०२२१ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः
१०२४०२२३ रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत्
१०२४०२३१ रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः
१०२४०२३३ प्रजास्तैरेव सिध्यन्ति महेन्द्रः किं करिष्यति
१०२४०२४१ न नः पुरोजनपदा न ग्रामा न गृहा वयम्
१०२४०२४३ वनौकसस्तात नित्यं वनशैलनिवासिनः
१०२४०२५१ तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः
१०२४०२५३ य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः
१०२४०२६१ पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः
१०२४०२६३ संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम्
१०२४०२७१ हूयन्तामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः
१०२४०२७३ अन्नं बहुगुणं तेभ्यो देयं वो धेनुदक्षिणाः
१०२४०२८१ अन्येभ्यश्चाश्वचाण्डाल पतितेभ्यो यथार्हतः
१०२४०२८३ यवसं च गवां दत्त्वा गिरये दीयतां बलिः
१०२४०२९१ स्वलङ्कृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः
१०२४०२९३ प्रदक्षिणां च कुरुत गोविप्रानलपर्वतान्
१०२४०३०१ एतन्मम मतं तात क्रियतां यदि रोचते
१०२४०३०३ अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः
१०२४०३१० श्रीशुक उवाच
१०२४०३११ कालात्मना भगवता शक्रदर्पजिघांसया
१०२४०३१३ प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः
१०२४०३२१ तथा च व्यदधुः सर्वं यथाह मधुसूदनः
१०२४०३२३ वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान्
१०२४०३३१ उपहृत्य बलीन्सम्यगादृता यवसं गवाम्
१०२४०३३३ गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम्
१०२४०३४१ अनांस्यनडुद्युक्तानि ते चारुह्य स्वलङ्कृताः
१०२४०३४३ गोप्यश्च कृष्णवीर्याणि गायन्त्यः सद्विजाशिषः
१०२४०३५१ कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः
१०२४०३५३ शैलोऽस्मीति ब्रुवन्भूरि बलिमादद्बृहद्वपुः
१०२४०३६१ तस्मै नमो व्रजजनैः सह चक्र आत्मनात्मने

१०२४०३६३ अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात्
१०२४०३७१ एषोऽवजानतो मर्त्यान्कामरूपी वनौकसः
१०२४०३७३ हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम्
१०२४०३८१ इत्यद्रिगोद्विजमखं वासुदेवप्रचोदिताः
१०२४०३८३ यथा विधाय ते गोपा सहकृष्णा व्रजं ययुः
१०२५००१० श्रीशुक उवाच
१०२५००११ इन्द्रस्तदात्मनः पूजां विज्ञाय विहतां नृप
१०२५००१३ गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप ह
१०२५००२१ गणं सांवर्तकं नाम मेघानां चान्तकारीणाम्
१०२५००२३ इन्द्रः प्रचोदयत्क्रुद्धो वाक्यं चाहेशमान्युत
१०२५००३१ अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम्
१०२५००३३ कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम्
१०२५००४१ यथादृढैः कर्ममयैः क्रतुभिर्नामनौनिभैः
१०२५००४३ विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम्
१०२५००५१ वाचालं बालिशं स्तब्धमज्ञं पण्डितमानिनम्
१०२५००५३ कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम्
१०२५००६१ एषां श्रियावलिप्तानां कृष्णेनाध्मापितात्मनाम्
१०२५००६३ धुनुत श्रीमदस्तम्भं पशून्नयत सङ्क्षयम्
१०२५००७१ अहं चैरावतं नागमारुह्यानुव्रजे व्रजम्
१०२५००७३ मरुद्गणैर्महावेगैर्नन्दगोष्ठजिघांसया
१०२५००८० श्रीशुक उवाच
१०२५००८१ इत्थं मघवताज्ञप्ता मेघा निर्मुक्तबन्धनाः
१०२५००८३ नन्दगोकुलमासारैः पीडयामासुरोजसा
१०२५००९१ विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः
१०२५००९३ तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः
१०२५०१०१ स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः
१०२५०१०३ जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम्
१०२५०१११ अत्यासारातिवातेन पशवो जातवेपनाः
१०२५०११३ गोपा गोप्यश्च शीतार्ता गोविन्दं शरणं ययुः
१०२५०१२१ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः
१०२५०१२३ वेपमाना भगवतः पादमूलमुपाययुः

१०२५०१३१ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो
१०२५०१३३ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल
१०२५०१४१ शिलावर्षातिवातेन हन्यमानमचेतनम्
१०२५०१४३ निरीक्ष्य भगवान्मेने कुपितेन्द्रकृतं हरिः
१०२५०१५१ अपर्त्वत्युल्बणं वर्षमतिवातं शिलामयम्
१०२५०१५३ स्वयागे विहतेऽस्माभिरिन्द्रो नाशाय वर्षति
१०२५०१६१ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये
१०२५०१६३ लोकेशमानिनां मौढ्याद्धनिष्ये श्रीमदं तमः
१०२५०१७१ न हि सद्भावयुक्तानां सुराणामीशविस्मयः
१०२५०१७३ मत्तोऽसतां मानभङ्गः प्रशमायोपकल्पते
१०२५०१८१ तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम्
१०२५०१८३ गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः
१०२५०१९१ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम्
१०२५०१९३ दधार लीलया विष्णुश्छत्राकमिव बालकः
१०२५०२०१ अथाह भगवान्गोपान्हेऽम्ब तात व्रजौकसः
१०२५०२०३ यथोपजोषं विशत गिरिगर्तं सगोधनाः
१०२५०२११ न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातनात्
१०२५०२१३ वातवर्षभयेनालं तत्त्राणं विहितं हि वः
१०२५०२२१ तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसः
१०२५०२२३ यथावकाशं सधनाः सव्रजाः सोपजीविनः
१०२५०२३१ क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः
१०२५०२३३ वीक्ष्यमाणो दधाराद्रिं सप्ताहं नाचलत्पदात्
१०२५०२४१ कृष्णयोगानुभावं तं निशम्येन्द्रोऽतिविस्मितः
१०२५०२४३ निस्तम्भो भ्रष्टसङ्कल्पः स्वान्मेघान्सन्न्यवारयत्
१०२५०२५१ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम्
१०२५०२५३ निशम्योपरतं गोपान्गोवर्धनधरोऽब्रवीत्
१०२५०२६१ निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः
१०२५०२६३ उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः
१०२५०२७१ ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम्
१०२५०२७३ शकटोढोपकरणं स्त्रीबालस्थविराः शनैः
१०२५०२८१ भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः

१०२५०२८३ पश्यतां सर्वभूतानां स्थापयामास लीलया
१०२५०२९१ तं प्रेमवेगान्निर्भृता व्रजौकसो
१०२५०२९२ यथा समीयुः परिरम्भणादिभिः
१०२५०२९३ गोप्यश्च सस्नेहमपूजयन्मुदा
१०२५०२९४ दध्यक्षताद्भिर्युयुजुः सदाशिषः
१०२५०३०१ यशोदा रोहिणी नन्दो रामश्च बलिनां वरः
१०२५०३०३ कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः
१०२५०३११ दिवि देवगणाः सिद्धाः साध्या गन्धर्वचारणाः
१०२५०३१३ तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव
१०२५०३२१ शङ्खदुन्दुभयो नेदुर्दिवि देवप्रचोदिताः
१०२५०३२३ जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप
१०२५०३३१ ततोऽनुरक्तैः पशुपैः परिश्रितो राजन्स्वगोष्ठं सबलोऽव्रजद्धरिः
१०२५०३३३ तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदिस्पृशः
१०२६००१० श्रीशुक उवाच
१०२६००११ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते
१०२६००१३ अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः
१०२६००२१ बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै
१०२६००२३ कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम्
१०२६००३१ यः सप्तहायनो बालः करेणैकेन लीलया
१०२६००३३ कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव
१०२६००४१ तोकेनामीलिताक्षेण पूतनाया महौजसः
१०२६००४३ पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः
१०२६००५१ हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक्
१०२६००५३ अनोऽपतद्विपर्यस्तं रुदतः प्रपदाहतम्
१०२६००६१ एकहायन आसीनो ह्रियमाणो विहायसा
१०२६००६३ दैत्येन यस्तृणावर्तमहन्कण्ठग्रहातुरम्
१०२६००७१ क्वचिद्धैयङ्गवस्तैन्ये मात्रा बद्ध उदूखले
१०२६००७३ गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत्
१०२६००८१ वने सञ्चारयन्वत्सान्सरामो बालकैर्वृतः
१०२६००८३ हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत्
१०२६००९१ वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया

१०२६००९३ हत्वा न्यपातयत्तेन कपित्थानि च लीलया
१०२६०१०१ हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः
१०२६०१०३ चक्रे तालवनं क्षेमं परिपक्वफलान्वितम्
१०२६०१११ प्रलम्बं घातयित्वोग्रं बलेन बलशालिना
१०२६०११३ अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः
१०२६०१२१ आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात्
१०२६०१२३ प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम्
१०२६०१३१ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम्
१०२६०१३३ नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम्
१०२६०१४१ क्व सप्तहायनो बालः क्व महाद्रिविधारणम्
१०२६०१४३ ततो नो जायते शङ्का व्रजनाथ तवात्मजे
१०२६०१५० श्रीनन्द उवाच
१०२६०१५१ श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके
१०२६०१५३ एनम्कुमारमुद्दिश्य गर्गो मे यदुवाच ह
१०२६०१६१ वर्णास्त्रयः किलास्यासन्गृह्णतोऽनुयुगं तनूः
१०२६०१६३ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः
१०२६०१७१ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः
१०२६०१७३ वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते
१०२६०१८१ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते
१०२६०१८३ गुण कर्मानुरूपाणि तान्यहं वेद नो जनाः
१०२६०१९१ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः
१०२६०१९३ अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ
१०२६०२०१ पुरानेन व्रजपते साधवो दस्युपीडिताः
१०२६०२०३ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः
१०२६०२११ य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः
१०२६०२१३ नारयोऽभिभवन्त्येतान्विष्णुपक्षानिवासुराः
१०२६०२२१ तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः
१०२६०२२३ श्रिया कीर्त्यानुभावेन तत्कर्मसु न विस्मयः
१०२६०२३१ इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते
१०२६०२३३ मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम्
१०२६०२४१ इति नन्दवचः श्रुत्वा गर्गगीतं तं व्रजौकसः

१०२६०२४३ मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः
१०२६०२५१ देवे वर्षति यज्ञविप्लवरुषा वज्रास्मवर्षानिलैः
१०२६०२५२ सीदत्पालपशुस्त्रियात्मशरणं दृष्ट्वानुकम्प्युत्स्मयन्
१०२६०२५३ उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा
१०२६०२५४ बिभ्रद्गोष्ठमपान्महेन्द्रमदभित्प्रीयान्न इन्द्रो गवाम्
१०२७००१० श्रीशुक उवाच
१०२७००११ गोवर्धने धृते शैले आसाराद्रक्षिते व्रजे
१०२७००१३ गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च
१०२७००२१ विविक्त उपसङ्गम्य व्रीडीतः कृतहेलनः
१०२७००२३ पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा
१०२७००३१ दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः
१०२७००३३ नष्टत्रिलोकेशमद इदमाह कृताञ्जलिः
१०२७००४० इन्द्र उवाच
१०२७००४१ विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम्
१०२७००४३ मायामयोऽयं गुणसम्प्रवाहो न विद्यते ते ग्रहणानुबन्धः
१०२७००५१ कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिन्गभावाः
१०२७००५३ तथापि दण्डं भगवान्बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय
१०२७००६१ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः
१०२७००६३ हिताय चेच्छातनुभिः समीहसे मानं विधुन्वञ्जगदीशमानिनाम्
१०२७००७१ ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम्
१०२७००७३ हित्वार्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम्
१०२७००८१ स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम्
१०२७००८३ क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती
१०२७००९१ तवावतारोऽयमधोक्षजेह भुवो भराणामुरुभारजन्मनाम्
१०२७००९३ चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम्
१०२७०१०१ नमस्तुभ्यं भगवते पुरुषाय महात्मने
१०२७०१०३ वासुदेवाय कृष्णाय सात्वतां पतये नमः
१०२७०१११ स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये
१०२७०११३ सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः
१०२७०१२१ मयेदं भगवन्गोष्ठ नाशायासारवायुभिः
१०२७०१२३ चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना

१०२७०१३१ त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः
१०२७०१३३ ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः
१०२७०१४० श्रीशुक उवाच
१०२७०१४१ एवं सङ्कीर्तितः कृष्णो मघोना भगवानमुम्
१०२७०१४३ मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत्
१०२७०१५० श्रीभगवानुवाच
१०२७०१५१ मया तेऽकारि मघवन्मखभङ्गोऽनुगृह्णता
१०२७०१५३ मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम्
१०२७०१६१ मामैश्वर्यश्रीमदान्धो दण्ड पाणिं न पश्यति
१०२७०१६३ तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम्
१०२७०१७१ गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम्
१०२७०१७३ स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः
१०२७०१८१ अथाह सुरभिः कृष्णमभिवन्द्य मनस्विनी
१०२७०१८३ स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम्
१०२७०१९० सुरभिरुवाच
१०२७०१९१ कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वसम्भव
१०२७०१९३ भवता लोकनाथेन सनाथा वयमच्युत
१०२७०२०१ त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते
१०२७०२०३ भवाय भव गोविप्र देवानां ये च साधवः
१०२७०२११ इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा चोदिता वयम्
१०२७०२१३ अवतीर्णोऽसि विश्वात्मन्भूमेर्भारापनुत्तये
१०२७०२२० श्रृईशुक उवाच
१०२७०२२१ एवं कृष्णमुपामन्त्र्य सुरभिः पयसात्मनः
१०२७०२२३ जलैराकाशगङ्गाया ऐरावतकरोद्धृतैः
१०२७०२३१ इन्द्रः सुरर्षिभिः साकं चोदितो देवमातृभिः
१०२७०२३३ अभ्यसिञ्चत दाशार्हं गोविन्द इति चाभ्यधात्
१०२७०२४१ तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः
१०२७०२४३ जगुर्यशो लोकमलापहं हरेः सुराङ्गनाः सन्ननृतुर्मुदान्विताः
१०२७०२५१ तं तुष्टुवुर्देवनिकायकेतवो ह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः
१०२७०२५३ लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन्पयोद्रुताम्
१०२७०२६१ नानारसौघाः सरितो वृक्षा आसन्मधुस्रवाः

१०२७०२६३ अकृष्टपच्यौषधयो गिरयोऽबिभ्रनुन्मणीन्
१०२७०२७१ कृष्णेऽभिषिक्त एतानि सर्वाणि कुरुनन्दन
१०२७०२७३ निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः
१०२७०२८१ इति गोगोकुलपतिं गोविन्दमभिषिच्य सः
१०२७०२८३ अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम्
१०२८००१० श्रीबादरायणिरुवाच
१०२८००११ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम्
१०२८००१३ स्नातुं नन्दस्तु कालिन्द्यां द्वादश्यां जलमाविशत्
१०२८००२१ तं गृहीत्वानयद्भृत्यो वरुणस्यासुरोऽन्तिकम्
१०२८००२३ अवज्ञायासुरीं वेलां प्रविष्टमुदकं निशि
१०२८००३१ चुक्रुशुस्तमपश्यन्तः कृष्ण रामेति गोपकाः
१०२८००३३ भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम्
१०२८००३५ तदन्तिकं गतो राजन्स्वानामभयदो विभुः
१०२८००४१ प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया
१०२८००४३ महत्या पूजयित्वाह तद्दर्शनमहोत्सवः
१०२८००५० श्रीवरुण उवाच
१०२८००५१ अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगतः प्रभो
१०२८००५३ त्वत्पादभाजो भगवन्नवापुः पारमध्वनः
१०२८००६१ नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने
१०२८००६३ न यत्र श्रूयते माया लोकसृष्टिविकल्पना
१०२८००७१ अजानता मामकेन मूढेनाकार्यवेदिना
१०२८००७३ आनीतोऽयं तव पिता तद्भवान्क्षन्तुमर्हति
१०२८००८१ ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक्
१०२८००८३ गोविन्द नीयतामेष पिता ते पितृवत्सल
१०२८००९० श्रीशुक उवाच
१०२८००९१ एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः
१०२८००९३ आदायागात्स्वपितरं बन्धूनां चावहन्मुदम्
१०२८०१०१ नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम्
१०२८०१०३ कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत्
१०२८०१११ ते चौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरम्
१०२८०११३ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः

१०२८०१२१ इति स्वानां स भगवान्विज्ञायाखिलदृक्स्वयम्
१०२८०१२३ सङ्कल्पसिद्धये तेषां कृपयैतदचिन्तयत्
१०२८०१३१ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः
१०२८०१३३ उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन्
१०२८०१४१ इति सञ्चिन्त्य भगवान्महाकारुणिको हरिः
१०२८०१४३ दर्शयामास लोकं स्वं गोपानां तमसः परम्
१०२८०१५१ सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम्
१०२८०१५३ यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः
१०२८०१६१ ते तु ब्रह्महृदम्नीता मग्नाः कृष्णेन चोद्धृताः
१०२८०१६३ ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात्पुरा
१०२८०१७१ नन्दादयस्तु तं दृष्ट्वा परमानन्दनिवृताः
१०२८०१७३ कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मिताः
१०२९००१० श्रीबादरायणिरुवाच
१०२९००११ भगवानपि ता रातृईः शारदोत्फुल्लमल्लिकाः
१०२९००१३ वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः
१०२९००२१ तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः
१०२९००२३ स चर्षणीनामुदगाच्छुचो मृजन्प्रियः प्रियाया इव दीर्घदर्शनः
१०२९००३१ दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं
१०२९००३२ रमाननाभं नवकुङ्कुमारुणम्
१०२९००३३ वनं च तत्कोमलगोभी रञ्जितं
१०२९००३४ जगौ कलं वामदृशां मनोहरम्
१०२९००४१ निशम्य गीतां तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः
१०२९००४३ आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः
१०२९००५१ दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः
१०२९००५३ पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः
१०२९००६१ परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून्पयः
१०२९००६३ शुश्रूषन्त्यः पतीन्काश्चिदश्नन्त्योऽपास्य भोजनम्
१०२९००७१ लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने
१०२९००७३ व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः
१०२९००८१ ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः
१०२९००८३ गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः

१०२९००९१ अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः
१०२९००९३ कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः
१०२९०१०१ दुःसहप्रेष्ठविरह तीव्रतापधुताशुभाः
१०२९०१०३ ध्यानप्राप्ताच्युताश्लेष निर्वृत्या क्षीणमङ्गलाः
१०२९०१११ तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः
१०२९०११३ जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः
१०२९०१२० श्रीपरीक्षिदुवाच
१०२९०१२१ कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने
१०२९०१२३ गुणप्रवाहोपरमस्तासां गुणधियां कथम्
१०२९०१३० श्रीशुक उवाच
१०२९०१३१ उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः
१०२९०१३३ द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः
१०२९०१४१ नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप
१०२९०१४३ अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः
१०२९०१५१ कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च
१०२९०१५३ नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते
१०२९०१६१ न चैवं विस्मयः कार्यो भवता भगवत्यजे
१०२९०१६३ योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते
१०२९०१७१ ता दृष्ट्वान्तिकमायाता भगवान्व्रजयोषितः
१०२९०१७३ अवदद्वदतां श्रेष्ठो वाचः पेशैर्विमोहयन्
१०२९०१८० श्रीभगवानुवाच
१०२९०१८१ स्वागतं वो महाभागाः प्रियं किं करवाणि वः
१०२९०१८३ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम्
१०२९०१९१ रजन्येषा घोररूपा घोरसत्त्वनिषेविता
१०२९०१९३ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः
१०२९०२०१ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः
१०२९०२०३ विचिन्वन्ति ह्यपश्यन्तो मा कृढ्वं बन्धुसाध्वसम्
१०२९०२११ दृष्टं वनं कुसुमितं राकेशकररञ्जितम्
१०२९०२१३ यमुनानिललीलैजत्तरुपल्लवशोभितम्
१०२९०२२१ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः
१०२९०२२३ क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत

१०२९०२३१ अथ वा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः
१०२९०२३३ आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः
१०२९०२४१ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया
१०२९०२४३ तद्बन्धूनां च कल्याणः प्रजानां चानुपोषणम्
१०२९०२५१ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा
१०२९०२५३ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी
१०२९०२६१ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्
१०२९०२६३ जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रियः
१०२९०२७१ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्
१०२९०२७३ न तथा सन्निकर्षेण प्रतियात ततो गृहान्
१०२९०२८० श्रीशुक उवाच
१०२९०२८१ इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम्
१०२९०२८३ विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम्
१०२९०२९१ कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्
१०२९०२९२ बिम्बाधराणि चरणेन भुवः लिखन्त्यः
१०२९०२९३ अस्त्रैरुपात्तमसिभिः कुचकुङ्कुमानि
१०२९०२९४ तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम्
१०२९०३०१ प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं
१०२९०३०२ कृष्णं तदर्थविनिवर्तितसर्वकामाः
१०२९०३०३ नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्
१०२९०३०४ संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः
१०२९०३१० श्रीगोप्य ऊचुः
१०२९०३११ मैवं विभोऽर्हति भवान्गदितुं नृशंसं
१०२९०३१२ सन्त्यज्य सर्वविषयांस्तव पादमूलम्
१०२९०३१३ भक्ता भजस्व दुरवग्रह मा त्यजास्मान्
१०२९०३१४ देवो यथादिपुरुषो भजते मुमुक्षून्
१०२९०३२१ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
१०२९०३२२ स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम्
१०२९०३२३ अस्त्वेवमेतदुपदेशपदे त्वयीशे
१०२९०३२४ प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा
१०२९०३३१ कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्

१०२९०३३२ नित्यप्रिये पतिसुतादिभिरार्तिदैः किम्
१०२९०३३३ तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या
१०२९०३३४ आशां धृतां त्वयि चिरादरविन्दनेत्र
१०२९०३४१ चित्तं सुखेन भवतापहृतं गृहेषु
१०२९०३४२ यन्निर्विशत्युत करावपि गृह्यकृत्ये
१०२९०३४३ पादौ पदं न चलतस्तव पादमूलाद्
१०२९०३४४ यामः कथं व्रजमथो करवाम किं वा
१०२९०३५१ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण
१०२९०३५२ हासावलोककलगीतजहृच्छयाग्निम्
१०२९०३५३ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा
१०२९०३५४ ध्यानेन याम पदयोः पदवीं सखे ते
१०२९०३६१ यर्ह्यम्बुजाक्ष तव पादतलं रमाया
१०२९०३६२ दत्तक्षणं क्वचिदरण्यजनप्रियस्य
१०२९०३६३ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमञ्जः
१०२९०३६४ स्थातुंस्त्वयाभिरमिता बत पारयामः
१०२९०३७१ श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
१०२९०३७२ लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम्
१०२९०३७३ यस्याः स्ववीक्षण उतान्यसुरप्रयासस्
१०२९०३७४ तद्वद्वयं च तव पादरजः प्रपन्नाः
१०२९०३८१ तन्नः प्रसीद वृजिनार्दन तेऽन्घ्रिमूलं
१०२९०३८२ प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः
१०२९०३८३ त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम
१०२९०३८४ तप्तात्मनां पुरुषभूषण देहि दास्यम्
१०२९०३९१ वीक्ष्यालकावृतमुखं तव कुण्दलश्री
१०२९०३९२ गण्डस्थलाधरसुधं हसितावलोकम्
१०२९०३९३ दत्ताभयं च भुजदण्डयुगं विलोक्य
१०२९०३९४ वक्षः श्रियैकरमणं च भवाम दास्यः
१०२९०४०१ का स्त्र्यङ्ग ते कलपदायतवेणुगीत
१०२९०४०२ सम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम्
१०२९०४०३ त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
१०२९०४०४ यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्

१०२९०४११ व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो
१०२९०४१२ देवो यथादिपुरुषः सुरलोकगोप्ता
१०२९०४१३ तन्नो निधेहि करपङ्कजमार्तबन्धो
१०२९०४१४ तप्तस्तनेषु च शिरःसु च किङ्करीणाम्
१०२९०४२० श्रीशुक उवाच
१०२९०४२१ इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः
१०२९०४२३ प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत्
१०२९०४३१ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः
१०२९०४३३ उदारहासद्विजकुन्ददीधतिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः
१०२९०४४१ उपगीयमान उद्गायन्वनिताशतयूथपः
१०२९०४४३ मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन्वनम्
१०२९०४५१ नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम्
१०२९०४५३ जुष्टं तत्तरलानन्दि कुमुदामोदवायुना
१०२९०४६१ बाहुप्रसारपरिरम्भकरालकोरु नीवीस्तनालभननर्मनखाग्रपातैः
१०२९०४६३ क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन्रतिपतिं रमयां चकार
१०२९०४७१ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः
१०२९०४७३ आत्मानं मेनिरे स्त्रीणां मानिन्यो ह्यधिकं भुवि
१०२९०४८१ तासां तत्सौभगमदं वीक्ष्य मानं च केशवः
१०२९०४८३ प्रशमाय प्रसादाय तत्रैवान्तरधीयत
१०३०००१० श्रीशुक उवाच
१०३०००११ अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः
१०३०००१३ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम्
१०३०००२१ गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः
१०३०००२३ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः
१०३०००३१ गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः
१०३०००३३ असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः
१०३०००४१ गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम्
१०३०००४३ पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन्
१०३०००५१ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः
१०३०००५३ नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः
१०३०००६१ कच्चित्कुरबकाशोक नागपुन्नागचम्पकाः

१०३०००६३ रामानुजो मानिनीनामितो दर्पहरस्मितः
१०३०००७१ कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये
१०३०००७३ सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः
१०३०००८१ मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके
१०३०००८३ प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः
१०३०००९१ चूतप्रियालपनसासनकोविदार जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः
१०३०००९३ येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः
१०३००१०१ किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि
१०३००१०२ स्पर्शोत्सवोत्पुलकिताङ्गनहैर्विभासि
१०३००१०३ अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा
१०३००१०४ आहो वराहवपुषः परिरम्भणेन
१०३००१११ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्
१०३००११२ तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः
१०३००११३ कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः
१०३००११४ कुन्दस्रजः कुलपतेरिह वाति गन्धः
१०३००१२१ बाहुं प्रियांस उपधाय गृहीतपद्मो
१०३००१२२ रामानुजस्तुलसिकालिकुलैर्मदान्धैः
१०३००१२३ अन्वीयमान इह वस्तरवः प्रणामं
१०३००१२४ किं वाभिनन्दति चरन्प्रणयावलोकैः
१०३००१३१ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः
१०३००१३३ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो
१०३००१४१ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः
१०३००१४३ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः
१०३००१५१ कस्याचित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम्
१०३००१५३ तोकयित्वा रुदत्यन्या पदाहन्शकटायतीम्
१०३००१६१ दैत्यायित्वा जहारान्यामेको कृष्णार्भभावनाम्
१०३००१६३ रिङ्गयामास काप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः
१०३००१७१ कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन
१०३००१७३ वत्सायतीं हन्ति चान्या तत्रैका तु बकायतीम्
१०३००१८१ आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम्
१०३००१८३ वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति

१०३००१९१ कस्याश्चित्स्वभुजं न्यस्य चलन्त्याहापरा ननु
१०३००१९३ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः
१०३००२०१ मा भैष्ट वातवर्षाभ्यां तत्राणं विहितं मय
१०३००२०३ इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम्
१०३००२११ आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप
१०३००२१३ दुष्टाहे गच्छ जातोऽहं खलानाम्ननु दण्डकृत्
१०३००२२१ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम्
१०३००२२३ चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा
१०३००२३१ बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले
१०३००२३३ बध्नामि भाण्डभेत्तारं हैयङ्गवमुषं त्विति
१०३००२३५ भीता सुदृक्पिधायास्यं भेजे भीतिविडम्बनम्
१०३००२४१ एवं कृष्णं पृच्छमाना व्रन्दावनलतास्तरून्
१०३००२४३ व्यचक्षत वनोद्देशे पदानि परमात्मनः
१०३००२५१ पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः
१०३००२५३ लक्ष्यन्ते हि ध्वजाम्भोज वज्राङ्कुशयवादिभिः
१०३००२६१ तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः
१०३००२६३ वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन्
१०३००२७१ कस्याः पदानि चैतानि याताया नन्दसूनुना
१०३००२७३ अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा
१०३००२८१ अनयाराधितो नूनं भगवान्हरिरीश्वरः
१०३००२८३ यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः
१०३००२९१ धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः
१०३००२९३ यान्ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये
१०३००३०१ तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत्
१०३००३०३ यैकापहृत्य गोपीनाम्रहो भुन्क्तेऽच्युताधरम्
१०३००३०५ न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः
१०३००३०७ खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः
१०३००३११ इमान्यधिकमग्नानि पदानि वहतो वधूम्
१०३००३१३ गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः
१०३००३१५ अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना
१०३००३२१ अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः

१०३००३२३ प्रपदाक्रमण एते पश्यतासकले पदे
१०३००३३१ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम्
१०३००३३३ तानि चूडयता कान्तामुपविष्टमिह ध्रुवम्
१०३००३४१ रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः
१०३००३४३ कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मताम्
१०३००३५१ इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः
१०३००३५३ यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने
१०३००३६१ सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम्
१०३००३६३ हित्वा गोपीः कामयाना मामसौ भजते प्रियः
१०३००३७१ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत्
१०३००३७३ न पारयेऽहं चलितुं नय मां यत्र ते मनः
१०३००३८१ एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति
१०३००३८३ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत
१०३००३९१ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज
१०३००३९३ दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम्
१०३००४०० श्रीशुक उवाच
१०३००४०१ अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरितः
१०३००४०३ ददृशुः प्रियविश्लेषान्मोहितां दुःखितां सखीम्
१०३००४११ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात्
१०३००४१३ अवमानं च दौरात्म्याद्विस्मयं परमं ययुः
१०३००४२१ ततोऽविशन्वनं चन्द्र ज्योत्स्ना यावद्विभाव्यते
१०३००४२३ तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः
१०३००४३१ तन्मनस्कास्तदलापास्तद्विचेष्टास्तदात्मिकाः
१०३००४३३ तद्गुणानेव गायन्त्यो नात्मगाराणि सस्मरुः
१०३००४४१ पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः
१०३००४४३ समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः
१०३१००१० गोप्य ऊचुः
१०३१००११ जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि
१०३१००१३ दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते
१०३१००२१ शरदुदाशये साधुजातसत् सरसिजोदरश्रीमुषा दृशा
१०३१००२३ सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः

१०३११००३१ विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात्
१०३११००३३ वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः
१०३११००४१ न खलु गोपीकानन्दनो भवानखिलदेहिनामन्तरात्मदृक्
१०३११००४३ विखनसार्थितो विश्वगुप्तये सख उदेयिवान्सात्वतां कुले
१०३११००५१ विरचिताभयं वृष्णिधूर्य ते चरणमीयुषां संसृतेर्भयात्
१०३११००५३ करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम्
१०३११००६१ व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित
१०३११००६३ भज सखे भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय
१०३११००७१ प्रणतदेहिनां पापकर्षणं तृणचरानुगं श्रीनिकेतनम्
१०३११००७३ फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम्
१०३११००८१ मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण
१०३११००८३ विधिकरीरिमा वीर मुह्यतीरधरसीधुनाप्याययस्व नः
१०३११००९१ तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम्
१०३११००९३ श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ये भूरिदा जनाः
१०३११०१०१ प्रहसितं प्रियप्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम्
१०३११०१०३ रहसि संविदो या हृदि स्पृशः कुहक नो मनः क्षोभयन्ति हि
१०३११०१११ चलसि यद्व्रजाच्चारयन्पशून्नलिनसुन्दरं नाथ ते पदम्
१०३११०११३ शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति
१०३११०१२१ दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम्
१०३११०१२३ घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि
१०३११०१३१ प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि
१०३११०१३३ चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन्
१०३११०१४१ सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम्
१०३११०१४३ इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम्
१०३११०१५१ अटति यद्भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम्
१०३११०१५३ कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम्
१०३११०१६१ पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः
१०३११०१६३ गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि
१०३११०१७१ रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम्
१०३११०१७३ बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः
१०३११०१८१ व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम्

१०३१०१८३ त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम्
१०३१०१९१ यत्ते सुजातचरणाम्बुरुहं स्तनेषु
१०३१०१९२ भीताः शनैः प्रिय दधीमहि कर्कशेषु
१०३१०१९३ तेनाटवीमटसि तद्व्यथते न किं स्वित्
१०३१०१९४ कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः
१०३२००१० श्रीशुक उवाच
१०३२००११ इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा
१०३२००१३ रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः
१०३२००२१ तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः
१०३२००२३ पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः
१०३२००३१ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः
१०३२००३३ उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम्
१०३२००४१ काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा
१०३२००४३ काचिद्दधार तद्बाहुमंसे चन्दनभूषितम्
१०३२००५१ काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितम्
१०३२००५३ एका तदङ्घ्रिकमलं सन्तप्ता स्तनयोरधात्
१०३२००६१ एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला
१०३२००६३ घ्नन्तीवैक्षत्कटाक्षेपैः सन्दष्टदशनच्छदा
१०३२००७१ अपरानिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम्
१०३२००७३ आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा
१०३२००८१ तं काचिन्नेत्ररन्ध्रेण हृदि कृत्वा निमील्य च
१०३२००८३ पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता
१०३२००९१ सर्वास्ताः केशवालोक परमोत्सवनिर्वृताः
१०३२००९३ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः
१०३२०१०१ ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः
१०३२०१०३ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा
१०३२०१११ ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः
१०३२०११३ विकसत्कुन्दमन्दार सुरभ्यनिलषट्पदम्
१०३२०१२१ शरच्चन्द्रांशुसन्दोह ध्वस्तदोषातमः शिवम्
१०३२०१२३ कृष्णाया हस्ततरला चितकोमलवालुकम्
१०३२०१३१ तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः

१०३२०१३३ स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे

१०३२०१४१ तत्रोपविष्टो भगवान्स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः

१०३२०१४३ चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्

१०३२०१५१ सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा

१०३२०१५३ संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे

१०३२०१६० श्रीगोप्य ऊचुः

१०३२०१६१ भजतोऽनुभजन्त्येक एक एतद्विपर्ययम्

१०३२०१६३ नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः

१०३२०१७० श्रीभगवानुवाच

१०३२०१७१ मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते

१०३२०१७३ न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा

१०३२०१८१ भजन्त्यभजतो ये वै करुणाः पितरौ यथा

१०३२०१८३ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः

१०३२०१९१ भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः

१०३२०१९३ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः

१०३२०२०१ नाहं तु सख्यो भजतोऽपि जन्तून्भजाम्यमीषामनुवृत्तिवृत्तये

१०३२०२०३ यथाधनो लब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद

१०३२०२११ एवं मदर्थोज्झितलोकवेद स्वानाम्हि वो मय्यनुवृत्तयेऽबलाः

१०३२०२१३ मयापरोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत्प्रियं प्रियाः

१०३२०२२१ न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः

१०३२०२२३ या माभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना

१०३३००१० श्रीशुक उवाच

१०३३००११ इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः

१०३३००१३ जहुर्विरहजं तापं तदङ्गोपचिताशिषः

१०३३००२१ तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः

१०३३००२३ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः

१०३३००३१ रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः

१०३३००३३ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः

१०३३००३५ प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः

१०३३००३७ यं मन्येरन्नभस्तावद्विमानशतसङ्कुलम्

१०३३००३९ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम्

१०३३००४१ ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः
१०३३००४३ जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम्
१०३३००५१ वलयानां नूपुराणां किङ्किणीनां च योषिताम्
१०३३००५३ सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले
१०३३००६१ तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः
१०३३००६३ मध्ये मणीनां हैमानां महामरकतो यथा
१०३३००७१ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्
१०३३००७२ भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः
१०३३००७३ स्विद्यन्मुख्यः कवररसनाग्रन्थयः कृष्णवध्वो
१०३३००७४ गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः
१०३३००८१ उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः
१०३३००८३ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम्
१०३३००९१ काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः
१०३३००९३ उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति
१०३३००९५ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात्
१०३३०१०१ काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः
१०३३०१०३ जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका
१०३३०१११ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम्
१०३३०११३ चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह
१०३३०१२१ कस्याश्चिन्नाट्यविक्षिप्त कुण्डलत्विषमण्डितम्
१०३३०१२३ गण्डं गण्डे सन्दधत्याः प्रादात्ताम्बूलचर्वितम्
१०३३०१३१ नृत्यती गायती काचित्कूजन्नूपुरमेखला
१०३३०१३३ पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताधात्स्तनयोः शिवम्
१०३३०१४१ गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम्
१०३३०१४३ गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तम्विजह्रिरे
१०३३०१५१ कर्णोत्पलालकविटङ्ककपोलघर्म
१०३३०१५२ वक्त्रश्रियो वलयनूपुरघोषवाद्यैः
१०३३०१५३ गोप्यः समं भगवता ननृतुः स्वकेश
१०३३०१५४ स्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम्
१०३३०१६१ एवं परिष्वङ्गकराभिमर्श स्निग्धेक्षणोद्दामविलासहासैः
१०३३०१६३ रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः

१०३३०१७१ तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान्दुकूलं कुचपट्टिकां वा
१०३३०१७३ नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह
१०३३०१८१ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः
१०३३०१८३ कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत्
१०३३०१९१ कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः
१०३३०१९३ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया
१०३३०२०१ तासां रतिविहारेण श्रान्तानां वदनानि सः
१०३३०२०३ प्रामृजत्करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना
१०३३०२११ गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्
१०३३०२१२ गण्डश्रिया सुधितहासनिरीक्षणेन
१०३३०२१३ मानं दधत्य ऋषभस्य जगुः कृतानि
१०३३०२१४ पुण्यानि तत्कररुहस्पर्शप्रमोदाः
१०३३०२२१ ताभिर्युतः श्रममपोहितुमङ्गसङ्ग
१०३३०२२२ घृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः
१०३३०२२३ गन्धर्वपालिभिरनुद्रुत आविशद्वाः
१०३३०२२४ श्रान्तो गजीभिरिभराडिव भिन्नसेतुः
१०३३०२३१ सोऽम्भस्यलं युवतिभिः परिषिच्यमानः
१०३३०२३२ प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग
१०३३०२३३ वैमानिकैः कुसुमवर्षिभिरीड्यमानो
१०३३०२३४ रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः
१०३३०२४१ ततश्च कृष्णोपवने जलस्थल प्रसूनगन्धानिलजुष्टदिक्तटे
१०३३०२४३ चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः
१०३३०२५१ एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः
१०३३०२५३ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः
१०३३०२६० श्रीपरीक्षिदुवाच
१०३३०२६१ संस्थापनाय धर्मस्य प्रशमायेतरस्य च
१०३३०२६३ अवतीर्णो हि भगवानंशेन जगदीश्वरः
१०३३०२७१ स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता
१०३३०२७३ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम्
१०३३०२८१ आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम्
१०३३०२८३ किमभिप्राय एतन्नः शंशयं छिन्धि सुव्रत

१०३३०२९० श्रीशुक उवाच
१०३३०२९१ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्
१०३३०२९३ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा
१०३३०३०१ नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः
१०३३०३०३ विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजं विषम्
१०३३०३११ ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्
१०३३०३१३ तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत्
१०३३०३२१ कुशलाचरितेनैषामिह स्वार्थो न विद्यते
१०३३०३२३ विपर्ययेण वानर्थो निरहङ्कारिणां प्रभो
१०३३०३३१ किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम्
१०३३०३३३ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः
१०३३०३४१ यत्पादपङ्कजपरागनिषेवतृप्ता
१०३३०३४२ योगप्रभावविधुताखिलकर्मबन्धाः
१०३३०३४३ स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्
१०३३०३४४ तस्येच्छयात्तवपुषः कुत एव बन्धः
१०३३०३५१ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम्
१०३३०३५३ योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक्
१०३३०३६१ अनुग्रहाय भक्तानां मानुषं देहमास्थितः
१०३३०३६३ भजते तादृशीः क्रीड याः श्रुत्वा तत्परो भवेत्
१०३३०३७१ नासूयन्खलु कृष्णाय मोहितास्तस्य मायया
१०३३०३७३ मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः
१०३३०३८१ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः
१०३३०३८३ अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः
१०३३०३९१ विक्रीडितं व्रजवधूभिरिदं च विष्णोः
१०३३०३९२ श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः
१०३३०३९३ भक्तिं परां भगवति प्रतिलभ्य कामं
१०३३०३९४ हृद्रोगमाश्वपहिनोत्यचिरेण धीरः
१०३४००१० श्रीशुक उवाच
१०३४००११ एकदा देवयात्रायां गोपाला जातकौतुकाः
१०३४००१३ अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम्
१०३४००२१ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम्

१०३४००२३ आनर्चुरर्हणैर्भक्त्या देवीं च णृपतेऽम्बिकाम्
१०३४००३१ गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः
१०३४००३३ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति
१०३४००४१ ऊषुः सरस्वतीतीरे जलं प्राश्य यतव्रताः
१०३४००४३ रजनीं तां महाभागा नन्दसुनन्दकादयः
१०३४००५१ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः
१०३४००५३ यदृच्छयागतो नन्दं शयानमुरगोऽग्रसीत्
१०३४००६१ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम्
१०३४००६३ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय
१०३४००७१ तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः
१०३४००७३ ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः
१०३४००८१ अलातैर्दह्यमानोऽपि नामुञ्चत्तमुरङ्गमः
१०३४००८३ तमस्पृशत्पदाभ्येत्य भगवान्सात्वतां पतिः
१०३४००९१ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः
१०३४००९३ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम्
१०३४०१०१ तमपृच्छद्धृषीकेशः प्रणतं समवस्थितम्
१०३४०१०३ दीप्यमानेन वपुषा पुरुषं हेममालिनम्
१०३४०१११ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः
१०३४०११३ कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः
१०३४०१२० सर्प उवाच
१०३४०१२१ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः
१०३४०१२३ श्रिया स्वरूपसम्पत्त्या विमानेनाचरन्दिशः
१०३४०१३१ ऋषीन्विरूपाङ्गिरसः प्राहसं रूपदर्पितः
१०३४०१३३ तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना
१०३४०१४१ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः
१०३४०१४३ यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः
१०३४०१५१ तं त्वाहं भवभीतानां प्रपन्नानां भयापहम्
१०३४०१५३ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन्
१०३४०१६१ प्रपन्नोऽस्मि महायोगिन्महापुरुष सत्पते
१०३४०१६३ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर
१०३४०१७१ ब्रह्मदण्डाद्विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात्

१०३४०१७३ यन्नाम गृह्णन्नखिलान्श्रोतॄनात्मानमेव च
१०३४०१७५ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते
१०३४०१८१ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च
१०३४०१८३ सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः
१०३४०१९१ निशाम्य कृष्णस्य तदात्मवैभवं
१०३४०१९२ व्रजौकसो विस्मितचेतसस्ततः
१०३४०१९३ समाप्य तस्मिन्नियमं पुनर्व्रजं
१०३४०१९४ णृपाययुस्तत्कथयन्त आदृताः
१०३४०२०१ कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः
१०३४०२०३ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम्
१०३४०२११ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः
१०३४०२१३ स्वलङ्कृतानुलिप्ताङ्गौ स्रग्विनौ विरजोऽम्बरौ
१०३४०२२१ निशामुखं मानयन्तावुदितोडुपतारकम्
१०३४०२२३ मल्लिकागन्धमत्तालि जुष्टं कुमुदवायुना
१०३४०२३१ जगतुः सर्वभूतानां मनःश्रवणमङ्गलम्
१०३४०२३३ तौ कल्पयन्तौ युगपत्स्वरमण्डलमूर्च्छितम्
१०३४०२४१ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप
१०३४०२४३ स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः
१०३४०२५१ एवं विक्रीडतोः स्वैरं गायतोः सम्प्रमत्तवत्
१०३४०२५३ शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात्
१०३४०२६१ तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम्
१०३४०२६३ क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः
१०३४०२७१ क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम्
१०३४०२७३ यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम्
१०३४०२८१ मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ
१०३४०२८३ आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम्
१०३४०२९१ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन्
१०३४०२९३ विषृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया
१०३४०३०१ तमन्वधावद्गोविन्दो यत्र यत्र स धावति
१०३४०३०३ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः
१०३४०३११ अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः

१०३४०३१३ जहार मुष्टिनैवाङ्ग सहचूडमणिं विभुः
१०३४०३२१ शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम्
१०३४०३२३ अग्रजायाददात्प्रीत्या पश्यन्तीनां च योषिताम्
१०३५००१० श्रीशुक उवाच
१०३५००११ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः
१०३५००१३ कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान्
१०३५००२० श्रीगोप्य ऊचुः
१०३५००२१ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम्
१०३५००२३ कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः
१०३५००३१ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः
१०३५००३३ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः
१०३५००४१ हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत्
१०३५००४३ नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः
१०३५००५१ वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात्
१०३५००५३ दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन्
१०३५००६१ बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः
१०३५००६३ कर्हिचित्सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः
१०३५००७१ तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम्
१०३५००७३ स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः
१०३५००८१ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः
१०३५००८३ वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि
१०३५००९१ वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः
१०३५००९३ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवो ववृषुः स्म
१०३५०१०१ दर्शनीयतिलको वनमाला दिव्यगन्धतुलसीमधुमत्तैः
१०३५०१०३ अलिकुलैरलघु गीतामभीष्टमाद्रियन्यर्हि सन्धितवेणुः
१०३५०१११ सरसि सारसहंसविहङ्गाश्चारुगीताहृतचेतस एत्य
१०३५०११३ हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः
१०३५०१२१ सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः
१०३५०१२३ हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम्
१०३५०१३१ महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः
१०३५०१३३ सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम्

१०३५०१४१ विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः
१०३५०१४३ तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत्स्वरजातीः
१०३५०१५१ सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः
१०३५०१५३ कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः
१०३५०१६१ निजपदाब्जदलैर्ध्वजवज्र नीरजाङ्कुशविचित्रललामैः
१०३५०१६३ व्रजभुवः शमयन्खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः
१०३५०१७१ व्रजति तेन वयं सविलास वीक्षणार्पितमनोभववेगाः
१०३५०१७३ कुजगतिं गमिता न विदामः कश्मलेन कवरं वसनं वा
१०३५०१८१ मणिधरः क्वचिदागणयन्गा मालया दयितगन्धतुलस्याः
१०३५०१८३ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन्भुजमगायत यत्र
१०३५०१९१ क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः
१०३५०१९३ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः
१०३५०२०१ कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम्
१०३५०२०३ नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिणां विजहार
१०३५०२११ मन्दवायुरुपवात्यनकूलं मानयन्मलयजस्पर्शेन
१०३५०२१३ वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः
१०३५०२२१ वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः
१०३५०२२३ कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः
१०३५०२३१ उत्सवं श्रमरुचापि दृशीनामुन्नयन्खुररजश्छुरितस्रक्
१०३५०२३३ दित्सयैति सुहृदासिष एष देवकीजठरभूरुडुराजः
१०३५०२४१ मदविघूर्णितलोचन ईषत्मानदः स्वसुहृदां वनमाली
१०३५०२४३ बदरपाण्डुवदनो मृदुगण्डं मण्डयन्कनककुण्डललक्ष्म्या
१०३५०२५१ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते
१०३५०२५३ मुदितवक्त्र उपयाति दुरन्तं मोचयन्व्रजगवां दिनतापम्
१०३५०२६० श्रीशुक उवाच
१०३५०२६१ एवं व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः
१०३५०२६३ रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः
१०३६००१० श्री बादरायणिरुवाच
१०३६००११ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः
१०३६००१३ महीम्महाककुत्कायः कम्पयन्खुरविक्षताम्
१०३६००२१ रम्भमाणः खरतरं पदा च विलिखन्महीम्

१०३६००२३ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन्
१०३६००२५ किञ्चित्किञ्चिच्छकृन्मुञ्चन्मूत्रयन्स्तब्धलोचनः
१०३६००३१ यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम्
१०३६००३३ पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै
१०३६००४१ निर्विशन्ति घना यस्य ककुद्यचलशङ्कया
१०३६००४३ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः
१०३६००५१ पशवो दुद्रुवुर्भीता राजन्सन्त्यज्य गोकुलम्
१०३६००५३ कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः
१०३६००६१ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम्
१०३६००६३ मा भैष्टेति गिराश्वास्य वृषासुरमुपाह्वयत्
१०३६००७१ गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम
१०३६००७३ मयि शास्तरि दुष्टानां त्वद्विधानां दुरात्मनाम्
१०३६००८१ इत्यास्फोत्याच्युतोऽरिष्टं तलशब्देन कोपयन्
१०३६००८३ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः
१०३६००९१ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन्
१०३६००९३ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत्
१०३६०१०१ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम्
१०३६०१०३ कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा
१०३६०१११ गृहीत्वा शृङ्गयोस्तं वा अष्टादश पदानि सः
१०३६०११३ प्रत्यपोवाह भगवान्गजः प्रतिगजं यथा
१०३६०१२१ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरम्
१०३६०१२३ आपतत्स्विन्नसर्वाङ्गो निःश्वसन्क्रोधमूर्च्छितः
१०३६०१३१ तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले
१०३६०१३३ निष्पीडयामास यथार्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत्
१०३६०१४१ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्च पादाननवस्थितेक्षणः
१०३६०१४३ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः
१०३६०१५१ एवं कुकुद्मिनं हत्वा स्तूयमानः द्विजातिभिः
१०३६०१५३ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः
१०३६०१६१ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा
१०३६०१६३ कंसायाथाह भगवान्नारदो देवदर्शनः
१०३६०१७१ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च

१०३६०१७३ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता
१०३६०१७५ न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः
१०३६०१८१ निशम्य तद्भोजपतिः कोपात्प्रचलितेन्द्रियः
१०३६०१८३ निशातमसिमादत्त वसुदेवजिघांसया
१०३६०१९१ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः
१०३६०१९३ ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया
१०३६०२०१ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम्
१०३६०२०३ प्रेषयामास हन्येतां भवता रामकेशवौ
१०३६०२११ ततो मुष्टिकचाणूर शलतोशलकादिकान्
१०३६०२१३ अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट्
१०३६०२२१ भो भो निशम्यतामेतद्वीरचाणूरमुष्टिकौ
१०३६०२२३ नन्दव्रजे किलासाते सुतावानकदुन्दुभेः
१०३६०२३१ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः
१०३६०२३३ भवद्भ्यामिह सम्प्राप्तौ हन्येतां मल्ललीलया
१०३६०२४१ मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः
१०३६०२४३ पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम्
१०३६०२५१ महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम्
१०३६०२५३ द्विपः कुवलयापीडो जहि तेन ममाहितौ
१०३६०२६१ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि
१०३६०२६३ विशसन्तु पशून्मेध्यान्भूतराजाय मीढुषे
१०३६०२७१ इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम्
१०३६०२७३ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह
१०३६०२८१ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः
१०३६०२८३ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु
१०३६०२९१ अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम्
१०३६०२९३ यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः
१०३६०३०१ गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः
१०३६०३०३ आसाते ताविहानेन रथेनानय मा चिरम्
१०३६०३११ निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः
१०३६०३१३ तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः
१०३६०३२१ घातयिष्य इहानीतौ कालकल्पेन हस्तिना

१०३६०३२३ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः
१०३६०३३१ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान्
१०३६०३३३ तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हकान्
१०३६०३४१ उग्रसेनं च पितरं स्थविरं राज्यकामुकं
१०३६०३४३ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम
१०३६०३५१ ततश्चैषा मही मित्र
१०३६०३५२ भवित्री नष्टकण्टका
१०३६०३६१ जरासन्धो मम गुरुर्द्विविदो दयितः सखा
१०३६०३६३ शम्बरो नरको बाणो मय्येव कृतसौहृदाः
१०३६०३६५ तैरहं सुरपक्षीयान्हत्वा भोक्ष्ये महीं नृपान्
१०३६०३७१ एतज्ज्ञात्वानय क्षिप्रं रामकृष्णाविहार्भकौ
१०३६०३७३ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम्
१०३६०३८० श्रीअक्रूर उवाच
१०३६०३८१ राजन्मनीषितं सध्र्यक्तव स्वावद्यमार्जनम्
१०३६०३८३ सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम्
१०३६०३९१ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि
१०३६०३९३ युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते
१०३६०४०० श्रीशुक उवाच
१०३६०४०१ एवमादिश्य चाक्रूरं मन्त्रिणश्च विषृज्य सः
१०३६०४०३ प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम्
१०३७००१० श्रीशुक उवाच
१०३७००११ केशी तु कंसप्रहितः खुरैर्महीं
१०३७००१२ महाहयो निर्जरयन्मनोजवः
१०३७००१३ सटावधूताभ्रविमानसङ्कुलं
१०३७००१४ कुर्वन्नभो हेषितभीषिताखिलः
१०३७००२१ तं त्रासयन्तं भगवान्स्वगोकुलं
१०३७००२२ तद्धेषितैर्वालविघूर्णिताम्बुदम्
१०३७००२३ आत्मानमाजौ मृगयन्तमग्रणीर्
१०३७००२४ उपाह्वयत्स व्यनदन्मृगेन्द्रवत्
१०३७००३१ स तं निशाम्याभिमुखो मखेन खं
१०३७००३२ पिबन्निवाभ्यद्रवदत्यमर्षणः

१०३७००३३ जघान पद्ध्यामरविन्दलोचनं
१०३७००३४ दुरासदश्चण्डजवो दुरत्ययः
१०३७००४१ तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः
१०३७००४३ सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः
१०३७००५१ सः लब्धसंज्ञः पुनरुत्थितो रुषा
१०३७००५२ व्यादाय केशी तरसापतद्धरिम्
१०३७००५३ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्
१०३७००५४ प्रवेशयामास यथोरगं बिले
१०३७००६१ दन्ता निपेतुर्भगवद्भुजस्पृशस्
१०३७००६२ ते केशिनस्तप्तमयस्पृशो यथा
१०३७००६३ बाहुश्च तद्देहगतो महात्मनो
१०३७००६४ यथामयः संववृधे उपेक्षितः
१०३७००७१ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन्
१०३७००७३ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लण्डं विसृजन्क्षितौ व्यसुः
१०३७००८१ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः
१०३७००८३ अविस्मितोऽयत्नहतारिकः सुरैः प्रसूनवर्षैर्वर्षद्भिरीडितः
१०३७००९१ देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप
१०३७००९३ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत
१०३७०१०१ कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वर
१०३७०१०३ वासुदेवाखिलावास सात्वतां प्रवर प्रभो
१०३७०१११ त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम्
१०३७०११३ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः
१०३७०१२१ आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान्
१०३७०१२३ तैरिदं सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वरः
१०३७०१३१ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम्
१०३७०१३३ अवतीर्णो विनाशाय साधुनां रक्षणाय च
१०३७०१४१ दिष्ट्या ते निहतो दैत्यो लीलयायं हयाकृतिः
१०३७०१४३ यस्य हेषितसन्त्रस्तास्त्यजन्त्यनिमिषा दिवम्
१०३७०१५१ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम्
१०३७०१५३ कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो
१०३७०१६१ तस्यानु शङ्खयवन मुराणां नरकस्य च

१०३७०१६३ पारिजातापहरणमिन्द्रस्य च पराजयम्
१०३७०१७१ उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम्
१०३७०१७३ नृगस्य मोक्षणं शापाद्वारकायां जगत्पते
१०३७०१८१ स्यमन्तकस्य च मणेरादानं सह भार्यया
१०३७०१८३ मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः
१०३७०१९१ पौण्ड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम्
१०३७०१९३ दन्तवक्रस्य निधनं चैद्यस्य च महाक्रतौ
१०३७०२०१ यानि चान्यानि वीर्याणि द्वारकामावसन्भवान्
१०३७०२०३ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि
१०३७०२११ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै
१०३७०२१३ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः
१०३७०२२१ विशुद्धविज्ञानघनं स्वसंस्थया
१०३७०२२२ समाप्तसर्वार्थममोघवाञ्छितम्
१०३७०२२३ स्वतेजसा नित्यनिवृत्तमाया
१०३७०२२४ गुणप्रवाहं भगवन्तमीमहि
१०३७०२३१ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम्
१०३७०२३३ क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम्
१०३७०२४० श्रीशुक उवाच
१०३७०२४१ एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः
१०३७०२४३ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः
१०३७०२५१ भगवानपि गोविन्दो हत्वा केशिनमाहवे
१०३७०२५३ पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः
१०३७०२६१ एकदा ते पशून्पालाश्चारयन्तोऽद्रिसानुषु
१०३७०२६३ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः
१०३७०२७१ तत्रासन्कतिचिच्चोराः पालाश्च कतिचिन्नृप
१०३७०२७३ मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः
१०३७०२८१ मयपुत्रो महामायो व्योमो गोपालवेषधृक्
१०३७०२८३ मेषायितानपोवाह प्रायश्चोरायितो बहून्
१०३७०२९१ गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः
१०३७०२९३ शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः
१०३७०३०१ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम्

१०३७०३०३ गोपान्नयन्तं जग्राह वृकं हरिरिवौजसा
१०३७०३११ स निजं रूपमास्थाय गिरीन्द्रसदृशं बली
१०३७०३१३ इच्छन्विमोक्तुमात्मानं नाशक्नोद्ग्रहणातुरः
१०३७०३२१ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले
१०३७०३२३ पश्यतां दिवि देवानां पशुमारममारयत्
१०३७०३३१ गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः
१०३७०३३३ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम्
१०३८००१० श्रीशुक उवाच
१०३८००११ अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः
१०३८००१३ उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम्
१०३८००२१ गच्छन्पथि महाभागो भगवत्यम्बुजेक्षणे
१०३८००२३ भक्तिं परामुपगत एवमेतदचिन्तयत्
१०३८००३१ किं मयाचरितं भद्रं किं तप्तं परमं तपः
१०३८००३३ किं वाथाप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम्
१०३८००४१ ममैतद्दुर्लभं मन्य उत्तमःश्लोकदर्शनम्
१०३८००४३ विषयात्मनो यथा ब्रह्म कीर्तनं शूद्रजन्मनः
१०३८००५१ मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम्
१०३८००५३ ह्रियमाणः कलनद्या क्वचित्तरति कश्चन
१०३८००६१ ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः
१०३८००६३ यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम्
१०३८००७१ कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः
१०३८००७३ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन्यन्नखमण्डलत्विषा
१०३८००८१ यदर्चितं ब्रह्मभवादिभिः सुरैः
१०३८००८२ श्रिया च देव्या मुनिभिः ससात्वतैः
१०३८००८३ गोचारणायानुचरैश्चरद्वने
१०३८००८४ यद्गोपिकानां कुचकुङ्कुमाङ्कितम्
१०३८००९१ द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम्
१०३८००९३ मुखं मुकुन्दस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः
१०३८०१०१ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया
१०३८०१०३ लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात्फलमञ्जसा दृशः
१०३८०१११ य ईक्षिताहंरहितोऽप्यसत्सतोः स्वतेजसापास्ततमोभिदाभ्रमः

१०३८०११३ स्वमाययात्मन्रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते
१०३८०१२१ यस्याखिलामीवहभिः सुमङ्गलैः वाचो विमिश्रा गुणकर्मजन्मभिः
१०३८०१२३ प्राणन्ति शुम्भन्ति पुनन्ति वै जगत्यास्तद्विरक्ताः शवशोभना मताः
१०३८०१३१ स चावतीर्णः किल सत्वतान्वये स्वसेतुपालामरवर्यशर्मकृत्
१०३८०१३३ यशो वितन्वन्व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम्
१०३८०१४१ तं त्वद्य नूनं महतां गतिं गुरुं
१०३८०१४२ त्रैलोक्यकान्तं दृशिमन्महोत्सवम्
१०३८०१४३ रूपं दधानं श्रिय ईप्सितास्पदं
१०३८०१४४ द्रक्ष्ये ममासन्नुषसः सुदर्शनाः
१०३८०१५१ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये
१०३८०१५३ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन्वनौकसः
१०३८०१६१ अप्यङ्घ्रिमूले पतितस्य मे विभुः
१०३८०१६२ शिरस्यधास्यन्निजहस्तपङ्कजम्
१०३८०१६३ दत्ताभयं कालभुजाङ्गरंहसा
१०३८०१६४ प्रोद्वेजितानां शरणैषिणां णृनाम्
१०३८०१७१ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्रयेन्द्रताम्
१०३८०१७३ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्ध्यपानुदत्
१०३८०१८१ न मय्युपैष्यत्यरिबुद्धिमच्युतः
१०३८०१८२ कंसस्य दूतः प्रहितोऽपि विश्वदृक्
१०३८०१८३ योऽन्तर्बहिश्चेतस एतदीहितं
१०३८०१८४ क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा
१०३८०१९१ अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं
१०३८०१९२ मामीक्षिता सस्मितमार्द्रया दृशा
१०३८०१९३ सपद्यपध्वस्तसमस्तकिल्बिषो
१०३८०१९४ वोढा मुदं वीतविशङ्क ऊर्जिताम्
१०३८०२०१ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम्
१०३८०२०३ आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यतः
१०३८०२११ लब्ध्वाङ्गसङ्गम्प्रणतम्कृताञ्जलिं
१०३८०२१२ मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः
१०३८०२१३ तदा वयं जन्मभृतो महीयसा
१०३८०२१४ नैवादृतो यो धिगमुष्य जन्म तत्

१०३८०२२१ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा
१०३८०२२३ तथापि भक्तान्भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः
१०३८०२३१ किं चाग्रजो मावनतं यदूत्तमः स्मयन्परिष्वज्य गृहीतमञ्जलौ
१०३८०२३३ गृहं प्रवेष्याप्तसमस्तसत्कृतं सम्प्रक्ष्यते कंसकृतं स्वबन्धुषु
१०३८०२४० श्रीशुक उवाच
१०३८०२४१ इति सञ्चिन्तयन्कृष्णं श्वफल्कतनयोऽध्वनि
१०३८०२४३ रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप
१०३८०२५१ पदानि तस्याखिललोकपाल किरीटजुष्टामलपादरेणोः
१०३८०२५३ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः
१०३८०२६१ तद्दर्शनाह्लादविवृद्धसम्भ्रमः
१०३८०२६२ प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः
१०३८०२६३ रथादवस्कन्द्य स तेष्वचेष्टत
१०३८०२६४ प्रभोरमून्यङ्घ्रिरजांस्यहो इति
१०३८०२७१ देहंभृतामियानर्थो हित्वा दम्भं भियं शुचम्
१०३८०२७३ सन्देशाद्यो हरेर्लिङ्ग दर्शनश्रवणादिभिः
१०३८०२८१ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ
१०३८०२८२ पीतनीलाम्बरधरौ शरदम्बुरहेक्षणौ
१०३८०२९१ किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ
१०३८०२९३ सुमुखौ सुन्दरवरौ बलद्विरदविक्रमौ
१०३८०३०१ ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम्
१०३८०३०३ शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ
१०३८०३११ उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ
१०३८०३१३ पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ
१०३८०३२१ प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती
१०३८०३२३ अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ
१०३८०३३१ दिशो वितिमिरा राजन्कुर्वाणौ प्रभया स्वया
१०३८०३३३ यथा मारकतः शैलो रौप्यश्च कनकाचितौ
१०३८०३४१ रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः
१०३८०३४३ पपात चरणोपान्ते दण्डवद्रामकृष्णयोः
१०३८०३५१ भगवद्दर्शनाह्लाद बाष्पपर्याकुलेक्षणः
१०३८०३५३ पुलकचिताङ्ग औत्कण्ठ्यात्स्वाख्याने नाशकन्नृप

१०३८०३६१ भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना
१०३८०३६३ परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः
१०३८०३७१ सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः
१०३८०३७३ गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम्
१०३८०३८१ पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम्
१०३८०३८३ प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत्
१०३८०३९१ निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः
१०३८०३९३ अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः
१०३८०४०१ तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित्
१०३८०४०३ मखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः
१०३८०४११ पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे
१०३८०४१३ कंसे जीवति दाशार्ह सौनपाला इवावयः
१०३८०४२१ योऽवधीत्स्वस्वसुस्तोकान्क्रोशन्त्या असुतृप्खलः
१०३८०४२३ किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे
१०३८०४३१ इत्थं सूनृतया वाचा नन्देन सुसभाजितः
१०३८०४३३ अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम्
१०३९००१० श्रीशुक उवाच
१०३९००११ सुखोपविष्टः पर्यङ्के रमकृष्णोरुमानितः
१०३९००१३ लेभे मनोरथान्सर्वान्पथि यान्स चकार ह
१०३९००२१ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने
१०३९००२३ तथापि तत्परा राजन्न हि वाञ्छन्ति किञ्चन
१०३९००३१ सायन्तनाशनं कृत्वा भगवान्देवकीसुतः
१०३९००३३ सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम्
१०३९००४० श्रीभगवानुवाच
१०३९००४१ तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः
१०३९००४३ अपि स्वज्ञातिबन्धूनामनमीवमनामयम्
१०३९००५१ किं नु नः कुशलं पृच्छे एधमाने कुलामये
१०३९००५३ कंसे मातुलनाम्नाङ्ग स्वानां नस्तत्प्रजासु च
१०३९००६१ अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः
१०३९००६३ यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः
१०३९००७१ दिष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य काङ्क्षितम्

१०३९००७३ सञ्जातं वर्ण्यतां तात तवागमनकारणम्

१०३९००८० श्रीशुक उवाच

१०३९००८१ पृष्टो भगवता सर्वं वर्णयामास माधवः

१०३९००८३ वैरानुबन्धं यदुषु वसुदेववधोद्यमम्

१०३९००९१ यत्सन्देशो यदर्थं वा दूतः सम्प्रेषितः स्वयम्

१०३९००९३ यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः

१०३९०१०१ श्रुत्वाक्रूरवचः कृष्णो बलश्च परवीरहा

१०३९०१०३ प्रहस्य नन्दं पितरं राज्ञा दिष्टं विजज्ञतुः

१०३९०१११ गोपान्समादिशत्सोऽपि गृह्यतां सर्वगोरसः

१०३९०११३ उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च

१०३९०१२१ यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान्

१०३९०१२३ द्रक्ष्यामः सुमहत्पर्व यान्ति जानपदाः किल

१०३९०१२५ एवमाघोषयत्क्षत्रा नन्दगोपः स्वगोकुले

१०३९०१३१ गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम्

१०३९०१३३ रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम्

१०३९०१४१ काश्चित्तत्कृतहृत्ताप श्वासम्लानमुखश्रियः

१०३९०१४३ स्रंसद्दुकूलवलय केशग्रन्थ्यश्च काश्चन

१०३९०१५१ अन्याश्च तदनुध्यान निवृत्ताशेषवृत्तयः

१०३९०१५३ नाभ्यजानन्निमं लोकमात्मलोकं गता इव

१०३९०१६१ स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः

१०३९०१६३ हृदिस्पृशश्चित्रपदा गिरः सम्मुमुहुः स्त्रियः

१०३९०१७१ गतिं सुललितां चेष्टां स्निग्धहासावलोकनम्

१०३९०१७३ शोकापहानि नर्माणि प्रोद्दामचरितानि च

१०३९०१८१ चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः

१०३९०१८३ समेताः सङ्घशः प्रोचुरश्रुमुख्योऽच्युताशयाः

१०३९०१९० श्रीगोप्य ऊचुः

१०३९०१९१ अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः

१०३९०१९३ तांश्चाकृतार्थान्वियुनङ्क्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा

१०३९०२०१ यस्त्वं प्रदर्श्यासितकुन्तलावृतं

१०३९०२०२ मुकुन्दवक्त्रं सुकपोलमुन्नसम्

१०३९०२०३ शोकापनोदस्मितलेशसुन्दरं

१०३९०२०४ करोषि पारोक्ष्यमसाधु ते कृतम्
१०३९०२११ क्रूरस्त्वमक्रूरसमाख्यया स्म नश्
१०३९०२१२ चक्षुर्हि दत्तं हरसे बताज्ञवत्
१०३९०२१३ येनैकदेशेऽखिलसर्गसौष्ठवं
१०३९०२१४ त्वदीयमद्राक्ष्म वयं मधुद्विषः
१०३९०२२१ न नन्दसूनुः क्षणभङ्गसौहृदः
१०३९०२२२ समीक्षते नः स्वकृतातुरा बत
१०३९०२२३ विहाय गेहान्स्वजनान्सुतान्पतींस्
१०३९०२२४ तद्दास्यमद्धोपगता नवप्रियः
१०३९०२३१ सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम्
१०३९०२३३ याः संप्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम्
१०३९०२४१ तासां मुकुन्दो मधुमञ्जुभाषितैर्
१०३९०२४२ गृहीतचित्तः परवान्मनस्व्यपि
१०३९०२४३ कथं पुनर्नः प्रतियास्यतेऽबला
१०३९०२४४ ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन्
१०३९०२५१ अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम्
१०३९०२५३ महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम्
१०३९०२६१ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव दारुणः
१०३९०२६३ योऽसावनाश्वास्य सुदुःखितम्जनं प्रियात्प्रियं नेष्यति पारमध्वनः
१०३९०२७१ अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः
१०३९०२७३ गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते
१०३९०२८१ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन्कुलवृद्धबान्धवाः
१०३९०२८३ मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम्
१०३९०२९१ यस्यानुरागललितस्मितवल्गुमन्त्र
१०३९०२९२ लीलावलोकपरिरम्भणरासगोष्ठाम्
१०३९०२९३ नीताः स्म नः क्षणमिव क्षणदा विना तं
१०३९०२९४ गोप्यः कथं न्वतितरेम तमो दुरन्तम्
१०३९०३०१ योऽह्नः क्षये व्रजमनन्तसखः परीतो
१०३९०३०२ गोपैर्विशन्खुररजश्छुरितालकस्रक्
१०३९०३०३ वेणुं क्वणन्स्मितकताक्षनिरीक्षणेन
१०३९०३०४ चित्तं क्षिणोत्यमुमृते नु कथं भवेम

१०३९०३१० श्रीशुक उवाच
१०३९०३११ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः
१०३९०३१३ विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति
१०३९०३२१ स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ
१०३९०३२३ अक्रूरश्चोदयामास कृतमैत्रादिको रथम्
१०३९०३३१ गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः
१०३९०३३३ आदायोपायनं भूरि कुम्भान्गोरससम्भृतान्
१०३९०३४१ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः
१०३९०३४३ प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे
१०३९०३५१ तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाणे यदूत्तमः
१०३९०३५३ सान्त्वयामस सप्रेमैरायास्य इति दौत्यकैः
१०३९०३६१ यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च
१०३९०३६३ अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः
१०३९०३७१ ता निराशा निववृतुर्गोविन्दविनिवर्तने
१०३९०३७३ विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम्
१०३९०३८१ भगवानपि सम्प्राप्तो रामाक्रूरयुतो नृप
१०३९०३८३ रथेन वायुवेगेन कालिन्दीमघनाशिनीम्
१०३९०३९१ तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम्
१०३९०३९३ वृक्षषण्डमुपव्रज्य सरामो रथमाविशत्
१०३९०४०१ अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि
१०३९०४०३ कालिन्द्या ह्रदमागत्य स्नानं विधिवदाचरत्
१०३९०४११ निमज्ज्य तस्मिन्सलिले जपन्ब्रह्म सनातनम्
१०३९०४१३ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ
१०३९०४२१ तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः
१०३९०४२३ तर्हि स्वित्स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः
१०३९०४३१ तत्रापि च यथापूर्वमासीनौ पुनरेव सः
१०३९०४३३ न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः
१०३९०४४१ भूयस्तत्रापि सोऽद्राक्षीत्स्तूयमानमहीश्वरम्
१०३९०४४३ सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः
१०३९०४५१ सहस्रशिरसं देवं सहस्रफणमौलिनम्
१०३९०४५३ नीलाम्बरं विसश्वेतं शृङ्गैः श्वेतमिव स्थितम्

१०३९०४६१ तस्योत्सङ्गे घनस्यामं पीतकौशेयवाससम्
१०३९०४६३ पुरुषं चतुर्भुजं शान्तम्पद्मपत्रारुणेक्षणम्
१०३९०४७१ चारुप्रसन्नवदनं चारुहासनिरीक्षणम्
१०३९०४७३ सुभ्रून्नसं चरुकर्णं सुकपोलारुणाधरम्
१०३९०४८१ प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम्
१०३९०४८३ कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम्
१०३९०४९१ बृहत्कतिततश्रोणि करभोरुद्वयान्वितम्
१०३९०४९३ चारुजानुयुगं चारु जङ्घायुगलसंयुतम्
१०३९०५०१ तुङ्गगुल्फारुणनख व्रातदीधितिभिर्वृतम्
१०३९०५०३ नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम्
१०३९०५११ सुमहार्हमणिव्रात किरीटकटकाङ्गदैः
१०३९०५१३ कटिसूत्रब्रह्मसूत्र हारनूपुरकुण्डलैः
१०३९०५२१ भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम्
१०३९०५२३ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम्
१०३९०५३१ सुनन्दनन्दप्रमुखैः पर्षदैः सनकादिभिः
१०३९०५३३ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः
१०३९०५४१ प्रह्लादनारदवसु प्रमुखैर्भागवतोत्तमैः
१०३९०५४३ स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः
१०३९०५५१ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया
१०३९०५५३ विद्ययाविद्यया शक्त्या मायया च निषेवितम्
१०३९०५६१ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः
१०३९०५६३ हृष्यत्तनूरुहो भाव परिक्लिन्नात्मलोचनः
१०३९०५७१ गिरा गद्गदयास्तौषीत्सत्त्वमालम्ब्य सात्वतः
१०३९०५७३ प्रणम्य मूर्ध्नावहितः कृताञ्जलिपुटः शनैः
१०४०००१० श्रीअक्रूर उवाच
१०४०००११ नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम्
१०४०००१३ यन्नाभिजातादरविन्दकोषाद्ब्रह्माविरासीद्यत एष लोकः
१०४०००२१ भूस्तोयमग्निः पवनं खमादिर्महानजादिर्मन इन्द्रियाणि
१०४०००२३ सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः
१०४०००३१ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीतः
१०४०००३३ अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम्

१०४०००४१ त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम्
१०४०००४३ साध्यात्मं साधिभूतं च साधिदैवं च साधवः
१०४०००५१ त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः
१०४०००५३ यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया
१०४०००६१ एके त्वाखिलकर्माणि सन्न्यस्योपशमं गताः
१०४०००६३ ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम्
१०४०००७१ अन्ये च संस्कृतात्मानो विधिनाभिहितेन ते
१०४०००७३ यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम्
१०४०००८१ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्
१०४०००८३ बह्वाचार्यविभेदेन भगवन्तर्नुपासते
१०४०००९१ सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्
१०४०००९३ येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो
१०४००१०१ यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो
१०४००१०३ विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः
१०४००१११ सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः
१०४००११३ तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः
१०४००१२१ तुभ्यं नमस्ते त्वविषक्तदृष्टये
१०४००१२२ सर्वात्मने सर्वधियां च साक्षिणे
१०४००१२३ गुणप्रवाहोऽयमविद्यया कृतः
१०४००१२४ प्रवर्तते देवनृतिर्यगात्मसु
१०४००१३१ अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं
१०४००१३२ सूर्यो नभो नाभिरथो दिशः श्रुतिः
१०४००१३३ द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः
१०४००१३४ कुक्षिर्मरुत्प्राणबलं प्रकल्पितम्
१०४००१४१ रोमाणि वृक्षौषधयः शिरोरुहा
१०४००१४२ मेघाः परस्यास्थिनखानि तेऽद्रयः
१०४००१४३ निमेषणं रात्र्यहनी प्रजापतिर्
१०४००१४४ मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते
१०४००१५१ त्वय्यव्ययात्मन्पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः
१०४००१५३ यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये
१०४००१६१ यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि

१०४००१६३ तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः
१०४००१७१ नमः कारणमत्स्याय प्रलयाब्धिचराय च
१०४००१७३ हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे
१०४००१८१ अकूपाराय बृहते नमो मन्दरधारिणे
१०४००१८३ क्षित्युद्धारविहाराय नमः शूकरमूर्तये
१०४००१९१ नमस्तेऽद्भुतसिंहाय साधुलोकभयापह
१०४००१९३ वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च
१०४००२०१ नमो भृगुणां पतये दृप्तक्षत्रवनच्छिदे
१०४००२०३ नमस्ते रघुवर्याय रावणान्तकराय च
१०४००२११ नमस्ते वासुदेवाय नमः सङ्कर्षणाय च
१०४००२१३ प्रद्युम्नायनिरुद्धाय सात्वतां पतये नमः
१०४००२२१ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने
१०४००२२३ म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे
१०४००२३१ भगवञ्जीवलोकोऽयं मोहितस्तव मायया
१०४००२३३ अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु
१०४००२४१ अहं चात्मात्मजागार दारार्थस्वजनादिषु
१०४००२४३ भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो
१०४००२५१ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम्
१०४००२५३ द्वन्द्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियम्
१०४००२६१ यथाबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः
१०४००२६३ अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः
१०४००२७१ नोत्सहेऽहं कृपणधीः कामकर्महतं मनः
१०४००२७३ रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः
१०४००२८१ सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं
१०४००२८२ तच्चाप्यहं भवदनुग्रह ईश मन्ये
१०४००२८३ पुंसो भवेद्यर्हि संसरणापवर्गस्
१०४००२८४ त्वय्यब्जनाभ सदुपासनया मतिः स्यात्
१०४००२९१ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे
१०४००२९३ पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये
१०४००३०१ नमस्ते वासुदेवाय सर्वभूतक्षयाय च
१०४००३०३ हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो

१०४१००१० श्रीशुक उवाच
१०४१००११ स्तुवतस्तस्य भगवान्दर्शयित्वा जले वपुः
१०४१००१३ भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः
१०४१००२१ सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्य सत्वरः
१०४१००२३ कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत्
१०४१००३१ तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतम्
१०४१००३३ भूमौ वियति तोये वा तथा त्वां लक्षयामहे
१०४१००४० श्रीअक्रूर उवाच
१०४१००४१ अद्भुतानीह यावन्ति भूमौ वियति वा जले
१०४१००४३ त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः
१०४१००५१ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले
१०४१००५३ तं त्वानुपश्यतो ब्रह्मन्किं मे दृष्टमिहाद्भुतम्
१०४१००६१ इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः
१०४१००६३ मथुरामनयद्रामं कृष्णं चैव दिनात्यये
१०४१००७१ मार्गे ग्रामजना राजंस्तत्र तत्रोपसङ्गताः
१०४१००७३ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः
१०४१००८१ तावद्व्रजौकसस्तत्र नन्दगोपादयोऽग्रतः
१०४१००८३ पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे
१०४१००९१ तान्समेत्याह भगवानक्रूरं जगदीश्वरः
१०४१००९३ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव
१०४१०१०१ भवान्प्रविशतामग्रे सहयानः पुरीं गृहम्
१०४१०१०३ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम्
१०४१०११० श्रीअक्रूर उवाच
१०४१०१११ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो
१०४१०११३ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल
१०४१०१२१ आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज
१०४१०१२३ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम
१०४१०१३१ पुनीहि पादरजसा गृहान्नो गृहमेधिनाम्
१०४१०१३३ यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः
१०४१०१४१ अवनिज्याङ्घ्रियुगलमासीत्श्लोक्यो बलिर्महान्
१०४१०१४३ ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या

१०४१०१५१ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान्शुचयोऽपुनन्

१०४१०१५३ शिरसाधत्त याः शर्वः स्वर्याताः सगरात्मजाः

१०४१०१६१ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन

१०४१०१६३ यदूत्तमोत्तमःश्लोक नारायण नमोऽस्तु ते

१०४१०१७० श्रीभगवनुवाच

१०४१०१७१ आयास्ये भवतो गेहमहमर्यसमन्वितः

१०४१०१७३ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम्

१०४१०१८० श्रीशुक उवाच

१०४१०१८१ एवमुक्तो भगवता सोऽक्रूरो विमना इव

१०४१०१८३ पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ

१०४१०१९१ अथापराह्णे भगवान्कृष्णः सङ्कर्षणान्वितः

१०४१०१९३ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः

१०४१०२०१ ददर्श तां स्फाटिकतुण्गगोपुर द्वारां बृहद्धेमकपाटतोरणाम्

१०४१०२०३ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम्

१०४१०२११ सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम्

१०४१०२१३ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु

१०४१०२२१ जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम्

१०४१०२२३ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम्

१०४१०२३१ आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः

१०४१०२३३ सवृन्दरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहां सपट्टिकैः

१०४१०२४१ तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना

१०४१०२४३ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः

१०४१०२५१ काश्चिद्विपर्यग्धृतवस्त्रभूषणा

१०४१०२५२ विस्मृत्य चैकं युगलेष्वथापराः

१०४१०२५३ कृतैकपत्रश्रवनैकनूपुरा

१०४१०२५४ नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम्

१०४१०२६१ अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः

१०४१०२६३ स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः

१०४१०२७१ मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकैः

१०४१०२७३ जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम्

१०४१०२८१ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं

१०४१०२८२ तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः
१०४१०२८३ आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं
१०४१०२८४ हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम्
१०४१०२९१ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः
१०४१०२९३ अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ
१०४१०३०१ दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः
१०४१०३०३ तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः
१०४१०३११ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत्
१०४१०३१३ या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ
१०४१०३२१ रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः
१०४१०३२३ दृष्ट्वायाचत वासांसि धौतान्यत्युत्तमानि च
१०४१०३३१ देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः
१०४१०३३३ भविष्यति परं श्रेयो दातुस्ते नात्र संशयः
१०४१०३४१ स याचितो भगवता परिपूर्णेन सर्वतः
१०४१०३४३ साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः
१०४१०३५१ ईदृशान्येव वासांसी नित्यं गिरिवनेचरः
१०४१०३५३ परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ
१०४१०३६१ याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीवीषा
१०४१०३६३ बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै
१०४१०३७१ एवं विकत्थमानस्य कुपितो देवकीसुतः
१०४१०३७३ रजकस्य कराग्रेण शिरः कायादपातयत्
१०४१०३८१ तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै
१०४१०३८३ दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः
१०४१०३९१ वसित्वात्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा
१०४१०३९३ शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित्
१०४१०४०१ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत्
१०४१०४०३ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः
१०४१०४११ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः
१०४१०४१३ स्वलङ्कृतौ बालगजौ पर्वणीव सितेतरौ
१०४१०४२१ तस्य प्रसन्नो भगवान्प्रादात्सारूप्यमात्मनः
१०४१०४२३ श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम्

१०४१०४३१ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः
१०४१०४३३ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि
१०४१०४४१ तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः
१०४१०४४३ पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः
१०४१०४५१ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो
१०४१०४५३ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम्
१०४१०४६१ भवन्तौ किल विश्वस्य जगतः कारणं परम्
१०४१०४६३ अवतीर्णाविहांशेन क्षेमाय च भवाय च
१०४१०४७१ न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः
१०४१०४७३ समयोः सर्वभूतेषु भजन्तं भजतोरपि
१०४१०४८१ तावज्ञापयतं भृत्यं किमहं करवाणि वाम्
१०४१०४८३ पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते
१०४१०४९१ इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः
१०४१०४९३ शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ
१०४१०५०१ ताभिः स्वलङ्कृतौ प्रीतौ कृष्णरामौ सहानुगौ
१०४१०५०३ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान्
१०४१०५११ सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि
१०४१०५१३ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम्
१०४१०५२१ इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम्
१०४१०५२३ बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः
१०४२००१० श्रीशुक उवाच
१०४२००११ अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम्
१०४२००१३ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन्रसप्रदः
१०४२००२१ का त्वं वरोर्वेतदु हानुलेपनं कस्याङ्गने वा कथयस्व साधु नः
१०४२००२३ देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति
१०४२००३० सैरन्ध्र्युवाच
१०४२००३१ दास्यस्म्यहं सुन्दर कंससम्मता
१०४२००३२ त्रिवक्रनामा ह्यनुलेपकर्मणि
१०४२००३३ मद्भावितं भोजपतेरतिप्रियं
१०४२००३४ विना युवां कोऽन्यतमस्तदर्हति
१०४२००४१ रूपपेशलमाधुर्य हसितालापवीक्षितैः

१०४२००४३ धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम्
१०४२००५१ ततस्तावङ्गरागेण स्ववर्णेतरशोभिना
१०४२००५३ सम्प्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ
१०४२००६१ प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम्
१०४२००६३ ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम्
१०४२००७१ पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना
१०४२००७३ प्रगृह्य चिबुकेऽध्यात्ममुदनीनमदच्युतः
१०४२००८१ सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा
१०४२००८३ मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमा
१०४२००९१ ततो रूपगुणौदार्य सम्पन्ना प्राह केशवम्
१०४२००९३ उत्तरीयान्तमकृष्य स्मयन्ती जातहृच्छया
१०४२०१०१ एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे
१०४२०१०३ त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ
१०४२०१११ एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः
१०४२०११३ मुखं वीक्ष्यानु गोपानां प्रहसंस्तामुवाच ह
१०४२०१२१ एष्यामि ते गृहं सुभ्रु पुंसामाधिविकर्शनम्
१०४२०१२३ साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम्
१०४२०१३१ विसृज्य माध्व्या वाण्या ताम्व्रजन्मार्गे वणिक्पथैः
१०४२०१३३ नानोपायनताम्बूल स्रग्गन्धैः साग्रजोऽर्चितः
१०४२०१४१ तद्दर्शनस्मरक्षोभादात्मानं नाविदन्स्त्रियः
१०४२०१४३ विस्रस्तवासःकवर वलया लेख्यमूर्तयः
१०४२०१५१ ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः
१०४२०१५३ तस्मिन्प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम्
१०४२०१६१ पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत्
१०४२०१६३ वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे
१०४२०१७१ करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम्
१०४२०१७३ नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः
१०४२०१८१ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः
१०४२०१८३ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत्
१०४२०१९१ तद्रक्षिणः सानुचरं कुपिता आततायिनः
१०४२०१९३ गृहीतुकामा आवव्रुर्गृह्यतां वध्यतामिति

१०४२०२०१ अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ
१०४२०२०३ क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः
१०४२०२११ बलं च कंसप्रहितं हत्वा शालामुखात्ततः
१०४२०२१३ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः
१०४२०२२१ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः
१०४२०२२३ तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ
१०४२०२३१ तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान्
१०४२०२३३ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः
१०४२०२४१ गोप्यो मुकुन्दविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्यभूवन्
१०४२०२४३ सम्पश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः
१०४२०२५१ अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम्
१०४२०२५३ ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम्
१०४२०२६१ कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च
१०४२०२६३ वधं निशम्य गोविन्द रामविक्रीडितं परम्
१०४२०२७१ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः
१०४२०२७३ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च
१०४२०२८१ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि
१०४२०२८३ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा
१०४२०२९१ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः
१०४२०२९३ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम्
१०४२०३०१ स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम्
१०४२०३०३ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः
१०४२०३११ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च
१०४२०३१३ पश्यन्मरणसन्त्रस्तो निद्रां लेभे न चिन्तया
१०४२०३२१ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते
१०४२०३२३ कारयामास वै कंसो मल्लक्रीडामहोत्सवम्
१०४२०३३१ आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे
१०४२०३३३ मञ्चाश्चालङ्कृताः स्रग्भिः पताकाचैलतोरणैः
१०४२०३४१ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः
१०४२०३४३ यथोपजोषं विविशू राजानश्च कृतासनाः
१०४२०३५१ कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत्

१०४२०३५३ मण्डलेश्वरमध्यस्थो हृदयेन विदूयता
१०४२०३६१ वाद्यमानेसु तूर्येषु मल्लतालोत्तरेषु च
१०४२०३६३ मल्लाः स्वलङ्कृताः दृप्ताः सोपाध्यायाः समासत
१०४२०३७१ चाणूरो मुष्टिकः कूतः शलस्तोशल एव च
१०४२०३७३ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः
१०४२०३८१ नन्दगोपादयो गोपा भोजराजसमाहुताः
१०४२०३८३ निवेदितोपायनास्त एकस्मिन्मञ्च आविशन्
१०४३००१० श्रीशुक उवाच
१०४३००११ अथ कृष्णश्च रामश्च कृतशौचौ परन्तप
१०४३००१३ मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः
१०४३००२१ रङ्गद्वारं समासाद्य तस्मिन्नागमवस्थितम्
१०४३००२३ अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम्
१०४३००३१ बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान्
१०४३००३३ उवाच हस्तिपं वाचा मेघनादगभीरया
१०४३००४१ अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्रम मा चिरम्
१०४३००४३ नो चेत्सकुञ्जरं त्वाद्य नयामि यमसादनम्
१०४३००५१ एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम्
१०४३००५३ चोदयामास कृष्णाय कालान्तकयमोपमम्
१०४३००६१ करीन्द्रस्तमभिद्रुत्य करेण तरसाग्रहीत्
१०४३००६३ कराद्विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत
१०४३००७१ सङ्क्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम्
१०४३००७३ परामृशत्पुष्करेण स प्रसह्य विनिर्गतः
१०४३००८१ पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम्
१०४३००८३ विचकर्ष यथा नागं सुपर्ण इव लीलया
१०४३००९१ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः
१०४३००९३ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः
१०४३०१०१ ततोऽभिमखमभ्येत्य पाणिनाहत्य वारणम्
१०४३०१०३ प्राद्रवन्पातयामास स्पृश्यमानः पदे पदे
१०४३०१११ स धावन्क्रीडया भूमौ पतित्वा सहसोत्थितः
१०४३०११३ तम्मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत्क्षितिम्
१०४३०१२१ स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः

१०४३०१२३ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा
१०४३०१३१ तमापतन्तमासाद्य भगवान्मधुसूदनः
१०४३०१३३ निगृह्य पाणिना हस्तं पातयामास भूतले
१०४३०१४१ पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया
१०४३०१४३ दन्तमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः
१०४३०१५१ मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत्
१०४३०१५३ अंसन्यस्तविषाणोऽसृङ् मदबिन्दुभिरङ्कितः
१०४३०१५५ विरूढस्वेदकणिका वदनाम्बुरुहो बभौ
१०४३०१६१ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ
१०४३०१६३ रङ्गं विविशतू राजन्गजदन्तवरायुधौ
१०४३०१७१ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
१०४३०१७२ गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः
१०४३०१७३ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
१०४३०१७४ वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः
१०४३०१८१ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ
१०४३०१८३ कंसो मनस्यपि तदा भृशमुद्विविजे नृप
१०४३०१९१ तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ
१०४३०१९३ यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम्
१०४३०२०१ निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप
१०४३०२०३ प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम्
१०४३०२११ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया
१०४३०२१३ जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः
१०४३०२२१ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम्
१०४३०२२३ तद्रूपगुणमाधुर्य प्रागल्भ्यस्मारिता इव
१०४३०२३१ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि
१०४३०२३३ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि
१०४३०२४१ एष वै किल देवक्यां जातो नीतश्च गोकुलम्
१०४३०२४३ कालमेतं वसन्गूढो ववृधे नन्दवेश्मनि
१०४३०२५१ पूतनानेन नीतान्तं चक्रवातश्च दानवः
१०४३०२५३ अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः
१०४३०२६१ गावः सपाला एतेन दावाग्नेः परिमोचिताः

१०४३०२६३ कालियो दमितः सर्प इन्द्रश्च विमदः कृतः
१०४३०२७१ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना
१०४३०२७३ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम्
१०४३०२८१ गोप्योऽस्य नित्यमुदित हसितप्रेक्षणं मुखम्
१०४३०२८३ पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा
१०४३०२९१ वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः
१०४३०२९३ श्रियं यशो महत्वं च लप्स्यते परिरक्षितः
१०४३०३०१ अयं चास्याग्रजः श्रीमान्रामः कमललोचनः
१०४३०३०३ प्रलम्बो निहतो येन वत्सको ये बकादयः
१०४३०३११ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च
१०४३०३१३ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत्
१०४३०३२१ हे नन्दसूनो हे राम भवन्तौ वीरसम्मतौ
१०४३०३२३ नियुद्धकुशलौ श्रुत्वा राज्ञाहूतौ दिदृक्षुणा
१०४३०३३१ प्रियं राज्ञः प्रकुर्वत्यः श्रेयो विन्दन्ति वै प्रजाः
१०४३०३३३ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा
१०४३०३४१ नित्यं प्रमुदिता गोपा वत्सपाला यथास्फुटम्
१०४३०३४३ वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः
१०४३०३५१ तस्माद्राज्ञः प्रियं यूयं वयं च करवाम हे
१०४३०३५३ भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः
१०४३०३६१ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः
१०४३०३६३ नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च
१०४३०३७१ प्रजा भोजपतेरस्य वयं चापि वनेचराः
१०४३०३७३ करवाम प्रियं नित्यं तन्नः परमनुग्रहः
१०४३०३८१ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम्
१०४३०३८३ भवेन्नियुद्धं माधर्मः स्पृशेन्मल्लसभासदः
१०४३०३९० चाणूर उवाच
१०४३०३९१ न बालो न किशोरस्त्वं बलश्च बलिनां वरः
१०४३०३९३ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत्
१०४३०४०१ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै
१०४३०४०३ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः
१०४४००१० श्रीशुक उवाच

१०४४००११ एवं चर्चितसङ्कल्पो भगवान्मधुसूदनः
१०४४००१३ आससादाथ चणूरं मुष्टिकं रोहिणीसुतः
१०४४००२१ हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः
१०४४००२३ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया
१०४४००३१ अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी
१०४४००३३ शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः
१०४४००४१ परिभ्रामणविक्षेप परिरम्भावपातनैः
१०४४००४३ उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुन्धताम्
१०४४००५१ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि
१०४४००५३ परस्परं जिगीषन्तावपचक्रतुरात्मनः
१०४४००६१ तद्बलाबलवद्युद्धं समेताः सर्वयोषितः
१०४४००६३ ऊचुः परस्परं राजन्सानुकम्पा वरूथशः
१०४४००७१ महानयं बताधर्म एषां राजसभासदाम्
१०४४००७३ ये बलाबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः
१०४४००८१ क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ
१०४४००८३ क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ
१०४४००९१ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्
१०४४००९३ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित्
१०४४०१०१ न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन्
१०४४०१०३ अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते
१०४४०१११ वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम्
१०४४०११३ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः
१०४४०१२१ किं न पश्यत रामस्य मुखमाताम्रलोचनम्
१०४४०१२३ मुष्टिकं प्रति सामर्षं हाससंरम्भशोभितम्
१०४४०१३१ पुण्या बत व्रजभुवो यदयं नृलिङ्ग
१०४४०१३२ गूढः पुराणपुरुषो वनचित्रमाल्यः
१०४४०१३३ गाः पालयन्सहबलः क्वणयंश्च वेणुं
१०४४०१३४ विक्रीदयाञ्चति गिरित्ररमार्चिताङ्घ्रिः
१०४४०१४१ गोप्यस्तपः किमचरन्यदमुष्य रूपं
१०४४०१४२ लावण्यसारमसमोर्ध्वमनन्यसिद्धम्
१०४४०१४३ दृग्भिः पिबन्त्यनुसवाभिनवं दुरापम्

१०४४०१४४ एकान्तधाम यशसः श्रीय ऐश्वरस्य
१०४४०१५१ या दोहनेऽवहनने मथनोपलेप प्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ
१०४४०१५३ गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः
१०४४०१६१ प्रातर्व्रजाद्व्रजत आविशतश्च सायं
१०४४०१६२ गोभिः समं क्वणयतोऽस्य निशम्य वेणुम्
१०४४०१६३ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः
१०४४०१६४ पश्यन्ति सस्मितमुखं सदयावलोकम्
१०४४०१७१ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः
१०४४०१७३ शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभ
१०४४०१८१ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ
१०४४०१८३ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम्
१०४४०१९१ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ
१०४४०१९३ युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ
१०४४०२०१ भगवद्गात्रनिष्पातैर्वज्रनीष्पेषनिष्ठुरैः
१०४४०२०३ चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह
१०४४०२११ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ
१०४४०२१३ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत
१०४४०२२१ नाचलत्तत्प्रहारेण मालाहत इव द्विपः
१०४४०२२३ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः
१०४४०२३१ भूपृष्ठे पोथयामास तरसा क्षीण जीवितम्
१०४४०२३३ विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत्
१०४४०२४१ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै
१०४४०२४३ बलभद्रेण बलिना तलेनाभिहतो भृशम्
१०४४०२५१ प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः
१०४४०२५३ व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः
१०४४०२६१ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः
१०४४०२६३ अवधील्लीलया राजन्सावज्ञं वाममुष्टिना
१०४४०२७१ तर्ह्येव हि शलः कृष्ण प्रपदाहतशीर्षकः
१०४४०२७३ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः
१०४४०२८१ चाणूरे मुष्टिके कूटे शले तोशलके हते
१०४४०२८३ शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः

१०४४०२९१ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः
१०४४०२९३ वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ
१०४४०३०१ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः
१०४४०३०३ ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति
१०४४०३११ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट्
१०४४०३१३ न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह
१०४४०३२१ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात्
१०४४०३२३ धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम्
१०४४०३३१ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः
१०४४०३३३ उग्रसेनः पिता चापि सानुगः परपक्षगः
१०४४०३४१ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः
१०४४०३४३ लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत्
१०४४०३५१ तमाविशन्तमालोक्य मृत्युमात्मन आसनात्
१०४४०३५३ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी
१०४४०३६१ तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे
१०४४०३६३ समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य
१०४४०३७१ प्रगृह्य केशेषु चलत्किरीतं निपात्य रङ्गोपरि तुङ्गमञ्चात्
१०४४०३७३ तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः
१०४४०३८१ तं सम्परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः
१०४४०३८३ हा हेति शब्दः सुमहांस्तदाभूदुदीरितः सर्वजनैर्नरेन्द्र
१०४४०३९१ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्नदन्वा विचरन्स्वपन्श्वसन्
१०४४०३९३ ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप
१०४४०४०१ तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः
१०४४०४०३ अभ्यधावन्नतिक्रुद्धा भ्रातुर्निर्वेशकारिणः
१०४४०४११ तथातिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः
१०४४०४१३ अहन्परिघमुद्यम्य पशूनिव मृगाधिपः
१०४४०४२१ नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः
१०४४०४२३ पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः
१०४४०४३१ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः
१०४४०४३३ तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः
१०४४०४४१ शयानान्वीरशयायां पतीनालिङ्ग्य शोचतीः

१०४४०४४३ विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः
१०४४०४५१ हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल
१०४४०४५३ त्वया हतेन निहता वयं ते सगृहप्रजाः
१०४४०४६१ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ
१०४४०४६३ न शोभते वयमिव निवृत्तोत्सवमङ्गला
१०४४०४७१ अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम्
१०४४०४७३ तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम्
१०४४०४८१ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः
१०४४०४८३ गोप्ता च तदवध्यायी न क्वचित्सुखमेधते
१०४४०४९० श्रीशुक उवाच
१०४४०४९१ राजयोषित आश्वास्य भगवांल्लोकभावनः
१०४४०४९३ यामाहुर्लौकिकीं संस्थां हतानां समकारयत्
१०४४०५०१ मातरं पितरं चैव मोचयित्वाथ बन्धनात्
१०४४०५०३ कृष्णरामौ ववन्दाते शिरसा स्पृश्य पादयोः
१०४४०५११ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ
१०४४०५१३ कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ
१०४५००१० श्रीशुक उवाच
१०४५००११ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः
१०४५००१३ मा भूदिति निजां मायां ततान जनमोहिनीम्
१०४५००२१ उवाच पितरावेत्य साग्रजः सात्वनर्षभः
१०४५००२३ प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम्
१०४५००३१ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि
१०४५००३३ बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन्क्वचित्
१०४५००४१ न लब्धो दैवहतयोर्वासो नौ भवदन्तिके
१०४५००४३ यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम्
१०४५००५१ सर्वार्थसम्भवो देहो जनितः पोषितो यतः
१०४५००५३ न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा
१०४५००६१ यस्तयोरात्मजः कल्प आत्मना च धनेन च
१०४५००६३ वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि
१०४५००७१ मातरं पितरं वृद्धं भार्यां साध्वीं सुतम्शिशुम्
१०४५००७३ गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः

१०४५००८१ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः
१०४५००८३ मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः
१०४५००९१ तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः
१०४५००९३ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम्
१०४५०१०० श्रीशुक उवाच
१०४५०१०१ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा
१०४५०१०३ मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम्
१०४५०१११ सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ
१०४५०११३ न किञ्चिदूचतू राजन्बाष्पकण्ठौ विमोहितौ
१०४५०१२१ एवमाश्वास्य पितरौ भगवान्देवकीसुतः
१०४५०१२३ मातामहं तूग्रसेनं यदूनामकरोन्णृपम्
१०४५०१३१ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि
१०४५०१३३ ययातिशापाद्यदुभिर्नासितव्यं नृपासने
१०४५०१४१ मयि भृत्य उपासीने भवतो विबुधादयः
१०४५०१४३ बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः
१०४५०१५१ सर्वान्स्वान्ज्ञातिसम्बन्धान्दिग्भ्यः कंसभयाकुलान्
१०४५०१५३ यदुवृष्ण्यन्धकमधु दाशार्हकुकुरादिकान्
१०४५०१६१ सभाजितान्समाश्वास्य विदेशावासकर्शितान्
१०४५०१६३ न्यवासयत्स्वगेहेषु वित्तैः सन्तर्प्य विश्वकृत्
१०४५०१७१ कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथाः
१०४५०१७३ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः
१०४५०१८१ वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम्
१०४५०१८३ नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम्
१०४५०१९१ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः
१०४५०१९३ पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः
१०४५०२०१ अथ नन्दं समसाद्य भगवान्देवकीसुतः
१०४५०२०३ सङ्कर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः
१०४५०२११ पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम्
१०४५०२१३ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि
१०४५०२२१ स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत्
१०४५०२२३ शिशून्बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे

१०४५०२३१ यात यूयं व्रजंन्तात वयं च स्नेहदुःखितान्
१०४५०२३३ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्
१०४५०२४१ एवं सान्त्वय्य भगवान्नन्दं सव्रजमच्युतः
१०४५०२४३ वासोऽलङ्कारकुप्याद्यैरर्हयामास सादरम्
१०४५०२५१ इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः
१०४५०२५३ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ
१०४५०२६१ अथ शूरसुतो राजन्पुत्रयोः समकारयत्
१०४५०२६३ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम्
१०४५०२७१ तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः स्वलङ्कृताः
१०४५०२७३ स्वलङ्कृतेभ्यः सम्पूज्य सवत्साः क्षौममालिनीः
१०४५०२८१ याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः
१०४५०२८३ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः
१०४५०२९१ ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ
१०४५०२९३ गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ
१०४५०३०१ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ
१०४५०३०३ नान्यसिद्धामलं ज्ञानं गूहमानौ नरेहितैः
१०४५०३११ अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः
१०४५०३१३ काश्यं सान्दीपनिं नाम ह्यवन्तिपुरवासिनम्
१०४५०३२१ यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम्
१०४५०३२३ ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ
१०४५०३३१ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः
१०४५०३३३ प्रोवाच वेदानखिलान्सङ्गोपनिषदो गुरुः
१०४५०३४१ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा
१०४५०३४३ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम्
१०४५०३५१ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ
१०४५०३५३ सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप
१०४५०३६१ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः
१०४५०३६३ गुरुदक्षिणयाचार्यं छन्दयामासतुर्नृप
१०४५०३७१ द्विजस्तयोस्तं महिमानमद्भुतं
१०४५०३७२ संलोक्ष्य राजन्नतिमानुसीं मतिम्
१०४५०३७३ सम्मन्त्र्य पत्न्या स महार्णवे मृतं

१०४५०३७४ बालं प्रभासे वरयां बभूव ह
१०४५०३८१ तेथेत्यथारुह्य महारथौ रथं
१०४५०३८२ प्रभासमासाद्य दुरन्तविक्रमौ
१०४५०३८३ वेलामुपव्रज्य निषीदतुः क्षनं
१०४५०३८४ सिन्धुर्विदित्वार्हनमाहरत्तयोः
१०४५०३९१ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम्
१०४५०३९३ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा
१०४५०४०० श्रीसमुद्र उवाच
१०४५०४०१ न चाहार्षमहं देव दैत्यः पञ्चजनो महान्
१०४५०४०३ अन्तर्जलचरः कृष्ण शङ्खरूपधरोऽसुरः
१०४५०४११ आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः
१०४५०४१३ जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम्
१०४५०४२१ तदङ्गप्रभवं शङ्खमादाय रथमागमत्
१०४५०४२३ ततः संयमनीं नाम यमस्य दयितां पुरीम्
१०४५०४३१ गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः
१०४५०४३२ शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः
१०४५०४४१ तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम्
१०४५०४४३ उवाचावनतः कृष्णं सर्वभूताशयालयम्
१०४५०४४५ लीलामनुष्ययोर्विष्णो युवयोः करवाम किम्
१०४५०४५० श्रीभगवानुवाच
१०४५०४५१ गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम्
१०४५०४५३ आनयस्व महाराज मच्छासनपुरस्कृतः
१०४५०४६१ तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ
१०४५०४६३ दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः
१०४५०४७० श्रीगुरुरुवाच
१०४५०४७१ सम्यक्सम्पादितो वत्स भवद्भ्यां गुरुनिष्क्रयः
१०४५०४७३ को नु युष्मद्विधगुरोः कामानामवशिष्यते
१०४५०४८१ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी
१०४५०४८३ छन्दांस्ययातयामानि भवन्त्विह परत्र च
१०४५०४९१ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा
१०४५०४९३ आयातौ स्वपुरं तात पर्जन्यनिनदेन वै

१०४५०५०१ समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ
१०४५०५०३ अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव
१०४६००१० श्रीशुक उवाच
१०४६००११ वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा
१०४६००१३ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः
१०४६००२१ तमाह भगवान्प्रेष्ठं भक्तमेकान्तिनं क्वचित्
१०४६००२३ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः
१०४६००३१ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह
१०४६००३३ गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय
१०४६००४१ ता मन्मनस्का तृष्प्राणा मदर्थे त्यक्तदैहिकाः
१०४६००४३ मामेव दयितं प्रेष्ठमात्मानं मनसा गताः
१०४६००४५ ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम्
१०४६००५१ मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः
१०४६००५३ स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः
१०४६००६१ धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथञ्चन
१०४६००६३ प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः
१०४६००७० श्रीशुक उवाच
१०४६००७१ इत्युक्त उद्धवो राजन्सन्देशं भर्तुरादृतः
१०४६००७३ आदाय रथमारुह्य प्रययौ नन्दगोकुलम्
१०४६००८१ प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ
१०४६००८३ छन्नयानः प्रविशतां पशूनां खुररेणुभिः
१०४६००९१ वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः
१०४६००९३ धावन्तीभिश्च वास्राभिरुधोभारैः स्ववत्सकान्
१०४६०१०१ इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः
१०४६०१०३ गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च
१०४६०१११ गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः
१०४६०११३ स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम्
१०४६०१२१ अग्न्यर्कातिथिगोविप्र पितृदेवार्चनान्वितैः
१०४६०१२३ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम्
१०४६०१३१ सर्वतः पुष्पितवनं द्विजालिकुलनादितम्
१०४६०१३३ हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम्

१०४६०१४१ तमागतं समागम्य कृष्णस्यानुचरं प्रियम्
१०४६०१४३ नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत्
१०४६०१५१ भोजितं परमान्नेन संविष्टं कशिपौ सुखम्
१०४६०१५३ गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः
१०४६०१६१ कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः
१०४६०१६३ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्व्रतः
१०४६०१७१ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना
१०४६०१७३ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा
१०४६०१८१ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन्
१०४६०१८३ गोपान्व्रजं चात्मनाथं गावो वृन्दावनं गिरिम्
१०४६०१९१ अप्यायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम्
१०४६०१९३ तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम्
१०४६०२०१ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः
१०४६०२०३ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना
१०४६०२११ स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम्
१०४६०२१३ हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः
१०४६०२२१ सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान्
१०४६०२२३ आक्रीडानीक्ष्यमाणानां मनो याति तदात्मताम्
१०४६०२३१ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ
१०४६०२३३ सुराणां महदर्थाय गर्गस्य वचनं यथा
१०४६०२४१ कंसं नागायुतप्राणं मल्लौ गजपतिं यथा
१०४६०२४३ अवधिष्टां लीलयैव पशूनिव मृगाधिपः
१०४६०२५१ तालत्रयं महासारं धनुर्यष्टिमिवेभराट्
१०४६०२५३ बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम्
१०४६०२६१ प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः
१०४६०२६३ दैत्याः सुरासुरजितो हता येनेह लीलया
१०४६०२७० श्रीशुक उवाच
१०४६०२७१ इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः
१०४६०२७३ अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः
१०४६०२८१ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च
१०४६०२८३ शृण्वन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा

१०४६०२९१ तयोरित्थं भगवति कृष्णे नन्दयशोदयोः
१०४६०२९३ वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा
१०४६०३०० श्रीउद्धव उवाच
१०४६०३०१ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद
१०४६०३०३ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी
१०४६०३११ एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम्
१०४६०३१३ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ
१०४६०३२१ यस्मिञ्जनः प्राणवियोगकाले क्षनं समावेश्य मनोऽविशुद्धम्
१०४६०३२३ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः
१०४६०३३१ तस्मिन्भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ
१०४६०३३३ भावं विधत्तां नितरां महात्मन्किं वावशिष्टं युवयोः सुकृत्यम्
१०४६०३४१ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः
१०४६०३४३ प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः
१०४६०३५१ हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम्
१०४६०३५३ यदाह वः समागत्य कृष्णः सत्यं करोति तत्
१०४६०३६१ मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके
१०४६०३६३ अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि
१०४६०३७१ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्यमानिनः
१०४६०३७३ नोत्तमो नाधमो वापि समानस्यासमोऽपि वा
१०४६०३८१ न माता न पिता तस्य न भार्या न सुतादयः
१०४६०३८३ नात्मीयो न परश्चापि न देहो जन्म एव च
१०४६०३९१ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु
१०४६०३९३ क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते
१०४६०४०१ सत्त्वं रजस्तम इति भजते निर्गुणो गुणान्
१०४६०४०३ क्रीडन्नतीतोऽपि गुणैः सृजत्यवन्हन्त्यजः
१०४६०४११ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते
१०४६०४१३ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः
१०४६०४२१ युवयोरेव नैवायमात्मजो भगवान्हरिः
१०४६०४२३ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः
१०४६०४३१ दृष्टं श्रुतं भूतभवद्भविष्यत्
१०४६०४३२ स्थास्नुश्चरिष्णुर्महदल्पकं च

१०४६०४३३ विनाच्युताद्वस्तु तरां न वाच्यं
१०४६०४३४ स एव सर्वं परमात्मभूतः
१०४६०४४१ एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन्
१०४६०४४३ गोप्यः समुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दौधीन्यमन्थुन्
१०४६०४५१ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः
१०४६०४५३ चलन्नितम्बस्तनहारकुण्डल त्विषत्कपोलारुणकुङ्कुमाननाः
१०४६०४६१ उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः
१०४६०४६३ दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम्
१०४६०४७१ भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकसः
१०४६०४७३ दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन्
१०४६०४८१ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः
१०४६०४८३ येन नीतो मधुपुरीं कृष्णः कमललोचनः
१०४६०४९१ किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिम्
१०४६०४९३ ततः स्त्रीणां वदन्तीनामुद्धवोऽगात्कृताह्निकः
१०४७००१० श्रीशुक उवाच
१०४७००११ तं वीक्ष्य कृषानुचरं व्रजस्त्रियः
१०४७००१२ प्रलम्बबाहुं नवकञ्जलोचनम्
१०४७००१३ पीताम्बरं पुष्करमालिनं लसन्
१०४७००१४ मुखारविन्दं परिमृष्टकुण्डलम्
१०४७००२१ सुविस्मिताः कोऽयमपीव्यदर्शनः
१०४७००२२ कुतश्च कस्याच्युतवेषभूषणः
१०४७००२३ इति स्म सर्वाः परिवव्रुरुत्सुकास्
१०४७००२४ तमुत्तमःश्लोकपदाम्बुजाश्रयम्
१०४७००३१ तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः
१०४७००३३ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय सन्देशहरं रमापतेः
१०४७००४१ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम्
१०४७००४३ भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया
१०४७००५१ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे
१०४७००५३ स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः
१०४७००६१ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम्
१०४७००६३ पुम्भिः स्त्रीषु कृता यद्वत्सुमनःस्विव षट्पदैः

१०४७००७१ निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः
१०४७००७३ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम्
१०४७००८१ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम्
१०४७००८३ दग्धं मृगास्तथारण्यं जारा भुक्त्वा रतां स्त्रियम्
१०४७००९१ इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः
१०४७००९३ कृष्णदूते समायाते उद्धवे त्यक्तलौकिकाः
१०४७०१०१ गायन्त्यः प्रीयकर्माणि रुदन्त्यश्च गतह्रियः
१०४७०१०३ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः
१०४७०१११ काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम्
१०४७०११३ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत्
१०४७०१२० गोप्युवाच
१०४७०१२१ मधुप कितवबन्धो मा स्पृशङ्घ्रिं सपत्न्याः
१०४७०१२२ कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः
१०४७०१२३ वहतु मधुपतिस्तन्मानिनीनां प्रसादं
१०४७०१२४ यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक्
१०४७०१३१ सकृदधरसुधां स्वां मोहिनीं पाययित्वा
१०४७०१३२ सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक्
१०४७०१३३ परिचरति कथं तत्पादपद्मं नु पद्मा
१०४७०१३४ ह्यपि बत हृतचेता ह्युत्तमःश्लोकजल्पैः
१०४७०१४१ किमिह बहु षडङ्घ्रे गायसि त्वं यदूनाम्
१०४७०१४२ अधिपतिमगृहाणामग्रतो नः पुराणम्
१०४७०१४३ विजयसखसखीनां गीयतां तत्प्रसङ्गः
१०४७०१४४ क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः
१०४७०१५१ दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
१०४७०१५२ कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः
१०४७०१५३ चरणरज उपास्ते यस्य भूतिर्वयं का
१०४७०१५४ अपि च कृपणपक्षे ह्युत्तमःश्लोकशब्दः
१०४७०१६१ विसृज शिरसि पादं वेद्म्यहं चातुकारैर्
१०४७०१६२ अनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात्
१०४७०१६३ स्वकृत इह विषृष्टापत्यपत्यन्यलोका
१०४७०१६४ व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन्

१०४७०१७१ मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
१०४७०१७२ स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्
१०४७०१७३ बलिमपि बलिमत्त्वावेष्टयद्ध्वाङ्क्षवद्यस्
१०४७०१७४ तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः
१०४७०१८१ यदनुचरितलीलाकर्णपीयूषविप्रुट्
१०४७०१८२ सकृददनविधूतद्वन्द्वधर्मा विनष्टाः
१०४७०१८३ सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
१०४७०१८४ बहव इह विहङ्गा भिक्षुचर्यां चरन्ति
१०४७०१९१ वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
१०४७०१९२ कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः
१०४७०१९३ ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र
१०४७०१९४ स्मररुज उपमन्त्रिन्भण्यतामन्यवार्ता
१०४७०२०१ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं
१०४७०२०२ वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग
१०४७०२०३ नयसि कथमिहास्मान्दुस्त्यजद्वन्द्वपार्श्वं
१०४७०२०४ सततमुरसि सौम्य श्रीर्वधूः साकमास्ते
१०४७०२११ अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते
१०४७०२१२ स्मरति स पितृगेहान्सौम्य बन्धूंश्च गोपान्
१०४७०२१३ क्वचिदपि स कथा नः किङ्करीणां गृणीते
१०४७०२१४ भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदा नु
१०४७०२२० श्रीशुक उवाच
१०४७०२२१ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः
१०४७०२२३ सान्त्वयन्प्रियसन्देशैर्गोपीरिदमभाषत
१०४७०२३० श्रीउद्धव उवाच
१०४७०२३१ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः
१०४७०२३३ वासुदेवे भगवति यासामित्यर्पितं मनः
१०४७०२४१ दानव्रततपोहोम जपस्वाध्यायसंयमैः
१०४७०२४३ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते
१०४७०२५१ भगवत्युत्तमःश्लोके भवतीभिरनुत्तमा
१०४७०२५३ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा
१०४७०२६१ दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च

१०४७०२६३ हित्वावृनीत यूयं यत्कृष्णाख्यं पुरुषं परम्
१०४७०२७१ सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे
१०४७०२७३ विरहेण महाभागा महान्मेऽनुग्रहः कृतः
१०४७०२८१ श्रूयतां प्रियसन्देशो भवतीनां सुखावहः
१०४७०२८३ यमादायागतो भद्रा अहं भर्तू रहस्करः
१०४७०२९० श्रीभगवानुवाच
१०४७०२९१ भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्
१०४७०२९३ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही
१०४७०२९५ तथाहं च मनःप्राण भूतेन्द्रियगुणाश्रयः
१०४७०३०१ आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये
१०४७०३०३ आत्ममायानुभावेन भूतेन्द्रियगुणात्मना
१०४७०३११ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः
१०४७०३१३ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते
१०४७०३२१ येनेन्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः
१०४७०३२३ तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत
१०४७०३३१ एतदन्तः समाम्नायो योगः साङ्ख्यं मनीषिणाम्
१०४७०३३३ त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः
१०४७०३४१ यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम्
१०४७०३४३ मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया
१०४७०३५१ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते
१०४७०३५३ स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षिगोचरे
१०४७०३६१ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत्
१०४७०३६३ अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ
१०४७०३७१ या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः
१०४७०३७३ अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया
१०४७०३८० श्रीशुक उवाच
१०४७०३८१ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः
१०४७०३८३ ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः
१०४७०३९० गोप्य ऊचुः
१०४७०३९१ दिष्ट्याहितो हतः कंसो यदूनां सानुगोऽघकृत्
१०४७०३९३ दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना

१०४७०४०१ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम्
१०४७०४०३ प्रीतिं नः स्निग्धसव्रीड हासोदारेक्षणार्चितः
१०४७०४११ कथं रतिविशेषज्ञः प्रियश्च पुरयोषिताम्
१०४७०४१३ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः
१०४७०४२१ अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित्
१०४७०४२३ गोष्ठिमध्ये पुरस्त्रीणाम्ग्राम्याः स्वैरकथान्तरे
१०४७०४३१ ताः किं निशाः स्मरति यासु तदा प्रियाभिर्
१०४७०४३२ वृन्दावने कुमुदकुन्दशशाङ्करम्ये
१०४७०४३३ रेमे क्वणच्चरणनूपुररासगोष्ठ्याम्
१०४७०४३४ अस्माभिरीडितमनोज्ञकथः कदाचित्
१०४७०४४१ अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा
१०४७०४४३ सञ्जीवयन्नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः
१०४७०४५१ कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः
१०४७०४५३ नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः
१०४७०४६१ किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः
१०४७०४६३ श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः
१०४७०४७१ परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला
१०४७०४७३ तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया
१०४७०४८१ क उत्सहेत सन्त्यक्तुमुत्तमःश्लोकसंविदम्
१०४७०४८३ अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित्
१०४७०४९१ सरिच्छैलवनोद्देशा गावो वेणुरवा इमे
१०४७०४९३ सङ्कर्षणसहायेन कृष्णेनाचरिताः प्रभो
१०४७०५०१ पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत
१०४७०५०३ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः
१०४७०५११ गत्या ललितयोदार हासलीलावलोकनैः
१०४७०५१३ माध्व्या गिरा हृतधियः कथं तं विस्मराम हे
१०४७०५२१ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन
१०४७०५२३ मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात्
१०४७०५३० श्रीशुक उवाच
१०४७०५३१ ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः
१०४७०५३३ उद्धवं पूजयां चक्रुर्ज्ञात्वात्मानमधोक्षजम्

१०४७०५४१ उवास कतिचिन्मासान्गोपीनां विनुदन्शुचः
१०४७०५४३ कृष्णलीलाकथां गायन्रमयामास गोकुलम्
१०४७०५५१ यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः
१०४७०५५३ व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया
१०४७०५६१ सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान्
१०४७०५६३ कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम्
१०४७०५७१ दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम्
१०४७०५७३ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ
१०४७०५८१ एताः परं तनुभृतो भुवि गोपवध्वो
१०४७०५८२ गोविन्द एव निखिलात्मनि रूढभावाः
१०४७०५८३ वाञ्छन्ति यद्भवभियो मुनयो वयं च
१०४७०५८४ किं ब्रह्मजन्मभिरनन्तकथारसस्य
१०४७०५९१ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
१०४७०५९२ कृष्णे क्व चैष परमात्मनि रूढभावः
१०४७०५९३ नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्
१०४७०५९४ छ्रेयस्तनोत्यगदराज इवोपयुक्तः
१०४७०६०१ नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
१०४७०६०२ स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः
१०४७०६०३ रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ
१०४७०६०४ लब्धाशिषां य उदगाद्व्रजवल्लभीनाम्
१०४७०६११ आसामहो चरणरेणुजुषामहं स्यां
१०४७०६१२ वृन्दावने किमपि गुल्मलतौषधीनाम्
१०४७०६१३ या दुस्त्यजं स्वजनमार्यपथं च हित्वा
१०४७०६१४ भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्
१०४७०६२१ या वै श्रियार्चितमजादिभिराप्तकामैर्
१०४७०६२२ योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम्
१०४७०६२३ कृष्णस्य तद्भगवतः चरणारविन्दं
१०४७०६२४ न्यस्तं स्तनेषु विजहुः परिरभ्य तापम्
१०४७०६३१ वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः
१०४७०६३३ यासां हरिकथोद्गीतं पुनाति भुवनत्रयम्
१०४७०६४० श्रीशुक उवाच

१०४७०६४१ अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च
१०४७०६४३ गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम्
१०४७०६५१ तं निर्गतं समासाद्य नानोपायनपाणयः
१०४७०६५३ नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः
१०४७०६६१ मनसो वृत्तयो नः स्युः कृष्ण पादाम्बुजाश्रयाः
१०४७०६६३ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु
१०४७०६७१ कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया
१०४७०६७३ मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे
१०४७०६८१ एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप
१०४७०६८३ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम्
१०४७०६९१ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम्
१०४७०६९३ वसुदेवाय रामाय राज्ञे चोपायनान्यदात्
१०४८००१० श्रीशुक उवाच
१०४८००११ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः
१०४८००१३ सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ
१०४८००२१ महार्होपस्करैराढ्यं कामोपायोपबृंहितम्
१०४८००२३ मुक्तादामपताकाभिर्वितानशयनासनैः
१०४८००२५ धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम्
१०४८००३१ गृहं तमायान्तमवेक्ष्य सासनात्सद्यः समुत्थाय हि जातसम्भ्रमा
१०४८००३३ यथोपसङ्गम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः
१०४८००४१ तथोद्धवः साधुतयाभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम्
१०४८००४३ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः
१०४८००५१ सा मज्जनालेपदुकूलभूषण स्रग्गन्धताम्बूलसुधासवादिभिः
१०४८००५३ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः
१०४८००६१ आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे
१०४८००६३ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया
१०४८००७१ सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्
१०४८००७२ जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती
१०४८००७३ दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तम्
१०४८००७४ आनन्दमूर्तिमजहादतिदीर्घतापम्
१०४८००८१ सैवं कैवल्यनाथं तं प्राप्य दुष्प्राप्यमीश्वरम्

१०४८००८३ अङ्गरागार्पणेनाहो दुर्भगेदमयाचत
१०४८००९१ सहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया
१०४८००९३ रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण
१०४८०१०१ तस्यै कामवरं दत्त्वा मानयित्वा च मानदः
१०४८०१०३ सहोद्धवेन सर्वेशः स्वधामागमदृद्धिमत्
१०४८०१११ दुराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम्
१०४८०११३ यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ
१०४८०१२१ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः
१०४८०१२३ किञ्चिच्चिकीर्षयन्प्रागादक्रूरप्रीयकाम्यया
१०४८०१३१ स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान्
१०४८०१३३ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनन्द्य च
१०४८०१४१ ननाम कृष्णं रामं च स तैरप्यभिवादितः
१०४८०१४३ पूजयामास विधिवत्कृतासनपरिग्रहान्
१०४८०१५१ पादावनेजनीरापो धारयन्शिरसा नृप
१०४८०१५३ अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः
१०४८०१६१ अर्चित्वा शिरसानम्य पादावङ्कगतौ मृजन्
१०४८०१६३ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत
१०४८०१७१ दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम्
१०४८०१७३ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम्
१०४८०१८१ युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ
१०४८०१८३ भवद्भ्यां न विना किञ्चित्परमस्ति न चापरम्
१०४८०१९१ आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः
१०४८०१९३ ईयते बहुधा ब्रह्मन्श्रु तप्रत्यक्षगोचरम्
१०४८०२०१ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना
१०४८०२०३ एवं भवान्केवल आत्मयोनिष्वात्मात्मतन्त्रो बहुधा विभाति
१०४८०२११ सृजस्यथो लुम्पसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः
१०४८०२१३ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः
१०४८०२२१ देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात्
१०४८०२२३ अतो न बन्धस्तव नैव मोक्षः स्याताम्निकामस्त्वयि नोऽविवेकः
१०४८०२३१ त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः
१०४८०२३३ बाध्येत पाषण्डपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति

१०४८०२४१ स त्वम्प्रभोऽद्य वसुदेवगृहेऽवतीर्णः
१०४८०२४२ स्वांशेन भारमपनेतुमिहासि भूमेः
१०४८०२४३ अक्षौहिणीशतवधेन सुरेतरांश
१०४८०२४४ राज्ञाममुष्य च कुलस्य यशो वितन्वन्
१०४८०२५१ अद्येश नो वसतयः खलु भूरिभागा
१०४८०२५२ यः सर्वदेवपितृभूतनृदेवमूर्तिः
१०४८०२५३ यत्पादशौचसलिलं त्रिजगत्पुनाति
१०४८०२५४ स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः
१०४८०२६१ कः पण्डितस्त्वदपरं शरणं समीयाद्
१०४८०२६२ भक्तप्रियादृतगिरः सुहृदः कृतज्ञात्
१०४८०२६३ सर्वान्ददाति सुहृदो भजतोऽभिकामान्
१०४८०२६४ आत्मानमप्युपचयापचयौ न यस्य
१०४८०२७१ दिष्ट्या जनार्दन भवानिह नः प्रतीतो
१०४८०२७२ योगेश्वरैरपि दुरापगतिः सुरेशैः
१०४८०२७३ छिन्ध्याशु नः सुतकलत्रधनाप्तगेह
१०४८०२७४ देहादिमोहरशनां भवदीयमायाम्
१०४८०२८१ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः
१०४८०२८३ अक्रूरं सस्मितं प्राह गीर्भिः सम्मोहयन्निव
१०४८०२९० श्रीभगवानुवाच
१०४८०२९१ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा
१०४८०२९३ वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः
१०४८०३०१ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः
१०४८०३०३ श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः
१०४८०३११ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः
१०४८०३१३ ते पुनन्त्युरुकालेन दर्शनादेव साधवः
१०४८०३२१ स भवान्सुहृदां वै नः श्रेयान्श्रेयश्चिकीर्षया
१०४८०३२३ जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम्
१०४८०३३१ पितर्युपरते बालाः सह मात्रा सुदुःखिताः
१०४८०३३३ आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम
१०४८०३४१ तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः
१०४८०३४३ समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक्

१०४८०३५१ गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा
१०४८०३५३ विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत्
१०४८०३६१ इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः
१०४८०३६३ सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ
१०४९००१० श्रीशुक उवाच
१०४९००११ स गत्वा हास्तिनपुरं पौरवेन्द्रयशोऽङ्कितम्
१०४९००१३ ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम्
१०४९००२१ सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम्
१०४९००२३ कर्नं सुयोधनं द्रौणिं पाण्डवान्सुहृदोऽपरान्
१०४९००३१ यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुतः
१०४९००३३ सम्पृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम्
१०४९००४१ उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया
१०४९००४३ दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः
१०४९००५१ तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान्
१०४९००५३ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीऋषितम्
१०४९००६१ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम्
१०४९००६३ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च
१०४९००७१ पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम्
१०४९००७३ उवाच जन्मनिलयं स्मरन्त्यश्रुकलेक्षणा
१०४९००८१ अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे
१०४९००८३ भगिन्यौ भ्रातृपुत्राश्च जामयः सख्य एव च
१०४९००९१ भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः
१०४९००९३ पैतृष्वस्रेयान्स्मरति रामश्चाम्बुरुहेक्षणः
१०४९०१०१ सपत्नमध्ये शोचन्तीं वृकानां हरिणीमिव
१०४९०१०३ सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान्
१०४९०१११ कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन
१०४९०११३ प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम्
१०४९०१२१ नान्यत्तव पदाम्भोजात्पश्यामि शरणं नृणाम्
१०४९०१२३ बिभ्यतां मृत्युसंसारादीस्वरस्यापवर्गिकात्
१०४९०१३१ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने
१०४९०१३३ योगेश्वराय योगाय त्वामहं शरणं गता

१०४९०१४० श्रीशुक उवाच
१०४९०१४१ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम्
१०४९०१४३ प्रारुदद्दुःखिता राजन्भवतां प्रपितामही
१०४९०१५१ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः
१०४९०१५३ सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः
१०४९०१६१ यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम्
१०४९०१६३ अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम्
१०४९०१७० अक्रूर उवाच
१०४९०१७१ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन
१०४९०१७३ भ्रातर्युपरते पाण्डावधुनासनमास्थितः
१०४९०१८१ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन्
१०४९०१८३ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि
१०४९०१९१ अन्यथा त्वाचरंल्लोके गर्हितो यास्यसे तमः
१०४९०१९३ तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च
१०४९०२०१ नेह चात्यन्तसंवासः कस्यचित्केनचित्सह
१०४९०२०३ राजन्स्वेनापि देहेन किमु जायात्मजादिभिः
१०४९०२११ एकः प्रसूयते जन्तुरेक एव प्रलीयते
१०४९०२१३ एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्
१०४९०२२१ अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः
१०४९०२२३ सम्भोजनीयापदेशैर्जलानीव जलौकसः
१०४९०२३१ पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम्
१०४९०२३३ तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः
१०४९०२४१ स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः
१०४९०२४३ असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः
१०४९०२५१ तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम्
१०४९०२५३ वीक्ष्यायम्यात्मनात्मानं समः शान्तो भव प्रभो
१०४९०२६० धृतराष्ट्र उवाच
१०४९०२६१ यथा वदति कल्याणीं वाचं दानपते भवान्
१०४९०२६३ तथानया न तृप्यामि मर्त्यः प्राप्य यथामृतम्
१०४९०२७१ तथापि सूनृता सौम्य हृदि न स्थीयते चले
१०४९०२७३ पुत्रानुरागविषमे विद्युत्सौदामनी यथा

१०४९०२८१ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान्
१०४९०२८३ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले
१०४९०२९१ यो दुर्विमर्शपथया निजमाययेदं
१०४९०२९२ सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः
१०४९०२९३ तस्मै नमो दुरवबोधविहारतन्त्र
१०४९०२९४ संसारचक्रगतये परमेश्वराय
१०४९०३०० श्रीशुक उवाच
१०४९०३०१ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः
१०४९०३०३ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात्
१०४९०३११ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम्
१०४९०३१३ पाण्दवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम्
१०५०००१० श्रीशुक उवाच
१०५०००११ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ
१०५०००१३ मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान्
१०५०००२१ पित्रे मगधराजाय जरासन्धाय दुःखिते
१०५०००२३ वेदयां चक्रतुः सर्वमात्मवैधव्यकारणम्
१०५०००३१ स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप
१०५०००३३ अयादवीं महीं कर्तुं चक्रे परममुद्यमम्
१०५०००४१ अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः
१०५०००४३ यदुराजधानीं मथुरां न्यरुधत्सर्वतो दिशम्
१०५०००५१ निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्
१०५०००५३ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम्
१०५०००६१ चिन्तयामास भगवान्हरिः कारणमानुषः
१०५०००६३ तद्देशकालानुगुणं स्वावतारप्रयोजनम्
१०५०००७१ हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम्
१०५०००७३ मागधेन समानीतं वश्यानां सर्वभूभुजाम्
१०५०००८१ अक्षौहिणीभिः सङ्ख्यातं भटाश्वरथकुञ्जरैः
१०५०००८३ मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम्
१०५०००९१ एतदर्थोऽवतारोऽयं भूभारहरणाय मे
१०५०००९३ संरक्षणाय साधूनां कृतोऽन्येषां वधाय च
१०५००१०१ अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया

१०५००१०३ विरामायाप्यधर्मस्य काले प्रभवतः क्वचित्
१०५००१११ एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ
१०५००११३ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ
१०५००१२१ आयुधानि च दिव्यानि पुराणानि यदृच्छया
१०५००१२३ दृष्ट्वा तानि हृषीकेशः सङ्कर्षणमथाब्रवीत्
१०५००१३१ पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो
१०५००१३३ एष ते रथ आयातो दयितान्यायुधानि च
१०५००१४१ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत्
१०५००१४३ त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु
१०५००१५१ एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात्
१०५००१५३ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ
१०५००१६१ शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः
१०५००१६३ ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः
१०५००१७१ तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम
१०५००१७३ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया
१०५००१७५ गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन्
१०५००१८१ तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह
१०५००१८३ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि
१०५००१९० श्रीभगवानुवाच
१०५००१९१ न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम्
१०५००१९३ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः
१०५००२०० श्रीशुक उवाच
१०५००२०१ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसावृनोत्
१०५००२०३ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः
१०५००२११ सुपर्णतालध्वजचिह्नितौ रथाव्
१०५००२१२ अलक्षयन्त्यो हरिरामयोर्मृधे
१०५००२१३ स्त्रियः पुराट्टालकहर्म्यगोपुरं
१०५००२१४ समाश्रिताः सम्मुमुहुः शुचार्दितः
१०५००२२१ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम्
१०५००२२३ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम्
१०५००२३१ गृह्णन्निशङ्गादथ सन्दधच्छरान्

१०५००२३२ विकृष्य मुञ्चन्शितबाणपूगान्
१०५००२३३ निघ्नन्रथान्कुञ्जरवाजिपत्तीन्
१०५००२३४ निरन्तरं यद्वदलातचक्रम्
१०५००२४१ निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः
१०५००२४३ रथा हताश्वध्वजसूतनायकाः पदायतश्छिन्नभुजोरुकन्धराः
१०५००२५१ सञ्छिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः
१०५००२५३ भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहय ग्रहाकुलाः
१०५००२६१ करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः
१०५००२६३ अच्छूरिकावर्तभयानका महा मणिप्रवेकाभरणाश्मशर्कराः
१०५००२७१ प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम्
१०५००२७३ विनिघ्नतारीन्मुषलेन दुर्मदान्सङ्कर्षणेनापरीमेयतेजसा
१०५००२८१ बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम्
१०५००२८३ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम्
१०५००२९१ स्थित्युद्भवान्तं भुवनत्रयस्य यः
१०५००२९२ समीहितेऽनन्तगुणः स्वलीलया
१०५००२९३ न तस्य चित्रं परपक्षनिग्रहस्
१०५००२९४ तथापि मर्त्यानुविधस्य वर्ण्यते
१०५००३०१ जग्राह विरथं रामो जरासन्धं महाबलम्
१०५००३०३ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा
१०५००३११ बध्यमानं हतारातिं पाशैर्वारुणमानुषैः
१०५००३१३ वारयामास गोविन्दस्तेन कार्यचिकीर्षया
१०५००३२१ सा मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः
१०५००३२३ तपसे कृतसङ्कल्पो वारितः पथि राजभिः
१०५००३३१ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि
१०५००३३३ स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः
१०५००३४१ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा
१०५००३४३ उपेक्षितो भगवता मगधान्दुर्मना ययौ
१०५००३५१ मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः
१०५००३५३ विकीर्यमाणः कुसुमैस्त्रीदशैरनुमोदितः
१०५००३६१ माथुरैरुपसङ्गम्य विज्वरैर्मुदितात्मभिः
१०५००३६३ उपगीयमानविजयः सूतमागधवन्दिभिः

१०५००३७१ शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः
१०५००३७३ वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ
१०५००३८१ सिक्तमार्गां हृष्टजनां पताकाभिरभ्यलङ्कृताम्
१०५००३८३ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम्
१०५००३९१ निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः
१०५००३९३ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः
१०५००४०१ आयोधनगतं वित्तमनन्तं वीरभूषणम्
१०५००४०३ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः
१०५००४११ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः
१०५००४१३ युयुधे मागधो राजा यदुभिः कृष्णपालितैः
१०५००४२१ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा
१०५००४२३ हतेषु स्वेष्वनीकेषु त्यक्तोऽगादरिभिर्नृपः
१०५००४३१ अष्टादशम सङ्ग्राम आगामिनि तदन्तरा
१०५००४३३ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत
१०५००४४१ रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः
१०५००४४३ नृलोके चाप्रतिद्वन्द्वो वृष्णीन्श्रुत्वात्मसम्मितान्
१०५००४५१ तं दृष्ट्वाचिन्तयत्कृष्णः सङ्कर्षण सहायवान्
१०५००४५३ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत्
१०५००४६१ यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः
१०५००४६३ मागधोऽप्यद्य वा श्वो वा परश्वो वागमिष्यति
१०५००४७१ आवयोः युध्यतोरस्य यद्यागन्ता जरासुतः
१०५००४७३ बन्धून्हनिष्यत्यथ वा नेष्यते स्वपुरं बली
१०५००४८१ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम्
१०५००४८३ तत्र ज्ञातीन्समाधाय यवनं घातयामहे
१०५००४९१ इति सम्मन्त्र्य भगवान्दुर्गं द्वादशयोजनम्
१०५००४९३ अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत्
१०५००५०१ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम्
१०५००५०३ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम्
१०५००५११ सुरद्रुमलतोद्यान विचित्रोपवनान्वितम्
१०५००५१३ हेमशृङ्गैर्दिविस्पृग्भिः स्फटिकाट्टालगोपुरैः
१०५००५२१ राजतारकुटैः कोष्ठैर्हेमकुम्भैरलङ्कृतैः

१०५००५२३ रत्नकूतैर्गृहैर्हेमैर्महामारकतस्थलैः
१०५००५३१ वास्तोष्पतीनां च गृहैर्वल्लभीभिश्च निर्मितम्
१०५००५३३ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत्
१०५००५४१ सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः
१०५००५४३ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते
१०५००५५१ श्यामैकवर्णान्वरुणो हयान्शुक्लान्मनोजवान्
१०५००५५३ अष्टौ निधिपतिः कोशान्लोकपालो निजोदयान्
१०५००५६१ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये
१०५००५६३ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप
१०५००५७१ तत्र योगप्रभावेन नीत्वा सर्वजनं हरिः
१०५००५७३ प्रजापालेन रामेण कृष्णः समनुमन्त्रितः
१०५००५७५ निर्जगाम पुरद्वारात्पद्ममाली निरायुधः
१०५१००१० श्रीशुक उवाच
१०५१००११ तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम्
१०५१००१३ दर्शनीयतमं श्यामं पीतकौशेयवाससम्
१०५१००२१ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम्
१०५१००२३ पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम्
१०५१००३१ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम्
१०५१००३३ मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम्
१०५१००४१ वासुदेवो ह्ययमिति पुमान्श्रीवत्सलाञ्छनः
१०५१००४३ चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः
१०५१००५१ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति
१०५१००५३ निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः
१०५१००६१ इति निश्चित्य यवनः प्राद्रवद्तं पराङ्मुखम्
१०५१००६३ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम्
१०५१००७१ हस्तप्राप्तमिवात्मानं हरीणा स पदे पदे
१०५१००७३ नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम्
१०५१००८१ पलायनं यदुकुले जातस्य तव नोचितम्
१०५१००८३ इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः
१०५१००९१ एवं क्षिप्तोऽपि भगवान्प्राविशद्गिरिकन्दरम्
१०५१००९३ सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम्

१०५१०१०१ नन्वसौ दूरमानीय शेते मामिह साधुवत्
१०५१०१०३ इति मत्वाच्युतं मूढस्तं पदा समताडयत्
१०५१०१११ स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने
१०५१०११३ दिशो विलोकयन्पार्श्वे तमद्राक्षीदवस्थितम्
१०५१०१२१ स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत
१०५१०१२३ देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात्
१०५१०१३० श्रीराजोवाच
१०५१०१३१ को नाम स पुमान्ब्रह्मन्कस्य किंवीर्य एव च
१०५१०१३३ कस्माद्गुहां गतः शिष्ये किंतेजो यवनार्दनः
१०५१०१४० श्रीशुक उवाच
१०५१०१४१ स इक्ष्वाकुकुले जातो मान्धातृतनयो महान्
१०५१०१४३ मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः
१०५१०१५१ स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे
१०५१०१५३ असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम्
१०५१०१६१ लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन्
१०५१०१६३ राजन्विरमतां कृच्छ्राद्भवान्नः परिपालनात्
१०५१०१७१ नरलोकं परित्यज्य राज्यं निहतकण्टकम्
१०५१०१७३ अस्मान्पालयतो वीर कामास्ते सर्व उज्झिताः
१०५१०१८१ सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिनः
१०५१०१८३ प्रजाश्च तुल्यकालीना नाधुना सन्ति कालिताः
१०५१०१९१ कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः
१०५१०१९३ प्रजाः कालयते क्रीडन्पशुपालो यथा पशून्
१०५१०२०१ वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः
१०५१०२०३ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः
१०५१०२११ एवमुक्तः स वै देवानभिवन्द्य महायशाः
१०५१०२१३ अशयिष्ट गुहाविष्टो निद्रया देवदत्तया
१०५१०२२१ यवने भस्मसान्नीते भगवान्सात्वतर्षभः
१०५१०२२३ आत्मानं दर्शयामास मुचुकुन्दाय धीमते
१०५१०२३१ तमालोक्य घनश्यामं पीतकौशेयवाससम्
१०५१०२३३ श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम्
१०५१०२४१ चतुर्भुजं रोचमानं वैजयन्त्या च मालया

१०५१०२४३ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्
१०५१०२५१ प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम्
१०५१०२५३ अपीव्यवयसं मत्त मृगेन्द्रोदारविक्रमम्
१०५१०२६१ पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः
१०५१०२६३ शङ्कितः शनकै राजा दुर्धर्षमिव तेजसा
१०५१०२७० श्रीमुचुकुन्द उवाच
१०५१०२७१ को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे
१०५१०२७३ पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके
१०५१०२८१ किं स्वित्तेजस्विनां तेजो भगवान्वा विभावसुः
१०५१०२८३ सूर्यः सोमो महेन्द्रो वा लोकपालो परोऽपि वा
१०५१०२९१ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम्
१०५१०२९३ यद्बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा
१०५१०३०१ शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव
१०५१०३०३ स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते
१०५१०३११ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः
१०५१०३१३ मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो
१०५१०३२१ चिरप्रजागरश्रान्तो निद्रयापहतेन्द्रियः
१०५१०३२३ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना
१०५१०३३१ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना
१०५१०३३३ अनन्तरं भवाञ्श्रीमांल्लक्षितोऽमित्रशासनः
१०५१०३४१ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः
१०५१०३४३ हतौजसा महाभाग माननीयोऽसि देहिनाम्
१०५१०३५१ एवं सम्भाषितो राज्ञा भगवान्भूतभावनः
१०५१०३५३ प्रत्याह प्रहसन्वाण्या मेघनादगभीरया
१०५१०३६० श्रीभगवानुवाच
१०५१०३६१ जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः
१०५१०३६३ न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयापि हि
१०५१०३७१ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः
१०५१०३७३ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्
१०५१०३८१ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप
१०५१०३८३ अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः

१०५१०३९१ तथाप्यद्यतनान्यङ्ग श्रृनुष्व गदतो मम
१०५१०३९३ विज्ञापितो विरिञ्चेन पुराहं धर्मगुप्तये
१०५१०४०१ भूमेर्भारायमाणानामसुराणां क्षयाय च
१०५१०४०३ अवतीर्णो यदुकुले गृह आनकदुन्दुभेः
१०५१०४०५ वदन्ति वासुदेवेति वसुदेवसुतं हि माम्
१०५१०४११ कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः
१०५१०४१३ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा
१०५१०४२१ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः
१०५१०४२३ प्रार्थितः प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः
१०५१०४३१ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते
१०५१०४३३ मां प्रसन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम्
१०५१०४४० श्रीशुक उवाच
१०५१०४४१ इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः
१०५१०४४३ ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन्
१०५१०४५० श्रीमुचुकुन्द उवाच
१०५१०४५१ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक्
१०५१०४५३ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः
१०५१०४६१ लब्ध्वा जनो दुर्लभमत्र मानुषं
१०५१०४६२ कथञ्चिदव्यङ्गमयत्नतोऽनघ
१०५१०४६३ पादारविन्दं न भजत्यसन्मतिर्
१०५१०४६४ गृहान्धकूपे पतितो यथा पशुः
१०५१०४७१ ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः
१०५१०४७३ मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया
१०५१०४८१ कलेवरेऽस्मिन्घटकुड्यसन्निभे
१०५१०४८२ निरूढमानो नरदेव इत्यहम्
१०५१०४८३ वृतो रथेभाश्वपदात्यनीकपैर्
१०५१०४८४ गां पर्यटंस्त्वागणयन्सुदुर्मदः
१०५१०४९१ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्
१०५१०४९३ त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः
१०५१०५०१ पुरा रथैर्हेमपरिष्कृतैश्चरन्
१०५१०५०२ मतंगजैर्वा नरदेवसंज्ञितः

१०५१०५०३ स एव कालेन दुरत्ययेन ते
१०५१०५०४ कलेवरो विड्कृमिभस्मसंज्ञितः
१०५१०५११ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः
१०५१०५१३ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते
१०५१०५२१ करोति कर्माणि तपःसुनिष्ठितो निवृत्तभोगस्तदपेक्षयाददत्
१०५१०५२३ पुनश्च भूयासमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते
१०५१०५३१ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः
१०५१०५३३ सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः
१०५१०५४१ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया
१०५१०५४३ यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः
१०५१०५५१ न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो
१०५१०५५३ आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम्
१०५१०५६१ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः
१०५१०५६३ निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञाप्तिमात्रं पुरुषं व्रजाम्यहम्
१०५१०५७१ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैर्
१०५१०५७२ अवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित्
१०५१०५७३ शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
१०५१०५७४ अभयमृतमशोकं पाहि मापन्नमीश
१०५१०५८० श्रीभगवानुवाच
१०५१०५८१ सार्वभौम महाराज मतिस्ते विमलोर्जिता
१०५१०५८३ वरैः प्रलोभितस्यापि न कामैर्विहता यतः
१०५१०५९१ प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत्
१०५१०५९३ न धीरेकान्तभक्तानामाशीर्भिर्भिद्यते क्वचित्
१०५१०६०१ युञ्जानानामभक्तानां प्राणायामादिभिर्मनः
१०५१०६०३ अक्षीणवासनं राजन्दृश्यते पुनरुत्थितम्
१०५१०६११ विचरस्व महीं कामं मय्यावेशितमानसः
१०५१०६१३ अस्त्वेवं नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी
१०५१०६२१ क्षात्रधर्मस्थितो जन्तून्न्यवधीर्मृगयादिभिः
१०५१०६२३ समाहितस्तत्तपसा जह्यघं मदुपाश्रितः
१०५१०६३१ जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः
१०५१०६३३ भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम्

१०५२००१० श्रीशुक उवाच
१०५२००११ इत्थं सोऽनग्रहीतोऽन्ग कृष्णेनेक्ष्वाकु नन्दनः
१०५२००१३ तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात्
१०५२००२१ संवीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन्
१०५२००२३ मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम्
१०५२००३१ तपःश्रद्धायुतो धीरो निःसङ्गो मुक्तसंशयः
१०५२००३३ समाधाय मनः कृष्णे प्राविशद्गन्धमादनम्
१०५२००४१ बदर्याश्रममासाद्य नरनारायणालयम्
१०५२००४३ सर्वद्वन्द्वसहः शान्तस्तपसाराधयद्धरिम्
१०५२००५१ भगवान्पुनराव्रज्य पुरीं यवनवेष्टिताम्
१०५२००५३ हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम्
१०५२००६१ नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः
१०५२००६३ आजगाम जरासन्धस्त्रयोविंशत्यनीकपः
१०५२००७१ विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ
१०५२००७३ मनुष्यचेष्टामापन्नौ राजन्दुद्रुवतुर्द्रुतम्
१०५२००८१ विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत्
१०५२००८३ पद्भ्यां पलाशाभ्यां चेलतुर्बहुयोजनम्
१०५२००९१ पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली
१०५२००९३ अन्वधावद्रथानीकैरीशयोरप्रमाणवित्
१०५२०१०१ प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम्
१०५२०१०३ प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति
१०५२०१११ गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप
१०५२०११३ ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन्
१०५२०१२१ तत उत्पत्य तरसा दह्यमानतटादुभौ
१०५२०१२३ दशैकयोजनात्तुङ्गान्निपेततुरधो भुवि
१०५२०१३१ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ
१०५२०१३३ स्वपुरं पुनरायातौ समुद्रपरिखां नृप
१०५२०१४१ सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ
१०५२०१४३ बलमाकृष्य सुमहन्मगधान्मागधो ययौ
१०५२०१५१ आनर्ताधिपतिः श्रीमान्रैवतो रैवतीं सुताम्
१०५२०१५३ ब्रह्मणा चोदितः प्रादाद्बलायेति पुरोदितम्

१०५२०१६१ भगवानपि गोविन्द उपयेमे कुरूद्वह
१०५२०१६३ वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे
१०५२०१७१ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान्
१०५२०१७३ पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव
१०५२०१८० श्रीराजोवाच
१०५२०१८१ भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम्
१०५२०१८३ राक्षसेन विधानेन उपयेम इति श्रुतम्
१०५२०१९१ भगवन्श्रोतुमिच्छामि कृष्णस्यामिततेजसः
१०५२०१९३ यथा मागधशाल्वादीञ्जित्वा कन्यामुपाहरत्
१०५२०२०१ ब्रह्मन्कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः
१०५२०२०३ को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः
१०५२०२१० श्रीबादरायणिरुवाच
१०५२०२११ राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान्
१०५२०२१३ तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना
१०५२०२२१ रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः
१०५२०२२३ रुक्मकेशो रुक्ममाली रुक्मिण्येषा स्वसा सती
१०५२०२३१ सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः
१०५२०२३३ गृहागतैर्गीयमानास्तं मेने सदृशं पतिम्
१०५२०२४१ तां बुद्धिलक्षणौदार्य रूपशीलगुणाश्रयाम्
१०५२०२४३ कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे
१०५२०२५१ बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप
१०५२०२५३ ततो निवार्य कृष्णद्विड्रुक्मी चैद्यममन्यत
१०५२०२६१ तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम्
१०५२०२६३ विचिन्त्याप्तं द्विजं कञ्चित्कृष्णाय प्राहिणोद्द्रुतम्
१०५२०२७१ द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः
१०५२०२७३ अपश्यदाद्यं पुरुषमासीनं काञ्चनासने
१०५२०२८१ दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात्
१०५२०२८३ उपवेश्यार्हयां चक्रे यथात्मानं दिवौकसः
१०५२०२९१ तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः
१०५२०२९३ पाणिनाभिमृशन्पादावव्यग्रस्तमपृच्छत
१०५२०३०१ कच्चिद्द्विजवरश्रेष्ठ धर्मस्ते वृद्धसम्मतः

१०५२०३०३ वर्तते नातिकृच्छ्रेण सन्तुष्टमनसः सदा
१०५२०३११ सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित्
१०५२०३१३ अहीयमानः स्वद्धर्मात्स ह्यस्याखिलकामधुक्
१०५२०३२१ असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः
१०५२०३२३ अकिञ्चनोऽपि सन्तुष्टः शेते सर्वाङ्गविज्वरः
१०५२०३३१ विप्रान्स्वलाभसन्तुष्टान्साधून्भूतसुहृत्तमान्
१०५२०३३३ निरहङ्कारिणः शान्तान्नमस्ये शिरसासकृत्
१०५२०३४१ कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः
१०५२०३४३ सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः
१०५२०३५१ यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया
१०५२०३५३ सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते
१०५२०३६१ एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना
१०५२०३६३ लीलागृहीतदेहेन तस्मै सर्वमवर्णयत्
१०५२०३७० श्रीरुक्मिण्युवाच
१०५२०३७१ श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते
१०५२०३७२ निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्
१०५२०३७३ रूपं दृशां दृशिमतामखिलार्थलाभं
१०५२०३७४ त्वय्यच्युताविशति चित्तमपत्रपं मे
१०५२०३८१ का त्वा मुकुन्द महती कुलशीलरूप
१०५२०३८२ विद्यावयोद्रविणधामभिरात्मतुल्यम्
१०५२०३८३ धीरा पतिं कुलवती न वृणीत कन्या
१०५२०३८४ काले नृसिंह नरलोकमनोऽभिरामम्
१०५२०३९१ तन्मे भवान्खलु वृतः पतिरङ्ग जायाम्
१०५२०३९२ आत्मार्पितश्च भवतोऽत्र विभो विधेहि
१०५२०३९३ मा वीरभागमभिमर्शतु चैद्य आराद्
१०५२०३९४ गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष
१०५२०४०१ पूर्तेष्टदत्तनियमव्रतदेवविप्र
१०५२०४०२ गुर्वर्चनादिभिरलं भगवान्परेशः
१०५२०४०३ आराधितो यदि गदाग्रज एत्य पाणिं
१०५२०४०४ गृह्णातु मे न दमघोषसुतादयोऽन्ये
१०५२०४११ श्वो भाविनि त्वमजितोद्वहने विदर्भान्

१०५२०४१२ गुप्तः समेत्य पृतनापतिभिः परीतः
१०५२०४१३ निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य
१०५२०४१४ मां राक्षसेन विधिनोद्वह वीर्यशुल्काम्
१०५२०४२१ अन्तःपुरान्तरचरीमनिहत्य बन्धून्
१०५२०४२२ त्वामुद्वहे कथमिति प्रवदाम्युपायम्
१०५२०४२३ पूर्वेद्युरस्ति महती कुलदेवयात्रा
१०५२०४२४ यस्यां बहिर्नववधूर्गिरिजामुपेयात्
१०५२०४३१ यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
१०५२०४३२ वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै
१०५२०४३३ यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
१०५२०४३४ जह्यामसून्व्रतकृशान्शतजन्मभिः स्यात्
१०५२०४४० ब्राह्मण उवाच
१०५२०४४१ इत्येते गुह्यसन्देशा यदुदेव मयाहृताः
१०५२०४४३ विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम्
१०५३००१० श्रीशुक उवाच
१०५३००११ वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः
१०५३००१३ प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत्
१०५३००२० श्रीभगवानुवाच
१०५३००२१ तथाहमपि तच्चित्तो निद्रां च न लभे निशि
१०५३००२३ वेदाहम्रुक्मिणा द्वेषान्ममोद्वाहो निवारितः
१०५३००३१ तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे
१०५३००३३ मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव
१०५३००४० श्रीशुक उवाच
१०५३००४१ उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः
१०५३००४३ रथः संयुज्यतामाशु दारुकेत्याह सारथिम्
१०५३००५१ स चाश्वैः शैब्यसुग्रीव मेघपुष्पबलाहकैः
१०५३००५३ युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः
१०५३००६१ आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः
१०५३००६३ आनर्तादेकरात्रेण विदर्भानगमद्धयैः
१०५३००७१ राजा स कुण्डिनपतिः पुत्रस्नेहवशानुगः
१०५३००७३ शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत्

१०५३००८१ पुरं सम्मृष्टसंसिक्त मार्गरथ्याचतुष्पथम्
१०५३००८३ चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम्
१०५३००९१ स्रग्गन्धमाल्याभरणैर्विरजोऽम्बरभूषितैः
१०५३००९३ जुष्टं स्त्रीपुरुषैः श्रीमद् गृहैरगुरुधूपितैः
१०५३०१०१ पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप
१०५३०१०३ भोजयित्वा यथान्यायं वाचयामास मङ्गलम्
१०५३०१११ सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम्
१०५३०११३ आहतांशुकयुग्मेन भूषितां भूषणोत्तमैः
१०५३०१२१ चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः
१०५३०१२३ पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये
१०५३०१३१ हिरण्यरूप्य वासांसि तिलांश्च गुडमिश्रितान्
१०५३०१३३ प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः
१०५३०१४१ एवं चेदिपती राजा दमघोषः सुताय वै
१०५३०१४३ कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम्
१०५३०१५१ मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः
१०५३०१५३ पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्दीनं ययौ
१०५३०१६१ तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च
१०५३०१६३ निवेशयामास मुदा कल्पितान्यनिवेशने
१०५३०१७१ तत्र शाल्वो जरासन्धो दन्तवक्रो विदूरथः
१०५३०१७३ आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः
१०५३०१८१ कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम्
१०५३०१८३ यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः
१०५३०१९१ योत्स्यामः संहतास्तेन इति निश्चितमानसाः
१०५३०१९३ आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः
१०५३०२०१ श्रुत्वैतद्भगवान्रामो विपक्षीय नृपोद्यमम्
१०५३०२०३ कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः
१०५३०२११ बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः
१०५३०२१३ त्वरितः कुण्डिनं प्रागाद्गजाश्वरथपत्तिभिः
१०५३०२२१ भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः
१०५३०२२३ प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा
१०५३०२३१ अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः

१०५३०२३३ नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम्
१०५३०२३५ सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः
१०५३०२४१ अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम्
१०५३०२४३ मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः
१०५३०२५१ दुर्भगाया न मे धाता नानुकूलो महेश्वरः
१०५३०२५३ देवी वा विमुखी गौरी रुद्राणी गिरिजा सती
१०५३०२६१ एवं चिन्तयती बाला गोविन्दहृतमानसा
१०५३०२६३ न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले
१०५३०२७१ एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप
१०५३०२७३ वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः
१०५३०२८१ अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः
१०५३०२८३ अन्तःपुरचरीं देवीं राजपुत्रीम्ददर्श ह
१०५३०२९१ सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती
१०५३०२९३ आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता
१०५३०३०१ तस्या आवेदयत्प्राप्तं शशंस यदुनन्दनम्
१०५३०३०३ उक्तं च सत्यवचनमात्मोपनयनं प्रति
१०५३०३११ तमागतं समाज्ञाय वैदर्भी हृष्टमानसा
१०५३०३१३ न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा
१०५३०३२१ प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ
१०५३०३२३ अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः
१०५३०३३१ मधुपर्कमुपानीय वासांसि विरजांसि सः
१०५३०३३३ उपायनान्यभीष्टानि विधिवत्समपूजयत्
१०५३०३४१ तयोर्निवेशनं श्रीमदुपाकल्प्य महामतिः
१०५३०३४३ ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा
१०५३०३५१ एवं राज्ञां समेतानां यथावीर्यं यथावयः
१०५३०३५३ यथाबलं यथावित्तं सर्वैः कामैः समर्हयत्
१०५३०३६१ कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः
१०५३०३६३ आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम्
१०५३०३७१ अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा
१०५३०३७३ असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः
१०५३०३८१ किञ्चित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत्

१०५३०३८३ अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः
१०५३०३९१ एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः
१०५३०३९३ कन्या चान्तःपुरात्प्रागाद्भटैर्गुप्ताम्बिकालयम्
१०५३०४०१ पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम्
१०५३०४०३ सा चानुध्यायती सम्यङ्मुकुन्दचरणाम्बुजम्
१०५३०४११ यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता
१०५३०४१३ गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः
१०५३०४१५ मृडङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे
१०५३०४२१ नानोपहार बलिभिर्वारमुख्याः सहस्रशः
१०५३०४२३ स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः
१०५३०४३१ गायन्त्यश्च स्तुवन्तश्च गायका वाद्यवादकाः
१०५३०४३३ परिवार्य वधूं जग्मुः सूतमागधवन्दिनः
१०५३०४४१ आसाद्य देवीसदनं धौतपादकराम्बुजा
१०५३०४४३ उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम्
१०५३०४५१ तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः
१०५३०४५३ भवानीं वन्दयां चक्रुर्भवपत्नीं भवान्विताम्
१०५३०४६१ नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम्
१०५३०४६३ भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम्
१०५३०४७१ अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्य भूषणैः
१०५३०४७३ नानोपहारबलिभिः प्रदीपावलिभिः पृथक्
१०५३०४८१ विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत्
१०५३०४८३ लवणापूपताम्बूल कण्ठसूत्रफलेक्षुभिः
१०५३०४९१ तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः
१०५३०४९३ ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः
१०५३०५०१ मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात्
१०५३०५०३ प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना
१०५३०५११ तां देवमायामिव धीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम्
१०५३०५१३ श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम्
१०५३०५२१ शुचिस्मितां बिम्बफलाधरद्युति शोणायमानद्विजकुन्दकुड्मलाम्
१०५३०५२३ पदा चलन्तीं कलहंसगामिनीं सिञ्जत्कलानूपुरधामशोभिना
१०५३०५३१ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः

१०५३०५३३ यां वीक्ष्य ते नृपतयस्तदुदारहास व्रीदावलोकहृतचेतस उज्झितास्त्राः
१०५३०५४१ पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम्
१०५३०५४३ सैवं शनैश्चलयती चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा
१०५३०५५१ उत्सार्य वामकरजैरलकानपङ्गैः प्राप्तान्ह्रियैक्षत नृपान्ददृशेऽच्युतं च
१०५३०५५३ तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम्
१०५३०५६१ रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः
१०५३०५६३ ततो ययौ रामपुरोगमः शनैः शृगालमध्यादिव भागहृद्धरिः
१०५३०५७१ तं मानिनः स्वाभिभवं यशःक्षयं
१०५३०५७२ परे जरासन्धमुखा न सेहिरे
१०५३०५७३ अहो धिगस्मान्यश आत्तधन्वनां
१०५३०५७४ गोपैर्हृतं केशरिणां मृगैरिव
१०५४००१० श्रीशुक उवाच
१०५४००११ इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः
१०५४००१३ स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः
१०५४००२१ तानापतत आलोक्य यादवानीकयूथपाः
१०५४००२३ तस्थुस्तत्सम्मुखा राजन्विस्फूर्ज्य स्वधनूंषि ते
१०५४००३१ अश्वपृष्ठे गजस्कन्धे रथोपस्थेऽस्त्र कोविदाः
१०५४००३३ मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा
१०५४००४१ पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा
१०५४००४३ सव्रीडैक्षत्तद्वक्त्रं भयविह्वललोचना
१०५४००५१ प्रहस्य भगवानाह मा स्म भैर्वामलोचने
१०५४००५३ विनङ्क्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम्
१०५४००६१ तेषां तद्विक्रमं वीरा गदसङ्कर्षनादयः
१०५४००६३ अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान्
१०५४००७१ पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि
१०५४००७३ सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः
१०५४००८१ हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः
१०५४००८३ अश्वाश्वतरनागोष्ट्र खरमर्त्यशिरांसि च
१०५४००९१ हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः
१०५४००९३ राजानो विमुखा जग्मुर्जरासन्धपुरःसराः
१०५४०१०१ शिशुपालं समभ्येत्य हृतदारमिवातुरम्

१०५४०१०३ नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन्
१०५४०१११ भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज
१०५४०११३ न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते
१०५४०१२१ यथा दारुमयी योषिन्नृत्यते कुहकेच्छया
१०५४०१२३ एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः
१०५४०१३१ शौरेः सप्तदशाहं वै संयुगानि पराजितः
१०५४०१३३ त्रयोविंशतिभिः सैन्यैर्जिग्ये एकमहं परम्
१०५४०१४१ तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित्
१०५४०१४३ कालेन दैवयुक्तेन जानन्विद्रावितं जगत्
१०५४०१५१ अधुनापि वयं सर्वे वीरयूथपयूथपाः
१०५४०१५३ पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः
१०५४०१६१ रिपवो जिग्युरधुना काल आत्मानुसारिणि
१०५४०१६३ तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः
१०५४०१७० श्रीशुक उवाच
१०५४०१७१ एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम्
१०५४०१७३ हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः
१०५४०१८१ रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः
१०५४०१८३ पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्या वृतो बली
१०५४०१९१ रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम्
१०५४०१९३ प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः
१०५४०२०१ अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम्
१०५४०२०३ कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः
१०५४०२११ इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः
१०५४०२१३ चोदयाश्वान्यतः कृष्णः तस्य मे संयुगं भवेत्
१०५४०२२१ अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः
१०५४०२२३ नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता
१०५४०२३१ विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित्
१०५४०२३३ रथेनैकेन गोविन्दं तिष्ठ तिष्ठेत्यथाह्वयत्
१०५४०२४१ धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः
१०५४०२४३ आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन
१०५४०२५१ यत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः

१०५४०२५३ हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः

१०५४०२६१ यावन्न मे हतो बाणैः शयीथा मुञ्च दारीकाम्

१०५४०२६३ स्मयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम्

१०५४०२७१ अष्टभिश्चतुरो वाहान्द्वाभ्यां सूतं ध्वजं त्रिभिः

१०५४०२७३ स चान्यद्धनुराधाय कृष्णं विव्याध पञ्चभिः

१०५४०२८१ तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः

१०५४०२८३ पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः

१०५४०२९१ परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ

१०५४०२९३ यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः

१०५४०३०१ ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया

१०५४०३०३ कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम्

१०५४०३११ तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः

१०५४०३१३ छित्त्वासिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः

१०५४०३२१ दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला

१०५४०३२३ पतित्वा पादयोर्भर्तुरुवाच करुणं सती

१०५४०३३० श्रीरुक्मिण्युवाच

१०५४०३३१ योगेश्वराप्रमेयात्मन्देवदेव जगत्पते

१०५४०३३३ हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज

१०५४०३४० श्रीशुक उवाच

१०५४०३४१ तया परित्रासविकम्पिताङ्गया शुचावशुष्यन्मुखरुद्धकण्ठया

१०५४०३४३ कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत

१०५४०३५१ चैलेन बद्ध्वा तमसाधुकारीणं सश्मश्रुकेशं प्रवपन्व्यरूपयत्

१०५४०३५३ तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः

१०५४०३६१ कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम्

१०५४०३६३ तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः

१०५४०३६५ विमुच्य बद्धं करुणो भगवान्कृष्णमब्रवीत्

१०५४०३७१ असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम्

१०५४०३७३ वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः

१०५४०३८१ मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया

१०५४०३८३ सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक्पुमान्

१०५४०३९१ बन्धुर्वधार्हदोषोऽपि न बन्धोर्वधमर्हति

१०५४०३९३ त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः
१०५४०४०१ क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः
१०५४०४०३ भ्रातापि भ्रातरं हन्याद्येन घोरतमस्ततः
१०५४०४११ राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः
१०५४०४१३ मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि
१०५४०४२१ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम्
१०५४०४२३ यन्मन्यसे सदाभद्रं सुहृदां भद्रमज्ञवत्
१०५४०४३१ आत्ममोहो नृणामेव कल्पते देवमायया
१०५४०४३३ सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम्
१०५४०४४१ एक एव परो ह्यात्मा सर्वेषामपि देहिनाम्
१०५४०४४३ नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः
१०५४०४५१ देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः
१०५४०४५३ आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम्
१०५४०४६१ नात्मनोऽन्येन संयोगो वियोगश्चसतः सति
१०५४०४६३ तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः
१०५४०४७१ जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित्
१०५४०४७३ कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव
१०५४०४८१ यथा शयान आत्मानं विषयान्फलमेव च
१०५४०४८३ अनुभुङ्क्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवम्
१०५४०४९१ तस्मादज्ञानजं शोकमात्मशोषविमोहनम्
१०५४०४९३ तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते
१०५४०५०० श्रीशुक उवाच
१०५४०५०१ एवं भगवता तन्वी रामेण प्रतिबोधिता
१०५४०५०३ वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे
१०५४०५११ प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः
१०५४०५१३ स्मरन्विरूपकरणं वितथात्ममनोरथः
१०५४०५१५ चक्रे भोजकटं नाम निवासाय महत्पुरम्
१०५४०५२१ अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम्
१०५४०५२३ कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा
१०५४०५३१ भगवान्भीष्मकसुतामेवं निर्जित्य भूमिपान्
१०५४०५३३ पुरमानीय विधिवदुपयेमे कुरूद्वह

१०५४०५४१ तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे
१०५४०५४३ अभूदनन्यभावानां कृष्णे यदुपतौ नृप
१०५४०५५१ नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः
१०५४०५५३ पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः
१०५४०५६१ सा वृष्णिपुर्युत्तम्भितेन्द्रकेतुभिर्
१०५४०५६२ विचित्रमाल्याम्बररत्नतोरणैः
१०५४०५६३ बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैर्
१०५४०५६४ आपूर्णकुम्भागुरुधूपदीपकैः
१०५४०५७१ सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम्
१०५४०५७३ गजैर्द्वाःसु परामृष्ट रम्भापूगोपशोभिता
१०५४०५८१ कुरुसृञ्जयकैकेय विदर्भयदुकुन्तयः
१०५४०५८३ मिथो मुमुदिरे तस्मिन्सम्भ्रमात्परिधावताम्
१०५४०५९१ रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः
१०५४०५९३ राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः
१०५४०६०१ द्वारकायामभूद्राजन्महामोदः पुरौकसाम्
१०५४०६०३ रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम्
१०५५००१० श्रीशुक उवाच
१०५५००११ कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना
१०५५००१३ देहोपपत्तये भूयस्तमेव प्रत्यपद्यत
१०५५००२१ स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः
१०५५००२३ प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः
१०५५००३१ तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम्
१०५५००३३ स विदित्वात्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम्
१०५५००४१ तं निर्जगार बलवान्मीनः सोऽप्यपरैः सह
१०५५००४३ वृतो जालेन महता गृहीतो मत्स्यजीविभिः
१०५५००५१ तं शम्बराय कैवर्ता उपाजह्रुरुपायनम्
१०५५००५३ सूदा महानसं नीत्वा वद्यन्सुधितिनाद्भुतम्
१०५५००६१ दृष्ट्वा तदुदरे बालम्मायावत्यै न्यवेदयन्
१०५५००६३ नारदोऽकथयत्सर्वं तस्याः शङ्कितचेतसः
१०५५००६५ बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम्
१०५५००७१ सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी

१०५५००७३ पत्युर्निर्दग्धदेहस्य देहोत्पत्तिम्प्रतीक्षती
१०५५००८१ निरूपिता शम्बरेण सा सूदौदनसाधने
१०५५००८३ कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदार्भके
१०५५००९१ नातिदीर्घेण कालेन स कार्ष्णि रूढयौवनः
१०५५००९३ जनयामास नारीणां वीक्षन्तीनां च विभ्रमम्
१०५५०१०१ सा तम्पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम्
१०५५०१०३ सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग सौरतैः
१०५५०१११ तामह भगवान्कार्ष्णिर्मातस्ते मतिरन्यथा
१०५५०११३ मातृभावमतिक्रम्य वर्तसे कामिनी यथा
१०५५०१२० रतिरुवाच
१०५५०१२१ भवान्नारायणसुतः शम्बरेण हृतो गृहात्
१०५५०१२३ अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो
१०५५०१३१ एष त्वानिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः
१०५५०१३३ मत्स्योऽग्रसीत्तदुदरादितः प्राप्तो भवान्प्रभो
१०५५०१४१ तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः
१०५५०१४३ मायाशतविदं तं च मायाभिर्मोहनादिभिः
१०५५०१५१ परीशोचति ते माता कुररीव गतप्रजा
१०५५०१५३ पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा
१०५५०१६१ प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने
१०५५०१६३ मायावती महामायां सर्वमायाविनाशिनीम्
१०५५०१७१ स च शम्बरमभ्येत्य संयुगाय समाह्वयत्
१०५५०१७३ अविषह्यैस्तमाक्षेपैः क्षिपन्सञ्जनयन्कलिम्
१०५५०१८१ सोऽधिक्षिप्तो दुर्वाचोभिः पदाहत इवोरगः
१०५५०१८३ निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः
१०५५०१९१ गदामाविध्य तरसा प्रद्युम्नाय महात्मने
१०५५०१९३ प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम्
१०५५०२०१ तामापतन्तीं भगवान्प्रद्युम्नो गदया गदाम्
१०५५०२०३ अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप
१०५५०२११ स च मायां समाश्रित्य दैतेयीं मयदर्शितम्
१०५५०२१३ मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः
१०५५०२२१ बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः

१०५५०२२३ सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम्
१०५५०२३१ ततो गौह्यकगान्धर्व पैशाचोरगराक्षसीः
१०५५०२३३ प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः
१०५५०२४१ निशातमसिमुद्यम्य सकिरीटं सकुण्डलम्
१०५५०२४३ शम्बरस्य शिरः कायात्ताम्रश्मश्र्वोजसाहरत्
१०५५०२५१ आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः
१०५५०२५३ भार्ययाम्बरचारिण्या पुरं नीतो विहायसा
१०५५०२६१ अन्तःपुरवरं राजन्ललनाशतसङ्कुलम्
१०५५०२६३ विवेश पत्न्या गगनाद्विद्युतेव बलाहकः
१०५५०२७१ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्
१०५५०२७३ प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम्
१०५५०२८१ स्वलङ्कृतमुखाम्भोजं नीलवक्रालकालिभिः
१०५५०२८३ कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह
१०५५०२९१ अवधार्य शनैरीषद्वैलक्षण्येन योषितः
१०५५०२९३ उपजग्मुः प्रमुदिताः सस्त्री रत्नं सुविस्मिताः
१०५५०३०१ अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी
१०५५०३०३ अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा
१०५५०३११ को न्वयम्नरवैदूर्यः कस्य वा कमलेक्षणः
१०५५०३१३ धृतः कया वा जठरे केयं लब्धा त्वनेन वा
१०५५०३२१ मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात्
१०५५०३२३ एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित्
१०५५०३३१ कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः
१०५५०३३३ आकृत्यावयवैर्गत्या स्वरहासावलोकनैः
१०५५०३४१ स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः
१०५५०३४३ अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः
१०५५०३५१ एवं मीमांसमणायां वैदर्भ्यां देवकीसुतः
१०५५०३५३ देवक्यानकदुन्दुभ्यामुत्तमःश्लोक आगमत्
१०५५०३६१ विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः
१०५५०३६३ नारदोऽकथयत्सर्वं शम्बराहरणादिकम्
१०५५०३७१ तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः
१०५५०३७३ अभ्यनन्दन्बहूनब्दान्नष्टं मृतमिवागतम्

१०५५०३८१ देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः
१०५५०३८३ दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम्
१०५५०३९१ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः
१०५५०३९३ अहो मृत इवायातो बालो दिष्ट्येति हाब्रुवन्
१०५५०४०१ यं वै मुहुः पितृसरूपनिजेशभावास्
१०५५०४०२ तन्मातरो यदभजन्रहरूढभावाः
१०५५०४०३ चित्रं न तत्खलु रमास्पदबिम्बबिम्बे
१०५५०४०४ कामे स्मरेऽक्षविषये किमुतान्यनार्यः
१०५६००१० श्रीशुक उवाच
१०५६००११ सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः
१०५६००१३ स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान्
१०५६००२० श्रीराजोवाच
१०५६००२१ सत्राजितः किमकरोद्ब्रह्मन्कृष्णस्य किल्बिषः
१०५६००२३ स्यमन्तकः कुतस्तस्य कस्माद्दत्ता सुता हरेः
१०५६००३० श्रीशुक उवाच
१०५६००३१ आसीत्सत्राजितः सूर्यो भक्तस्य परमः सखा
१०५६००३३ प्रीतस्तस्मै मणिं प्रादात्स च तुष्टः स्यमन्तकम्
१०५६००४१ स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः
१०५६००४३ प्रविष्टो द्वारकां राजन्तेजसा नोपलक्षितः
१०५६००५१ तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः
१०५६००५३ दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः
१०५६००६१ नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर
१०५६००६३ दामोदरारविन्दाक्ष गोविन्द यदुनन्दन
१०५६००७१ एष आयाति सविता त्वां दिदृक्षुर्जगत्पते
१०५६००७३ मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः
१०५६००८१ नन्वन्विच्छन्ति ते मार्गं त्रीलोक्यां विबुधर्षभाः
१०५६००८३ ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो
१०५६००९० श्रीशुक उवाच
१०५६००९१ निशम्य बालवचनं प्रहस्याम्बुजलोचनः
१०५६००९३ प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन्
१०५६०१०१ सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम्

१०५६०१०३ प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत्
१०५६०१११ दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो
१०५६०११३ दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः
१०५६०११५ न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः
१०५६०१२१ स याचितो मणिं क्वापि यदुराजाय शौरिणा
१०५६०१२३ नैवार्थकामुकः प्रादाद्याञ्चाभङ्गमतर्कयन्
१०५६०१३१ तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम्
१०५६०१३३ प्रसेनो हयमारुह्य मृगायां व्यचरद्वने
१०५६०१४१ प्रसेनं सहयं हत्वा मणिमाच्छिद्य केशरी
१०५६०१४३ गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता
१०५६०१५१ सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले
१०५६०१५३ अपश्यन्भ्रातरं भ्राता सत्राजित्पर्यतप्यत
१०५६०१६१ प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः
१०५६०१६३ भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः
१०५६०१७१ भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि
१०५६०१७३ मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः
१०५६०१८१ हतं प्रसेनं अश्वं च वीक्ष्य केशरिणा वने
१०५६०१८३ तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः
१०५६०१९१ ऋक्षराजबिलं भीममन्धेन तमसावृतम्
१०५६०१९३ एको विवेश भगवानवस्थाप्य बहिः प्रजाः
१०५६०२०१ तत्र दृष्ट्वा मणिप्रेष्ठं बालक्रीडनकं कृतम्
१०५६०२०३ हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके
१०५६०२११ तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत्
१०५६०२१३ तच्छ्रुत्वाभ्यद्रवत्क्रुद्धो जाम्बवान्बलिनां वरः
१०५६०२२१ स वै भगवता तेन युयुधे स्वामीनात्मनः
१०५६०२२३ पुरुषम्प्राकृतं मत्वा कुपितो नानुभाववित्
१०५६०२३१ द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः
१०५६०२३३ आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव
१०५६०२४१ आसीत्तदष्टाविम्शाहमितरेतरमुष्टिभिः
१०५६०२४३ वज्रनिष्पेषपरुषैरविश्रममहर्निशम्
१०५६०२५१ कृष्णमुष्टिविनिष्पात निष्पिष्टाङ्गोरु बन्धनः

१०५६०२५३ क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः
१०५६०२६१ जाने त्वां सऋवभूतानां प्राण ओजः सहो बलम्
१०५६०२६३ विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम्
१०५६०२७१ त्वं हि विश्वसृजाम्स्रष्टा सृष्टानामपि यच्च सत्
१०५६०२७३ कालः कलयतामीशः पर आत्मा तथात्मनाम्
१०५६०२८१ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्
१०५६०२८२ वर्त्मादिशत्क्षुभितनक्रतिमिङ्गलोऽब्धिः
१०५६०२८३ सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का
१०५६०२८४ रक्षःशिरांसि भुवि पेतुरिषुक्षतानि
१०५६०२९१ इति विज्ञातवीज्ञानमृक्षराजानमच्युतः
१०५६०२९३ व्याजहार महाराज भगवान्देवकीसुतः
१०५६०३०१ अभिमृश्यारविन्दाक्षः पाणिना शंकरेण तम्
१०५६०३०३ कृपया परया भक्तं मेघगम्भीरया गिरा
१०५६०३११ मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम्
१०५६०३१३ मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना
१०५६०३२१ इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा
१०५६०३२३ अर्हणार्थम्स मणिना कृष्णायोपजहार ह
१०५६०३३१ अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः
१०५६०३३३ प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः
१०५६०३४१ निशम्य देवकी देवी रक्मिण्यानकदुन्दुभिः
१०५६०३४३ सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम्
१०५६०३५१ सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः
१०५६०३५३ उपतस्थुश्चन्द्रभागां दुर्गां कृष्णोपलब्धये
१०५६०३६१ तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषा स च
१०५६०३६३ प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः
१०५६०३७१ उपलभ्य हृषीकेशं मृतं पुनरिवागतम्
१०५६०३७३ सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः
१०५६०३८१ सत्राजितं समाहूय सभायां राजसन्निधौ
१०५६०३८३ प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत्
१०५६०३९१ स चातिव्रीडितो रत्नं गृहीत्वावाङ्मुखस्ततः
१०५६०३९३ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना

१०५६०४०१ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः
१०५६०४०३ कथं मृजाम्यात्मरजः प्रसीदेद्वाच्युतः कथम्
१०५६०४११ किम्कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा
१०५६०४१३ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम्
१०५६०४२१ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च
१०५६०४२३ उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा
१०५६०४३१ एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम्
१०५६०४३३ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह
१०५६०४४१ तां सत्यभामां भगवानुपयेमे यथाविधि
१०५६०४४३ बहुभिर्याचितां शील रूपौदार्यगुणान्विताम्
१०५६०४५१ भगवानाह न मणिं प्रतीच्छामो वयं नृप
१०५६०४५३ तवास्तां देवभक्तस्य वयं च फलभागिनः
१०५७००१० श्रीबादरायणिरुवाच
१०५७००११ विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान्
१०५७००१३ कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून्
१०५७००२१ भीष्मं कृपं स विदुरं गान्धारीं द्रोणमेव च
१०५७००२३ तुल्यदुःखौ च सङ्गम्य हा कष्टमिति होचतुः
१०५७००३१ लब्ध्वैतदन्तरं राजन्शतधन्वानमूचतुः
१०५७००३३ अक्रूरकृतवर्माणौ मनिः कस्मान्न गृह्यते
१०५७००४१ योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः
१०५७००४३ कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात्
१०५७००५१ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः
१०५७००५३ शयानमवधील्लोभात्स पापः क्षीण जीवितः
१०५७००६१ स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत्
१०५७००६३ हत्वा पशून्सौनिकवन्मणिमादाय जग्मिवान्
१०५७००७१ सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता
१०५७००७३ व्यलपत्तात तातेति हा हतास्मीति मुह्यती
१०५७००८१ तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम्
१०५७००८३ कृष्णाय विदितार्थाय तप्ताचख्यौ पितुर्वधम्
१०५७००९१ तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम्
१०५७००९३ अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः

१०५७०१०१ आगत्य भगवांस्तस्मात्सभार्यः साग्रजः पुरम्
१०५७०१०३ शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः
१०५७०१११ सोऽपि कृतोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया
१०५७०११३ साहाय्ये कृतवर्माणमयाचत स चाब्रवीत्
१०५७०१२१ नाहमीस्वरयोः कुर्यां हेलनं रामकृष्णयोः
१०५७०१२३ को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन्
१०५७०१३१ कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया
१०५७०१३३ जरासन्धः सप्तदश संयुगाद्विरथो गतः
१०५७०१४१ प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत
१०५७०१४३ सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम्
१०५७०१५१ य इदं लीलया विश्वं सृजत्यवति हन्ति च
१०५७०१५३ चेष्टां विश्वसृजो यस्य न विदुर्मोहिताजया
१०५७०१६१ यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना
१०५७०१६३ दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः
१०५७०१७१ नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे
१०५७०१७३ अनन्तायादिभूताय कूटस्थायात्मने नमः
१०५७०१८१ प्रत्याख्यातः स तेनापि शतधन्वा महामणिम्
१०५७०१८३ तस्मिन्न्यस्याश्वमारुह्य शतयोजनगं ययौ
१०५७०१९१ गरुडध्वजमारुह्य रथं रामजनार्दनौ
१०५७०१९३ अन्वयातां महावेगैरश्वै राजन्गुरुद्रुहम्
१०५७०२०१ मिथिलायामुपवने विसृज्य पतितं हयम्
१०५७०२०३ पद्भ्यामधावत्सन्त्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा
१०५७०२११ पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना
१०५७०२१३ चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम्
१०५७०२२१ अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम्
१०५७०२२३ वृथा हतः शतधनुर्मणिस्तत्र न विद्यते
१०५७०२३१ तत आह बलो नूनं स मणिः शतधन्वना
१०५७०२३३ कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज
१०५७०२४१ अहं वैदेहमिच्छामि द्रष्टुं प्रियतमं मम
१०५७०२४३ इत्युक्त्वा मिथिलां राजन्विवेश यदनन्दनः
१०५७०२५१ तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः

१०५७०२५३ अर्हयां आस विधिवदर्हणीयं समर्हणैः
१०५७०२६१ उवास तस्यां कतिचिन्मिथिलायां समा विभुः
१०५७०२६३ मानितः प्रीतियुक्तेन जनकेन महात्मना
१०५७०२६५ ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः
१०५७०२७१ केशवो द्वारकामेत्य निधनं शतधन्वनः
१०५७०२७३ अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः
१०५७०२८१ ततः स कारयामास क्रिया बन्धोर्हतस्य वै
१०५७०२८३ साकं सुहृद्भिर्भगवान्या याः स्युः साम्परायिकीः
१०५७०२९१ अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम्
१०५७०२९३ व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ
१०५७०३०१ अक्रूरे प्रोषितेऽरिष्टान्यासन्वै द्वारकौकसाम्
१०५७०३०३ शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः
१०५७०३११ इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम्
१०५७०३१३ मुनिवासनिवासे किं घटेतारिष्टदर्शनम्
१०५७०३२१ देवेऽवर्षति काशीशः श्वफल्कायागताय वै
१०५७०३२३ स्वसुतां गान्दिनीं प्रादात्ततोऽवर्षत्स्म काशिषु
१०५७०३३१ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह
१०५७०३३३ देवोऽभिवर्षते तत्र नोपतापा न मारीकाः
१०५७०३४१ इति वृद्धवचः श्रुत्वा नैतावदिह कारणम्
१०५७०३४३ इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः
१०५७०३५१ पूजयित्वाभिभाष्यैनं कथयित्वा प्रियाः कथाः
१०५७०३५३ विज्ञताखिलचित्त ज्ञः स्मयमान उवाच ह
१०५७०३६१ ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना
१०५७०३६३ स्यमन्तको मनिः श्रीमान्विदितः पूर्वमेव नः
१०५७०३७१ सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः
१०५७०३७३ दायं निनीयापः पिण्डान्विमुच्यर्णं च शेषितम्
१०५७०३८१ तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः
१०५७०३८३ किन्तु मामग्रजः सम्यङ्ग प्रत्येति मणिं प्रति
१०५७०३९१ दर्शयस्व महाभाग बन्धूनां शान्तिमावह
१०५७०३९३ अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः
१०५७०४०१ एवं सामभिरालब्धः श्वफल्कतनयो मणिम्

१०५७०४०३ आदाय वाससाच्छन्नः ददौ सूर्यसमप्रभम्
१०५७०४११ स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः
१०५७०४१३ विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः
१०५७०४२१ यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्
१०५७०४२२ वीर्याढ्यं वृजिनहरं सुमङ्गलं च
१०५७०४२३ आख्यानं पठति शृणोत्यनुस्मरेद्वा
१०५७०४२४ दुष्कीर्तिं दुरितमपोह्य याति शान्तिम्
१०५८००१० श्रीशुक उवाच
१०५८००११ एकदा पाण्डवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः
१०५८००१३ इन्द्रप्रस्थं गतः श्रीमान्युयुधानादिभिर्वृतः
१०५८००२१ दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम्
१०५८००२३ उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवागतम्
१०५८००३१ परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः
१०५८००३३ सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः
१०५८००४१ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्
१०५८००४३ फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवन्दितः
१०५८००५१ परमासन आसीनं कृष्णा कृष्णमनिन्दिता
१०५८००५३ नवोढा व्रीडिता किञ्चिच्छनैरेत्याभ्यवन्दत
१०५८००६१ तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः
१०५८००६३ निषसादासनेऽन्ये च पूजिताः पर्युपासत
१०५८००७१ पृथाम्समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाभिरम्भितः
१०५८००७३ आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारम्परिपृष्टबान्धवः
१०५८००८१ तमाह प्रेमवैक्लव्य रुद्धकण्ठाश्रुलोचना
१०५८००८३ स्मरन्ती तान्बहून्क्लेशान्क्लेशापायात्मदर्शनम्
१०५८००९१ तदैव कुशलं नोऽभूत्सनाथास्ते कृता वयम्
१०५८००९३ ज्ञतीन्नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया
१०५८०१०१ न तेऽस्ति स्वपरभ्रान्तिर्विश्वस्य सुहृदात्मनः
१०५८०१०३ तथापि स्मरतां शश्वत्क्लेशान्हंसि हृदि स्थितः
१०५८०११० युधिष्ठिर उवाच
१०५८०१११ किं न आचरितं श्रेयो न वेदाहमधीश्वर
१०५८०११३ योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम्

१०५८०१२१ इति वै वार्षिकान्मासान्राज्ञा सोऽभ्यर्थितः सुखम्
१०५८०१२३ जनयन्नयनानन्दमिन्द्रप्रस्थौकसां विभुः
१०५८०१३१ एकदा रथमारुह्य विजयो वानरध्वजम्
१०५८०१३३ गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ
१०५८०१४१ साकं कृष्णेन सन्नद्धो विहर्तुं विपिनं महत्
१०५८०१४३ बहुव्यालमृगाकीर्णं प्राविशत्परवीरहा
१०५८०१५१ तत्राविध्यच्छरैर्व्याघ्रान्शूकरान्महिषान्रुरून्
१०५८०१५३ शरभान्गवयान्खड्गान्हरिणान्शशशल्लकान्
१०५८०१६१ तान्निन्युः किङ्करा राज्ञे मेध्यान्पर्वण्युपागते
१०५८०१६३ तृट्परीतः परिश्रान्तो बिभत्सुर्यमुनामगात्
१०५८०१७१ तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ
१०५८०१७३ कृष्णौ ददृशतुः कन्यां चरन्तीं चारुदर्शनाम्
१०५८०१८१ तामासाद्य वरारोहां सुद्विजां रुचिराननाम्
१०५८०१८३ पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम्
१०५८०१९१ का त्वं कस्यासि सुश्रोणि कुतो वा किं चिकीर्षसि
१०५८०१९३ मन्ये त्वां पतिमिच्छन्तीं सर्वं कथय शोभने
१०५८०२०० श्रीकालिन्द्युवाच
१०५८०२०१ अहं देवस्य सवितुर्दुहिता पतिमिच्छती
१०५८०२०३ विष्णुं वरेण्यं वरदं तपः परममास्थितः
१०५८०२११ नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम्
१०५८०२१३ तुष्यतां मे स भगवान्मुकुन्दोऽनाथसंश्रयः
१०५८०२२१ कालिन्दीति समाख्याता वसामि यमुनाजले
१०५८०२२३ निर्मिते भवने पित्रा यावदच्युतदर्शनम्
१०५८०२३१ तथावदद्गुडाकेशो वासुदेवाय सोऽपि ताम्
१०५८०२३३ रथमारोप्य तद्विद्वान्धर्मराजमुपागमत्
१०५८०२४१ यदैव कृष्णः सन्दिष्टः पार्थानां परमाद्भुतम्
१०५८०२४३ कारयामास नगरं विचित्रं विश्वकर्मणा
१०५८०२५१ भगवांस्तत्र निवसन्स्वानां प्रियचिकीर्षया
१०५८०२५३ अग्नये खाण्डवं दातुमर्जुनस्यास सारथिः
१०५८०२६१ सोऽग्निस्तुष्टो धनुरदाद्धयान्श्वेतान्रथं नृप
१०५८०२६३ अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः

१०५८०२७१ मयश्च मोचितो वह्नेः सभां सख्य उपाहरत्
१०५८०२७३ यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः
१०५८०२८१ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः
१०५८०२८३ आययौ द्वारकां भूयः सात्यकिप्रमखैर्वृतः
१०५८०२९१ अथोपयेमे कालिन्दीं सुपुण्यर्त्वृक्ष ऊर्जिते
१०५८०२९३ वितन्वन्परमानन्दं स्वानां परममङ्गलः
१०५८०३०१ विन्द्यानुविन्द्यावावन्त्यौ दुर्योधनवशानुगौ
१०५८०३०३ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम्
१०५८०३११ राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः
१०५८०३१३ प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम्
१०५८०३२१ नग्नजिन्नाम कौशल्य आसीद्राजातिधार्मिकः
१०५८०३२३ तस्य सत्याभवत्कन्या देवी नाग्नजिती नृप
१०५८०३३१ न तां शेकुर्नृपा वोढुमजित्वा सप्तगोवृषान्
१०५८०३३३ तीक्ष्णशृङ्गान्सुदुर्धर्षान्वीर्यगन्धासहान्खलान्
१०५८०३४१ तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतां पतिः
१०५८०३४३ जगाम कौशल्यपुरं सैन्येन महता वृतः
१०५८०३५१ स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः
१०५८०३५३ अर्हणेनापि गुरुणा पूजयन्प्रतिनन्दितः
१०५८०३६१ वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम्
१०५८०३६३ भूयादयं मे पतिराशिषोऽनलः करोतु सत्या यदि मे धृतो व्रतः
१०५८०३७१ यत्पादपङ्कजरजः शिरसा बिभर्ति
१०५८०३७२ श्रृईरब्यजः सगिरिशः सह लोकपालैः
१०५८०३७३ लीलातनुः स्वकृतसेतुपरीप्सया यः
१०५८०३७४ कालेऽदधत्स भगवान्मम केन तुष्येत्
१०५८०३८१ अर्चितं पुनरित्याह नारायण जगत्पते
१०५८०३८३ आत्मानन्देन पूर्णस्य करवाणि किमल्पकः
१०५८०३९० श्रीशुक उवाच
१०५८०३९१ तमाह भगवान्हृष्टः कृतासनपरिग्रहः
१०५८०३९३ मेघगम्भीरया वाचा सस्मितं कुरुनन्दन
१०५८०४०० श्रीभगवानुवाच
१०५८०४०१ नरेन्द्र याञ्चा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः

१०५८०४०३ तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम्

१०५८०४१० श्रीराजोवाच

१०५८०४११ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः

१०५८०४१३ गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी

१०५८०४२१ किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ

१०५८०४२३ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया

१०५८०४३१ सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः

१०५८०४३३ एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः

१०५८०४४१ यदिमे निगृहीताः स्युस्त्वयैव यदुनन्दन

१०५८०४४३ वरो भवानभिमतो दुहितुर्मे श्रियःपते

१०५८०४५१ एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः

१०५८०४५३ आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान्

१०५८०४६१ बद्ध्वा तान्दामभिः शौरिर्भग्नदर्पान्हतौजसः

१०५८०४६३ व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा

१०५८०४७१ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः

१०५८०४७३ तां प्रत्यगृह्णाद्भगवान्विधिवत्सदृशीं प्रभुः

१०५८०४८१ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम्

१०५८०४८३ लेभिरे परमानन्दं जातश्च परमोत्सवः

१०५८०४९१ शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः

१०५८०४९३ नरा नार्यः प्रमुदिताः सुवासःस्रगलङ्कृताः

१०५८०५०१ दशधेनुसहस्राणि पारिबर्हमदाद्विभुः

१०५८०५०३ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससम्

१०५८०५११ नवनागसहस्राणि नागाच्छतगुणान्रथान्

१०५८०५१३ रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान्

१०५८०५२१ दम्पती रथमारोप्य महत्या सेनया वृतौ

१०५८०५२३ स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः

१०५८०५३१ श्रुत्वैतद्रुरुधुर्भूपा नयन्तं पथि कन्यकाम्

१०५८०५३३ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा

१०५८०५४१ तानस्यतः शरव्रातान्बन्धुप्रियकृदर्जुनः

१०५८०५४३ गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव

१०५८०५५१ पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया

१०५८०५५३ रेमे यदूनामृषभो भगवान्देवकीसुतः
१०५८०५६१ श्रुतकीर्तेः सुतां भद्रां उपयेमे पितृष्वसुः
१०५८०५६३ कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः
१०५८०५७१ सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्यताम्
१०५८०५७३ स्वयंवरे जहारैकः स सुपर्णः सुधामिव
१०५८०५८१ अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्रशः
१०५८०५८३ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः
१०५९००११ श्रीराजोवाच यथा हतो भगवता भौमो येने च ताः स्त्रियः
१०५९००१३ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः
१०५९००२० श्रीशुक उवाच
१०५९००२१ इन्द्रेण हृतछत्रेण हृतकुण्डलबन्धुना
१०५९००२३ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम्
१०५९००३१ सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ
१०५९००३३ गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम्
१०५९००३५ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम्
१०५९००४१ गदया निर्बिभेदाद्रीन्शस्त्रदुर्गाणि सायकैः
१०५९००४३ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथासिना
१०५९००५१ शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम्
१०५९००५३ प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः
१०५९००६१ पाञ्चजन्यध्वनिं श्रुत्वा युगान्तशनिभीषणम्
१०५९००६३ मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात्
१०५९००७१ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगान्तसूर्यानलरोचिरुल्बणः
१०५९००७३ ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः
१०५९००८१ आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत्स पञ्चभिः
१०५९००८३ स रोदसी सर्वदिशोऽम्बरं महानापूरयन्नण्डकटाहमावृणोत्
१०५९००९१ तदापतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधोजसा
१०५९००९३ मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोऽपि रुषा व्यमुञ्चत
१०५९०१०१ तामापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा
१०५९०१०३ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया
१०५९०१११ व्यसुः पपाताम्भसि कृत्तशीर्षो निकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा
१०५९०११३ तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः

१०५९०१२१ ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्

१०५९०१२२ वसुर्नभस्वानरुणश्च सप्तमः

१०५९०१२३ पीठं पुरस्कृत्य चमूपतिं मृधे

१०५९०१२४ भौमप्रयुक्ता निरगन्धृतायुधाः

१०५९०१३१ प्रायुञ्जतासाद्य शरानसीन्गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः

१०५९०१३३ तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह

१०५९०१४१ तान्पीठमुख्याननयद्यमक्षयं

१०५९०१४२ निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः

१०५९०१४३ स्वानीकपानच्युतचक्रसायकैस्

१०५९०१४४ तथा निरस्तान्नरको धरासुतः

१०५९०१४५ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्

१०५९०१४६ गजैः पयोधिप्रभवैर्निराक्रमात्

१०५९०१५१ दृष्ट्वा सभार्यं गरुडोपरि स्थितं

१०५९०१५२ सूर्योपरिष्टात्सतडिद्घनं यथा

१०५९०१५३ कृष्णं स तस्मै व्यसृजच्छतघ्नीं

१०५९०१५४ योधाश्च सर्वे युगपच्च विव्यधुः

१०५९०१६१ तद्भौमसैन्यं भगवान्गदाग्रजो

१०५९०१६२ विचित्रवाजैर्निशितैः शिलीमुखैः

१०५९०१६३ निकृत्तबाहूरुशिरोध्रविग्रहं

१०५९०१६४ चकार तर्ह्येव हताश्वकुञ्जरम्

१०५९०१७१ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह

१०५९०१७३ हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रीभिः

१०५९०१८१ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान्

१०५९०१८३ गुरुत्मता हन्यमानास्तुण्डपक्षनखेर्गजाः

१०५९०१९१ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत

१०५९०२०१ दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकं

१०५९०२०३ तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः

१०५९०२०५ नाकम्पत तया विद्धो मालाहत इव द्विपः

१०५९०२११ शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः

१०५९०२१३ तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः

१०५९०२१५ अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना

१०५९०२२१ सकुण्डलं चारुकिरीटभूषणं बभौ पृथिव्यां पतितम्समुज्ज्वलम्
१०५९०२२३ ह हेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईदिरे
१०५९०२३१ ततश्च भूः कृष्णमुपेत्य कुण्डले
१०५९०२३२ प्रतप्तजाम्बूनदरत्नभास्वरे
१०५९०२३३ सवैजयन्त्या वनमालयार्पयत्
१०५९०२३४ प्राचेतसं छत्रमथो महामणिम्
१०५९०२४१ अस्तौषीदथ विश्वेशं देवी देववरार्चितम्
१०५९०२४३ प्राञ्जलिः प्रणता राजन्भक्तिप्रवणया धिया
१०५९०२५० भूमिरुवाच
१०५९०२५१ नमस्ते देवदेवेश शङ्खचक्रगदाधर
१०५९०२५३ भक्तेच्छोपात्तरूपाय परमात्मन्नमोऽस्तु ते
१०५९०२६१ नमः पङ्कजनाभाय नमः पङ्कजमालिने
१०५९०२६३ नमः पङ्कजनेत्राय नमस्तेपङ्कजाङ्घ्रये
१०५९०२७१ नमो भगवते तुभ्यं वासुदेवाय विष्णवे
१०५९०२७३ पुरुषायादिबीजाय पूर्णबोधाय ते नमः
१०५९०२८१ अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये
१०५९०२८३ परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तु ते
१०५९०२९१ त्वं वै सिसृक्षुरज उत्कटं प्रभो
१०५९०२९२ तमो निरोधाय बिभर्ष्यसंवृतः
१०५९०२९३ स्थानाय सत्त्वं जगतो जगत्पते
१०५९०२९४ कालः प्रधानं पुरुषो भवान्परः
१०५९०३०१ अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि
१०५९०३०३ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवनयं भ्रमः
१०५९०३११ तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरोपसादितः
१०५९०३१३ तत्पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम्
१०५९०३२० श्रीशुक उवाच
१०५९०३२१ इति भूम्यर्थितो वाग्भिर्भगवान्भक्तिनम्रया
१०५९०३२३ दत्त्वाभयं भौमगृहम्प्राविशत्सकलर्द्धिमत्
१०५९०३३१ तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम्
१०५९०३३३ भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः
१०५९०३४१ तम्प्रविष्टं स्त्रियो वीक्ष्य नरवर्यं विमोहिताः

१०५९०३४३ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम्
१०५९०३५१ भूयात्पतिरयं मह्यं धाता तदनुमोदताम्
१०५९०३५३ इति सर्वाः पृथक्कृष्णे भावेन हृदयं दधुः
१०५९०३६१ ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोऽम्बराः
१०५९०३६३ नरयानैर्महाकोशान्रथाश्वान्द्रविणं महात्
१०५९०३७१ ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः
१०५९०३७३ पाण्डुरांश्च चतुःषष्टिं प्रेरयामास केशवः
१०५९०३८१ गत्वा सुरेन्द्रभवनं दत्त्वादित्यै च कुण्डले
१०५९०३८३ पूजितस्त्रिदशेन्द्रेण महेन्द्र्याण्या च सप्रियः
१०५९०३९१ चोदितो भार्ययोत्पाट्य पारीजातं गरुत्मति
१०५९०३९३ आरोप्य सेन्द्रान्विबुधान्निर्जित्योपानयत्पुरम्
१०५९०४०१ स्थापितः सत्यभामाया गृहोद्यानोपशोभनः
१०५९०४०३ अन्वगुर्भ्रमराः स्वर्गात्तद्गन्धासवलम्पटाः
१०५९०४११ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम्
१०५९०४१३ सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम्
१०५९०४२१ अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः
१०५९०४२३ यथोपयेमे भगवान्तावद्रूपधरोऽव्ययः
१०५९०४३१ गृहेषु तासामनपाय्यतर्ककृन्निरस्तसाम्यातिशयेष्ववस्थितः
१०५९०४३३ रेमे रमाभिर्निजकामसम्प्लुतो यथेतरो गार्हकमेधिकांश्चरन्
१०५९०४४१ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
१०५९०४४२ ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम्
१०५९०४४३ भेजुर्मुदाविरतमेधितयानुराग
१०५९०४४४ हासावलोकनवसङ्गमजल्पलज्जाः
१०५९०४५१ प्रत्युद्गमासनवरार्हणपदशौच
१०५९०४५२ ताम्बूलविश्रमणवीजनगन्धमाल्यैः
१०५९०४५३ केशप्रसारशयनस्नपनोपहार्यैः
१०५९०४५४ दासीशता अपि विभोर्विदधुः स्म दास्यम्
१०६०००१० श्रीबादरायणिरुवाच
१०६०००११ कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम्
१०६०००१३ पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः
१०६०००२१ यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः

१०६०००२३ स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः
१०६०००३१ तस्मिनन्तर्गृहे भ्राजन् मुक्तादामविलम्बिना
१०६०००३३ विराजिते वितानेन दीपैर्मणिमयैरपि
१०६०००४१ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते
१०६०००४३ जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽमलैः
१०६०००५१ पारिजातवनामोद वायुनोद्यानशालिना
१०६०००५३ धूपैरगुरुजै राजञ्जालरन्ध्रविनिर्गतैः
१०६०००६१ पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे
१०६०००६३ उपतस्थे सुखासीनं जगतामीश्वरं पतिम्
१०६०००७१ वालव्यजनमादाय रत्नदण्डं सखीकरात्
१०६०००७३ तेन वीजयती देवी उपासां चक्र ईश्वरम्
१०६०००८१ सोपाच्युतं क्वणयती मणिनूपुराभ्यां
१०६०००८२ रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता
१०६०००८३ वस्त्रान्तगूढकुचकुङ्कुमशोणहार
१०६०००८४ भासा नितम्बधृतया च परार्ध्यकाञ्च्या
१०६०००९१ तां रूपिणीं श्रीयमनन्यगतिं निरीक्ष्य
१०६०००९२ या लीलया धृततनोरनुरूपरूपा
१०६०००९३ प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठ
१०६०००९४ वक्त्रोल्लसत्स्मितसुधां हरिराबभाषे
१०६००१०० श्रीभगवानुवाच
१०६००१०१ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः
१०६००१०३ महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः
१०६००१११ तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान्
१०६००११३ दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान्
१०६००१२१ राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतान्
१०६००१२३ बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान्
१०६००१३१ अस्पष्टवर्त्मनाम्पुंसामलोकपथमीयुषाम्
१०६००१३३ आस्थिताः पदवीं सुभ्रु प्रायः सीदन्ति योषितः
१०६००१४१ निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः
१०६००१४३ तस्मा त्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे
१०६००१५१ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः

१०६०००१५३ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्
१०६०००१६१ वैदर्भ्येतदविज्ञाय त्वयादीर्घसमीक्षया
१०६०००१६३ वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा
१०६०००१७१ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम्
१०६०००१७३ येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे
१०६०००१८१ चैद्यशाल्वजरासन्ध दन्तवक्रादयो नृपाः
१०६०००१८३ मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः
१०६०००१९१ तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये
१०६०००१९३ आनितासि मया भद्रे तेजोपहरतासताम्
१०६०००२०१ उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः
१०६०००२०३ आत्मलब्ध्यास्महे पूर्णा गेहयोर्ज्योतिरक्रियाः
१०६०००२१० श्रीशुक उवाच
१०६०००२११ एतावदुक्त्वा भगवानात्मानं वल्लभामिव
१०६०००२१३ मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत्
१०६०००२२१ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम्
१०६०००२२३ आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह
१०६०००२३१ पदा सुजातेन नखारुणश्रीया भुवं लिखन्त्यश्रुभिरञ्जनासितैः
१०६०००२३३ आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक्
१०६०००२४१ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्
१०६०००२४२ हस्ताच्छ्लथद्वलयतो व्यजनं पपात
१०६०००२४३ देहश्च विक्लवधियः सहसैव मुह्यन्
१०६०००२४४ रम्भेव वायुविहतो प्रविकीर्य केशान्
१०६०००२५१ तद्दृष्ट्वा भगवान्कृष्णः प्रियायाः प्रेमबन्धनम्
१०६०००२५३ हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत
१०६०००२६१ पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः
१०६०००२६३ केशान्समुह्य तद्वक्त्रं प्रामृजत्पद्मपाणिना
१०६०००२७१ प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा
१०६०००२७३ आश्लिष्य बाहुना राजननन्यविषयां सतीम्
१०६०००२८१ सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः
१०६०००२८३ हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः
१०६०००२९० श्रीभगवानुवाच

१०६०००२९१ मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम्
१०६०००२९३ त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने
१०६०००३०१ मुखं च प्रेमसंरम्भ स्फुरिताधरमीक्षितुम्
१०६०००३०३ कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम्
१०६०००३११ अयं हि परमो लाभो गृहेषु गृहमेधिनाम्
१०६०००३१३ यन्नर्मैरीयते यामः प्रियया भीरु भामिनि
१०६०००३२० श्रीशुक उवाच
१०६०००३२१ सैवं भगवता राजन्वैदर्भी परिसान्त्विता
१०६०००३२३ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ
१०६०००३३१ बभाष ऋषभं पुंसां वीक्षन्ती भगवन्मुखम्
१०६०००३३३ सव्रीडहासरुचिर स्निग्धापाङ्गेन भारत
१०६०००३४० श्रीरुक्मिण्युवाच
१०६०००३४१ नन्वेवमेतदरविन्दविलोचनाह यद्वै भवान्भगवतोऽसदृशी विभूम्नः
१०६०००३४३ क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरज्ञगृहीतपादा
१०६०००३५१ सत्यं भयादिव गुणेभ्य उरुक्रमान्तः
१०६०००३५२ शेते समुद्र उपलम्भनमात्र आत्मा
१०६०००३५३ नित्यं कदिन्द्रियगणैः कृतविग्रहस्त्वं
१०६०००३५४ त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम्
१०६०००३६१ त्वत्पादपद्ममकरन्दजुषां मुनीनां
१०६०००३६२ वर्त्मास्फुटं न्र्पशुभिर्ननु दुर्विभाव्यम्
१०६०००३६३ यस्मादलौकिकमिवेहितमीश्वरस्य
१०६०००३६४ भूमंस्तवेहितमथो अनु ये भवन्तम्
१०६०००३७१ निष्किञ्चनो ननु भवान्न यतोऽस्ति किञ्चिद्
१०६०००३७२ यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः
१०६०००३७३ न त्वा विदन्त्यसुतृपोऽन्तकमाढ्यतान्धाः
१०६०००३७४ प्रेष्ठो भवान्बलिभुजामपि तेऽपि तुभ्यम्
१०६०००३८१ त्वं वै समस्तपुरुषार्थमयः फलात्मा
१०६०००३८२ यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम्
१०६०००३८३ तेषां विभो समुचितो भवतः समाजः
१०६०००३८४ पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न
१०६०००३९१ त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव

१०६००३९२ आत्मात्मदश्च जगतामिति मे वृतोऽसि
१०६००३९३ हित्वा भवद्भुव उदीरितकालवेग
१०६००३९४ ध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये
१०६००४०१ जाड्यं वचस्तव गदाग्रज यस्तु भूपान्
१०६००४०२ विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम्
१०६००४०३ सिंहो यथा स्वबलिमीश पशून्स्वभागं
१०६००४०४ तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः
१०६००४११ यद्वाञ्छया नृपशिखामणयोऽन्गवैन्य
१०६००४१२ जायन्तनाहुषगयादय ऐक्यपत्यम्
१०६००४१३ राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष
१०६००४१४ सीदन्ति तेऽनुपदवीं त इहास्थिताः किम्
१०६००४२१ कान्यं श्रयेत तव पादसरोजगन्धम्
१०६००४२२ आघ्राय सन्मुखरितं जनतापवर्गम्
१०६००४२३ लक्ष्म्यालयं त्वविगणय्य गुणालयस्य
१०६००४२४ मर्त्या सदोरुभयमर्थविवीतदृष्टिः
१०६००४३१ तं त्वानुरूपमभजं जगतामधीशम्
१०६००४३२ आत्मानमत्र च परत्र च कामपूरम्
१०६००४३३ स्यान्मे तवाङ्घ्रिररणं सृतिभिर्भ्रमन्त्या
१०६००४३४ यो वै भजन्तमुपयात्यनृतापवर्गः
१०६००४४१ तस्याः स्युरच्युत नृपा भवतोपदिष्टाः
१०६००४४२ स्त्रीणां गृहेषु खरगोश्वविडालभृत्याः
१०६००४४३ यत्कर्णमूलमन्कर्षण नोपयायाद्
१०६००४४४ युष्मत्कथा मृडविरिश्चसभासु गीता
१०६००४५१ त्वक्ष्मश्रुरोमनखकेशपिनद्धमन्तर्
१०६००४५२ मांसास्थिरक्तकृमिविट्कफपित्तवातम्
१०६००४५३ जीवच्छवं भजति कान्तमतिर्विमूढा
१०६००४५४ या ते पदाब्जमकरन्दमजिघ्रती स्त्री
१०६००४६१ अस्त्वम्बुजाक्ष मम ते चरणानुराग
१०६००४६२ आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः
१०६००४६३ यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो
१०६००४६४ मामीक्षसे तदु ह नः परमानुकम्पा

१०६००४७१ नैवालीकमहं मन्ये वचस्ते मधुसूदन
१०६००४७३ अम्बाया एव हि प्रायः कन्यायाः स्याद्रतिः क्वचित्
१०६००४८१ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम्
१०६००४८३ बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः
१०६००४९० श्रीभगवानुवाच
१०६००४९१ साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्री प्रलम्भिता
१०६००४९३ मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि
१०६००५०१ यान्यान्कामयसे कामान्मय्यकामाय भामिनि
१०६००५०३ सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यद
१०६००५११ उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे
१०६००५१३ यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता
१०६००५२१ ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया
१०६००५२३ कामात्मानोऽपवर्गेशं मोहिता मम मायया
१०६००५३१ मां प्राप्य मानिन्यपवर्गसम्पदं
१०६००५३२ वाञ्छन्ति ये सम्पद एव तत्पतिम्
१०६००५३३ ते मन्दभागा निरयेऽपि ये नृणां
१०६००५३४ मात्रात्मकत्वान्निरयः सुसङ्गमः
१०६००५४१ दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृतानुवृत्तिर्भवमोचनी खलैः
१०६००५४३ सुदुष्करासौ सुतरां दुराशिषो ह्यसुंभराया निकृतिं जुषः स्त्रियाः
१०६००५५१ न त्वादृशीम्प्रणयिनीं गृहिणीं गृहेषु
१०६००५५२ पश्यामि मानिनि यया स्वविवाहकाले
१०६००५५३ प्राप्तान्नृपान्न विगणय्य रहोहरो मे
१०६००५५४ प्रस्थापितो द्विज उपश्रुतसत्कथस्य
१०६००५६१ भ्रातुर्विरूपकरणं युधि निर्जितस्य
१०६००५६२ प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम्
१०६००५६३ दुःखं समुत्थमसहोऽस्मदयोगभीत्या
१०६००५६४ नैवाब्रवीः किमपि तेन वयं जितास्ते
१०६००५७१ दूतस्त्वयात्मलभने सुविविक्तमन्त्रः
१०६००५७२ प्रस्थापितो मयि चिरायति शून्यमेतत्
१०६००५७३ मत्वा जिहास इदं अङ्गमनन्ययोग्यं
१०६००५७४ तिष्ठेत तत्त्वयि वयं प्रतिनन्दयामः

१०६००५८० श्रीशुक उवाच
१०६००५८१ एवं सौरतसंलापैर्भगवाञ्जगदीश्वरः
१०६००५८३ स्वरतो रमया रेमे नरलोकं विडम्बयन्
१०६००५९१ तथान्यासामपि विभुर्गृहेसु गृहवानिव
१०६००५९३ आस्थितो गृहमेधीयान्धर्मान्लोकगुरुर्हरिः
१०६१००१० श्रीशुक उवाच
१०६१००११ एकैकशस्ताः कृष्णस्य पुत्रान्दशदशाबआः
१०६१००१३ अजीजनन्ननवमान्पितुः सर्वात्मसम्पदा
१०६१००२१ गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम्
१०६१००२३ प्रेष्ठं न्यमंसत स्वं स्वं न तत्तत्त्वविदः स्त्रियः
१०६१००३१ चार्वब्जकोशवदनायतबाहुनेत्र
१०६१००३२ सप्रेमहासरसवीक्षितवल्गुजल्पैः
१०६१००३३ सम्मोहिता भगवतो न मनो विजेतुं
१०६१००३४ स्वैर्विभ्रमैः समशकन्वनिता विभूम्नः
१०६१००४१ स्मायावलोकलवदर्शितभावहारि
१०६१००४२ भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः
१०६१००४३ पत्न्यस्तु शोडशसहस्रमनङ्गबाणैर्
१०६१००४४ यस्येन्द्रियं विमथितुम्करणैर्न शेकुः
१०६१००५१ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
१०६१००५२ ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम्
१०६१००५३ भेजुर्मुदाविरतमेधितयानुराग
१०६१००५४ हासावलोकनवसङ्गमलालसाद्यम्
१०६१००६१ प्रत्युद्गमासनवरार्हणपादशौच
१०६१००६२ ताम्बूलविश्रमणवीजनगन्धमाल्यैः
१०६१००६३ केशप्रसारशयनस्नपनोपहार्यैः
१०६१००६४ दासीशता अपि विभोर्विदधुः स्म दास्यम्
१०६१००७१ तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः
१०६१००७३ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते
१०६१००८१ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान्
१०६१००८३ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथापरः
१०६१००९१ चारुचन्द्रो विचारुश्च चारुश्च दशमो हरेः

१०६१००९३ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः
१०६१०१०१ भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा
१०६१०१०३ चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः
१०६१०१११ श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश
१०६१०११३ साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित्
१०६१०१२१ विययश्चित्रकेतुश्च वसुमान्द्रविडः क्रतुः
१०६१०१२३ जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसम्मताः
१०६१०१३१ वीरश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः
१०६१०१३३ आमः शङ्कुर्वसुः श्रीमान्कुन्तिर्नाग्नजितेः सुताः
१०६१०१४१ श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः
१०६१०१४३ शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमकोऽवरः
१०६१०१५१ प्रघोषो गात्रवान्सिंहो बलः प्रबल ऊर्धगः
१०६१०१५३ माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः
१०६१०१६१ वृको हर्षोऽनिलो गृध्रो वर्धनोन्नाद एव च
१०६१०१६३ महांसः पावनो वह्निर्मित्रविन्दात्मजाः क्षुधिः
१०६१०१७१ सङ्ग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित्
१०६१०१७३ जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः
१०६१०१८१ दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः
१०६१०१८३ प्रद्यम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः
१०६१०१८५ पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे
१०६१०१९१ एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप
१०६१०१९३ मातरः कृष्णजातीनां सहस्राणि च षोडश
१०६१०२०० श्रीराजोवाच
१०६१०२०१ कथं रुक्म्यरीपुत्राय प्रादाद्दुहितरं युधि
१०६१०२०३ कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते
१०६१०२०५ एतदाख्याहि मे विद्वन्द्विषोर्वैवाहिकं मिथः
१०६१०२११ अनागतमतीतं च वर्तमानमतीन्द्रियम्
१०६१०२१३ विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः
१०६१०२२० श्रीशुक उवाच
१०६१०२२१ वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया
१०६१०२२३ राज्ञः समेतान्निर्जित्य जहारैकरथो युधि

१०६१०२३१ यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः
१०६१०२३३ व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम्
१०६१०२४१ रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली
१०६१०२४३ उपयेमे विशालाक्षीं कन्यां चारुमतीं किल
१०६१०२५१ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्याददाद्धरेः
१०६१०२५३ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया
१०६१०२५५ जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः
१०६१०२६१ तस्मिन्नभ्युदये राजन्रुक्मिणी रामकेशवौ
१०६१०२६३ पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः
१०६१०२७१ तस्मिन्निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः
१०६१०२७३ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय
१०६१०२८१ अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत्
१०६१०२८३ इत्युक्तो बलमाहूय तेनाक्षैरुक्म्यदीव्यत
१०६१०२९१ शतं सहस्रमयुतं रामस्तत्राददे पणम्
१०६१०२९३ तं तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बलम्
१०६१०२९५ दन्तान्सन्दर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः
१०६१०३०१ ततो लक्षं रुक्म्यगृह्णाद्ग्लहं तत्राजयद्बलः
१०६१०३०३ जितवानहमित्याह रुक्मी कैतवमाश्रितः
१०६१०३११ मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि
१०६१०३१३ जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे
१०६१०३२१ तं चापि जितवान्रामो धर्मेण छलमाश्रितः
१०६१०३२३ रुक्मी जितं मयात्रेमे वदन्तु प्राश्निका इति
१०६१०३३१ तदाब्रवीन्नभोवाणी बलेनैव जितो ग्लहः
१०६१०३३३ धर्मतो वचनेनैव रुक्मी वदति वै मृषा
१०६१०३४१ तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः
१०६१०३४३ सङ्कर्षणं परिहसन्बभाषे कालचोदितः
१०६१०३५१ नैवाक्षकोविदा यूयं गोपाला वनगोचराः
१०६१०३५३ अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः
१०६१०३६१ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः
१०६१०३६३ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि
१०६१०३७१ कलिङ्गराजं तरसा गृहीत्वा दशमे पदे

१०६१०३७३ दन्तानपातयत्क्रुद्धो योऽहसद्विवृतैर्द्विजैः
१०६१०३८१ अन्ये निर्भिन्नबाहूरु शिरसो रुधिरोक्षिताः
१०६१०३८३ राजानो दुद्रवर्भीता बलेन पङ्घार्दिताः
१०६१०३९१ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा
१०६१०३९३ रक्मिणीबलयो राजन्स्नेहभङ्गभयाद्धरिः
१०६१०४०१ ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम्
१०६१०४०३ रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः
१०६२००१० श्रीराजोवाच
१०६२००११ बाणस्य तनयामूषामुपयेमे यदूत्तमः
१०६२००१३ तत्र युद्धमभूद्धोरं हरिशङ्करयोर्महत्
१०६२००१५ एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि
१०६२००२० श्रीशुक उवाच
१०६२००२१ बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः
१०६२००२३ येन वामनरूपाय हरयेऽदायि मेदिनी
१०६२००२५ तस्यौरसः सुतो बानः शिवभक्तिरतः सदा
१०६२००२१ मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः
१०६२००२३ शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा
१०६२००२५ तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः
१०६२००२१ सहस्रबाहुर्वाद्येन ताण्दवेऽतोषयन्मृडम्
१०६२००३१ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः
१०६२००३३ वरेण छन्दयामास स तं वव्रे पुराधिपम्
१०६२००४१ स एकदाह गिरिशं पार्श्वस्थं वीर्यदुर्मदः
१०६२००४३ किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम्
१०६२००५१ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम्
१०६२००५३ पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम्
१०६२००६१ दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत्
१०६२००६३ त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम्
१०६२००७१ कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम्
१०६२००७३ आद्यायां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः
१०६२००८१ तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा
१०६२००८३ त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते

१०६२००९१ इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप
१०६२००९३ प्रतीक्षन्गिरिशादेशं स्ववीर्यनशनम्कुधीः
१०६२०१०१ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम्
१०६२०१०३ कन्यालभत कान्तेन प्रागदृष्टश्रुतेन सा
१०६२०१११ सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी
१०६२०११३ सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम्
१०६२०१२१ बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता
१०६२०१२३ सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता
१०६२०१३१ कं त्वं मृगयसे सुभ्रु कीदृशस्ते मनोरथः
१०६२०१३३ हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये
१०६२०१४१ दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः
१०६२०१४३ पीतवासा बृहद्बाहुर्योषितां हृदयंगमः
१०६२०१५१ तमहं मृगये कान्तं पाययित्वाधरं मधु
१०६२०१५३ क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे
१०६२०१६० चित्रलेखोवाच
१०६२०१६१ व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते
१०६२०१६३ तमानेष्ये वरं यस्ते मनोहर्ता तमादिश
१०६२०१७१ इत्युक्त्वा देवगन्धर्व सिद्धचारणपन्नगान्
१०६२०१७३ दैत्यविद्याधरान्यक्षान्मनुजांश्च यथालिखत्
१०६२०१८१ मनुजेषु च सा वृष्णीन्शूरमानकदुन्दुभिम्
१०६२०१८३ व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता
१०६२०१९१ अनिरुद्धं विलिखितं वीक्ष्योषावाङ्मुखी ह्रिया
१०६२०१९३ सोऽसावसाविति प्राह स्मयमाना महीपते
१०६२०२०१ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी
१०६२०२०३ ययौ विहायसा राजन्द्वारकां कृष्णपालिताम्
१०६२०२११ तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता
१०६२०२१३ गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत्
१०६२०२२१ सा च तं सुन्दरवरं विलोक्य मुदितानना
१०६२०२२३ दुष्प्रेक्ष्ये स्वगृहे पुम्भी रेमे प्राद्युम्निना समम्
१०६२०२३१ परार्ध्यवासःस्रग्गन्ध धूपदीपासनादिभिः
१०६२०२३३ पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषणार्चितः

१०६२०२४१ गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया
१०६२०२४३ नाहर्गणान्स बुबुधे ऊषयापहृतेन्द्रियः
१०६२०२५१ तां तथा यदुवीरेण भुज्यमानां हतव्रताम्
१०६२०२५३ हेतुभिर्लक्षयां चक्रुरापृईतां दुरवच्छदैः
१०६२०२६१ भटा आवेदयां चक्रू राजंस्ते दुहितुर्वयम्
१०६२०२६३ विचेष्टितं लक्षयाम कन्यायाः कुलदूषणम्
१०६२०२७१ अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो
१०६२०२७३ कन्याया दूषणं पुम्भिर्दुष्प्रेक्ष्याया न विद्महे
१०६२०२८१ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः
१०६२०२८३ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम्
१०६२०२९१ कामात्मजं तं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बरमम्बुजेक्षणम्
१०६२०२९३ बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम्
१०६२०३०१ दीव्यन्तमक्षैः प्रिययाभिनृम्णया तदङ्गसङ्गस्तनकुङ्कुमस्रजम्
१०६२०३०३ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः
१०६२०३११ स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः
१०६२०३१३ उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया
१०६२०३२१ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा शूकरयूथपोऽहनत्
१०६२०३२३ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः
१०६२०३३१ तं नागपाशैर्बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह
१०६२०३३३ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौत्सीत्
१०६३००१० श्रृईशुक उवाच
१०६३००११ अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत
१०६३००१३ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम्
१०६३००२१ नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च
१०६३००२३ प्रययुः शोणितपुरं वृष्णयः कृष्णदैवताः
१०६३००३१ प्रद्युम्नो युयुधानश्च गदः साम्बोऽथ सारणः
१०६३००३३ नन्दोपनन्दभद्राद्या रामकृष्णानुवर्तिनः
१०६३००४१ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतो दिशम्
१०६३००४३ रुरुधुर्बाणनगरं समन्तात्सात्वतर्षभाः
१०६३००५१ भज्यमानपुरोद्यान प्राकाराट्टालगोपुरम्
१०६३००५३ प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ

१०६३००६१ बाणार्थे भगवान्रुद्रः ससुतः प्रमथैर्वृतः
१०६३००६३ आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः
१०६३००७१ आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम्
१०६३००७३ कृष्णशङ्करयो राजन्प्रद्युम्नगुहयोरपि
१०६३००८१ कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः
१०६३००८३ साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः
१०६३००९१ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः
१०६३००९३ गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन्
१०६३०१०१ शङ्करानुचराञ्शौरिर्भूतप्रमथगुह्यकान्
१०६३०१०३ डाकिनीर्यातुधानांश्च वेतालान्सविनायकान्
१०६३०१११ प्रेतमातृपिशाचांश्च कुष्माण्डान्ब्रह्मराक्षसान्
१०६३०११३ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः
१०६३०१२१ पृथग्विधानि प्रायुङ्क्त पिणाक्यस्त्राणि शार्ङ्गिणे
१०६३०१२३ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः
१०६३०१३१ ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम्
१०६३०१३३ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च
१०६३०१४१ मोहयित्वा तु गिरिशं जृम्भणास्त्रेण जृम्भितम्
१०६३०१४३ बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः
१०६३०१५१ स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः
१०६३०१५३ असृग्विमुञ्चन्गात्रेभ्यः शिखिनापक्रमद्रणात्
१०६३०१६१ कुम्भाण्डकूपकर्णश्च पेततुर्मुषलार्दितौ
१०६३०१६३ दुद्रुवुस्तदनीकनि हतनाथानि सर्वतः
१०६३०१७१ विशीर्यमाणम्स्वबलं दृष्ट्वा बाणोऽत्यमर्षितः
१०६३०१७३ कृष्णमभ्यद्रवत्सङ्ख्ये रथी हित्वैव सात्यकिम्
१०६३०१८१ धनूंष्याकृष्य युगपद्बाणः पञ्चशतानि वै
१०६३०१८३ एकैकस्मिन्शरौ द्वौ द्वौ सन्दधे रणदुर्मदः
१०६३०१९१ तानि चिच्छेद भगवान्धनूंसि युगपद्धरिः
१०६३०१९३ सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत्
१०६३०२०१ तन्माता कोटरा नाम नग्ना मक्तशिरोरुहा
१०६३०२०३ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया
१०६३०२११ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः

१०६३०२१३ बाणश्च तावद्विरथश्छिन्नधन्वाविशत्पुरम्
१०६३०२२१ विद्राविते भूतगणे ज्वरस्तु त्रीशिरास्त्रीपात्
१०६३०२२३ अभ्यधावत दाशार्हं दहन्निव दिशो दश
१०६३०२३१ अथ नारायणः देवः तं दृष्ट्वा व्यसृजज्ज्वरम्
१०६३०२३३ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ
१०६३०२४१ माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दितः
१०६३०२४३ अलब्ध्वाभयमन्यत्र भीतो माहेश्वरो ज्वरः
१०६३०२४५ शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः
१०६३०२५० ज्वर उवाच
१०६३०२५१ नमामि त्वानन्तशक्तिं परेशम्सर्वात्मानं केवलं ज्ञप्तिमात्रम्
१०६३०२५३ विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गम्प्रशान्तम्
१०६३०२६१ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः
१०६३०२६३ तत्सङ्घातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये
१०६३०२७१ नानाभावैर्लीलयैवोपपन्नैर्देवान्साधून्लोकसेतून्बिभर्षि
१०६३०२७३ हंस्युन्मार्गान्हिंसया वर्तमानाञ्जन्मैतत्ते भारहाराय भूमेः
१०६३०२८१ तप्तोऽहम्ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण
१०६३०२८३ तावत्तापो देहिनां तेऽन्घ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः
१०६३०२९० श्रीभगवानुवाच
१०६३०२९१ त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद्भयम्
१०६३०२९३ यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम्
१०६३०३०१ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः
१०६३०३०३ बाणस्तु रथमारूढः प्रागाद्योत्स्यञ्जनार्दनम्
१०६३०३११ ततो बाहुसहस्रेण नानायुधधरोऽसुरः
१०६३०३१३ मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप
१०६३०३२१ तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना
१०६३०३२३ चिच्छेद भगवान्बाहून्शाखा इव वनस्पतेः
१०६३०३३१ बाहुषु छिद्यमानेषु बाणस्य भगवान्भवः
१०६३०३३३ भक्तानकम्प्युपव्रज्य चक्रायुधमभाषत
१०६३०३४० श्रीरुद्र उवाच
१०६३०३४१ त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये
१०६३०३४३ यं पश्यन्त्यमलात्मान आकाशमिव केवलम्

१०६३०३५१ नाभिर्नभोऽग्निर्मुखमम्बु रेतो
१०६३०३५२ द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्वी
१०६३०३५३ चन्द्रो मनो यस्य दृगर्क आत्मा
१०६३०३५४ अहं समुद्रो जठरं भुजेन्द्रः
१०६३०३६१ रोमाणि यस्यौषधयोऽम्बुवाहाः
१०६३०३६२ केशा विरिञ्चो धिषणा विसर्गः
१०६३०३६३ प्रजापतिर्हृदयं यस्य धर्मः
१०६३०३६४ स वै भवान्पुरुषो लोककल्पः
१०६३०३७१ तवावतारोऽयमकुण्ठधामन्धर्मस्य गुप्त्यै जगतो हिताय
१०६३०३७३ वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त
१०६३०३८१ त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्धेतुरहेतुरीशः
१०६३०३८३ प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै
१०६३०३९१ यथैव सूर्यः पिहितश्छायया स्वया
१०६३०३९२ छायां च रूपाणि च सञ्चकास्ति
१०६३०३९३ एवं गुणेनापिहितो गुणांस्त्वम्
१०६३०३९४ आत्मप्रदीपो गुणिनश्च भूमन्
१०६३०४०१ यन्मायामोहितधियः पुत्रदारगृहादिषु
१०६३०४०३ उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे
१०६३०४११ देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः
१०६३०४१३ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः
१०६३०४२१ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम्
१०६३०४२३ विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन्
१०६३०४३१ अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः
१०६३०४३३ सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम्
१०६३०४४१ तं त्वा जगत्स्थित्युदयान्तहेतुं
१०६३०४४२ समं प्रसान्तं सुहृदात्मदैवम्
१०६३०४४३ अनन्यमेकं जगदात्मकेतं
१०६३०४४४ भवापवर्गाय भजाम देवम्
१०६३०४५१ अयं ममेष्टो दयितोऽनुवर्ती मयाभयं दत्तममुष्य देव
१०६३०४५३ सम्पाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः
१०६३०४६० श्रीभगवानुवाच

१०६३०४६१ यदात्थ भगवंस्त्वं नः करवाम प्रियं तव
१०६३०४६३ भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम्
१०६३०४७१ अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः
१०६३०४७३ प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः
१०६३०४८१ दर्पोपशमनायास्य प्रवृक्णा बाहवो मया
१०६३०४८३ सूदितं च बलं भूरि यच्च भारायितं भुवः
१०६३०४९१ चत्वारोऽस्य भुजाः शिष्टा भविष्यत्यजरामरः
१०६३०४९३ पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः
१०६३०५०१ इति लब्ध्वाभयं कृष्णं प्रणम्य शिरसासुरः
१०६३०५०३ प्राद्युम्निं रथमारोप्य सवध्वो समुपानयत्
१०६३०५११ अक्षौहिण्या परिवृतं सुवासःसमलङ्कृतम्
१०६३०५१३ सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः
१०६३०५२१ स्वराजधानीं समलङ्कृतां ध्वजैः
१०६३०५२२ सतोरणैरुक्षितमार्गचत्वराम्
१०६३०५२३ विवेश शङ्खानकदुन्दुभिस्वनैर्
१०६३०५२४ अभ्युद्यतः पौरसुहृद्द्विजातिभिः
१०६३०५३१ य एवं कृष्णविजयं शङ्करेण च संयुगम्
१०६३०५३३ संस्मरेत्प्रातरुत्थाय न तस्य स्यात्पराजयः
१०६४००१० श्रीबादरायणिरुवाच
१०६४००११ एकदोपवनं राजञ्जग्मुर्यदुकुमारकाः
१०६४००१३ विहर्तुं साम्बप्रद्युम्न चारुभानुगदादयः
१०६४००२१ क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः
१०६४००२३ जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम्
१०६४००३१ कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः
१०६४००३३ तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः
१०६४००४१ चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः
१०६४००४३ नाशक्नुरन्समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः
१०६४००५१ तत्रागत्यारविन्दाक्षो भगवान्विश्वभावनः
१०६४००५३ वीक्ष्योज्जहार वामेन तं करेण स लीलया
१०६४००६१ स उत्तमःश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम्
१०६४००६३ सन्तप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालङ्करणाम्बरस्रक्

१०६४००७१ पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः
१०६४००७३ कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम्
१०६४००८१ दशामिमां वा कतमेन कर्मणा सम्प्रापितोऽस्यतदर्हः सुभद्र
१०६४००८३ आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम्
१०६४००९० श्रीशुक उवाच
१०६४००९१ इति स्म राजा सम्पृष्टः कृष्णेनानन्तमूर्तिना
१०६४००९३ माधवं प्रणिपत्याह किरीटेनार्कवर्चसा
१०६४०१०० नृग उवाच
१०६४०१०१ नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो
१०६४०१०३ दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम्
१०६४०१११ किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः
१०६४०११३ कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया
१०६४०१२१ यावत्यः सिकता भूमेर्यावत्यो दिवि तारकाः
१०६४०१२३ यावत्यो वर्षधाराश्च तावतीरददं स्म गाः
१०६४०१३१ पयस्विनीस्तरुणीः शीलरूप गुणोपपन्नाः कपिला हेमसृङ्गीः
१०६४०१३३ न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम्
१०६४०१४१ स्वलङ्कृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः
१०६४०१४३ तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः
१०६४०१५१ गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः
१०६४०१५३ वासांसि रत्नानि परिच्छदान्रथानिष्टं च यज्ञैश्चरितं च पूर्तम्
१०६४०१६१ कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने
१०६४०१६३ सम्पृक्ताविदुषा सा च मया दत्ता द्विजातये
१०६४०१७१ तां नीयमानां तत्स्वामी दृष्ट्रोवाच ममेति तम्
१०६४०१७३ ममेति परिग्राह्याह नृगो मे दत्तवानिति
१०६४०१८१ विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ
१०६४०१८३ भवान्दातापहर्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः
१०६४०१९१ अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै
१०६४०१९३ गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम्
१०६४०२०१ भवन्तावनुगृह्णीतां किङ्करस्याविजानतः
१०६४०२०३ समुद्धरतं मां कृच्छ्रात्पतन्तं निरयेऽशुचौ
१०६४०२११ नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत्

१०६४०२१३ नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ
१०६४०२२१ एतस्मिन्नन्तरे यामैर्दूतैर्नीतो यमक्षयम्
१०६४०२२३ यमेन पृष्टस्तत्राहं देवदेव जगत्पते
१०६४०२३१ पूर्वं त्वमशुभं भुङ्क्ष उताहो नृपते शुभम्
१०६४०२३३ नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः
१०६४०२४१ पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः
१०६४०२४३ तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो
१०६४०२५१ ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव
१०६४०२५३ स्मृतिर्नाद्यापि विध्वस्ता भवत्सन्दर्शनार्थिनः
१०६४०२६१ स त्वं कथं मम विभोऽक्षिपथः परात्मा
१०६४०२६२ योगेश्वरः श्रुतिदृशामलहृद्विभाव्यः
१०६४०२६३ साक्षादधोक्षज उरुव्यसनान्धबुद्धेः
१०६४०२६४ स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः
१०६४०२७१ देवदेव जगन्नाथ गोविन्द पुरुषोत्तम
१०६४०२७३ नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय
१०६४०२८१ अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो
१०६४०२८३ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम्
१०६४०२९१ नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये
१०६४०२९३ कृष्णाय वासुदेवाय योगानां पतये नमः
१०६४०३०१ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना
१०६४०३०३ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम्
१०६४०३११ कृष्णः परिजनं प्राह भगवान्देवकीसुतः
१०६४०३१३ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन्
१०६४०३२१ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि
१०६४०३२३ तेजीयसोऽपि किमुत राज्ञां ईश्वरमानिनाम्
१०६४०३३१ नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया
१०६४०३३३ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि
१०६४०३४१ हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति
१०६४०३४३ कुलं समूलं दहति ब्रह्मस्वारणिपावकः
१०६४०३५१ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम्
१०६४०३५३ प्रसह्य तु बलाद्भुक्तं दश पूर्वान्दशापरान्

१०६४०३६१ राजानो राजलक्ष्म्यान्धा नात्मपातं विचक्षते
१०६४०३६३ निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः
१०६४०३७१ गृह्णन्ति यावतः पांशून्क्रन्दतामश्रुबिन्दवः
१०६४०३७३ विप्राणां हृतवृत्तीनाम्वदान्यानां कुटुम्बिनाम्
१०६४०३८१ राजानो राजकुल्याश्च तावतोऽब्दान्निरङ्कुशाः
१०६४०३८३ कुम्भीपाकेषु पच्यन्ते ब्रह्मदायापहारिणः
१०६४०३९१ स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः
१०६४०३९३ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः
१०६४०४०१ न मे ब्रह्मधनं भूयाद्यद्गृध्वाल्पायुषो नराः
१०६४०४०३ पराजिताश्च्युता राज्याद्भवन्त्युद्वेजिनोऽहयः
१०६४०४११ विप्रं कृतागसमपि नैव द्रुह्यत मामकाः
१०६४०४१३ घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः
१०६४०४२१ यथाहं प्रणमे विप्राननुकालं समाहितः
१०६४०४२३ तथा नमत यूयं च योऽन्यथा मे स दण्डभाक्
१०६४०४३१ ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः
१०६४०४३३ अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव
१०६४०४४१ एवं विश्राव्य भगवान्मुकुन्दो द्वारकौकसः
१०६४०४४३ पावनः सर्वलोकानां विवेश निजमन्दिरम्
१०६५००१० श्रीशुक उवाच
१०६५००११ बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः
१०६५००१३ सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम्
१०६५००२१ परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च
१०६५००२३ रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः
१०६५००३१ चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः
१०६५००३३ इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः
१०६५००४१ गोपवृद्धांश्च विधिवद्यविष्ठैरभिवन्दितः
१०६५००४३ यथावयो यथासख्यं यथासम्बन्धमात्मनः
१०६५००५१ समुपेत्याथ गोपालान्हास्यहस्तग्रहादिभिः
१०६५००५३ विश्रान्तम्सुखमासीनं पप्रच्छुः पर्युपागताः
१०६५००६१ पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा
१०६५००६३ कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः

१०६५००७१ कच्चिन्नो बान्धवा राम सर्वे कुशलमासते
१०६५००७३ कच्चित्स्मरथ नो राम यूयं दारसुतान्विताः
१०६५००८१ दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः
१०६५००८३ निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रीताः
१०६५००९१ गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृताः
१०६५००९३ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः
१०६५०१०१ कच्चित्स्मरति वा बन्धून्पितरं मातरं च सः
१०६५०१०३ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति
१०६५०१०५ अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः
१०६५०१११ मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄनपि
१०६५०११३ यदर्थे जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो
१०६५०१२१ ता नः सद्यः परित्यज्य गतः सञ्छिन्नसौहृदः
१०६५०१२३ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम्
१०६५०१३१ कथं नु गृह्णन्त्यनवस्थितात्मनो
१०६५०१३२ वचः कृतघ्नस्य बुधाः पुरस्त्रियः
१०६५०१३३ गृह्णन्ति वै चित्रकथस्य सुन्दर
१०६५०१३४ स्मितावलोकोच्छ्वसितस्मरातुराः
१०६५०१४१ किं नस्तत्कथया गोप्यः कथाः कथयतापराः
१०६५०१४३ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः
१०६५०१५१ इति प्रहसितं शौरेर्जल्पितं चारुवीक्षितम्
१०६५०१५३ गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः
१०६५०१६१ सङ्कर्षणस्ताः कृष्णस्य सन्देशैर्हृदयंगमैः
१०६५०१६३ सान्त्वयामास भगवान्नानानुनयकोविदः
१०६५०१७१ द्वौ मासौ तत्र चावात्सीन्मधुं माधवं एव च
१०६५०१७३ रामः क्षपासु भगवान्गोपीनां रतिमावहन्
१०६५०१८१ पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना
१०६५०१८३ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः
१०६५०१९१ वरुणप्रेषिता देवी वारुणी वृक्षकोटरात्
१०६५०१९३ पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत्
१०६५०२०१ तं गन्धं मधुधाराया वायुनोपहृतं बलः
१०६५०२०३ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ

१०६५०२११ उपगीयमानो गन्धर्वैर्वनिताशोभिमण्डले
१०६५०२१३ रेमे करेणुयूथेशो माहेन्द्र इव वारणः
१०६५०२२१ नेदुर्दुन्दुभयो व्योम्नि ववृषुः कुसुमैर्मुदा
१०६५०२२३ गन्धर्वा मुनयो रामं तद्वीर्यैरीडिरे तदा
१०६५०२३१ उपगीयमानचरितो वनिताभिर्हलायुध
१०६५०२३३ वनेषु व्यचरत्क्षीवो मदविह्वललोचनः
१०६५०२४१ स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया
१०६५०२४३ बिभ्रत्स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम्
१०६५०२५१ स आजुहाव यमुनां जलक्रीडार्थमीश्वरः
१०६५०२५३ निजं वाक्यमनादृत्य मत्त इत्यापगां बलः
१०६५०२५१ अनागतां हलाग्रेण कुपितो विचकर्ष ह
१०६५०२६१ पापे त्वं मामवज्ञाय यन्नायासि मयाहुता
१०६५०२६३ नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम्
१०६५०२७१ एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम्
१०६५०२७३ उवाच चकिता वाचं पतिता पादयोर्नृप
१०६५०२८१ राम राम महाबाहो न जाने तव विक्रमम्
१०६५०२८३ यस्यैकांशेन विधृता जगती जगतः पते
१०६५०२९१ परं भावं भगवतो भगवन्मामजानतीम्
१०६५०२९३ मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सल
१०६५०३०१ ततो व्यमुञ्चद्यमुनां याचितो भगवान्बलः
१०६५०३०३ विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट्
१०६५०३११ कामं विहृत्य सलिलादुत्तीर्णायासीताम्बरे
१०६५०३१३ भूषणानि महार्हाणि ददौ कान्तिः शुभां स्रजम्
१०६५०३२१ वसित्वा वाससी नीले मालां आमुच्य काञ्चनीम्
१०६५०३२३ रेये स्वलङ्कृतो लिप्तो माहेन्द्र इव वारणः
१०६५०३३१ अद्यापि दृश्यते राजन्यमुनाकृष्टवर्त्मना
१०६५०३३३ बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि
१०६५०३४१ एवं सर्वा निशा याता एकेव रमतो व्रजे
१०६५०३४३ रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम्
१०६६००१० श्रीशुक उवाच
१०६६००११ नन्दव्रजं गते रामे करूषाधिपतिर्नृप

१०६६००१३ वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत्
१०६६००२१ त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः
१०६६००२३ इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम्
१०६६००३१ दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने
१०६६००३३ द्वारकायां यथा बालो नृपो बालकृतोऽबुधः
१०६६००४१ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम्
१०६६००४३ कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत्
१०६६००५१ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः
१०६६००५३ भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज
१०६६००६१ यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत
१०६६००६३ त्यक्त्वैहि मां त्वं शरणं नो चेद्देहि ममाहवम्
१०६६००७० श्रीशुक उवाच
१०६६००७१ कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः
१०६६००७३ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा
१०६६००८१ उवाच दूतं भगवान्परिहासकथामनु
१०६६००८३ उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे
१०६६००९१ मुखं तदपिधायाज्ञ कङ्कगृध्रवटैर्वृतः
१०६६००९३ शयिष्यसे हतस्तत्र भविता शरणं शुनाम्
१०६६०१०१ इति दूतस्तमाक्षेपं स्वामिने सर्वमाहरत्
१०६६०१०३ कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह
१०६६०१११ पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः
१०६६०११३ अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम्
१०६६०१२१ तस्य काशीपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप
१०६६०१२३ अक्षौहिणीभिस्तिसृभिरपश्यत्पौण्ड्रकं हरिः
१०६६०१३१ शङ्खार्यसिगदाशार्ङ्ग श्रीवत्साद्युपलक्षितम्
१०६६०१३३ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम्
१०६६०१४१ कौशेयवाससी पीते वसानं गरुडध्वजम्
१०६६०१४३ अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम्
१०६६०१५१ दृष्ट्वा तमात्मनस्तुल्यं वेषं कृत्रिममास्थितम्
१०६६०१५३ यथा नटं रङ्गगतं विजहास भृशं हरीः
१०६६०१६१ शुलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः

१०६६०१६३ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम्
१०६६०१७१ कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्
१०६६०१७२ बलं गजस्यन्दनवाजिपत्तिमत्
१०६६०१७३ गदासिचक्रेषुभिरार्दयद्भृशं
१०६६०१७४ यथा युगान्ते हुतभुक्पृथक्प्रजाः
१०६६०१८१ आयोधनं तद्रथवाजिकुञ्जर द्विपत्खरोष्ट्रैररिणावखण्डितैः
१०६६०१८३ बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम्
१०६६०१९१ अथाह पौण्ड्रकं शौरिर्भो भो पौण्ड्रक यद्भवान्
१०६६०१९३ दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते
१०६६०२०१ त्याजयिष्येऽभिधानं मे यत्त्वयाज्ञ मृषा धृतम्
१०६६०२०३ व्रजामि शरनं तेऽद्य यदि नेच्छामि संयुगम्
१०६६०२११ इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम्
१०६६०२१३ शिरोऽवृश्चद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः
१०६६०२२१ तथा काशीपतेः कायाच्छिर उत्कृत्य पत्रिभिः
१०६६०२२३ न्यपातयत्काशीपुर्यां पद्मकोशमिवानिलः
१०६६०२३१ एवं मत्सरिणम्हत्वा पौण्ड्रकं ससखं हरिः
१०६६०२३३ द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः
१०६६०२४१ स नित्यं भगवद्ध्यान प्रध्वस्ताखिलबन्धनः
१०६६०२४३ बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवत्
१०६६०२५१ शिरः पतितमालोक्य राजद्वारे सकुण्डलम्
१०६६०२५३ किमिदं कस्य वा वक्त्रमिति संशिशिरे जनाः
१०६६०२६१ राज्ञः काशीपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः
१०६६०२६३ पौराश्च हा हता राजन्नाथ नाथेति प्रारुदन्
१०६६०२७१ सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पतेः
१०६६०२७३ निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः
१०६६०२८१ इत्यात्मनाभिसन्धाय सोपाध्यायो महेश्वरम्
१०६६०२८३ सुदक्षिणोऽर्चयामास परमेण समाधिना
१०६६०२९१ प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद्विभुः
१०६६०२९३ पितृहन्तृवधोपायं स वव्रे वरमीप्सितम्
१०६६०३०१ दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम्
१०६६०३०३ अभिचारविधानेन स चाग्निः प्रमथैर्वृतः

१०६६०३११ साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः
१०६६०३१३ इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन्व्रती
१०६६०३२१ ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः
१०६६०३२३ तप्ततात्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः
१०६६०३३१ दंष्ट्रोग्रभ्रुकुटीदण्ड कठोरास्यः स्वजिह्वया
१०६६०३३३ आलिहन्सृक्कणी नग्नो विधुन्वंस्त्रिशिखं ज्वलत्
१०६६०३४१ पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम्
१०६६०३४३ सोऽभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन्दिशः
१०६६०३५१ तमाभिचारदहनमायान्तं द्वारकौकसः
१०६६०३५३ विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा
१०६६०३६१ अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः
१०६६०३६३ त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम्
१०६६०३७१ श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम्
१०६६०३७३ शरण्यः सम्प्रहस्याह मा भैष्टेत्यवितास्म्यहम्
१०६६०३८१ सर्वस्यान्तर्बहिःसाक्षी कृत्यां माहेश्वरीं विभुः
१०६६०३८३ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत्
१०६६०३९१ तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम्
१०६६०३९३ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रं अथाग्निमार्दयत्
१०६६०४०१ कृत्यानलः प्रतिहतः स रथान्गपाणेर्
१०६६०४०२ अस्त्रौजसा स नृप भग्नमुखो निवृत्तः
१०६६०४०३ वाराणसीं परिसमेत्य सुदक्षिणं तं
१०६६०४०४ सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः
१०६६०४११ चक्रं च विष्णोस्तदनुप्रविष्टं वारानसीं साट्टसभालयापणाम्
१०६६०४१३ सगोपुराट्टालककोष्ठसङ्कुलां सकोशहस्त्यश्वरथान्नशालिनीम्
१०६६०४२१ दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम्
१०६६०४२३ भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः
१०६६०४३१ य एनं श्रावयेन्मर्त्य उत्तमःश्लोकविक्रमम्
१०६६०४३३ समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते
१०६७००१० श्रीराजोवाच
१०६७००११ भुयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः
१०६७००१३ अनन्तस्याप्रमेयस्य यदन्यत्कृतवान्प्रभुः

१०६७००२० श्रीशुक उवाच
१०६७००२१ नरकस्य सखा कश्चिद्द्विविदो नाम वानरः
१०६७००२३ सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान्
१०६७००३१ सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम्
१०६७००३३ पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन्
१०६७००४१ क्वचित्स शैलानुत्पाट्य तैर्देशान्समचूर्णयत्
१०६७००४३ आनर्तान्सुतरामेव यत्रास्ते मित्रहा हरिः
१०६७००५१ क्वचित्समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम्
१०६७००५३ देशान्नागायुतप्राणो वेलाकूले न्यमज्जयत्
१०६७००६१ आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन्
१०६७००६३ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः
१०६७००७१ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः
१०६७००७३ निक्षिप्य चाप्यधाच्छैलैः पेशष्कारीव कीटकम्
१०६७००८१ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः
१०६७००८३ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ
१०६७००९१ तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम्
१०६७००९३ सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम्
१०६७०१०१ गायन्तं वारुणीं पीत्वा मदविह्वललोचनम्
१०६७०१०३ विभ्राजमानं वपुषा प्रभिन्नमिव वारणम्
१०६७०१११ दुष्टः शाखामृगः शाखामारूढः कम्पयन्द्रुमान्
१०६७०११३ चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन्
१०६७०१२१ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः
१०६७०१२३ हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः
१०६७०१३१ ता हेलयामास कपिर्भ्रूक्षेपैर्सम्मुखादिभिः
१०६७०१३३ दर्शयन्स्वगुदं तासां रामस्य च निरीक्षितः
१०६७०१४१ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः
१०६७०१४३ स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः
१०६७०१५१ गृहीत्वा हेलयामास धूर्तस्तं कोपयन्हसन्
१०६७०१५३ निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलम्
१०६७०१५५ कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः
१०६७०१६१ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान्

१०६७०१६३ क्रुद्धो मुषलमादत्त हलं चारिजिघांसया
१०६७०१७१ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना
१०६७०१७३ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत्
१०६७०१८१ तं तु सङ्कर्षणो मूर्ध्नि पतन्तमचलो यथा
१०६७०१८३ प्रतिजग्राह बलवान्सुनन्देनाहनच्च तम्
१०६७०१९१ मूषलाहतमस्तिष्को विरेजे रक्तधारया
१०६७०१९३ गिरिर्यथा गैरिकया प्रहारं नानुचिन्तयन्
१०६७०२०१ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा
१०६७०२०३ तेनाहनत्सुसङ्क्रुद्धस्तं बलः शतधाच्छिनत्
१०६७०२११ ततोऽन्येन रुषा जघ्ने तं चापि शतधाच्छिनत्
१०६७०२२१ एवं युध्यन्भगवता भग्ने भग्ने पुनः पुनः
१०६७०२२३ आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम्
१०६७०२३१ ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः
१०६७०२३३ तत्सर्वं चूर्णयां आस लीलया मुषलायुधः
१०६७०२४१ स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः
१०६७०२४३ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत्
१०६७०२५१ यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुषललाङ्गले
१०६७०२५३ जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन्
१०६७०२६१ चकम्पे तेन पतता सटङ्कः सवनस्पतिः
१०६७०२६३ पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि
१०६७०२७१ जयशब्दो नमःशब्दः साधु साध्विति चाम्बरे
१०६७०२७३ सुरसिद्धमुनीन्द्राणामासीत्कुसुमवर्षिणाम्
१०६७०२८१ एवं निहत्य द्विविदं जगद्व्यतिकरावहम्
१०६७०२८३ संस्तूयमानो भगवाञ्जनैः स्वपुरमाविशत्
१०६८००१० श्रीशुक उवाच
१०६८००११ दुर्योधनसुतां राजन्लक्ष्मणां समितिंजयः
१०६८००१३ स्वयंवरस्थामहरत्साम्बो जाम्बवतीसुतः
१०६८००२१ कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः
१०६८००२३ कदर्थीकृत्य नः कन्यामकामामहरद्बलात्
१०६८००३१ बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः
१०६८००३३ येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम्

१०६८००४१ निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः
१०६८००४३ भग्नदर्पाः शमं यान्ति प्राणा इव सुसंयताः
१०६८००५१ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः
१०६८००५३ साम्बमारेभिरे योद्धुं कुरुवृद्धानुमोदिताः
१०६८००६१ दृष्ट्वानुधावतः साम्बो धार्तराष्ट्रान्महारथः
१०६८००६३ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः
१०६८००७१ तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः
१०६८००७३ आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन्
१०६८००८१ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः
१०६८००८३ नामृष्यत्तदचिन्त्यार्भः सिंह क्षुद्रमृगैरिव
१०६८००९१ विस्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः
१०६८००९३ कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक्
१०६८०१०१ चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन्
१०६८०१०३ रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन्
१०६८०१११ तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान्
१०६८०११३ एकस्तु सारथिं जघ्ने चिच्छेदण्यः शरासनम्
१०६८०१२१ तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि
१०६८०१२३ कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन्
१०६८०१३१ तच्छ्रुत्वा नारदोक्तेन राजन्सञ्जातमन्यवः
१०६८०१३३ कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः
१०६८०१४१ सान्त्वयित्वा तु तान्रामः सन्नद्धान्वृष्णिपुङ्गवान्
१०६८०१४३ नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः
१०६८०१५१ जगाम हास्तिनपुरं रथेनादित्यवर्चसा
१०६८०१५३ ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः
१०६८०१६१ गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः
१०६८०१६३ उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया
१०६८०१७१ सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम्
१०६८०१७३ दुर्योधनं च विधिवद्राममागतं अब्रवीत्
१०६८०१८१ तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम्
१०६८०१८३ तमर्चयित्वाभिययुः सर्वे मङ्गलपाणयः
१०६८०१९१ तं सङ्गम्य यथान्यायं गामर्घ्यं च न्यवेदयन्

१०६८०१९३ तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम्
१०६८०२०१ बन्धून्कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम्
१०६८०२०३ परस्परमथो रामो बभाषेऽविक्लवं वचः
१०६८०२११ उग्रसेनः क्षितेशेशो यद्व आज्ञापयत्प्रभुः
१०६८०२१३ तदव्यग्रधियः श्रुत्वा कुरुध्वमविलम्बितम्
१०६८०२२१ यद्यूयं बहवस्त्वेकं जित्वाधर्मेण धार्मिकम्
१०६८०२२३ अबध्नीताथ तन्मृष्ये बन्धूनामैक्यकाम्यया
१०६८०२३१ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः
१०६८०२३३ कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः
१०६८०२४१ अहो महच्चित्रमिदं कालगत्या दुरत्यया
१०६८०२४३ आरुरुक्षत्युपानद्वै शिरो मुकुटसेवितम्
१०६८०२५१ एते यौनेन सम्बद्धाः सहशय्यासनाशनाः
१०६८०२५३ वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः
१०६८०२६१ चामरव्यजने शङ्खमातपत्रं च पाण्डुरम्
१०६८०२६३ किरीटमासनं शय्यां भुञ्जतेऽस्मदुपेक्षया
१०६८०२७१ अलं यदूनां नरदेवलाञ्छनैर्दातुः प्रतीपैः फणिनामिवामृतम्
१०६८०२७३ येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत
१०६८०२८१ कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः
१०६८०२८३ अदत्तमवरुन्धीत सिंहग्रस्तमिवोरणः
१०६८०२९० श्रीबादरायणिरुवाच
१०६८०२९१ जन्मबन्धुश्रीयोन्नद्ध मदास्ते भरतर्षभ
१०६८०२९३ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन्
१०६८०३०१ दृष्ट्वा कुरूनां दौःशील्यं श्रुत्वावाच्यानि चाच्युतः
१०६८०३०३ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन्मुहुः
१०६८०३११ नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः
१०६८०३१३ तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा
१०६८०३२१ अहो यदून्सुसंरब्धान्कृष्णं च कुपितं शनैः
१०६८०३२३ सान्त्वयित्वाहमेतेषां शममिच्छन्निहागतः
१०६८०३३१ त इमे मन्दमतयः कलहाभिरताः खलाः
१०६८०३३३ तं मामवज्ञाय मुहुर्दुर्भाषान्मानिनोऽब्रुवन्
१०६८०३४१ नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः

१०६८०३४३ शक्रादयो लोकपाला यस्यादेशानुवर्तिनः
१०६८०३५१ सुधर्माक्रम्यते येन पारिजातोऽमराङ्घ्रिपः
१०६८०३५३ आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः
१०६८०३६१ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी
१०६८०३६३ स नार्हति किल श्रीशो नरदेवपरिच्छदान्
१०६८०३७१ यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैर्
१०६८०३७२ मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम्
१०६८०३७३ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः
१०६८०३७४ श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व
१०६८०३८१ भुञ्जते कुरुभिर्दत्तं भूखण्डं वृष्णयः किल
१०६८०३८३ उपानहः किल वयं स्वयं तु कुरवः शिरः
१०६८०३९१ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम्
१०६८०३९३ असम्बद्धा गिरऋओ रुक्षाः कः सहेतानुशासीता
१०६८०४०१ अद्य निष्कौरवं पृथ्वीं करिष्यामीत्यमर्षितः
१०६८०४०३ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम्
१०६८०४११ लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम्
१०६८०४१३ विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः
१०६८०४२१ जलयानमिवाघूर्णं गङ्गायां नगरं पतत्
१०६८०४२३ आकृष्यमाणमालोक्य कौरवाः जातसम्भ्रमाः
१०६८०४३१ तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः
१०६८०४३३ सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम्
१०६८०४४१ राम रामाखिलाधार प्रभावं न विदाम ते
१०६८०४४३ मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम्
१०६८०४५१ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः
१०६८०४५३ लोकान्क्रीडनकानीश क्रीडतस्ते वदन्ति हि
१०६८०४६१ त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन्
१०६८०४६३ अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः
१०६८०४७१ कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात्
१०६८०४७३ बिभ्रतो भगवन्सत्त्वं स्थितिपालनतत्परः
१०६८०४८१ नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय
१०६८०४८३ विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः

१०६८०४९० श्रीशुक उवाच
१०६८०४९१ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः
१०६८०४९३ प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ
१०६८०५०१ दुर्योधनः पारिबर्हं कुञ्जरान्षष्टिहायनान्
१०६८०५०३ ददौ च द्वादशशतान्ययुतानि तुरङ्गमान्
१०६८०५११ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम्
१०६८०५१३ दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः
१०६८०५२१ प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः
१०६८०५२३ ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनन्दितः
१०६८०५३१ ततः प्रविष्टः स्वपुरं हलायुधः
१०६८०५३२ समेत्य बन्धूननुरक्तचेतसः
१०६८०५३३ शशंस सर्वं यदुपुङ्गवानां
१०६८०५३४ मध्ये सभायां कुरुषु स्वचेष्टितम्
१०६८०५४१ अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम्
१०६८०५४३ समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते
१०६९००१० श्रीशुक उवाच
१०६९००११ नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम्
१०६९००१३ कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः
१०६९००२१ चित्रं बतैतदेकेन वपुषा युगपत्पृथक्
१०६९००२३ गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्
१०६९००३१ इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत्
१०६९००३३ पुष्पितोपवनाराम द्विजालिकुलनादिताम्
१०६९००४१ उत्फुल्लेन्दीवराम्भोज कह्लारकुमुदोत्पलैः
१०६९००४३ छुरितेषु सरःसूच्चैः कूजितां हंससारसैः
१०६९००५१ प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः
१०६९००५३ महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः
१०६९००६१ विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः
१०६९००६३ संसिक्तमार्गाङ्गनवीथिदेहलीं पतत्पताकध्वजवारितातपाम्
१०६९००७१ तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः
१०६९००७३ हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम्
१०६९००८१ तत्र षोडशभिः सद्म सहस्रैः समलङ्कृतम्

१०६९००८३ विवेशैकतोमं शौरेः पत्नीनां भवनं महत्
१०६९००९१ विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः
१०६९००९३ इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा
१०६९०१०१ वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः
१०६९०१०३ दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः
१०६९०१११ दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम्
१०६९०११३ पुम्भिः सकञ्चुकोष्णीष सुवस्त्रमणिकुण्डलैः
१०६९०१२१ रत्नप्रदीपनिकरद्युतिभिर्निरस्त ध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग
१०६९०१२३ नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः
१०६९०१३१ तस्मिन्समानगुणरूपवयःसुवेष
१०६९०१३२ दासीसहस्रयुतयानुसवं गृहिण्या
१०६९०१३३ विप्रो ददर्श चमरव्यजनेन रुक्म
१०६९०१३४ दण्डेन सात्वतपतिं परिवीजयन्त्या
१०६९०१४१ तं सन्निरीक्ष्य भगवान्सहसोत्थितश्री
१०६९०१४२ पर्यङ्कतः सकलधर्मभृतां वरिष्ठः
१०६९०१४३ आनम्य पादयुगलं शिरसा किरीट
१०६९०१४४ जुष्टेन साञ्जलिरवीविशदासने स्वे
१०६९०१५१ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना
१०६९०१५२ बिभ्रज्जगद्गुरुतमोऽपि सतां पतिर्हि
१०६९०१५३ ब्रह्मण्यदेव इति यद्गुणनाम युक्तं
१०६९०१५४ तस्यैव यच्चरणशौचमशेषतीर्थम्
१०६९०१६१ सम्पूज्य देवऋषिवर्यमृषिः पुराणो
१०६९०१६२ नारायणो नरसखो विधिनोदितेन
१०६९०१६३ वाण्याभिभाष्य मितयामृतमिष्टया तं
१०६९०१६४ प्राह प्रभो भगवते करवाम हे किम्
१०६९०१७० श्रीनारद उवाच
१०६९०१७१ नैवाद्भुतं त्वयि विभोऽखिललोकनाथे
१०६९०१७२ मैत्री जनेषु सकलेषु दमः खलानाम्
१०६९०१७३ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां
१०६९०१७४ स्वैरावतार उरुगाय विदाम सुष्ठु
१०६९०१८१ दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं

१०६९०१८२ ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः
१०६९०१८३ संसारकूपपतितोत्तरणावलम्बं
१०६९०१८४ ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात्
१०६९०१९१ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः
१०६९०१९३ योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया
१०६९०२०१ दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च
१०६९०२०३ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः
१०६९०२११ पृष्टश्चाविदुषेवासौ कदायातो भवानिति
१०६९०२१३ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः
१०६९०२२१ अथापि ब्रूहि नो ब्रह्मञ्जन्मैतच्छोभनं कुरु
१०६९०२२३ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम्
१०६९०२३१ तत्राप्यचष्ट गोविन्दं लालयन्तं सुतान्शिशून्
१०६९०२३३ ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम्
१०६९०२४१ जुह्वन्तं च वितानाग्नीन्यजन्तं पञ्चभिर्मखैः
१०६९०२४३ भोजयन्तं द्विजान्क्वापि भुञ्जानमवशेषितम्
१०६९०२५१ क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्
१०६९०२५३ एकत्र चासिचर्माभ्यां चरन्तमसिवर्त्मसु
१०६९०२६१ अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम्
१०६९०२६३ क्वचिच्छयानं पर्यङ्के स्तूयमानं च वन्दिभिः
१०६९०२७१ मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः
१०६९०२७३ जलक्रीडारतं क्वापि वारमुख्याबलावृतम्
१०६९०२८१ कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः
१०६९०२८३ इतिहासपुराणानि शृण्वन्तं मङ्गलानि च
१०६९०२९१ हसन्तं हासकथया कदाचित्प्रियया गृहे
१०६९०२९३ क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित्
१०६९०३०१ ध्यायन्तमेकमासीनं पुरुषं प्रकृतेः परम्
१०६९०३०३ शुश्रूषन्तं गुरून्क्वापि कामैर्भोगैः सपर्यया
१०६९०३११ कुर्वन्तं विग्रहं कैश्चित्सन्धिं चान्यत्र केशवम्
१०६९०३१३ कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम्
१०६९०३२१ पुत्राणां दुहितॄणां च काले विध्युपयापनम्
१०६९०३२३ दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः

१०६९०३३१ प्रस्थापनोपनयनैरपत्यानां महोत्सवान्
१०६९०३३३ वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे
१०६९०३४१ यजन्तं सकलान्देवान्क्वापि क्रतुभिरूर्जितैः
१०६९०३४३ पूर्तयन्तं क्वचिद्धर्मं कूर्पाराममठादिभिः
१०६९०३५१ चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम्
१०६९०३५३ घ्नन्तं तत्र पशून्मेध्यान्परीतं यदुपुङ्गवैः
१०६९०३६१ अव्यक्तलिन्गं प्रकृतिष्वन्तःपुरगृहादिषु
१०६९०३६३ क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया
१०६९०३७१ अथोवाच हृषीकेशं नारदः प्रहसन्निव
१०६९०३७३ योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम्
१०६९०३८१ विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम्
१०६९०३८३ योगेश्वरात्मन्निर्भाता भवत्पादनिषेवया
१०६९०३९१ अनुजानीहि मां देव लोकांस्ते यशसाप्लुतान्
१०६९०३९३ पर्यटामि तवोद्गायन्लीला भुवनपावनीः
१०६९०४०० श्रीभगवानुवाच
१०६९०४०१ ब्रह्मन्धन्नस्य वक्ताहं कर्ता तदनुमोदिता
१०६९०४०३ तच्छिक्षयन्लोकमिममास्थितः पुत्र मा खिदः
१०६९०४१० श्रीशुक उवाच
१०६९०४११ इत्याचरन्तं सद्धर्मान्पावनान्गृहमेधिनाम्
१०६९०४१३ तमेव सर्वगेहेषु सन्तमेकं ददर्श ह
१०६९०४२१ कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम्
१०६९०४२३ मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः
१०६९०४३१ इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना
१०६९०४३३ सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ
१०६९०४४१ एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः
१०६९०४४३ रेमेऽण्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः
१०६९०४५१ यानीह विश्वविलयोद्भववृत्तिहेतुः
१०६९०४५२ कर्माण्यनन्यविषयाणि हरीश्चकार
१०६९०४५३ यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
१०६९०४५४ भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे
१०७०००१० श्रीशुक उवाच

१०७०००११ अथोषस्युपवृत्तायां कुक्कुटान्कूजतोऽशपन्
१०७०००१३ गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः
१०७०००२१ वयांस्यरोरुवन्कृष्णं बोधयन्तीव वन्दिनः
१०७०००२३ गायत्स्वलिष्वनिद्राणि मन्दारवनवायुभिः
१०७०००३१ मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम्
१०७०००३३ परिरम्भणविश्लेषात्प्रियबाह्वन्तरं गता
१०७०००४१ ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः
१०७०००४३ दध्यौ प्रसन्नकरण आत्मानं तमसः परम्
१०७०००५१ एकं स्वयंज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम्
१०७०००५३ ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम्
१०७०००६१ अथाप्लुतोऽम्भस्यमले यथाविधि
१०७०००६२ क्रियाकलापं परिधाय वाससी
१०७०००६३ चकार सन्ध्योपगमादि सत्तमो
१०७०००६४ हुतानलो ब्रह्म जजाप वाग्यतः
१०७०००७१ उपस्थायार्कमुद्यन्तं तर्पयित्वात्मनः कलाः
१०७०००७३ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान्
१०७०००८१ धेनूनां रुक्मशृङ्गीनां साध्वीनां मौक्तिकस्रजाम्
१०७०००८३ पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम्
१०७०००९१ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह
१०७०००९३ अलङ्कृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने
१०७००१०१ गोविप्रदेवतावृद्ध गुरून्भूतानि सर्वशः
१०७००१०३ नमस्कृत्यात्मसम्भूतीर्मङ्गलानि समस्पृशत्
१०७००१११ आत्मानं भूषयामास नरलोकविभूषणम्
१०७००११३ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः
१०७००१२१ अवेक्ष्याज्यं तथादर्शं गोवृषद्विजदेवताः
१०७००१२३ कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणाम्
१०७००१२५ प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत
१०७००१३१ संविभज्याग्रतो विप्रान्स्रक्ताम्बूलानुलेपनैः
१०७००१३३ सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततः स्वयम्
१०७००१४१ तावत्सूत उपानीय स्यन्दनं परमाद्भुतम्
१०७००१४३ सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः

१०७००१५१ गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत्
१०७००१५३ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः
१०७००१६१ ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः
१०७००१६३ कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः
१०७००१७१ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः
१०७००१७३ प्राविशद्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः
१०७००१८१ तत्रोपविस्तः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन्
१०७००१८३ वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः
१०७००१९१ तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम्
१०७००१९३ उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः पृथक्
१०७००२०१ मृदङ्गवीणामुरज वेणुतालदरस्वनैः
१०७००२०३ ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः
१०७००२११ तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः
१०७००२१३ पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः
१०७००२२१ तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः
१०७००२२३ विज्ञापितो भगवते प्रतीहारैः प्रवेशितः
१०७००२३१ स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः
१०७००२३३ राज्ञामावेदयद्दुःखं जरासन्धनिरोधजम्
१०७००२४१ ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः
१०७००२४३ प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे
१०७००२५० राजान ऊचुः
१०७००२५१ कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभयभञ्जन
१०७००२५३ वयं त्वां शरणं यामो भवभीताः पृथग्धियः
१०७००२६१ लोको विकर्मनिरतः कुशले प्रमत्तः
१०७००२६२ कर्मण्ययं त्वदुदिते भवदर्चने स्वे
१०७००२६३ यस्तावदस्य बलवानिह जीविताशां
१०७००२६४ सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै
१०७००२७१ लोके भवाञ्जगदिनः कलयावतीर्णः
१०७००२७२ सद्रक्षणाय खलनिग्रहणाय चान्यः
१०७००२७३ कश्चित्त्वदीयमतियाति निदेशमीश
१०७००२७४ किं वा जनः स्वकृतमृच्छति तन्न विद्मः

१०७००२८१ स्वप्नायितं नृपसुखं परतन्त्रमीश
१०७००२८२ शश्वद्भयेन मृतकेन धुरं वहामः
१०७००२८३ हित्वा तदात्मनि सुखं त्वदनीहलभ्यं
१०७००२८४ क्लिश्यामहेऽतिकृपणास्तव माययेह
१०७००२९१ तन्नो भवान्प्रणतशोकहराङ्घ्रियुग्मो
१०७००२९२ बद्धान्वियुङ्क्ष्व मगधाह्वयकर्मपाशात्
१०७००२९३ यो भूभुजोऽयुतमतङ्गजवीर्यमेको
१०७००२९४ बिभ्रद्रुरोध भवने मृगराडिवावीः
१०७००३०१ यो वै त्वया द्विनवकृत्व उदात्तचक्र
१०७००३०२ भग्नो मृधे खलु भवन्तमनन्तवीर्यम्
१०७००३०३ जित्वा नृलोकनिरतं सकृदूढदर्पो
१०७००३०४ युष्मत्प्रजा रुजति नोऽजित तद्विधेहि
१०७००३१० दूत उवाच
१०७००३११ इति मागधसंरुद्धा भवद्दर्शनकङ्क्षिणः
१०७००३१३ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम्
१०७००३२० श्रीशुक उवाच
१०७००३२१ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः
१०७००३२३ बिभ्रत्पिङ्गजटाभारं प्रादुरासीद्यथा रविः
१०७००३३१ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः
१०७००३३३ ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा
१०७००३४१ सभाजयित्वा विधिवत्कृतासनपरिग्रहम्
१०७००३४३ बभाषे सुनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम्
१०७००३५१ अपि स्विदद्य लोकानां त्रयाणामकुतोभयम्
१०७००३५३ ननु भूयान्भगवतो लोकान्पर्यटतो गुणः
१०७००३६१ न हि तेऽविदितं किञ्चिल्लोकेष्वीश्वरकर्तृषु
१०७००३६३ अथ पृच्छामहे युष्मान्पाण्डवानां चिकीर्षितम्
१०७००३७० श्रीनारद उवाच
१०७००३७१ दृष्टा माया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः
१०७००३७३ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम्
१०७००३८१ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः
१०७००३८३ यद्विद्यमानात्मतयावभासते तस्मै नमस्ते स्वविलक्षणात्मने

१०७००३९१ जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः
१०७००३९३ लीलावतारैः स्वयशः प्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये
१०७००४०१ अथाप्याश्रावये ब्रह्म नरलोकविडम्बनम्
१०७००४०३ राज्ञः पैतृष्वस्रेयस्य भक्तस्य च चिकीर्षितम्
१०७००४११ यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः
१०७००४१३ पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम्
१०७००४२१ तस्मिन्देव क्रतुवरे भवन्तं वै सुरादयः
१०७००४२३ दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः
१०७००४३१ श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेऽन्तेवसायिनः
१०७००४३३ तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः
१०७००४४१ यस्यामलं दिवि यशः प्रथितं रसायां
१०७००४४२ भूमौ च ते भुवनमङ्गल दिग्वितानम्
१०७००४४३ मन्दाकिनीति दिवि भोगवतीति चाधो
१०७००४४४ गङ्गेति चेह चरणाम्बु पुनाति विश्वम्
१०७००४५० श्रीशुक उवाच
१०७००४५१ तत्र तेष्वात्मपक्षेष्व गृणत्सु विजिगीषया
१०७००४५३ वाचः पेशैः स्मयन्भृत्यमुद्धवं प्राह केशवः
१०७००४६० श्रीभगवानुवाच
१०७००४६१ त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित्
१०७००४६३ अथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत्
१०७००४७१ इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत्
१०७००४७३ निदेशं शिरसाधाय उद्धवः प्रत्यभाषत
१०७१००१० श्रीशुक उवाच
१०७१००११ इत्युदीरितमाकर्ण्य देवऋषेरुद्धवोऽब्रवीत्
१०७१००१३ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः
१०७१००२० श्रीउद्धव उवाच
१०७१००२१ यदुक्तमृषिना देव साचिव्यं यक्ष्यतस्त्वया
१०७१००२३ कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणाम्
१०७१००३१ यष्टव्यम्राजसूयेन दिक्चक्रजयिना विभो
१०७१००३३ अतो जरासुतजय उभयार्थो मतो मम
१०७१००४१ अस्माकं च महानर्थो ह्येतेनैव भविष्यति

१०७१००४३ यशश्च तव गोविन्द राज्ञो बद्धान्विमुञ्चतः
१०७१००५१ स वै दुर्विषहो राजा नागायुतसमो बले
१०७१००५३ बलिनामपि चान्येषां भीमं समबलं विना
१०७१००६१ द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः
१०७१००६३ ब्राह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित्
१०७१००७१ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः
१०७१००७३ हनिष्यति न सन्देहो द्वैरथे तव सन्निधौ
१०७१००८१ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः
१०७१००८३ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव
१०७१००९१ गायन्ति ते विशदकर्म गृहेषु देव्यो
१०७१००९२ राज्ञां स्वशत्रुवधमात्मविमोक्षणं च
१०७१००९३ गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः
१०७१००९४ पित्रोश्च लब्धशरणा मुनयो वयं च
१०७१०१०१ जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते
१०७१०१०३ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः
१०७१०११० श्रीशुक उवाच
१०७१०१११ इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम्
१०७१०११३ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन्
१०७१०१२१ अथादिशत्प्रयाणाय भगवान्देवकीसुतः
१०७१०१२३ भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः
१०७१०१३१ निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान्
१०७१०१३३ सङ्कर्षणमनुज्ञाप्य यदुराजं च शत्रुहन्
१०७१०१३५ सूतोपनीतं स्वरथमारुहद्गरुडध्वजम्
१०७१०१४१ ततो रथद्विपभटसादिनायकैः
१०७१०१४२ करालया परिवृत आत्मसेनया
१०७१०१४३ मृदङ्गभेर्यानकशङ्खगोमुखैः
१०७१०१४४ प्रघोषघोषितककुभो निरक्रमत्
१०७१०१५१ नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः
१०७१०१५३ वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः
१०७१०१६१ नरोष्ट्रगोमहिषखराश्वतर्यनः
१०७१०१६२ करेणुभिः परिजनवारयोषितः

१०७१०१६३ स्वलङ्कृताः कटकुटिकम्बलाम्बराद्य्
१०७१०१६४ उपस्करा ययुरधियुज्य सर्वतः
१०७१०१७१ बलं बृहद्ध्वजपटछत्रचामरैर्
१०७१०१७२ वरायुधाभरणकिरीटवर्मभिः
१०७१०१७३ दिवांशुभिस्तुमुलरवं बभौ रवेर्
१०७१०१७४ यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः
१०७१०१८१ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा
१०७१०१८३ निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसन्दरशननिर्वृतेन्द्रियः
१०७१०१९१ राजदूतमुवाचेदं भगवान्प्रीणयन्गिरा
१०७१०१९३ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम्
१०७१०२०१ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान्
१०७१०२०३ तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः
१०७१०२११ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः
१०७१०२१३ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान्
१०७१०२२१ ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम्
१०७१०२२३ पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत्
१०७१०२३१ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृनाम्
१०७१०२३३ अजातशत्रुर्निरगात्सोपध्यायः सुहृद्वृतः
१०७१०२४१ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा
१०७१०२४३ अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः
१०७१०२५१ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः
१०७१०२५३ चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः
१०७१०२६१ दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः
१०७१०२६३ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः
१०७१०२७१ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजलाकुलेन्द्रियः
१०७१०२७३ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम्
१०७१०२८१ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः
१०७१०२८३ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः
१०७१०२८५ मानिनो मानयामास कुरुसृञ्जयकैकयान्
१०७१०२९१ सूतमागधगन्धर्वा वन्दिनश्चोपमन्त्रिणः
१०७१०२९३ मृदङ्गशङ्खपटह वीणापणवगोमुखैः

१०७१०२९५ ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः
१०७१०३०१ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः
१०७१०३०३ संस्तूयमानो भगवान्विवेशालङ्कृतं पुरम्
१०७१०३११ संसिक्तवर्त्म करिणां मदगन्धतोयैश्
१०७१०३१२ चित्रध्वजैः कनकतोरणपूर्णकुम्भैः
१०७१०३१३ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्
१०७१०३१४ गन्धैर्नृभिर्युवतिभिश्च विराजमानम्
१०७१०३२१ उद्दीप्तदीपबलिभिः प्रतिसद्म जाल
१०७१०३२२ निर्यातधूपरुचिरं विलसत्पताकम्
१०७१०३२३ मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्
१०७१०३२४ जुष्टं ददर्श भवनैः कुरुराजधाम
१०७१०३३१ प्राप्तं निशम्य नरलोचनपानपात्रम्
१०७१०३३२ औत्सुक्यविश्लथितकेशदुकूलबन्धाः
१०७१०३३३ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे
१०७१०३३४ द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे
१०७१०३४१ तस्मिन्सुसङ्कुल इभाश्वरथद्विपद्भिः
१०७१०३४२ कृष्णम्सभार्यमुपलभ्य गृहाधिरूढाः
१०७१०३४३ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य
१०७१०३४४ सुस्वागतं विदधुरुत्स्मयवीक्षितेन
१०७१०३५१ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्
१०७१०३५२ तारा यथोडुपसहाः किमकार्यमूभिः
१०७१०३५३ यच्चक्षुषां पुरुषमौलिरुदारहास
१०७१०३५४ लीलावलोककलयोत्सवमातनोति
१०७१०३६१ तत्र तत्रोपसङ्गम्य पौरा मङ्गलपाणयः
१०७१०३६३ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः
१०७१०३७१ अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः
१०७१०३७३ ससम्भ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम्
१०७१०३८१ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम्
१०७१०३८३ प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे
१०७१०३९१ गोविन्दं गृहमानीय देवदेवेशमादृतः
१०७१०३९३ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः

१०७१०४०१ पितृस्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम्
१०७१०४०३ स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः
१०७१०४११ श्वश्र्वा सञ्चोदिता कृष्णा कृष्णपत्नीश्च सर्वशः
१०७१०४१३ आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा
१०७१०४२१ कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम्
१०७१०४२३ अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः
१०७१०४३१ सुखं निवासयामास धर्मराजो जनार्दनम्
१०७१०४३३ ससैन्यं सानुगामत्यं सभार्यं च नवं नवम्
१०७१०४४१ तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः
१०७१०४४३ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता
१०७१०४५१ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया
१०७१०४५३ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः
१०७२००१० श्रीशुक उवाच
१०७२००११ एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः
१०७२००१३ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः
१०७२००२१ आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्धिबान्धवैः
१०७२००२३ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह
१०७२००३० श्रीयुधिष्ठिर उवाच
१०७२००३१ क्रतुराजेन गोविन्द राजसूयेन पावनीः
१०७२००३३ यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो
१०७२००४१ त्वत्पादुके अविरतं परि ये चरन्ति
१०७२००४२ ध्यायन्त्यभद्रनशने शुचयो गृणन्ति
१०७२००४३ विन्दन्ति ते कमलनाभ भवापवर्गम्
१०७२००४४ आशासते यदि त आशिष ईश नान्ये
१०७२००५१ तद्देवदेव भवतश्चरणारविन्द
१०७२००५२ सेवानुभावमिह पश्यतु लोक एषः
१०७२००५३ ये त्वां भजन्ति न भजन्त्युत वोभयेषां
१०७२००५४ निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम्
१०७२००६१ न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्
१०७२००६२ सर्वात्मनः समदृशः स्वसुखानुभूतेः
१०७२००६३ संसेवतां सुरतरोरिव ते प्रसादः

१०७२००६४ सेवानुरूपमुदयो न विपर्ययोऽत्र

१०७२००७० श्रीभगवानुवाच

१०७२००७१ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन

१०७२००७३ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति

१०७२००८१ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो

१०७२००८३ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम्

१०७२००९१ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे

१०७२००९३ सम्भृत्य सर्वसम्भारानाहरस्व महाक्रतुम्

१०७२०१०१ एते ते भ्रातरो राजंल्लोकपालांशसम्भवाः

१०७२०१०३ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः

१०७२०१११ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया

१०७२०११३ विभूतिभिर्वाभिभवेद्देवोऽपि किमु पार्थिवः

१०७२०१२० श्रीशुक उवाच

१०७२०१२१ निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः

१०७२०१२३ भ्रातृन्दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान्

१०७२०१३१ सहदेवं दक्षिणस्यामादिशत्सह सृञ्जयैः

१०७२०१३३ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम्

१०७२०१३५ प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः

१०७२०१४१ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा

१०७२०१४३ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते

१०७२०१५१ श्रुत्वाजितं जरासन्धं नृपतेर्ध्यायतो हरिः

१०७२०१५३ आहोपायं तमेवाद्य उद्धवो यमुवाच ह

१०७२०१६१ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिन्गधरास्त्रयः

१०७२०१६३ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः

१०७२०१७१ ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम्

१०७२०१७३ ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिङ्गिनः

१०७२०१८१ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान्

१०७२०१८३ तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे

१०७२०१९१ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः

१०७२०१९३ किं न देयं वदान्यानां कः परः समदर्शिनाम्

१०७२०२०१ योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्

१०७२०२०३ नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः
१०७२०२११ हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः
१०७२०२१३ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः
१०७२०२२० श्रीशुक उवाच
१०७२०२२१ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि
१०७२०२२३ राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत्
१०७२०२३१ राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति
१०७२०२३३ ददानि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम्
१०७२०२४१ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा
१०७२०२४३ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना
१०७२०२५१ श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे
१०७२०२५३ जानन्नपि महीम्प्रादाद्वार्यमाणोऽपि दैत्यराट्
१०७२०२६१ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबन्धुना
१०७२०२६३ देहेन पतमानेन नेहता विपुलं यशः
१०७२०२७१ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान्
१०७२०२७३ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः
१०७२०२८० श्रीभगवानुवाच
१०७२०२८१ युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे
१०७२०२८३ युद्धार्थिनो वयं प्राप्ता राजन्या नान्यकाङ्क्षिणः
१०७२०२९१ असौ वृकोदरः पार्थस्तस्य भ्रातार्जुनो ह्ययम्
१०७२०२९३ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम्
१०७२०३०१ एवमावेदितो राजा जहासोच्चैः स्म मागधः
१०७२०३०३ आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः
१०७२०३११ न त्वया भीरुणा योत्स्ये युधि विक्लवतेजसा
१०७२०३१३ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः
१०७२०३२१ अयं तु वयसातुल्यो नातिसत्त्वो न मे समः
१०७२०३२३ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम
१०७२०३३१ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम्
१०७२०३३३ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः
१०७२०३४१ ततः समेखले वीरौ संयुक्तावितरेतरम्
१०७२०३४३ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ

१०७२०३५१ मण्डलानि विचित्राणि सव्यं दक्षिणमेव च
१०७२०३५३ चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः
१०७२०३६१ ततश्चटचटाशब्दो वज्रनिष्पेससन्निभः
१०७२०३६३ गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः
१०७२०३७१ ते वै गदे भुजजवेन निपात्यमाने
१०७२०३७२ अन्योन्यतोऽंसकटिपादकरोरुजत्रुम्
१०७२०३७३ चूर्णीबभूवतुरुपेत्य यथार्कशाखे
१०७२०३७४ संयुध्यतोर्द्विरदयोरिव दीप्तमन्व्योः
१०७२०३८१ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ
१०७२०३८२ क्रुद्धौ स्वमुष्टिभिरयःस्परशैरपिष्टाम्
१०७२०३८३ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्
१०७२०३८४ निर्घातवज्रपरुषस्तलताडनोत्थः
१०७२०३९१ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः
१०७२०३९३ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप
१०७२०४०१ शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम्
१०७२०४०३ पार्थमाप्याययन्स्वेन तेजसाचिन्तयद्धरिः
१०७२०४११ सञ्चिन्त्यारीवधोपायं भीमस्यामोघदर्शनः
१०७२०४१३ दर्शयामास विटपं पाटयन्निव संज्ञया
१०७२०४२१ तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः
१०७२०४२३ गृहीत्वा पादयोः शत्रुं पातयामास भूतले
१०७२०४३१ एकम्पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः
१०७२०४३३ गुदतः पाटयामास शाखमिव महागजः
१०७२०४४१ एकपादोरुवृषण कटिपृष्ठस्तनांसके
१०७२०४४३ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः
१०७२०४५१ हाहाकारो महानासीन्निहते मगधेश्वरे
१०७२०४५३ पूजयामासतुर्भीमं परिरभ्य जयाच्यतौ
१०७२०४६१ सहदेवं तत्तनयं भगवान्भूतभावनः
१०७२०४६३ अभ्यषिञ्चदमेयात्मा मगधानां पतिं प्रभुः
१०७२०४६५ मोचयामास राजन्यान्संरुद्धा मागधेन ये
१०७३००१० श्रीशुक उवाच
१०७३००११ अयुते द्वे शतान्यष्टौ निरुद्धा युधि निर्जिताः

१०७३००१३ ते निर्गता गिरिद्रोण्यां मलिना मलवाससः
१०७३००२१ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः
१०७३००२३ ददृशुस्ते घनश्यामं पीतकौशेयवाससम्
१०७३००३१ श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम्
१०७३००३३ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्
१०७३००४१ पद्महस्तं गदाशङ्ख रथाङ्गैरुपलक्षितम्
१०७३००४३ किरीटहारकटक कटिसूत्राङ्गदाञ्चितम्
१०७३००५१ भ्राजद्वरमणिग्रीवं निवीतं वनमालया
१०७३००५३ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया
१०७३००६१ जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः
१०७३००६३ प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः
१०७३००७१ कृष्णसन्दर्शनाह्लाद ध्वस्तसंरोधनक्लमाः
१०७३००७३ प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः
१०७३००८० राजान ऊचुः
१०७३००८१ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय
१०७३००८३ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः
१०७३००९१ नैनं नाथानुसूयामो मागधं मधुसूदन
१०७३००९३ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो
१०७३०१०१ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः
१०७३०१०३ त्वन्मायामोहितोऽनित्या मन्यते सम्पदोऽचलाः
१०७३०१११ मृगतृष्णां यथा बाला मन्यन्त उदकाशयम्
१०७३०११३ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते
१०७३०१२१ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयास्या इतरेतरस्पृधः
१०७३०१२३ घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाविगणय्य दुर्मदाः
१०७३०१३१ त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः
१०७३०१३३ कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते
१०७३०१४१ अथो न राज्यम्मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा
१०७३०१४३ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम्
१०७३०१५१ तं नः समादिशोपायं येन ते चरणाब्जयोः
१०७३०१५३ स्मृतिर्यथा न विरमेदपि संसरतामिह
१०७३०१६१ कृष्णाय वासुदेवाय हरये परमात्मने

१०७३०१६३ प्रणतक्लेशनाशाय गोविन्दाय नमो नमः
१०७३०१७० श्रीशुक उवाच
१०७३०१७१ संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः
१०७३०१७३ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा
१०७३०१८० श्रीभगवानुवाच
१०७३०१८१ अद्य प्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे
१०७३०१८३ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा
१०७३०१९१ दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः
१०७३०१९३ श्रीयैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम्
१०७३०२०१ हैहयो नहुषो वेणो रावणो नरकोऽपरे
१०७३०२०३ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः
१०७३०२११ भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत्
१०७३०२१३ मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्ष्यथ
१०७३०२२१ सन्तन्वन्तः प्रजातन्तून्सुखं दुःखं भवाभवौ
१०७३०२२३ प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ
१०७३०२३१ उदासीनाश्च देहादावात्मारामा धृतव्रताः
१०७३०२३३ मय्यावेश्य मनः सम्यङ्मामन्ते ब्रह्म यास्यथ
१०७३०२४० श्रीशुक उवाच
१०७३०२४१ इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः
१०७३०२४३ तेषां न्ययुङ्क्त पुरुषान्स्त्रियो मज्जनकर्मणि
१०७३०२५१ सपर्यां कारयामास सहदेवेन भारत
१०७३०२५३ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः
१०७३०२६१ भोजयित्वा वरान्नेन सुस्नातान्समलङ्कृतान्
१०७३०२६३ भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः
१०७३०२७१ ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः
१०७३०२७३ विरेजुर्मोचिताः क्लेशात्प्रावृडन्ते यथा ग्रहाः
१०७३०२८१ रथान्सदश्वानारोप्य मणिकाञ्चनभूषितान्
१०७३०२८३ प्रीणय्य सुनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत्
१०७३०२९१ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना
१०७३०२९३ ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः
१०७३०३०१ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम्

१०७३०३०३ यथान्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः
१०७३०३११ जरासन्धं घातयित्वा भीमसेनेन केशवः
१०७३०३१३ पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः
१०७३०३२१ गत्वा ते खाण्डवप्रस्थं शङ्खान्दध्मुर्जितारयः
१०७३०३२३ हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः
१०७३०३३१ तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः
१०७३०३३३ मेनिरे मागधं शान्तं राजा चाप्तमनोरथः
१०७३०३४१ अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः
१०७३०३४३ सर्वमाश्रावयां चक्रुरात्मना यदनुष्ठितम्
१०७३०३५१ निशम्य धर्मराजस्तत्केशवेनानुकम्पितम्
१०७३०३५३ आनन्दाश्रुकलां मुञ्चन्प्रेम्णा नोवाच किञ्चन
१०७४००१० श्रीशुक उवाच
१०७४००११ एवं युधिष्ठिरो राजा जरासन्धवधं विभोः
१०७४००१३ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत्
१०७४००२० श्रीयुधिष्ठिर उवाच
१०७४००२१ ये स्युस्त्रैलोक्यगुरवः सर्वे लोका महेश्वराः
१०७४००२३ वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम्
१०७४००३१ स भवानरविन्दाक्षो दीनानामीशमानिनाम्
१०७४००३३ धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम्
१०७४००४१ न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः
१०७४००४३ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः
१०७४००५१ न वै तेऽजित भक्तानां ममाहमिति माधव
१०७४००५३ त्वं तवेति च नानाधीः पशूनामिव वैकृती
१०७४००६० श्रीशुक उवाच
१०७४००६१ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः
१०७४००६३ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः
१०७४००७१ द्वैपायनो भरद्वाजः सुमन्तुर्गोतमोऽसितः
१०७४००७३ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः
१०७४००८१ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः
१०७४००८३ पैलः पराशरो गर्गो वैशम्पायन एव च
१०७४००९१ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः

१०७४००९३ वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः
१०७४०१०१ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः
१०७४०१०३ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः
१०७४०१११ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः
१०७४०११३ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप
१०७४०१२१ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः
१०७४०१२३ कृष्ट्वा तत्र यथाम्नायं दीक्षयां चक्रिरे नृपम्
१०७४०१३१ हैमाः किलोपकरणा वरुणस्य यथा पुरा
१०७४०१३३ इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः
१०७४०१४१ सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः
१०७४०१४३ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः
१०७४०१५१ राजानश्च समाहूता राजपत्न्यश्च सर्वशः
१०७४०१५३ राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै
१०७४०१५५ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः
१०७४०१६१ अयाजयन्महाराजं याजका देववर्चसः
१०७४०१६३ राजसूयेन विधिवत्प्रचेतसमिवामराः
१०७४०१७१ सूत्येऽहन्यवनीपालो याजकान्सदसस्पतीन्
१०७४०१७३ अपूजयन्महाभागान्यथावत्सुसमाहितः
१०७४०१८१ सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः
१०७४०१८३ नाध्यगच्छन्ननैकान्त्यात्सहदेवस्तदाब्रवीत्
१०७४०१९१ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः
१०७४०१९३ एष वै देवताः सर्वा देशकालधनादयः
१०७४०२०१ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः
१०७४०२०३ अग्निराहुतयो मन्त्रा साङ्ख्यं योगश्च यत्परः
१०७४०२११ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत्
१०७४०२१३ आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः
१०७४०२२१ विविधानीह कर्माणि जनयन्यदवेक्षया
१०७४०२२३ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम्
१०७४०२३१ तस्मात्कृष्णाय महते दीयतां परमार्हणम्
१०७४०२३३ एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत्
१०७४०२४१ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने

१०७४०२४३ देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता
१०७४०२५१ इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित्
१०७४०२५३ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः
१०७४०२६१ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम्
१०७४०२६३ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः
१०७४०२७१ तत्पादाववनिज्यापः शिरसा लोकपावनीः
१०७४०२७३ सभार्यः सानुजामात्यः सकुटुम्बो वहन्मुदा
१०७४०२८१ वासोभिः पीतकौषेयैर्भूषणैश्च महाधनैः
१०७४०२८३ अर्हयित्वाश्रुपूर्णाक्षो नाशकत्समवेक्षितुम्
१०७४०२९१ इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः
१०७४०२९३ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः
१०७४०३०१ इत्थं निशम्य दमघोषसुतः स्वपीठाद्
१०७४०३०२ उत्थाय कृष्णगुणवर्णनजातमन्युः
१०७४०३०३ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
१०७४०३०४ संश्रावयन्भगवते परुषाण्यभीतः
१०७४०३११ ईशो दुरत्ययः काल इति सत्यवती स्नुतिः
१०७४०३१३ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते
१०७४०३२१ यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषीतम्
१०७४०३२३ सदसस्पतयः सर्वे कृष्णो यत्सम्मतोऽर्हणे
१०७४०३३१ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान्
१०७४०३३३ परमऋषीन्ब्रह्मनिष्ठांल्लोकपालैश्च पूजितान्
१०७४०३४१ सदस्पतीनतिक्रम्य गोपालः कुलपांसनः
१०७४०३४३ यथा काकः पुरोडाशं सपर्यां कथमर्हति
१०७४०३५१ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः
१०७४०३५३ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति
१०७४०३६१ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम्
१०७४०३६३ वृथापानरतं शश्वत्सपर्यां कथमर्हति
१०७४०३७१ ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसम्
१०७४०३७३ समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः
१०७४०३८१ एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः
१०७४०३८३ नोवाच किञ्चिद्भगवान्यथा सिंहः शिवारुतम्

१०७४०३९१ भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः
१०७४०३९३ कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा
१०७४०४०१ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा
१०७४०४०३ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः
१०७४०४११ ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः
१०७४०४१३ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः
१०७४०४२१ ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी
१०७४०४२३ भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत
१०७४०४३१ तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा
१०७४०४३३ शिरः क्षुरान्तचक्रेण जहार पततो रिपोः
१०७४०४४१ शब्दः कोलाहलोऽथासीच्छिशुपाले हते महान्
१०७४०४४३ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः
१०७४०४५१ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्
१०७४०४५३ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता
१०७४०४६१ जन्मत्रयानुगुणित वैरसंरब्धया धिया
१०७४०४६३ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम्
१०७४०४७१ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिनां विपुलामदात्
१०७४०४७३ सर्वान्सम्पूज्य विधिवच्चक्रेऽवभृथमेकराट्
१०७४०४८१ साधयित्वा क्रतुः राज्ञः कृष्णो योगेश्वरेश्वरः
१०७४०४८३ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः
१०७४०४९१ ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः
१०७४०४९३ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः
१०७४०५०१ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम्
१०७४०५०३ वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनः पुनः
१०७४०५११ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः
१०७४०५१३ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव
१०७४०५२१ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः
१०७४०५२३ कृष्णं क्रतुं च शंसन्तः स्वधामानि ययुर्मुदा
१०७४०५३१ दुर्योधनमृते पापं कलिं कुरुकुलामयम्
१०७४०५३३ यो न सेहे श्रीयं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम्
१०७४०५४१ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम्

१०७४०५४३ राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते
१०७५००१० श्रीराजोवाच
१०७५००११ अजातशत्रोस्तम्दृष्ट्वा राजसूयमहोदयम्
१०७५००१३ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः
१०७५००२१ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः
१०७५००२३ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम्
१०७५००३० श्रीबादरायणिरुवाच
१०७५००३१ पितामहस्य ते यज्ञे राजसूये महात्मनः
१०७५००३३ बान्धवाः परिचर्यायां तस्यासन्प्रेमबन्धनाः
१०७५००४१ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः
१०७५००४३ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने
१०७५००५१ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने
१०७५००५३ परिवेषणे द्रुपदजा कर्णो दाने महामनाः
१०७५००६१ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः
१०७५००६३ बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः
१०७५००७१ निरूपिता महायज्ञे नानाकर्मसु ते तदा
१०७५००७३ प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः
१०७५००८१ ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु
१०७५००८२ स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः
१०७५००८३ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे
१०७५००८४ चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम्
१०७५००९१ मृदङ्गशङ्खपणव धुन्धुर्यानकगोमुखाः
१०७५००९३ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे
१०७५०१०१ नार्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः
१०७५०१०३ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत्
१०७५०१११ चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः
१०७५०११३ स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः
१०७५०१२१ यदुसृञ्जयकाम्बोज कुरुकेकयकोशलाः
१०७५०१२३ कम्पयन्तो भुवं सैन्यैर्यययमानपुरःसराः
१०७५०१३१ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा
१०७५०१३३ देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः

१०७५०१४१ स्वलण्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः
१०७५०१४३ विलिम्पन्त्योऽभिसिञ्चन्त्यो विजह्रुर्विविधै रसैः
१०७५०१५१ तैलगोरसगन्धोद हरिद्रासान्द्रकुङ्कुमैः
१०७५०१५३ पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः
१०७५०१६१ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्
१०७५०१६२ देव्यो यथा दिवि विमानवरैर्नृदेव्यो
१०७५०१६३ ता मातुलेयसखिभिः परिषिच्यमानाः
१०७५०१६४ सव्रीडहासविकसद्वदना विरेजुः
१०७५०१७१ ता देवरानुत सखीन्सिषिचुर्दृतीभिः
१०७५०१७२ क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः
१०७५०१७३ औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः
१०७५०१७४ क्षोभं दधुर्मलधियां रुचिरैर्विहारैः
१०७५०१८१ स सम्राड्रथमारुढः सदश्वं रुक्ममालिनम्
१०७५०१८३ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव
१०७५०१९१ पत्नीसम्याजावभृथ्यैश्चरित्वा ते तमृत्विजः
१०७५०१९३ आचान्तं स्नापयां चक्रुर्गङ्गायां सह कृष्णया
१०७५०२०१ देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम्
१०७५०२०३ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः
१०७५०२११ सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः
१०७५०२१३ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात्
१०७५०२२१ अथ राजाहते क्षौमे परिधाय स्वलङ्कृतः
१०७५०२२३ ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः
१०७५०२३१ बन्धूञ्ज्ञातीन्नृपान्मित्र सुहृदोऽन्यांश्च सर्वशः
१०७५०२३३ अभीक्ष्णं पूजयामास नारायणपरो नृपः
१०७५०२४१ सर्वे जनाः सुररुचो मणिकुण्डलस्रग्
१०७५०२४२ उष्णीषकञ्चुकदुकूलमहार्घ्यहाराः
१०७५०२४३ नार्यश्च कुण्डलयुगालकवृन्दजुष्ट
१०७५०२४४ वक्त्रश्रियः कनकमेखलया विरेजुः
१०७५०२५१ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः
१०७५०२५३ ब्रह्मक्षत्रियविड्शुद्रा राजानो ये समागताः
१०७५०२६१ देवर्षिपितृभूतानि लोकपालाः सहानुगाः

१०७५०२६३ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप
१०७५०२७१ हरिदासस्य राजर्षे राजसूयमहोदयम्
१०७५०२७३ नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा
१०७५०२८१ ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान्
१०७५०२८३ प्रेम्णा निवारयामास कृष्णं च त्यागकातरः
१०७५०२९१ भगवानपि तत्राङ्ग न्यावात्सीत्तत्प्रियंकरः
१०७५०२९३ प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम्
१०७५०३०१ इत्थं राजा धर्मसुतो मनोरथमहार्णवम्
१०७५०३०३ सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः
१०७५०३११ एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम्
१०७५०३१३ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः
१०७५०३२१ यस्मिंस्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्
१०७५०३२२ नाना विभान्ति किल विश्वसृजोपक्लृप्ताः
१०७५०३२३ ताभिः पतीन्द्रुपदराजसुतोपतस्थे
१०७५०३२४ यस्यां विषक्तहृदयः कुरुराडतप्यत्
१०७५०३३१ यस्मिन्तदा मधुपतेर्महिषीसहस्रं
१०७५०३३२ श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम्
१०७५०३३३ मध्ये सुचारु कुचकुङ्कुमशोणहारं
१०७५०३३४ श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम्
१०७५०३४१ सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट्
१०७५०३४३ वृतोऽनुगैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा
१०७५०३५१ आसीनः काञ्चने साक्षादासने मघवानिव
१०७५०३५३ पारमेष्ठ्यश्रीया जुष्टः स्तूयमानश्च वन्दिभिः
१०७५०३६१ तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप
१०७५०३६३ किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा
१०७५०३७१ स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत्
१०७५०३७३ जले च स्थलवद्भ्रान्त्या मयमायाविमोहितः
१०७५०३८१ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयो परे
१०७५०३८३ निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः
१०७५०३९१ स व्रीडितोऽवग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम्
१०७५०३९३ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत्

१०७५०३९५ बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा
१०७५०४०१ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया
१०७५०४०३ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ
१०७६०००१० श्रीशुक उवाच
१०७६००११ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप
१०७६००१३ क्रीडानरशरीरस्य यथा सौभपतिर्हतः
१०७६००२१ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः
१०७६००२३ यदुभिर्निर्जितः सङ्ख्ये जरासन्धादयस्तथा
१०७६००३१ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम्
१०७६००३३ अयादवां क्ष्मां करिष्ये पौरुषं मम पश्यत
१०७६००४१ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम्
१०७६००४३ आराधयामास नृपः पांशुमुष्टिं सकृद्ग्रसन्
१०७६००५१ संवत्सरान्ते भगवानाशुतोष उमापतिः
१०७६००५३ वरेण च्छन्दयामास शाल्वं शरणमागतम्
१०७६००६१ देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्
१०७६००६३ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम्
१०७६००७१ तथेति गिरिशादिष्टो मयः परपुरंजयः
१०७६००७३ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम्
१०७६००८१ स लब्ध्वा कामगं यानं तमोधाम दुरासदम्
१०७६००८३ ययस्द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन्
१०७६००९१ निरुध्य सेनया शाल्वो महत्या भरतर्षभ
१०७६००९३ पुरीं बभञ्जोपवनानुद्यानानि च सर्वशः
१०७६०१०१ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः
१०७६०१०३ विहारान्स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः
१०७६०१११ शिलाद्रुमाश्चाशनयः सर्पा आसारशर्कराः
१०७६०११३ प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादिता दिशः
१०७६०१२१ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम्
१०७६०१२३ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही
१०७६०१३१ प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना निजाः प्रजाः
१०७६०१३३ म भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः
१०७६०१४१ सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः

१०७६०१४३ हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ
१०७६०१५१ अपरे च महेष्वासा रथयूथपयूथपाः
१०७६०१५३ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः
१०७६०१६१ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह
१०७६०१६३ यथासुराणां विबुधैस्तुमुलं लोमहर्षणम्
१०७६०१७१ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः
१०७६०१७३ क्षणेन नाशयामास नैशं तम इवोष्णगुः
१०७६०१८१ विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः
१०७६०१८३ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः
१०७६०१९१ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान्
१०७६०१९३ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः
१०७६०२०१ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः
१०७६०२०३ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः
१०७६०२११ बहुरूपैकरूपं तद्दृश्यते न च दृश्यते
१०७६०२१३ मायामयं मयकृतं दुर्विभाव्यं परैरभूत्
१०७६०२२१ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित्
१०७६०२२३ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम्
१०७६०२३१ यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः
१०७६०२३३ शाल्वस्ततस्ततोऽमुञ्चञ्छरान्सात्वतयूथपाः
१०७६०२४१ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः
१०७६०२४३ पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः
१०७६०२५१ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः
१०७६०२५३ न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः
१०७६०२६१ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्रक्प्रपीडितः
१०७६०२६३ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली
१०७६०२७१ प्रद्युम्नं गदया सीर्ण वक्षःस्थलमरिंदमम्
१०७६०२७३ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः
१०७६०२८१ लब्धसम्ज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत्
१०७६०२८३ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम्
१०७६०२९१ न यदूनां कुले जातः श्रूयते रणविच्युतः
१०७६०२९३ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात्

१०७६०३०१ किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ
१०७६०३०३ युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम्
१०७६०३११ व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः
१०७६०३१३ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे
१०७६०३२० सारथिरुवाच
१०७६०३२१ धर्मं विजानतायुष्मन्कृतमेतन्मया विभो
१०७६०३२३ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी
१०७६०३३१ एतद्विदित्वा तु भवान्मयापोवाहितो रणात्
१०७६०३३३ उपसृष्टः परेणेति मूर्च्छितो गदया हतः
१०७७००१० श्रीशुक उवाच
१०७७००११ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः
१०७७००१३ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम्
१०७७००२१ विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः
१०७७००२३ प्रतिहत्य प्रत्यविध्यान्नाराचैरष्टभिः स्मयन्
१०७७००३१ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत्
१०७७००३३ द्वाभ्यं धनुश्च केतुं च शरेणान्येन वै शिरः
१०७७००४१ गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम्
१०७७००४३ पेतुः समुद्रे सौभेयाः सर्वे सञ्छिन्नकन्धराः
१०७७००५१ एवं यदूनां शाल्वानां निघ्नतामितरेतरम्
१०७७००५३ युद्धं त्रिनवरात्रं तदभूत्तुमुलमुल्बणम्
१०७७००६१ इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना
१०७७००६३ राजसूयेऽथ निवृत्ते शिशुपाले च संस्थिते
१०७७००७१ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम्
१०७७००७३ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ
१०७७००८१ आह चाहमिहायात आर्यमिश्राभिसङ्गतः
१०७७००८३ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम
१०७७००९१ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम्
१०७७००९३ सौभं च शाल्वराजं च दारुकं प्राह केशवः
१०७७०१०१ रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै
१०७७०१०३ सम्भ्रमस्ते न कर्तव्यो मायावी सौभराडयम्
१०७७०१११ इत्युक्तश्चोदयामास रथमास्थाय दारुकः

१०७७०११३ विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम्
१०७७०१२१ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः
१०७७०१२३ प्राहरत्कृष्णसूतय शक्तिं भीमरवां मृधे
१०७७०१३१ तामापतन्तीं नभसि महोल्कामिव रंहसा
१०७७०१३३ भासयन्तीं दिशः शौरिः सायकैः शतधाच्छिनत्
१०७७०१४१ तं च षोडशभिर्विद्ध्वा बानैः सौभं च खे भ्रमत्
१०७७०१४३ अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः
१०७७०१५१ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः
१०७७०१५३ बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम्
१०७७०१६१ हाहाकारो महानासीद्भूतानां तत्र पश्यताम्
१०७७०१६३ निनद्य सौभराडुच्चैरिदमाह जनार्दनम्
१०७७०१७१ यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम्
१०७७०१७३ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा
१०७७०१८१ तं त्वाद्य निशितैर्बाणैरपराजितमानिनम्
१०७७०१८३ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः
१०७७०१९० श्रीभगवानुवाच
१०७७०१९१ वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम्
१०७७०१९३ पौरुसं दर्शयन्ति स्म शूरा न बहुभाषिणः
१०७७०२०१ इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया
१०७७०२०३ तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक्
१०७७०२११ गदायां सन्निवृत्तायां शाल्वस्त्वन्तरधीयत
१०७७०२१३ ततो मुहूर्त आगत्य पुरुषः शिरसाच्युतम्
१०७७०२१५ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन्
१०७७०२२१ कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल
१०७७०२२३ बद्ध्वापनीतः शाल्वेन सौनिकेन यथा पशुः
१०७७०२३१ निशम्य विप्रियं कृष्णो मानुसीं प्रकृतिं गतः
१०७७०२३३ विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा
१०७७०२४१ कथं राममसम्भ्रान्तं जित्वाजेयं सुरासुरैः
१०७७०२४३ शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः
१०७७०२५१ इति ब्रुवाणे गोविन्दे सौभराद्प्रत्युपस्थितः
१०७७०२५३ वसुदेवमिवानीय कृष्णं चेदमुवाच सः

१०७७०२६१ एष ते जनिता तातो यदर्थमिह जीवसि
१०७७०२६३ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश
१०७७०२७१ एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः
१०७७०२७३ उत्कृत्य शिर आदाय खस्थं सौभं समाविशत्
१०७७०२८१ ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषङ्गतः
१०७७०२८३ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम्
१०७७०२९१ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः
१०७७०२९३ स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः
१०७७०३०१ एवं वदन्ति राजर्षे ऋषयः के च नान्विताः
१०७७०३०३ यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत
१०७७०३११ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः
१०७७०३१३ क्व चाखण्डितविज्ञान ज्ञानैश्वर्यस्त्वखण्डितः
१०७७०३२१ यत्पादसेवोर्जितयात्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम्
१०७७०३२३ लभन्त आत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः
१०७७०३३१ तं शस्त्रपूगैः प्रहरन्तमोजसा
१०७७०३३२ शाल्वं शरैः शौरिरमोघविक्रमः
१०७७०३३३ विद्ध्वाच्छिनद्वर्म धनुः शिरोमणिं
१०७७०३३४ सौभं च शत्रोर्गदया रुरोज ह
१०७७०३४१ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा
१०७७०३४३ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम्
१०७७०३५१ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाथ रथाङ्गमद्भुतम्
१०७७०३५३ वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः
१०७७०३६१ जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः
१०७७०३६३ वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम्
१०७७०३७१ तस्मिन्निपतिते पापे सौभे च गदया हते
१०७७०३७३ नेदुर्दुन्दुभयो राजन्दिवि देवगणेरिताः
१०७७०३७५ सखीनामपचितिं कुर्वन्दन्तवक्रो रुषाभ्यगात्
१०७८००१० श्रीशुक उवाच
१०७८००११ शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः
१०७८००१३ परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदम्
१०७८००२१ एकः पदातिः सङ्क्रुद्धो गदापाणिः प्रकम्पयन्

१०७८००२३ पद्ध्यामिमां महाराज महासत्त्वो व्यदृश्यत
१०७८००३१ तं तथायान्तमालोक्य गदामादाय सत्वरः
१०७८००३३ अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात्
१०७८००४१ गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः
१०७८००४३ दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः
१०७८००५१ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि
१०७८००५३ अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया
१०७८००६१ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः
१०७८००६३ बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा
१०७८००७१ एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपम्
१०७८००७३ गदयाताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः
१०७८००८१ गदयाभिहतोऽप्याजौ न चचाल यदूद्वहः
१०७८००८३ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनान्तरे
१०७८००९१ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात्
१०७८००९३ प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः
१०७८०१०१ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम्
१०७८०१०३ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप
१०७८०१११ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः
१०७८०११३ आगच्छदसिचर्माभ्यामुच्छ्वसंस्तज्जिघांसया
१०७८०१२१ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना
१०७८०१२३ शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम्
१०७८०१३१ एवं सौभं च शाल्वं च दन्तवक्रं सहानुजम्
१०७८०१३३ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः
१०७८०१४१ मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः
१०७८०१४३ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः
१०७८०१५१ उपगीयमानविजयः कुसुमैरभिवर्षितः
१०७८०१५३ वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम्
१०७८०१६१ एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः
१०७८०१६३ ईयते पशुदृष्टीनां निर्जितो जयतीति सः
१०७८०१७१ श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः
१०७८०१७३ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल

१०७८०१८१ स्नात्वा प्रभासे सन्तर्प्य देवर्षिपितृमानवान्
१०७८०१८३ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः
१०७८०१९१ पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम्
१०७८०१९३ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम्
१०७८०२०१ यमुनामनु यान्येव गङ्गामनु च भारत
१०७८०२०३ जगाम नैमिषं यत्र ऋषयः सत्रमासते
१०७८०२११ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः
१०७८०२१३ अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन्
१०७८०२२१ सोऽर्चितः सपरीवारः कृतासनपरिग्रहः
१०७८०२२३ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत
१०७८०२३१ अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम्
१०७८०२३३ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः
१०७८०२४१ यस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः
१०७८०२४३ धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः
१०७८०२५१ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च
१०७८०२५३ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः
१०७८०२६१ अदान्तस्याविनीतस्य वृथा पण्डितमानिनः
१०७८०२६३ न गुणाय भवन्ति स्म नटस्येवाजितात्मनः
१०७८०२७१ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः
१०७८०२७३ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः
१०७८०२८१ एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि
१०७८०२८३ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः
१०७८०२९१ हाहेतिवादिनः सर्वे मुनयः खिन्नमानसाः
१०७८०२९३ ऊचुः सङ्कर्षणं देवमधर्मस्ते कृतः प्रभो
१०७८०३०१ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन
१०७८०३०३ आयुश्चात्माक्लमं तावद्यावत्सत्रं समाप्यते
१०७८०३११ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा
१०७८०३१३ योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः
१०७८०३२१ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन
१०७८०३२३ चरिष्यति भवांल्लोक सङ्ग्रहोऽनन्यचोदितः
१०७८०३३० श्रीभगवानुवाच

१०७८०३३१ चरिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया
१०७८०३३३ नियमः प्रथमे कल्पे यावान्स तु विधीयताम्
१०७८०३४१ दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च
१०७८०३४३ आशासितं यत्तद्ब्रूते साधये योगमायया
१०७८०३५० ऋषय ऊचुः
१०७८०३५१ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च
१०७८०३५३ यथा भवेद्वचः सत्यं तथा राम विधीयताम्
१०७८०३६० श्रीभगवानुवाच
१०७८०३६१ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम्
१०७८०३६३ तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान्
१०७८०३७१ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ
१०७८०३७३ अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः
१०७८०३८० ऋषय ऊचुः
१०७८०३८१ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः
१०७८०३८३ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि
१०७८०३९१ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम्
१०७८०३९३ पूयशोणितविन्मूत्र सुरामांसाभिवर्षिणम्
१०७८०४०१ ततश्च भारतं वर्षं परीत्य सुसमाहितः
१०७८०४०३ चरित्वा द्वादशमासांस्तीर्थस्नायी विशुध्यसि
१०७९००१० श्रीशुक उवाच
१०७९००११ ततः पर्वण्युपावृत्ते प्रचण्डः पांशुवर्षणः
१०७९००१३ भीमो वायुरभूद्राजन्पूयगन्धस्तु सर्वशः
१०७९००२१ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम्
१०७९००२३ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक्
१०७९००३१ तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम्
१०७९००३३ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम्
१०७९००४१ सस्मार मूषलं रामः परसैन्यविदारणम्
१०७९००४३ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः
१०७९००५१ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम्
१०७९००५३ मूषलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः
१०७९००६१ सोऽपतद्भुवि निर्भिन्न ललाटोऽसृक्समुत्सृजन्

१०७९००६३ मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः
१०७९००७१ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः
१०७९००७३ अभ्यषिञ्चन्महाभागा वृत्रघ्नं विबुधा यथा
१०७९००८१ वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजां
१०७९००८३ रामाय वाससी दिव्ये दिव्यान्याभरणानि च
१०७९००९१ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः
१०७९००९३ स्नात्वा सरोवरमगाद्यतः सरयूरास्रवत्
१०७९०१०१ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः
१०७९०१०३ स्नात्वा सन्तर्प्य देवादीञ्जगाम पुलहाश्रमम्
१०७९०१११ गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः
१०७९०११३ गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमे
१०७९०१२१ उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाभिवाद्य च
१०७९०१२३ सप्तगोदावरीं वेणां पम्पां भीमरथीं ततः
१०७९०१३१ स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम्
१०७९०१३३ द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः
१०७९०१४१ कामकोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम्
१०७९०१४३ श्रीरन्गाख्यं महापुण्यं यत्र सन्निहितो हरिः
१०७९०१५१ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा
१०७९०१५३ सामुद्रं सेतुमगमत्महापातकनाशनम्
१०७९०१६१ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः
१०७९०१६३ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम्
१०७९०१७१ तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च
१०७९०१७३ योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम्
१०७९०१७५ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः
१०७९०१८१ ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम्
१०७९०१८३ विष्णुः सन्निहितो यत्र स्नात्वास्पर्शद्गवायुतम्
१०७९०१९१ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान्
१०७९०१९३ गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः
१०७९०२०१ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः
१०७९०२०३ तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम्
१०७९०२११ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी

१०७९०२१३ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत्
१०७९०२२१ श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे
१०७९०२२३ सर्वराजन्यनिधनं भारं मेने हृतं भुवः
१०७९०२३१ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे
१०७९०२३३ वारयिष्यन्विनशनं जगाम यदुनन्दनः
१०७९०२४१ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि
१०७९०२४३ अभिवाद्याभवंस्तुष्णीं किं विवक्षुरिहागतः
१०७९०२५१ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ
१०७९०२५३ मण्डलानि विचित्राणि चरन्ताविदमब्रवीत्
१०७९०२६१ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर
१०७९०२६३ एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम्
१०७९०२७१ तस्मादेकतरस्येह युवयोः समवीर्ययोः
१०७९०२७३ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः
१०७९०२८१ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत्
१०७९०२८३ अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च
१०७९०२९१ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ
१०७९०२९३ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः
१०७९०३०१ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा
१०७९०३०३ क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम्
१०७९०३११ तेभ्यो विशुद्धं विज्ञानं भगवान्व्यतरद्विभुः
१०७९०३१३ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः
१०७९०३२१ स्वपत्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः
१०७९०३२३ रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलङ्कृतः
१०७९०३३१ ईदृग्विधान्यसङ्ख्यानि बलस्य बलशालिनः
१०७९०३३३ अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि
१०७९०३४१ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः
१०७९०३४३ सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत्
१०८०००१० श्रीराजोवाच
१०८०००११ भगवन्यानि चान्यानि मुकुन्दस्य महात्मनः
१०८०००१३ वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामि हे प्रभो
१०८०००२१ को नु श्रुत्वासकृद्ब्रह्मन्नुत्तमःश्लोकसत्कथाः

१०८०००२३ विरमेत विशेषज्ञो विषण्णः काममार्गणैः
१०८०००३१ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च
१०८०००३३ स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः
१०८०००४१ शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः
१०८०००४३ अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम्
१०८०००५० सूत उवाच
१०८०००५१ विष्णुरातेन सम्पृष्टो भगवान्बादरायणिः
१०८०००५३ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत्
१०८०००६० श्रीशुक उवाच
१०८०००६१ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः
१०८०००६३ विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः
१०८०००७१ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी
१०८०००७३ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा
१०८०००८१ पतिव्रता पतिं प्राह म्लायता वदनेन सा
१०८०००८३ दरिद्रं सीदमाना वै वेपमानाभिगम्य च
१०८०००९१ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः
१०८०००९३ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः
१०८००१०१ तमुपैहि महाभाग साधूनां च परायणम्
१०८००१०३ दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने
१०८००१११ आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः
१०८००११३ स्मरतः पादकमलमात्मानमपि यच्छति
१०८००११५ किं न्वर्थकामान्भजतो नात्यभीष्टाञ्जगद्गुरुः
१०८००१२१ स एवं भार्यया विप्रो बहुशः प्रार्थितो मुहुः
१०८००१२३ अयं हि परमो लाभ उत्तमःश्लोकदर्शनम्
१०८००१३१ इति सञ्चिन्त्य मनसा गमनाय मतिं दधे
१०८००१३३ अप्यस्त्युपायनं किञ्चिद्गृहे कल्याणि दीयताम्
१०८००१४१ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान्
१०८००१४३ चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम्
१०८००१५१ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल
१०८००१५३ कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन्
१०८००१६१ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः

१०८०००१६३ विप्रोऽगम्यान्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम्
१०८०००१७१ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः
१०८०००१७३ विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा
१०८०००१८१ तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः
१०८०००१८३ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा
१०८०००१९१ सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः
१०८०००१९३ प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः
१०८०००२०१ अथोपवेश्य पर्यङ्के स्वयम्सख्युः समर्हणम्
१०८०००२०३ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः
१०८०००२११ अग्रहीच्छिरसा राजन्भगवांल्लोकपावनः
१०८०००२१३ व्यलिम्पद्दिव्यगन्धेन चन्दनागुरुकुङ्कमैः
१०८०००२२१ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा
१०८०००२२३ अर्चित्वावेद्य ताम्बूलं गां च स्वागतमब्रवीत्
१०८०००२३१ कुचैलं मलिनं क्षामं द्विजं धमनिसन्ततम्
१०८०००२३३ देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै
१०८०००२४१ अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना
१०८०००२४३ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम्
१०८०००२५१ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा
१०८०००२५३ श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च
१०८०००२६१ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः
१०८०००२६३ पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा
१०८०००२७१ कथयां चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः
१०८०००२७३ आत्मनोर्ललिता राजन्करौ गृह्य परस्परम्
१०८०००२८० श्रीभगवानुवाच
१०८०००२८१ अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात्
१०८०००२८३ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा
१०८०००२९१ प्रायो गृहेषु ते चित्तमकामविहितं तथा
१०८०००२९३ नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे
१०८०००३०१ केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः
१०८०००३०३ त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसङ्ग्रहम्
१०८०००३११ कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः

१०८००३१३ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते
१०८००३२१ स वै सत्कर्मणां साक्षाद्द्विजातेरिह सम्भवः
१०८००३२३ आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुः
१०८००३३१ नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह
१०८००३३३ ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम्
१०८००३४१ नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा
१०८००३४३ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा
१०८००३५१ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ
१०८००३५३ गुरुदारैश्चोदितानामिन्धनानयने क्वचित्
१०८००३६१ प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज
१०८००३६३ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः
१०८००३७१ सूर्यश्चास्तं गतस्तावत्तमसा चावृता दिशः
१०८००३७३ निम्नं कूलं जलमयं न प्राज्ञायत किञ्चन
१०८००३८१ वयं भृशम्तत्र महानिलाम्बुभिर्निहन्यमाना महुरम्बुसम्प्लवे
१०८००३८३ दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः
१०८००३९१ एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरुः
१०८००३९३ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान्
१०८००४०१ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः
१०८००४०३ आत्मा वै प्राणिनाम्प्रेष्ठस्तमनादृत्य मत्पराः
१०८००४११ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम्
१०८००४१३ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ
१०८००४२१ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः
१०८००४२३ छन्दांस्ययातयामानि भवन्त्विह परत्र च
१०८००४३१ इत्थंविधान्यनेकानि वसतां गुरुवेश्मनि
१०८००४३३ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशान्तये
१०८००४४० श्रीब्राह्मण उवाच
१०८००४४१ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो
१०८००४४३ भवता सत्यकामेन येषां वासो गुरोरभूत्
१०८००४५१ यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो
१०८००४५३ श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम्
१०८१००१० श्रीशुक उवाच

१०८१००११ स इत्थं द्विजमुख्येन सह सङ्कथयन्हरिः
१०८१००१३ सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम्
१०८१००२१ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम्
१०८१००२३ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः
१०८१००३० श्रीभगवानुवाच
१०८१००३१ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात्
१०८१००३३ अण्वप्युपाहृतं भक्तैः प्रेम्णा भुर्येव मे भवेत्
१०८१००३५ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते
१०८१००४१ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति
१०८१००४३ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः
१०८१००५१ इत्युक्तोऽपि द्वियस्तस्मै व्रीडितः पतये श्रियः
१०८१००५३ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः
१०८१००६१ सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम्
१०८१००६३ विज्ञायाचिन्तयन्नायं श्रीकामो माभजत्पुरा
१०८१००७१ पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया
१०८१००७३ प्राप्तो मामस्य दास्यामि सम्पदोऽमर्त्यदुर्लभाः
१०८१००८१ इत्थं विचिन्त्य वसनाच्चीरबद्धान्द्विजन्मनः
१०८१००८३ स्वयं जहार किमिदमिति पृथुकतण्डुलान्
१०८१००९१ नन्वेतदुपनीतं मे परमप्रीणनं सखे
१०८१००९३ तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः
१०८१०१०१ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे
१०८१०१०३ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः
१०८१०१११ एतावतालं विश्वात्मन्सर्वसम्पत्समृद्धये
१०८१०११३ अस्मिन्लोकेऽथ वामुष्मिन्पुंसस्त्वत्तोषकारणम्
१०८१०१२१ ब्राह्मणस्तां तु रजनीमुषित्वाच्युतमन्दिरे
१०८१०१२३ भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा
१०८१०१३१ श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः
१०८१०१३३ जगाम स्वालयं तात पथ्यनव्रज्य नन्दितः
१०८१०१४१ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम्
१०८१०१४३ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः
१०८१०१५१ अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया

१०८१०१५३ यद्धरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि
१०८१०१६१ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः
१०८१०१६३ ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः
१०८१०१७१ निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा
१०८१०१७३ महिष्या वीजितः श्रान्तो बालव्यजनहस्तया
१०८१०१८१ शुश्रूषया परमया पादसंवाहनादिभिः
१०८१०१८३ पूजितो देवदेवेन विप्रदेवेन देववत्
१०८१०१९१ स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम्
१०८१०१९३ सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्
१०८१०२०१ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत्
१०८१०२०३ इति कारुणिको नूनं धनं मेऽभूरि नाददात्
१०८१०२११ इति तच्चिन्तयन्नन्तः प्राप्तो नियगृहान्तिकम्
१०८१०२१३ सूर्यानलेन्दुसङ्काशैर्विमानैः सर्वतो वृतम्
१०८१०२२१ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः
१०८१०२२३ प्रोत्फुल्लकमुदाम्भोज कह्लारोत्पलवारिभिः
१०८१०२३१ जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः
१०८१०२३३ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत्
१०८१०२४१ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः
१०८१०२४३ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा
१०८१०२५१ पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसम्भ्रमा
१०८१०२५३ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात्
१०८१०२६१ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना
१०८१०२६३ मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे
१०८१०२७१ पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव
१०८१०२७३ दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः
१०८१०२८१ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम्
१०८१०२८३ मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा
१०८१०२९१ पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः
१०८१०२९३ पर्यङ्का हेमदण्डानि चामरव्यजनानि च
१०८१०३०१ आसनानि च हैमानि मृदूपस्तरणानि च
१०८१०३०३ मुक्तादामविलम्बीनि वितानानि द्युमन्ति च

१०८१०३११ स्वच्छस्फटिककुड्येषु महामारकतेषु च
१०८१०३२३ रत्नदीपान्भ्राजमानान्ललना रत्नसंयुताः
१०८१०३२१ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसम्पदाम्
१०८१०३२३ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम्
१०८१०३३१ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः
१०८१०३३३ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य
१०८१०३४१ नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः
१०८१०३४३ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे
१०८१०३५१ किञ्चित्करोत्युर्वपि यत्स्वदत्तं
१०८१०३५२ सुहृत्कृतं फल्ग्वपि भूरिकारी
१०८१०३५३ मयोपणीतं पृथुकैकमुष्टिं
१०८१०३५४ प्रत्यग्रहीत्प्रीतियुतो महात्मा
१०८१०३६१ तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात्
१०८१०३६३ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः
१०८१०३७१ भक्ताय चित्रा भगवान्हि सम्पदो राज्यं विभूतीर्न समर्थयत्यजः
१०८१०३७३ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम्
१०८१०३८१ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने
१०८१०३८३ विषयाञ्जायया त्यक्ष्यन्बुभुजे नातिलम्पटः
१०८१०३९१ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः
१०८१०३९३ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम्
१०८१०४०१ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम्
१०८१०४०३ तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम्
१०८१०४११ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः
१०८१०४१३ लब्धभावो भगवति कर्मबन्धाद्विमुच्यते
१०८२००१० श्रीशुक उवाच
१०८२००११ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः
१०८२००१३ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा
१०८२००२१ तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः
१०८२००२३ समन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया
१०८२००३१ निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः
१०८२००३३ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान्

१०८२००४१ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा
१०८२००४३ लोकं सङ्ग्राहयन्नीशो यथान्योऽघापनुत्तये
१०८२००५१ महत्यां तीर्थयात्रायां तत्रागन्भारतीः प्रजाः
१०८२००५३ वृष्णयश्च तथाक्रूर वसुदेवाहुकादयः
१०८२००६१ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः
१०८२००६३ गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणैः
१०८२००६५ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः
१०८२००७१ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः
१०८२००७३ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः
१०८२००८१ व्यरोचन्त महातेजाः पथि काञ्चनमालिनः
१०८२००८३ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव
१०८२००९१ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः
१०८२००९३ ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः
१०८२०१०१ रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः
१०८२०१०३ ददः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति
१०८२०१११ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः
१०८२०११३ भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु
१०८२०१२१ तत्रागतांस्ते ददृशुः सुहृत्सम्बन्धिनो नृपान्
१०८२०१२३ मत्स्योशीनरकौशल्य विदर्भकुरुसृञ्जयान्
१०८२०१३१ काम्बोजकैकयान्मद्रान्कुन्तीनानर्तकेरलान्
१०८२०१३३ अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप
१०८२०१३५ नन्दादीन्सुहृदो गोपान्गोपीश्चोत्कण्ठिताश्चिरम्
१०८२०१४१ अन्योन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः
१०८२०१४३ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम्
१०८२०१५१ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृद
१०८२०१५२ स्मितामलापाङ्गदृशोऽभिरेभिरे
१०८२०१५३ स्तनैः स्तनान्कुङ्कुमपङ्करूषितान्
१०८२०१५४ निहत्य दोर्भिः प्रणयाश्रुलोचनाः
१०८२०१६१ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवादिताः
१०८२०१६३ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः
१०८२०१७१ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि

१०८२०१७३ भ्रातृपत्नीर्मुकुन्दं च जहौ सङ्कथया शुचः
१०८२०१८० कुन्त्युवाच
१०८२०१८१ आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम्
१०८२०१८३ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः
१०८२०१९१ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि
१०८२०१९३ नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्
१०८२०२०० श्रीवसुदेव उवाच
१०८२०२०१ अम्ब मास्मानसूयेथा दैवक्रीडनकान्नरान्
१०८२०२०३ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथ वा
१०८२०२११ कंसप्रतापिताः सर्वे वयं याता दिशं दिशम्
१०८२०२१३ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः
१०८२०२२० श्रीशुक उवाच
१०८२०२२१ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः
१०८२०२२३ आसन्नच्युतसन्दर्श परमानन्दनिर्वृताः
१०८२०२३१ भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा
१०८२०२३३ सदाराः पाण्डवाः कुन्ती सञ्जयो विदुरः कृपः
१०८२०२४१ कुन्तीभोजो विराटश्च भीष्मको नग्नजिन्महान्
१०८२०२४३ पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः स काशिराट्
१०८२०२५१ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ
१०८२०२५३ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः
१०८२०२६१ राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः
१०८२०२६३ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः
१०८२०२७१ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः
१०८२०२७३ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान्
१०८२०२८१ अहो भोजपते यूयं जन्मभाजो नृणामिह
१०८२०२८३ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम्
१०८२०२९१ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति
१०८२०२९२ पादावनेजनपयश्च वचश्च शास्त्रम्
१०८२०२९३ भूः कालभर्जितभगापि यदङ्घ्रिपद्म
१०८२०२९४ स्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान्
१०८२०३०१ तद्दर्शनस्पर्शनानुपथप्रजल्प

१०८२०३०२ शय्यासनाशनसयौनसपिण्डबन्धः
१०८२०३०३ येषां गृहे निरयवर्त्मनि वर्ततां वः
१०८२०३०४ स्वर्गापवर्गविरमः स्वयमास विष्णुः
१०८२०३१० श्रीशुक उवाच
१०८२०३११ नन्दस्तत्र यदून्प्राप्तान्ज्ञात्वा कृष्णपुरोगमान्
१०८२०३१३ तत्रागमद्वृतो गोपैरनःस्थार्थैर्दिदृक्षया
१०८२०३२१ तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः
१०८२०३२३ परिषस्वजिरे गाढं चिरदर्शनकातराः
१०८२०३३१ वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः
१०८२०३३३ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले
१०८२०३४१ कृष्णरामौ परिष्वज्य पितरावभिवाद्य च
१०८२०३४३ न किञ्चनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह
१०८२०३५१ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च
१०८२०३५३ यशोदा च महाभागा सुतौ विजहतुः शुचः
१०८२०३६१ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम्
१०८२०३६३ स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः
१०८२०३७१ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि
१०८२०३७३ अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया
१०८२०३८१ एतावदृष्टपितरौ युवयोः स्म पित्रोः
१०८२०३८२ सम्प्रीणनाभ्युदयपोषणपालनानि
१०८२०३८३ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्
१०८२०३८४ न्यस्तावकुत्र च भयौ न सतां परः स्वः
१०८२०३९० श्रीशुक उवाच
१०८२०३९१ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं
१०८२०३९२ यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति
१०८२०३९३ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्
१०८२०३९४ तद्भावमापुरपि नित्ययुजां दुरापम्
१०८२०४०१ भगवांस्तास्तथाभूता विविक्त उपसङ्गतः
१०८२०४०३ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत्
१०८२०४११ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया
१०८२०४१३ गतांश्चिरायिताञ्छत्रु पक्षक्षपणचेतसः

१०८२०४२१ अप्यवध्यायथास्मान्स्विदकृतज्ञाविशङ्कया
१०८२०४२३ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च
१०८२०४३१ वायुर्यथा घनानीकं तृणं तूलं रजांसि च
१०८२०४३३ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत्
१०८२०४४१ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते
१०८२०४४३ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः
१०८२०४५१ अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः
१०८२०४५३ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः
१०८२०४६१ एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः
१०८२०४६३ उभयं मय्यथ परे पश्यताभातमक्षरे
१०८२०४७० श्रीशुक उवाच
१०८२०४७१ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः
१०८२०४७३ तदनुस्मरणध्वस्त जीवकोशास्तमध्यगन्
१०८२०४८१ आहुश्च ते नलिननाभ पदारविन्दं
१०८२०४८२ योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः
१०८२०४८३ संसारकूपपतितोत्तरणावलम्बं
१०८२०४८४ गेहं जुषामपि मनस्युदियात्सदा नः
१०८३००१० श्रीशुक उवाच
१०८३००११ तथानुगृह्य भगवान्गोपीनां स गुरुर्गतिः
१०८३००१३ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम्
१०८३००२१ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः
१०८३००२३ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः
१०८३००३१ कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित्
१०८३००३३ पिबन्ति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम्
१०८३००४१ हि त्वात्म धामविधुतात्मकृतत्र्यवस्थाम्
१०८३००४२ आनन्दसम्प्लवमखण्डमकुण्ठबोधम्
१०८३००४३ कालोपसृष्टनिगमावन आत्तयोग
१०८३००४४ मायाकृतिं परमहंसगतिं नताः स्म
१०८३००५० श्रीऋषिरुवाच
१०८३००५१ इत्युत्तमःश्लोकशिखामणिं जनेष्व्
१०८३००५२ अभिष्टुवत्स्वन्धककौरवस्त्रियः

१०८३००५३ समेत्य गोविन्दकथा मिथोऽगृनंस्
१०८३००५४ त्रिलोकगीताः शृणु वर्णयामि ते
१०८३००६० श्रीद्रौपद्युवाच
१०८३००६१ हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौशले
१०८३००६३ हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे
१०८३००७१ हे कृष्णपत्न्य एतन्नो ब्रूते वो भगवान्स्वयम्
१०८३००७३ उपयेमे यथा लोकमनुकुर्वन्स्वमायया
१०८३००८० श्रीरुक्मिण्युवाच
१०८३००८१ चैद्याय मार्पयितुमुद्यतकार्मुकेषु
१०८३००८२ राजस्वजेयभटशेखरिताङ्घ्रिरेणुः
१०८३००८३ निन्ये मृगेन्द्र इव भागमजावियूथात्
१०८३००८४ तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय
१०८३००९० श्रीसत्यभामोवाच
१०८३००९१ यो मे सनाभिवधतप्तहृदा ततेन
१०८३००९२ लिप्ताभिशापमपमार्ष्टुमुपाजहार
१०८३००९३ जित्वर्क्षराजमथ रत्नमदात्स तेन
१०८३००९४ भीतः पितादिशत मां प्रभवेऽपि दत्ताम्
१०८३०१०० श्रीजाम्बवत्युवाच
१०८३०१०१ प्राज्ञाय देहकृदमुं निजनाथदैवं
१०८३०१०२ सीतापतिं त्रिनवहान्यमुनाभ्ययुध्यत्
१०८३०१०३ ज्ञात्वा परीक्षित उपाहरदर्हणं मां
१०८३०१०४ पादौ प्रगृह्य मणिनाहममुष्य दासी
१०८३०११० श्रीकालिन्द्युवाच
१०८३०१११ तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाशया
१०८३०११३ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी
१०८३०१२० श्रीमित्रविन्दोवाच
१०८३०१२१ यो मां स्वयंवर उपेत्य विजित्य भूपान्
१०८३०१२२ निन्ये श्वयूथगं इवात्मबलिं द्विपारिः
१०८३०१२३ भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्
१०८३०१२४ तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम्
१०८३०१३० श्रीसत्योवाच

१०८३०१३१ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान्
१०८३०१३२ पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय
१०८३०१३३ तान्वीरदुर्मदहनस्तरसा निगृह्य
१०८३०१३४ क्रीडन्बबन्ध ह यथा शिशवोऽजतोकान्
१०८३०१४१ य इत्थं वीर्यशुल्कां मां
१०८३०१४२ दासीभिश्चतुरङ्गिणीम्
१०८३०१४३ पथि निर्जित्य राजन्यान्
१०८३०१४४ निन्ये तद्दास्यमस्तु मे
१०८३०१५० श्रीभद्रोवाच१०८३०१५१ पिता मे मातुलेयाय स्वयमाहूय दत्तवान्
१०८३०१५३ कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः
१०८३०१६१ अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि
१०८३०१६३ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः
१०८३०१७० श्रीलक्ष्मणोवाच
१०८३०१७१ ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह
१०८३०१७३ चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसम्मृश्य विहाय लोकपान्
१०८३०१८१ ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः
१०८३०१८३ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत्
१०८३०१९१ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः
१०८३०१९३ अयं तु बहिराच्छन्नो दृश्यते स जले परम्
१०८३०२०१ श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम्
१०८३०२०३ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः
१०८३०२११ पित्रा सम्पूजिताः सर्वे यथावीर्यं यथावयः
१०८३०२१३ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः
१०८३०२२१ आदाय व्यसृजन्केचित्सज्यं कर्तुमनीश्वराः
१०८३०२२३ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुनाहताः
१०८३०२३१ सज्यं कृत्वापरे वीरा मागधाम्बष्ठचेदिपाः
१०८३०२३३ भीमो दुर्योधनः कर्णो नाविदंस्तदवस्थितिम्
१०८३०२४१ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम्
१०८३०२४३ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम्
१०८३०२५१ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु
१०८३०२५३ भगवान्धनुरादाय सज्यं कृत्वाथ लीलया

१०८३०२६१ तस्मिन्सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले
१०८३०२६३ छित्त्वेषुणापातयत्तं सूर्ये चाभिजिति स्थिते
१०८३०२७१ दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि
१०८३०२७३ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः
१०८३०२८१ तद्रङ्गमाविशमहं कलनूपुराभ्यां
१०८३०२८२ पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम्
१०८३०२८३ नूत्ने निवीय परिधाय च कौशिकाग्र्ये
१०८३०२८४ सव्रीडहासवदना कवरीधृतस्रक्
१०८३०२९१ उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्
१०८३०२९२ गण्डस्थलं शिशिरहासकटाक्षमोक्षैः
१०८३०२९३ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेर्
१०८३०२९४ अंसेऽनुरक्तहृदया निदधे स्वमालाम्
१०८३०३०१ तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः
१०८३०३०३ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः
१०८३०३११ एवं वृते भगवति मयेशे नृपयूथपाः
१०८३०३१३ न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः
१०८३०३२१ मां तावद्रथमारोप्य हयरत्नचतुष्टयम्
१०८३०३२३ शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः
१०८३०३३१ दारुकश्चोदयामास काञ्चनोपस्करं रथम्
१०८३०३३३ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव
१०८३०३४१ तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन
१०८३०३४३ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम्
१०८३०३५१ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः
१०८३०३५३ निपेतुः प्रधने केचिदेके सन्त्यज्य दुद्रुवुः
१०८३०३६१ ततः पुरीं यदुपतिरत्यलङ्कृतां
१०८३०३६२ रविच्छदध्वजपटचित्रतोरणाम्
१०८३०३६३ कुशस्थलीं दिवि भुवि चाभिसंस्तुतां
१०८३०३६४ समाविशत्तरणिरिव स्वकेतनम्
१०८३०३७१ पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान्
१०८३०३७३ महार्हवासोऽलङ्कारैः शय्यासनपरिच्छदैः
१०८३०३८१ दासीभिः सर्वसम्पद्भिर्भटेभरथवाजिभिः

१०८३०३८३ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः
१०८३०३९१ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः
१०८३०३९३ सर्वसङ्गनिवृत्त्याद्धा तपसा च बभूविम
१०८३०४०० महिष्य ऊचुः
१०८३०४०१ भौमं निहत्य सगणं युधि तेन रुद्धा
१०८३०४०२ ज्ञात्वाथ नः क्षितिजये जितराजकन्याः
१०८३०४०३ निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः
१०८३०४०४ पादाम्बुजं परिणिनाय य आप्तकामः
१०८३०४११ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत
१०८३०४१३ वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम्
१०८३०४२१ कामयामह एतस्य श्रीमत्पादरजः श्रियः
१०८३०४२३ कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः
१०८३०४३१ व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः
१०८३०४३३ गावश्चारयतो गोपाः पदस्पर्शं महात्मनः
१०८४००१० श्रीशुक उवाच
१०८४००११ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी
१०८४००१२ माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः
१०८४००१३ कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं
१०८४००१४ सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः
१०८४००२१ इति सम्भाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु
१०८४००२३ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया
१०८४००३१ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः
१०८४००३३ विश्वामित्रः शतानन्दो भरद्वाजोऽथ गौतमः
१०८४००४१ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः
१०८४००४३ पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः
१०८४००५१ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथाङ्गिराः
१०८४००५३ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे
१०८४००६१ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः
१०८४००६३ पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान्
१०८४००७१ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत्
१०८४००७३ स्वागतासनपाद्यार्घ्य माल्यधूपानुलेपनैः

१०८४००८१ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः
१०८४००८३ सदसस्तस्य महतो यतवाचोऽनुश्रृण्वतः
१०८४००९० श्रीभगवानुवाच
१०८४००९१ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम्
१०८४००९३ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम्
१०८४०१०१ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम्
१०८४०१०३ दर्शनस्पर्शनप्रश्न प्रह्वपादार्चनादिकम्
१०८४०१११ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः
१०८४०११३ ते पुनन्त्युरुकालेन दर्शनादेव साधवः
१०८४०१२१ नाग्निर्न सूर्यो न च चन्द्रतारका
१०८४०१२२ न भूर्जलं खं श्वसनोऽथ वाङ्मनः
१०८४०१२३ उपासिता भेदकृतो हरन्त्यघं
१०८४०१२४ विपश्चितो घ्नन्ति मुहूर्तसेवया
१०८४०१३१ यस्यात्मबुद्धिः कुणपे त्रिधातुके
१०८४०१३२ स्वधीः कलत्रादिषु भौम इज्यधीः
१०८४०१३३ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्
१०८४०१३४ जनेष्वभिज्ञेषु स एव गोखरः
१०८४०१४० श्रीशुक उवाच
१०८४०१४१ निशम्येत्थं भगवतः कृष्णस्याकुण्थमेधसः
१०८४०१४३ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः
१०८४०१५१ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम्
१०८४०१५३ जनसङ्ग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम्
१०८४०१६० श्रीमुनय ऊचुः
१०८४०१६१ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः
१०८४०१६३ यदीशितव्यायति गूढ ईहया अहो विचित्रम्भगवद्विचेष्टितम्
१०८४०१७१ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा
१०८४०१७३ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम्
१०८४०१८१ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च
१०८४०१८३ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान्
१०८४०१९१ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः
१०८४०१९३ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम्

१०८४०२०१ तस्माद्ब्रह्मकुलं ब्रह्मन्शास्त्रयोनेस्त्वमात्मनः
१०८४०२०३ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान्
१०८४०२११ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः
१०८४०२१३ त्वया सङ्गम्य सद्गत्या यदन्तः श्रेयसां परः
१०८४०२२१ नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे
१०८४०२२३ स्वयोगमाययाच्छन्न महिम्ने परमात्मने
१०८४०२३१ न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः
१०८४०२३३ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम्
१०८४०२४१ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक्
१०८४०२४३ नाममात्रेन्द्रियाभातं न वेद रहितं परम्
१०८४०२५१ एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया
१०८४०२५३ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात्
१०८४०२६१ तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्ष
१०८४०२६२ तीर्थास्पदं हृदि कृतं सुविपक्वयोगैः
१०८४०२६३ उत्सिक्तभक्त्युपहताशय जीवकोशा
१०८४०२६४ आपुर्भवद्गतिमथानुगृहान भक्तान्
१०८४०२७० श्रीशुक उवाच
१०८४०२७१ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम्
१०८४०२७३ राजर्षे स्वाश्रमान्गन्तुं मुनयो दधिरे मनः
१०८४०२८१ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः
१०८४०२८३ प्रणम्य चोपसङ्गृह्य बभाषेदं सुयन्त्रितः
१०८४०२९० श्रीवसुदेव उवाच
१०८४०२९१ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ
१०८४०२९३ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम्
१०८४०३०० श्रीनारद उवाच
१०८४०३०१ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया
१०८४०३०३ कृष्णम्मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः
१०८४०३११ सन्निकर्षोऽत्र मर्त्यानामनादरणकारणम्
१०८४०३१३ गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये
१०८४०३२१ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनास्य वै
१०८४०३२३ स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति

१०८४०३३१ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम्
१०८४०३३३ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः
१०८४०३४१ अथोचुर्मुनयो राजन्नाभाष्यानल्सदुन्दभिम्
१०८४०३४३ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः
१०८४०३५१ कर्मणा कर्मनिर्हार एष साधुनिरूपितः
१०८४०३५३ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः
१०८४०३६१ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुसा
१०८४०३६३ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः
१०८४०३७१ अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः
१०८४०३७३ यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः
१०८४०३८१ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम्
१०८४०३८३ आत्मलोकैषणां देव कालेन विसृजेद्बुधः
१०८४०३८५ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम्
१०८४०३९१ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो
१०८४०३९३ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत्
१०८४०४०१ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते
१०८४०४०३ यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो भव
१०८४०४११ वसुदेव भवान्नूनं भक्त्या परमया हरिम्
१०८४०४१३ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः
१०८४०४२० श्रीशुक उवाच
१०८४०४२१ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः
१०८४०४२३ तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च
१०८४०४३१ त एनमृषयो राजन्वृता धर्मेण धार्मिकम्
१०८४०४३३ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः
१०८४०४४१ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः
१०८४०४४३ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलङ्कृताः
१०८४०४५१ तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः
१०८४०४५३ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः
१०८४०४६१ नेदुर्मृदङ्गपटह शङ्खभेर्यानकादयः
१०८४०४६३ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः
१०८४०४६५ जगुः सुकण्ठ्यो गन्धर्व्यः सङ्गीतं सहभर्तृकाः

१०८४०४७१ तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः
१०८४०४७३ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः
१०८४०४८१ ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः
१०८४०४८३ स्वलङ्कृताभिर्विबभौ दीक्षितोऽजिनसंवृतः
१०८४०४९१ तस्यर्त्विजो महाराज रत्नकौशेयवाससः
१०८४०४९३ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे
१०८४०५०१ तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ
१०८४०५०३ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः
१०८४०५११ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः
१०८४०५१३ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम्
१०८४०५२१ अथर्त्विग्भ्योऽददात्काले यथाम्नातं स दक्षिणाः
१०८४०५२३ स्वलङ्कृतेभ्योऽलङ्कृत्य गोभूकन्या महाधनाः
१०८४०५३१ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः
१०८४०५३३ सस्नू रामह्रदे विप्रा यजमानपुरःसराः
१०८४०५४१ स्नातोऽलङ्कारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः
१०८४०५४३ ततः स्वलङ्कृतो वर्णानाश्वभ्योऽन्नेन पूजयत्
१०८४०५५१ बन्धून्सदारान्ससुतान्पारिबर्हेण भूयसा
१०८४०५५३ विदर्भकोशलकुरून्काशिकेकयसृञ्जयान्
१०८४०५६१ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान्
१०८४०५६३ श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम्
१०८४०५७१ धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ
१०८४०५७३ नारदो भगवान्व्यासः सुहृत्सम्बन्धिबान्धवाः
१०८४०५८१ बन्धून्परिष्वज्य यदून्सौहृदाक्लिन्नचेतसः
१०८४०५८३ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः
१०८४०५९१ नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः
१०८४०५९३ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः
१०८४०६०१ वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम्
१०८४०६०३ सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन्
१०८४०६१० श्रीवसुदेव उवाच
१०८४०६११ भ्रातरीशकृतः पाशो नृनां यः स्नेहसंज्ञितः
१०८४०६१३ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम्

१०८४०६२१ अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः
१०८४०६२३ मैत्र्यर्पिताफला चापि न निवर्तेत कर्हिचित्
१०८४०६३१ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि
१०८४०६३३ अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः
१०८४०६४१ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद
१०८४०६४३ स्वजनानुत बन्धून्वा न पश्यति ययान्धदृक्
१०८४०६५० श्रीशुक उवाच
१०८४०६५१ एवं सौहृदशैथिल्य चित्त आनकदुन्दुभिः
१०८४०६५३ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः
१०८४०६६१ नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः
१०८४०६६३ अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत्
१०८४०६७१ ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः
१०८४०६७३ परार्ध्याभरणक्षौम नानानर्घ्यपरिच्छदैः
१०८४०६८१ वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः
१०८४०६८३ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ
१०८४०६९१ नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे
१०८४०६९३ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः
१०८४०७०१ बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः
१०८४०७०३ वीक्ष्य प्रावृषमासन्नाद्ययुर्द्वारवतीं पुनः
१०८४०७११ जनेभ्यः कथयां चक्रुर्यदुदेवमहोत्सवम्
१०८४०७१३ यदासीत्तीर्थयात्रायां सुहृत्सन्दर्शनादिकम्
१०८५००१० श्रीबादरायणिरुवाच
१०८५००११ अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ
१०८५००१३ वसुदेवोऽभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ
१०८५००२१ मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम्
१०८५००२३ तद्वीर्यैर्जातविश्रम्भः परिभाष्याभ्यभाषत
१०८५००३१ कृष्ण कृष्ण महायोगिन्सङ्कर्षण सनातन
१०८५००३३ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ
१०८५००४१ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा
१०८५००४३ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः
१०८५००५१ एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज

१०८५००५३ आत्मनानुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यज
१०८५००६१ प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः
१०८५००६३ पारतन्त्र्याद्वैसादृष्याद्द्वयोश्चेष्टैव चेष्टताम्
१०८५००७१ कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम्
१०८५००७३ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान्
१०८५००८१ तर्पणं प्राणनमपां देव त्वं ताश्च तद्रसः
१०८५००८३ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर
१०८५००९१ दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः
१०८५००९३ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः
१०८५०१०१ इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः
१०८५०१०३ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती
१०८५०१११ भूतानामसि भूतादिरिन्द्रियाणां च तैजसः
१०८५०११३ वैकारिको विकल्पानां प्रधानमनुशायिनम्
१०८५०१२१ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम्
१०८५०१२३ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम्
१०८५०१३१ सत्त्वम्रजस्तम इति गुणास्तद्वृत्तयश्च याः
१०८५०१३३ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया
१०८५०१४१ तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः
१०८५०१४३ त्वं चामीषु विकारेषु ह्यन्यदाव्यावहारिकः
१०८५०१५१ गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः
१०८५०१५३ गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः
१०८५०१६१ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम्
१०८५०१६३ स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर
१०८५०१७१ असावहम्ममैवैते देहे चास्यान्वयादिषु
१०८५०१७३ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत्
१०८५०१८१ युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ
१०८५०१८३ भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह
१०८५०१९१ तत्ते गतोऽस्म्यरणमद्य पदारविन्दम्
१०८५०१९२ आपन्नसंसृतिभयापहमार्तबन्धो
१०८५०१९३ एतावतालमलमिन्द्रियलालसेन
१०८५०१९४ मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः

१०८५०२०१ सूतीगृहे ननु जगाद भवानजो नौ
१०८५०२०२ सञ्जज्ञ इत्यनुयुगं निजधर्मगुप्त्यै
१०८५०२०३ नानातनूर्गगनवद्विदधज्जहासि
१०८५०२०४ को वेद भूम्न उरुगाय विभूतिमायाम्
१०८५०२१० श्रीशुक उवाच
१०८५०२११ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः
१०८५०२१३ प्रत्याह प्रश्रयानम्रः प्रहसन्श्लक्ष्णया गिरा
१०८५०२२० श्रीभगवानुवाच
१०८५०२२१ वचो वः समवेतार्थं तातैतदुपमन्महे
१०८५०२२३ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः
१०८५०२३१ अहं यूयमसावार्य इमे च द्वारकाउकसः
१०८५०२३३ सर्वेऽप्येवं यदुश्रेष्ठ विमृग्याः सचराचरम्
१०८५०२४१ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः
१०८५०२४३ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते
१०८५०२५१ खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम्
१०८५०२५३ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि
१०८५०२६० श्रीशुक उवाच
१०८५०२६१ एवं भगवता राजन्वसुदेव उदाहृतः
१०८५०२६३ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत्
१०८५०२७१ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता
१०८५०२७३ श्रुत्वानीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता
१०८५०२८१ कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान्
१०८५०२८३ स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना
१०८५०२९० श्रीदेवक्युवाच
१०८५०२९१ राम रामाप्रमेयात्मन्कृष्ण योगेश्वरेश्वर
१०८५०२९३ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ
१०८५०३०१ कलविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम्
१०८५०३०३ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे
१०८५०३११ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः
१०८५०३१३ भवन्ति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता
१०८५०३२१ चिरान्मृतसुतादाने गुरुणा किल चोदितौ

१०८५०३२३ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम्
१०८५०३३१ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ
१०८५०३३३ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान्
१०८५०३४० ऋषिरुवाच
१०८५०३४१ एवं सञ्चोदितौ मात्रा रामः कृष्णश्च भारत
१०८५०३४३ सुतलं संविविशतुर्योगमायामुपाश्रितौ
१०८५०३५१ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्
१०८५०३५२ विश्वात्मदैवं सुतरां तथात्मनः
१०८५०३५३ तद्दर्शनाह्लादपरिप्लुताशयः
१०८५०३५४ सद्यः समुत्थाय ननाम सान्वयः
१०८५०३६१ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः
१०८५०३६३ दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद्यदम्बु ह
१०८५०३७१ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः
१०८५०३७३ ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च
१०८५०३८१ स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया
१०८५०३८३ उवाच हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम्
१०८५०३९० बलिरुवाच
१०८५०३९१ नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे
१०८५०३९३ साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने
१०८५०४०१ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम्
१०८५०४०३ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया
१०८५०४११ दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः
१०८५०४१३ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः
१०८५०४२१ विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि
१०८५०४२३ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः
१०८५०४३१ केचनोद्बद्धवैरेण भक्त्या केचन कामतः
१०८५०४३३ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः
१०८५०४४१ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर
१०८५०४४३ न विदन्त्यपि योगेशा योगमायां कुतो वयम्
१०८५०४५१ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्
१०८५०४५२ पादारविन्दधिषणान्यगृहान्धकूपात्

१०८५०४५३ निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः
१०८५०४५४ शान्तो यथैक उत सर्वसखैश्चरामि
१०८५०४६१ शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो
१०८५०४६३ पुमान्यच्छ्रद्धयातिष्ठंश्चोदनाया विमुच्यते
१०८५०४७० श्रीभगवानुवाच
१०८५०४७१ आसन्मरीचेः षट्पुत्रा ऊर्णायां प्रथमेऽन्तरे
१०८५०४७३ देवाः कं जहसुर्वीक्ष्य सुतं यभितुमुद्यतम्
१०८५०४८१ तेनासुरीमगन्योनिमधुनावद्यकर्मणा
१०८५०४८३ हिरण्यकशिपोर्जाता नीतास्ते योगमायया
१०८५०४९१ देवक्या उदरे जाता राजन्कंसविहिंसिताः
१०८५०४९३ सा तान्शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽन्तिके
१०८५०५०१ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये
१०८५०५०३ ततः शापाद्विनिर्मुक्ता लोकं यास्यन्ति विज्वराः
१०८५०५११ स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद्घृणी
१०८५०५१३ षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम्
१०८५०५२१ इत्युक्त्वा तान्समादाय इन्द्रसेनेन पूजितौ
१०८५०५२३ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम्
१०८५०५३१ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी
१०८५०५३३ परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः
१०८५०५४१ अपाययत्स्तनं प्रीता सुतस्पर्शपरिस्नुतम्
१०८५०५४३ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते
१०८५०५५१ पीत्वामृतं पयस्तस्याः पीतशेषं गदाभृतः
१०८५०५५३ नारायणाङ्गसंस्पर्श प्रतिलब्धात्मदर्शनाः
१०८५०५६१ ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम्
१०८५०५६३ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम्
१०८५०५७१ तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम्
१०८५०५७३ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप
१०८५०५८१ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः
१०८५०५८३ वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत
१०८५०५९० श्रीसूत उवाच
१०८५०५९१ य इदमनुश्शृणोति श्रावयेद्वा मुरारेश्

१०८५०५९२ चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः
१०८५०५९३ जगदघभिदलं तद्भक्तसत्कर्णपूरं
१०८५०५९४ भगवति कृतचित्तो याति तत्क्षेमधाम
१०८६००१० श्रीराजोवाच
१०८६००११ ब्रह्मन्वेदितुमिच्छामः स्वसारां रामकृष्णयोः
१०८६००१३ यथोपयेमे विजयो या ममासीत्पितामही
१०८६००२० श्रीशुक उवाच
१०८६००२१ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः
१०८६००२३ गतः प्रभासमश‍ृणोन्मातुलेयीं स आत्मनः
१०८६००३१ दुर्योधनाय रामस्तां दास्यतीति न चापरे
१०८६००३३ तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात्
१०८६००४१ तत्र वै वार्षितान्मासानवात्सीत्स्वार्थसाधकः
१०८६००४३ पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः
१०८६००५१ एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम्
१०८६००५३ श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल
१०८६००६१ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम्
१०८६००६३ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे
१०८६००७१ सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम्
१०८६००७३ हसन्ती व्रीडितापङ्गी तन्न्यस्तहृदयेक्षणा
१०८६००८१ तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः
१०८६००८३ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा
१०८६००९१ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गतां
१०८६००९३ जहारानुमतः पित्रोः कृष्णस्य च महारथः
१०८६०१०१ रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान्
१०८६०१०३ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव
१०८६०१११ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः
१०८६०११३ गृहीतपादः कृष्णेन सुहृद्भिश्चानुसान्त्वितः
१०८६०१२१ प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः
१०८६०१२३ महाधनोपस्करेभ रथाश्वनरयोषितः
१०८६०१३० श्रीशुक उवाच
१०८६०१३१ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः

१०८६०१३३ कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पतः
१०८६०१४१ स उवास विदेहेषु मिथिलायां गृहाश्रमी
१०८६०१४३ अनीहयागताहार्य निर्वर्तितनिजक्रियः
१०८६०१५१ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत
१०८६०१५३ नाधिकं तावता तुष्टः क्रिया चक्रे यथोचिताः
१०८६०१६१ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः
१०८६०१६३ मैथिलो निरहम्मान उभावप्यच्युतप्रियौ
१०८६०१७१ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम्
१०८६०१७३ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः
१०८६०१८१ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः
१०८६०१८३ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः
१०८६०१९१ तत्र तत्र तमायान्तं पौरा जानपदा नृप
१०८६०१९३ उपतस्थुः सार्घ्यहस्ता ग्रहैः सूर्यमिवोदितम्
१०८६०२०१ आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्य
१०८६०२०२ पाञ्चालकुन्तिमधुकेकयकोशलार्णाः
१०८६०२०३ अन्ये च तन्मुखसरोजमुदारहास
१०८६०२०४ स्निग्धेक्षणं नृप पपुर्दृशिभिर्न्नार्यः
१०८६०२११ तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः
१०८६०२१२ क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन्
१०८६०२१३ शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं
१०८६०२१४ गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान्
१०८६०२२१ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप
१०८६०२२३ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः
१०८६०२३१ दृष्ट्वा त उत्तमःश्लोकं प्रीत्युत्फुलाननाशयाः
१०८६०२३३ कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन्
१०८६०२४१ स्वानुग्रहाय सम्प्राप्तं मन्वानौ तं जगद्गुरुम्
१०८६०२४३ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः
१०८६०२५१ न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः
१०८६०२५३ मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली
१०८६०२६१ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया
१०८६०२६३ उभयोराविशद्गेहमुभाभ्यां तदलक्षितः

१०८६०२७१ श्रान्तानप्यथ तान्दूराज्जनकः स्वगृहागतान्
१०८६०२७३ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः
१०८६०२८१ प्रवृद्धभक्त्या उद्धर्ष हृदयास्राविलेक्षणः
१०८६०२८३ नत्वा तदङ्घ्रीन्प्रक्षाल्य तदपो लोकपावनीः
१०८६०२९१ सकुटुम्बो वहन्मूर्ध्ना पूजयां चक्र ईश्वरान्
१०८६०२९३ गन्धमाल्याम्बराकल्प धूपदीपार्घ्यगोवृषैः
१०८६०३०१ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान्
१०८६०३०३ पादावङ्कगतौ विष्णोः संस्पृशञ्छनकैर्मुदा
१०८६०३१० श्रीबहुलाश्व उवाच
१०८६०३११ भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो
१०८६०३१३ अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः
१०८६०३२१ स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान्
१०८६०३२३ यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः
१०८६०३३१ को नु त्वच्चरणाम्भोजमेवंविद्विसृजेत्पुमान्
१०८६०३३३ निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः
१०८६०३४१ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह
१०८६०३४३ यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम्
१०८६०३५१ नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे
१०८६०३५३ नारायणाय ऋषये सुशान्तं तप ईयुषे
१०८६०३६१ दिनानि कतिचिद्भूमन्गृहान्नो निवस द्विजैः
१०८६०३६३ समेतः पादरजसा पुनीहीदं निमेः कुलम्
१०८६०३७१ इत्युपामन्त्रितो राज्ञा भगवांल्लोकभावनः
१०८६०३७३ उवास कुर्वन्कल्याणं मिथिलानरयोषिताम्
१०८६०३८१ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा
१०८६०३८३ नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त ह
१०८६०३९१ तृणपीठबृषीष्वेतानानीतेषूपवेश्य सः
१०८६०३९३ स्वागतेनाभिनन्द्याङ्घ्रीन्सभार्योऽवनिजे मुदा
१०८६०४०१ तदम्भसा महाभाग आत्मानं सगृहान्वयम्
१०८६०४०३ स्नापयां चक्र उद्धर्षो लब्धसर्वमनोरथः
१०८६०४११ फलार्हणोशीरशिवामृताम्बुभिर्मृदा सुरभ्या तुलसीकुशाम्बुयैः
१०८६०४१३ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा

१०८६०४२१ स तर्कयामास कुतो ममान्वभूत्गृहान्धकुपे पतितस्य सङ्गमः
१०८६०४२३ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः
१०८६०४३१ सूपविष्टान्कृतातिथ्यान्श्रुतदेव उपस्थितः
१०८६०४३३ सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः
१०८६०४४० श्रुतदेव उवाच
१०८६०४४१ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः
१०८६०४४३ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया
१०८६०४५१ यथा शयानः पुरुषो मनसैवात्ममायया
१०८६०४५३ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते
१०८६०४६१ शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम्
१०८६०४६३ णृणां संवदतामन्तर्हृदि भास्यमलात्मनाम्
१०८६०४७१ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम्
१०८६०४७३ आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम्
१०८६०४८१ नमोऽस्तु तेऽध्यात्मविदां परात्मने
१०८६०४८२ अनात्मने स्वात्मविभक्तमृत्यवे
१०८६०४८३ सकारणाकारणलिङ्गमीयुषे
१०८६०४८४ स्वमाययासंवृतरुद्धदृष्टये
१०८६०४९१ स त्वं शाधि स्वभृत्यान्नः किं देव करवाम हे
१०८६०४९३ एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः
१०८६०५०० श्रीशुक उवाच
१०८६०५०१ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा
१०८६०५०३ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह
१०८६०५१० श्रीभगवानुवाच
१०८६०५११ ब्रह्मंस्तेऽनुग्रहार्थाय सम्प्राप्तान्विद्ध्यमून्मुनीन्
१०८६०५१३ सञ्चरन्ति मया लोकान्पुनन्तः पादरेणुभिः
१०८६०५२१ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः
१०८६०५२३ शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया
१०८६०५३१ ब्राह्मणो जन्मना श्रेयान्सर्वेषाम्प्राणिनामिह
१०८६०५३३ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः
१०८६०५४१ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्
१०८६०५४३ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम्

१०८६०५५१ दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः
१०८६०५५३ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः
१०८६०५६१ चराचरमिदं विश्वं भावा ये चास्य हेतवः
१०८६०५६३ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया
१०८६०५७१ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयार्चय
१०८६०५७३ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः
१०८६०५८० श्रीशुक उवाच
१०८६०५८१ स इत्थं प्रभुनादिष्टः सहकृष्णान्द्विजोत्तमान्
१०८६०५८३ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम्
१०८६०५९१ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान्
१०८६०५९३ उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात्
१०८७००१० श्रीपरीक्षिदुवाच
१०८७००११ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः
१०८७००१३ कथं चरन्ति श्रुतयः साक्षात्सदसतः परे
१०८७००२० श्रीशुक उवाच
१०८७००२१ बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः
१०८७००२३ मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च
१०८७००३१ सैषा ह्युपनिषद्ब्राह्मी पूर्वेशां पूर्वजैर्धृता
१०८७००३३ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः
१०८७००४१ अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम्
१०८७००४३ नारदस्य च संवादमृषेर्नारायणस्य च
१०८७००५१ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः
१०८७००५३ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम्
१०८७००६१ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम्
१०८७००६३ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः
१०८७००७१ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः
१०८७००७३ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह
१०८७००८१ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम्
१०८७००८३ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम्
१०८७००९० श्रीभगवानुवाच
१०८७००९१ स्वायम्भुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा

१०८७००९३ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम्
१०८७०१०१ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्
१०८७०१०३ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते
१०८७०१०५ तत्र हायमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि
१०८७०१११ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः
१०८७०११३ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे
१०८७०१२० श्रीसनन्दन उवाच
१०८७०१२१ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः
१०८७०१२३ तदन्ते बोधयां चक्रुस्तल्लिङ्गैः श्रुतयः परम्
१०८७०१३१ यथा शयानं संराजं वन्दिनस्तत्पराक्रमैः
१०८७०१३३ प्रत्यूषेऽभेत्य सुश्लोकैर्बोधयन्त्यनुजीविनः
१०८७०१४० श्रीश्रुतय ऊचुः
१०८७०१४१ जय जय जह्यजामजित दोषगृभीतगुणां
१०८७०१४२ त्वमसि यदात्मना समवरुद्धसमस्तभगः
१०८७०१४३ अगजगदोकसामखिलशक्त्यवबोधक ते
१०८७०१४४ क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः
१०८७०१५१ बृहदुपलब्धमेतदवयन्त्यवशेषतया
१०८७०१५२ यत उदयास्तमयौ विकृतेर्मृदि वाविकृतात्
१०८७०१५३ अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
१०८७०१५४ कथमयथा भवन्ति भुवि दत्तपदानि नृणाम्
१०८७०१६१ इति तव सूरयस्त्र्यधिपतेऽखिललोकमल
१०८७०१६२ क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः
१०८७०१६३ किमुत पुनः स्वधामविधुताशयकालगुणाः
१०८७०१६४ परम भजन्ति ये पदमजस्रसुखानुभवम्
१०८७०१७१ दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
१०८७०१७२ महदहमादयोऽण्डमसृजन्यदनुग्रहतः
१०८७०१७३ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
१०८७०१७४ सदसतः परं त्वमथ यदेष्ववशेषमृतम्
१०८७०१८१ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
१०८७०१८२ परिसरपद्धतिं हृदयमारुणयो दहरम्
१०८७०१८३ तत उदगादनन्त तव धाम शिरः परमं

१०८७०१८४ पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे
१०८७०१९१ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
१०८७०१९२ तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः
१०८७०१९३ अथ वितथास्वमूष्ववितथां तव धाम समं
१०८७०१९४ विरजधियोऽनुयन्त्यभिविपण्यव एकरसम्
१०८७०२०१ स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
१०८७०२०२ तव पुरुषं वदन्त्यखिलशक्तिधृतोऽंशकृतम्
१०८७०२०३ इति नृगतिं विविच्य कवयो निगमावपनं
१०८७०२०४ भवत उपासतेऽङ्घ्रिमभवम्भुवि विश्वसिताः
१०८७०२११ दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्
१०८७०२१२ चरितमहामृताब्धिपरिवर्तपरिश्रमणाः
१०८७०२१३ न परिलषन्ति केचिदपवर्गमपीश्वर ते
१०८७०२१४ चरणसरोजहंसकुलसङ्गविसृष्टगृहाः
१०८७०२२१ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्
१०८७०२२२ चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च
१०८७०२२३ न बत रमन्त्यहो असदुपासनयात्महनो
१०८७०२२४ यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः
१०८७०२३१ निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्
१०८७०२३२ मुनय उपासते तदरयोऽपि ययुः स्मरणात्
१०८७०२३३ स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
१०८७०२३४ वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः
१०८७०२४१ क इह नु वेद बतावरजन्मलयोऽग्रसरं
१०८७०२४२ यत उदगादृषिर्यमनु देवगणा उभये
१०८७०२४३ तर्हि न सन्न चासदुभयं न च कालजवः
१०८७०२४४ किमपि न तत्र शास्त्रमवकृष्य शयीत यदा
१०८७०२५१ जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
१०८७०२५२ विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः
१०८७०२५३ त्रिगुणमयः पुमानिति भिदा यदबोधकृता
१०८७०२५४ त्वयि न ततः परत्र स भवेदवबोधरसे
१०८७०२६१ सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
१०८७०२६२ सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः

१०८७०२६३ न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
१०८७०२६४ स्वकृतमनुप्रविष्टमिदमात्मतयावसितम्
१०८७०२७१ तव परि ये चरन्त्यखिलसत्त्वनिकेततया
१०८७०२७२ त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः
१०८७०२७३ परिवयसे पशूनिव गिरा विबुधानपि तांस्
१०८७०२७४ त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः
१०८७०२८१ त्वमकरणः स्वराडखिलकारकशक्तिधरस्
१०८७०२८२ तव बलिमुद्वहन्ति समदन्त्यजयानिमिषाः
१०८७०२८३ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
१०८७०२८४ विदधति यत्र ये त्वधिकृता भवतश्चकिताः
१०८७०२९१ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
१०८७०२९२ विहर उदीक्षया यदि परस्य विमुक्त ततः
१०८७०२९३ न हि परमस्य कश्चिदपरो न परश्च भवेद्
१०८७०२९४ वियत इवापदस्य तव शून्यतुलां दधतः
१०८७०३०१ अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्
१०८७०३०२ तर्हि न शास्यतेति नियमो ध्रव नेतरथा
१०८७०३०३ अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
१०८७०३०४ सममनुजानतां यदमतं मतदुष्टतया
१०८७०३११ न घटत उद्भवः प्रकृतिपूरुषयोरजयोर्
१०८७०३१२ उभययुजा भवन्त्यसुभृतो जलबुद्बुदवत्
१०८७०३१३ त्वयि त इमे ततो विविधनामगुणैः परमे
१०८७०३१४ सरित इवार्णवे मधुनि लिल्युरशेषरसाः
१०८७०३२१ नृषु तव मयया भ्रमममीष्ववगत्य भृशं
१०८७०३२२ त्वयि सुधियोऽभवे दधति भावमनुप्रभवम्
१०८७०३२३ कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
१०८७०३२४ सृजति मुहुस्त्रिनेमिरभवच्छरणेषु भयम्
१०८७०३३१ विजितहृषीकवायुभिरदान्तमनस्तुरगं
१०८७०३३२ य इह यतन्ति यन्तुमतिलोलमुपायखिदः
१०८७०३३३ व्यसनशतान्विताः समवहाय गुरोश्चरणं
१०८७०३३४ वणिज इवाज सन्त्यकृतकर्णधरा जलधौ
१०८७०३४१ स्वजनसुतात्मदारधनधामधरासुरथैस्

१०८७०३४२ त्वयि सति किं नृणाम्श्रयत आत्मनि सर्वरसे
१०८७०३४३ इति सदजानतां मिथुनतो रतये चरतां
१०८७०३४४ सुखयति को न्विह स्वविहते स्वनिरस्तभगे
१०८७०३५१ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्
१०८७०३५२ त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः
१०८७०३५३ दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
१०८७०३५४ न पुनरुपासते पुरुषसारहरावसथान्
१०८७०३६१ सत इदं उत्थितं सदिति चेन्ननु तर्कहतं
१०८७०३६२ व्यभिचरति क्व च क्व च मृषा न तथोभययुक्
१०८७०३६३ व्यवहृतये विकल्प इषितोऽन्धपरम्परया
१०८७०३६४ भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्
१०८७०३७१ न यदिदमग्र आस न भविष्यदतो निधनाद्
१०८७०३७२ अनु मितमन्तरा त्वयि विभाति मृषैकरसे
१०८७०३७३ अत उपमीयते द्रविणजातिविकल्पपथैर्
१०८७०३७४ वितथमनोविलासमृतमित्यवयन्त्यबुधाः
१०८७०३८१ स यदजया त्वजामनुशयीत गुणांश्च जुषन्
१०८७०३८२ भजति सरूपतां तदनु मृत्युमपेतभगः
१०८७०३८३ त्वमुत जहासि तामहिरिव त्वचमात्तभगो
१०८७०३८४ महसि महीयसेऽष्टगुणितेऽपरिमेयभगः
१०८७०३९१ यदि न समुद्धरन्ति यतयो हृदि कामजटा
१०८७०३९२ दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः
१०८७०३९३ असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्न्
१०८७०३९४ अनपगतान्तकादनधिरूढपदाद्भवतः
१०८७०४०१ त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्
१०८७०४०२ गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः
१०८७०४०३ अनुयुगमन्वहं सगुण गीतपरम्परया
१०८७०४०४ श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः
१०८७०४११ द्युपतय एव ते न ययुरन्तमनन्ततया
१०८७०४१२ त्वमपि यदन्तराण्डनिचया ननु सावरणाः
१०८७०४१३ ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्
१०८७०४१४ त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः

१०८७०४२० श्रीभगवानुवाच
१०८७०४२१ इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम्
१०८७०४२३ सनन्दनमथानर्चुः सिद्धा ज्ञात्वात्मनो गतिम्
१०८७०४३१ इत्यशेषसमाम्नाय पुराणोपनिषद्रसः
१०८७०४३३ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः
१०८७०४४१ त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानुशासनम्
१०८७०४४३ धारयंश्चर गां कामं कामानां भर्जनं नृणाम्
१०८७०४५० श्रीशुक उवाच
१०८७०४५१ एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान्
१०८७०४५३ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः
१०८७०४६० श्रीनारद उवाच
१०८७०४६१ नमस्तस्मै भगवते कृष्णायामलकीर्तये
१०८७०४६३ यो धत्ते सर्वभूतानामभवायोशतीः कलाः
१०८७०४७१ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः
१०८७०४७३ ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे
१०८७०४८१ सभाजितो भगवता कृतासनपरिग्रहः
१०८७०४८३ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम्
१०८७०४९१ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया
१०८७०४९३ यथा ब्रह्मण्यनिर्देश्ये नीरूगुणेऽपि मनश्चरेत्
१०८७०५०१ योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो
१०८७०५०२ यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः
१०८७०५०३ यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
१०८७०५०४ तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम्
१०८८००१० श्रीराजोवाच
१०८८००११ देवासुरमनुष्येसु ये भजन्त्यशिवं शिवम्
१०८८००१३ प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम्
१०८८००२१ एतद्वेदितुमिच्छामः सन्देहोऽत्र महान्हि नः
१०८८००२३ विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः
१०८८००३० श्रीशुक उवाच
१०८८००३१ शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः
१०८८००३३ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा

१०८८००४१ ततो विकारा अभवन्षोडशामीषु कश्चन
१०८८००४३ उपधावन्विभूतीनां सर्वासामश्नुते गतिम्
१०८८००५१ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः
१०८८००५३ स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत्
१०८८००६१ निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः
१०८८००६३ शृण्वन्भगवतो धर्मानपृच्छदिदमच्युतम्
१०८८००७१ स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः
१०८८००७३ नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले
१०८८००८० श्रीभगवानुवाच
१०८८००८१ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः
१०८८००८३ ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम्
१०८८००९१ स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया
१०८८००९३ मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम्
१०८८०१०१ तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम्
१०८८०१०३ विज्ञायात्मतया धीरः संसारात्परिमुच्यते
१०८८०१११ अतो मां सुदुराराध्यं हित्वान्यान्भजते जनः
१०८८०११३ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः
१०८८०११५ मत्ताः प्रमत्ता वरदान्विस्मयन्त्यवजानते
१०८८०१२० श्रीशुक उवाच
१०८८०१२१ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः
१०८८०१२३ सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः
१०८८०१३१ अत्र चोदाहरन्तीममितिहासं पुरातनम्
१०८८०१३३ वृकासुराय गिरिशो वरं दत्त्वाप सङ्कटम्
१०८८०१४१ वृको नामासुरः पुत्रः शकुनेः पथि नारदम्
१०८८०१४३ दृष्ट्वाशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः
१०८८०१५१ स आह देवं गिरिशमुपाधावाशु सिद्ध्यसि
१०८८०१५३ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति
१०८८०१६१ दशास्यबाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव
१०८८०१६३ ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम्
१०८८०१७१ इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः
१०८८०१७३ केदार आत्मक्रव्येण जुह्वानो ग्निमुखं हरम्

१०८८०१८१ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि
१०८८०१८३ शिरोऽवृश्चत्सुधितिना तत्तीर्थक्लिन्नमूर्धजम्
१०८८०१९१ तदा महाकारुणिको स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात्
१०८८०१९३ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः
१०८८०२०१ तमाह चाङ्गालमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम्
१०८८०२०३ प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयात्मा भृशमर्द्यते वृथा
१०८८०२११ देवं स वव्रे पापीयान्वरं भूतभयावहम्
१०८८०२१३ यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति
१०८८०२२१ तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत
१०८८०२२३ ओं इति प्रहसंस्तस्मै ददेऽहेरमृतं यथा
१०८८०२३१ स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः
१०८८०२३३ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः
१०८८०२४१ तेनोपसृष्टः सन्त्रस्तः पराधावन्सवेपथुः
१०८८०२४३ यावदन्तं दिवो भूमेः कष्ठानामुदगादुदक्
१०८८०२५१ अजानन्तः प्रतिविधिं तूष्णीमासन्सुरेश्वराः
१०८८०२५३ ततो वैकुण्ठमगमद्भास्वरं तमसः परम्
१०८८०२६१ यत्र नारायणः साक्षान्न्यासिनां परमो गतिः
१०८८०२६३ शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः
१०८८०२७१ तं तथा व्यसनं दृष्ट्वा भगवान्वृजिनार्दनः
१०८८०२७३ दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया
१०८८०२८१ मेखलाजिनदण्डाक्षैस्तेजसाग्निरिव ज्वलन्
१०८८०२८३ अभिवादयामास च तं कुशपाणिर्विनीतवत्
१०८८०२९० श्रीभगवानुवाच
१०८८०२९१ शाकुनेय भवान्व्यक्तं श्रान्तः किं दूरमागतः
१०८८०२९३ क्षणं विश्रम्यतां पुंस आत्मायं सर्वकामधुक्
१०८८०३०१ यदि नः श्रवणायालं युष्मद्व्यवसितं विभो
१०८८०३०३ भण्यतां प्रायशः पुम्भिर्धृतैः स्वार्थान्समीहते
१०८८०३१० श्रीशुक उवाच
१०८८०३११ एवं भगवता पृष्टो वचसामृतवर्षिणा
१०८८०३१३ गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम्
१०८८०३२० श्रीभगवानुवाच

१०८८०३२१ एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि
१०८८०३२३ यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट्
१०८८०३३१ यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ
१०८८०३३३ तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम्
१०८८०३४१ यद्यसत्यं वचः शम्भोः कथञ्चिद्दानवर्षभ
१०८८०३४३ तदैनं जह्यसद्वाचं न यद्वक्तानृतं पुनः
१०८८०३५१ इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः
१०८८०३५३ भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्न्यधात्
१०८८०३६१ अथापतद्भिन्नशिराः व्रजाहत इव क्षणात्
१०८८०३६३ जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि
१०८८०३७१ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे
१०८८०३७३ देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः
१०८८०३८१ मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः
१०८८०३८३ अहो देव महादेव पापोऽयं स्वेन पाप्मना
१०८८०३९१ हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः
१०८८०३९३ क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ
१०८८०४०१ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः
१०८८०४०३ गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथारिभिः
१०८९००१० श्रीशुक उवाच
१०८९००११ सरस्वत्यास्तटे राजन्नृषयः सत्रमासत
१०८९००१३ वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान्
१०८९००२१ तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप
१०८९००२३ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्जगाद्ब्रह्मणः सभाम्
१०८९००३१ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया
१०८९००३३ तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा
१०८९००४१ स आत्मन्युत्थितम्मन्युमात्मजायात्मना प्रभुः
१०८९००४३ अशीशमद्यथा वह्निं स्वयोन्या वारिणात्मभूः
१०८९००५१ ततः कैलासमगमत्स तं देवो महेश्वरः
१०८९००५३ परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा
१०८९००६१ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह
१०८९००६३ शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः

१०८९००७१ पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा
१०८९००७३ अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः
१०८९००८१ शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत्
१०८९००८३ तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः
१०८९००९१ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम्
१०८९००९३ आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम्
१०८९००९५ अजानतामागतान्वः क्षन्तुमर्हथ नः प्रभो
१०८९०१०१ पुनीहि सहलोकं मां लोकपालांश्च मद्गतान्
१०८९०१०३ पादोदकेन भवतस्तीर्थानां तीर्थकारिणा
१०८९०१११ अद्याहं भगवंल्लक्ष्म्या आसमेकान्तभाजनम्
१०८९०११३ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः
१०८९०१२० श्रीशुक उवाच
१०८९०१२१ एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा
१०८९०१२३ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः
१०८९०१३१ पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम्
१०८९०१३३ स्वानुभूतमशेषेण राजन्भृगुरवर्णयत्
१०८९०१४१ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः
१०८९०१४३ भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम्
१०८९०१५१ धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम्
१०८९०१५३ ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम्
१०८९०१६१ मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम्
१०८९०१६३ अकिञ्चनानां साधूनां यमाहुः परमां गतिम्
१०८९०१७१ सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः
१०८९०१७३ भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः
१०८९०१८१ त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः
१०८९०१८३ गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम्
१०८९०१९० श्रीशुक उवाच
१०८९०१९१ इत्थं सारस्वता विप्रा नृणाम्संशयनुत्तये
१०८९०१९३ पुरुषस्य पदाम्भोज सेवया तद्गतिं गताः
१०८९०२०० श्रीसूत उवाच
१०८९०२०१ इत्येतन्मुनितनयास्यपद्मगन्ध

१०८९०२०२ पीयूषं भवभयभित्परस्य पुंसः
१०८९०२०३ सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णम्
१०८९०२०४ पान्थोऽध्वभ्रमणपरिश्रमं जहाति
१०८९०२१० श्रीशुक उवाच
१०८९०२११ एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः
१०८९०२१३ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत
१०८९०२२१ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः
१०८९०२२३ इदं प्रोवाच विलपन्नातुरो दीनमानसः
१०८९०२३१ ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः
१०८९०२३३ क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः
१०८९०२४१ हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम्
१०८९०२४३ प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः
१०८९०२५१ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च
१०८९०२५३ विसृज्य स नृपद्वारि तां गाथां समगायत
१०८९०२६१ तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके
१०८९०२६३ परेते नवमे बाले ब्राह्मणं समभाषत
१०८९०२७१ किं स्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः
१०८९०२७३ राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते
१०८९०२८१ धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः
१०८९०२८३ ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः
१०८९०२९१ अहं प्रजाः वां भगवन्रक्षिष्ये दीनयोरिह
१०८९०२९३ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः
१०८९०३०० श्रीब्राह्मण उवाच
१०८९०३०१ सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः
१०८९०३०३ अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत्
१०८९०३११ तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः
१०८९०३१३ त्वं चिकीर्षसि बालिश्यात्तन्न श्रद्दध्महे वयम्
१०८९०३२० श्रीअर्जुन उवाच
१०८९०३२१ नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च
१०८९०३२३ अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः
१०८९०३३१ मावमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम्

१०८९०३३३ मृत्युं विजित्य प्रधने आनेष्ये ते प्रजाः प्रभो
१०८९०३४१ एवं विश्रम्भितो विप्रः फाल्गुनेन परन्तप
१०८९०३४३ जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन्
१०८९०३५१ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः
१०८९०३५३ पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः
१०८९०३६१ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम्
१०८९०३६३ दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे
१०८९०३७१ न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः
१०८९०३७३ तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम्
१०८९०३८१ ततः कुमारः सञ्जातो विप्रपत्न्या रुदन्मुहुः
१०८९०३८३ सद्योऽदर्शनमापेदे सशरीरो विहायसा
१०८९०३९१ तदाह विप्रो विजयं विनिन्दन्कृष्णसन्निधौ
१०८९०३९३ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम्
१०८९०४०१ न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः
१०८९०४०३ यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः
१०८९०४११ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः
१०८९०४१३ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः
१०८९०४२१ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः
१०८९०४२३ ययौ संयमनीमाशु यत्रास्ते भगवान्यमः
१०८९०४३१ विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम्
१०८९०४३३ आग्नेयीं नैरृतीं सौम्यां वायव्यां वारुणीमथ
१०८९०४४१ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः
१०८९०४४३ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः
१०८९०४४५ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता
१०८९०४५१ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना
१०८९०४५३ ये ते नः कीर्तिं विमलां मनुष्याः स्थापयिष्यन्ति
१०८९०४६१ इति सम्भाष्य भगवानर्जुनेन सहेश्वरः
१०८९०४६३ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत्
१०८९०४७१ सप्त द्वीपान्ससिन्धूंश्च सप्त सप्त गिरीनथ
१०८९०४७३ लोकालोकं तथातीत्य विवेश सुमहत्तमः
१०८९०४८१ तत्राश्वाः शैब्यसुग्रीव मेघपुष्पबलाहकाः

१०८९०४८३ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ
१०८९०४९१ तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः
१०८९०४९३ सहस्रादित्यसङ्काशं स्वचक्रं प्राहिणोत्पुरः
१०८९०५०१ तमः सुघोरं गहनं कृतं महद्
१०८९०५०२ विदारयद्भूरितरेण रोचिषा
१०८९०५०३ मनोजवं निर्विविशे सुदर्शनं
१०८९०५०४ गुणच्युतो रामशरो यथा चमूः
१०८९०५११ द्वारेण चक्रानुपथेन तत्तमः परं परं ज्योतिरनन्तपारम्
१०८९०५१३ समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षो पिदधेऽक्षिणी उभे
१०८९०५२१ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभूषणम्
१०८९०५२३ तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम्
१०८९०५३१ तस्मिन्महाभोगमनन्तमद्भुतं
१०८९०५३२ सहस्रमूर्धन्यफणामणिद्युभिः
१०८९०५३३ विभ्राजमानं द्विगुणेक्षणोल्बणं
१०८९०५३४ सिताचलाभं शितिकण्ठजिह्वम्
१०८९०५४१ ददर्श तद्भोगसुखासनं विभुं
१०८९०५४२ महानुभावं पुरुषोत्तमोत्तमम्
१०८९०५४३ सान्द्राम्बुदाभं सुपिशङ्गवाससं
१०८९०५४४ प्रसन्नवक्त्रं रुचिरायतेक्षणम्
१०८९०५५१ महामणिव्रातकिरीटकुण्डल
१०८९०५५२ प्रभापरिक्षिप्तसहस्रकुन्तलम्
१०८९०५५३ प्रलम्बचार्वष्टभुजं सकौस्तुभं
१०८९०५५४ श्रीवत्सलक्ष्मं वनमालयावृतम्
१०८९०५६१ महामणिव्रातकिरीटकुण्डल
१०८९०५६२ प्रभापरिक्षिप्तसहस्रकुन्तलम्
१०८९०५६३ प्रलम्बचार्वष्टभुजं सकौस्तुभं
१०८९०५६४ श्रीवत्सलक्ष्मं वनमालयावृतम्
१०८९०५७१ ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः
१०८९०५७३ तावाह भूमा परमेष्ठिनां प्रभुर्बेद्धाञ्जली सस्मितमूर्जया गिरा
१०८९०५८१ द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये
१०८९०५८३ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमन्ति मे

१०८९०५९१ पूर्णकामावपि युवां नरनारायणावृषी
१०८९०५९३ धर्ममाचरतां स्थित्यै ऋषभौ लोकसङ्ग्रहम्
१०८९०६०१ इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना
१०८९०६०३ ओं इत्यानम्य भूमानमादाय द्विजदारकान्
१०८९०६११ न्यवर्तेतां स्वकं धाम सम्प्रहृष्टौ यथागतम्
१०८९०६१३ विप्राय ददतुः पुत्रान्यथारूपं यथावयः
१०८९०६२१ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः
१०८९०६२३ यत्किञ्चित्पौरुषं पुंसां मेने कृष्णानुकम्पितम्
१०८९०६३१ इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन्
१०८९०६३३ बुभुजे विषयान्ग्राम्यानीजे चात्युर्जितैर्मखैः
१०८९०६४१ प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु
१०८९०६४३ यथाकालं यथैवेन्द्रो भगवान्श्रैष्ठ्यमास्थितः
१०८९०६५१ हत्वा नृपानधर्मिष्ठान्घाटयित्वार्जुनादिभिः
१०८९०६५३ अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः
१०९०००१० श्रीशुक उवाच
१०९०००११ सुखं स्वपुर्यां निवसन्द्वारकायां श्रियः पतिः
१०९०००१३ सर्वसम्पत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः
१०९०००२१ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः
१०९०००२३ कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः
१०९०००३१ नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः
१०९०००४१ स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः
१०९०००४३ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु
१०९०००५१ निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः
१०९०००५३ रेमे षोडशसाहस्र पत्नीनां एकवल्लभः
१०९०००६१ तावद्विचित्ररूपोऽसौ तद्गेहेषु महर्द्धिषु
१०९०००६३ प्रोत्फुल्लोत्पलकह्लार कुमुदाम्भोजरेणुभिः
१०९०००७१ वासितामलतोयेषु कूजद्द्विजकुलेषु च
१०९०००७३ विजहार विगाह्याम्भो ह्रदिनीषु महोदयः
१०९०००७५ कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम्
१०९०००८१ उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान्
१०९०००८३ वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः

१०९०००९१ सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः
१०९०००९३ प्रतिषिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव
१०९००१०१ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः
१०९००१०२ सिञ्चन्त्य उद्धृतबृहत्कवरप्रसूनाः
१०९००१०३ कान्तं स्म रेचकजिहीर्षययोपगुह्य
१०९००१०४ जातस्मरोत्स्मयलसद्वदना विरेजुः
१०९००१११ कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्
१०९००११२ क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः
१०९००११३ सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो
१०९००११४ रेमे करेणुभिरिवेभपतिः परीतः
१०९००१२१ नटानां नर्तकीनां च गीतवाद्योपजीविनाम्
१०९००१२३ क्रीडालङ्कारवासांसि कृष्णोऽदात्तस्य च स्त्रियः
१०९००१३१ कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः
१०९००१३३ नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः
१०९००१४१ ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम्
१०९००१४३ चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु
१०९००१५० महिष्य ऊचुः
१०९००१५१ कुररि विलपसि त्वं वीतनिद्रा न शेषे
१०९००१५२ स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः
१०९००१५३ वयमिव सखि कच्चिद्गाढनिर्विद्धचेता
१०९००१५४ नलिननयनहासोदारलीलेक्षितेन
१०९००१६१ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्
१०९००१६२ त्वं रोरवीषि करुणं बत चक्रवाकि
१०९००१६३ दास्यं गत वयमिवाच्युतपादजुष्टां
१०९००१६४ किं वा स्रजं स्पृहयसे कवरेण वोढुम्
१०९००१७१ भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः
१०९००१७३ किम्वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम्
१०९००१८१ त्वं यक्ष्मणा बलवतासि गृहीत इन्दो
१०९००१८२ क्षीणस्तमो न निजदीधितिभिः क्षिणोषि
१०९००१८३ कच्चिन्मुकुन्दगदितानि यथा वयं त्वं
१०९००१८४ विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः

१०९००१९१ किं न्वाचरितमस्माभिर्मलयानिल तेऽप्रियम्
१०९००१९३ गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम्
१०९००२०१ मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं
१०९००२०२ श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः
१०९००२०३ अत्युत्कण्ठः शवलहृदयोऽस्मद्विधो बाष्पधाराः
१०९००२०४ स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः
१०९००२११ प्रियरावपदानि भाषसे मृतसञ्जीविकयानया गिरा
१०९००२१३ करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल
१०९००२२१ न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम्
१०९००२२३ अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम्
१०९००२३१ शुष्यद्ध्रदाः करशिता बत सिन्धुपत्न्यः
१०९००२३२ सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः
१०९००२३३ यद्वद्वयं मधुपतेः प्रणयावलोकम्
१०९००२३४ अप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म
१०९००२४१ हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां
१०९००२४२ दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा
१०९००२४३ किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं
१०९००२४४ क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम्
१०९००२५० श्रीशुक उवाच
१०९००२५१ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे
१०९००२५३ क्रियमाणेन माधव्यो लेभिरे परमां गतिम्
१०९००२६१ श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः
१०९००२६३ उरुगायोरुगीतो वा पश्यन्तीनां च किं पुनः
१०९००२७१ याः सम्पर्यचरन्प्रेम्णा पादसंवाहनादिभिः
१०९००२७३ जगद्गुरुं भर्तृबुद्ध्या तासां किम्वर्ण्यते तपः
१०९००२८१ एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः
१०९००२८३ गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम्
१०९००२९१ आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम्
१०९००२९३ आसन्षोडशसाहस्रं महिष्यश्च शताधिकम्
१०९००३०१ तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः
१०९००३०३ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः

१०९००३११ एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान्
१०९००३१३ यावत्य आत्मनो भार्या अमोघगतिरीश्वरः
१०९००३२१ तेषामुद्दामवीर्याणामष्टादश महारथाः
१०९००३२३ आसन्नुदारयशसस्तेषां नामानि मे शृणु
१०९००३३१ प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च
१०९००३३३ साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः
१०९००३४१ पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः
१०९००३४३ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च
१०९००३५१ एतेषामपि राजेन्द्र तनुजानां मधुद्विषः
१०९००३५३ प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः
१०९००३६१ स रुक्मिणो दुहितरमुपयेमे महारथः
१०९००३६३ तस्यां ततोऽनिरुद्धोऽभून्नागायतबलान्वितः
१०९००३७१ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः
१०९००३७३ वज्रस्तस्याभवद्यस्तु मौषलादवशेषितः
१०९००३८१ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः
१०९००३८३ सुबाहोः शान्तसेनोऽभूच्छतसेनस्तु तत्सुतः
१०९००३९१ न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः
१०९००३९३ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे
१०९००४०१ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम्
१०९००४०३ सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप
१०९००४११ तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च
१०९००४१३ आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम्
१०९००४२१ सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम्
१०९००४२३ यत्रायुतानामयुत लक्षेणास्ते स आहुकः
१०९००४३१ देवासुराहवहता दैतेया ये सुदारुणाः
१०९००४३३ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे
१०९००४४१ तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले
१०९००४४३ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप
१०९००४५१ तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः
१०९००४५३ ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः
१०९००४६१ शय्यासनाटनालाप क्रीडास्नानादिकर्मसु

१०९०० ४६३ न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः
१०९००४७१ तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं
१०९००४७२ विद्विद्स्निग्धाः स्वरूपं ययुरजितपर श्रीर्यदर्थेऽन्ययत्नः
१०९००४७३ यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
१०९००४७४ कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य
१०९००४८१ जयति जननिवासो देवकीजन्मवादो
१०९००४८२ यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्
१०९००४८३ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
१०९००४८४ व्रजपुरवनितानां वर्धयन्कामदेवम्
१०९००४९१ इत्थं परस्य निजवर्त्मरिरक्षयात्त
१०९००४९२ लीलातनोस्तदनुरूपविडम्बनानि
१०९००४९३ कर्माणि कर्मकषणानि यदूत्तमस्य
१०९००४९४ श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन्
१०९००५०१ मर्त्यस्तयानुसवमेधितया मुकुन्द
१०९००५०२ श्रीमत्कथाश्रवणकीर्तनचिन्तयैति
१०९००५०३ तद्धाम दुस्तरकृतान्तजवापवर्गं
१०९००५०४ ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः
११०१००१० श्रीशुक उवाच
११०१००११ कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः
११०१००१३ भुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम्
११०१००२१ ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्
११०१००२२ दुर्द्यूतहेलनकचग्रहणादिभिस्तान्
११०१००२३ कृत्वा निमित्तमितरेतरतः समेतान्
११०१००२४ हत्वा नृपान्निरहरत्क्षितिभारमीशः
११०१००३१ भूभारराजपृतना यदुभिर्निरस्य
११०१००३२ गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः
११०१००३३ मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं
११०१००३४ यद्यादवं कुलमहो अविषह्यमास्ते
११०१००४१ नैवान्यतः परिभवोऽस्य भवेत्कथञ्चिन्
११०१००४२ मत्संश्रयस्य विभवोन्नहनस्य नित्यम्
११०१००४३ अन्तः कलिं यदुकुलस्य विधाय वेणु

११०१००४४ स्तम्बस्य वह्निमिव शान्तिमुपैमि धाम
११०१००५१ एवं व्यवसितो राजन्सत्यसङ्कल्प ईश्वरः
११०१००५३ शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः
११०१००६१ स्वमूर्त्या लोकलावण्य निर्मुक्त्या लोचनं नृणाम्
११०१००६३ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः
११०१००७१ आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ
११०१००७३ तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः
११०१००८० श्रीराजोवाच
११०१००८१ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम्
११०१००८३ विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम्
११०१००९१ यन्निमित्तः स वै शापो यादृशो द्विजसत्तम
११०१००९३ कथमेकात्मनां भेद एतत्सर्वं वदस्व मे
११०१०१०० श्रीबादरायणिरुवाच
११०१०१०१ बिभ्रद्वपुः सकलसुन्दरसन्निवेशं
११०१०१०२ कर्माचरन्भुवि सुमङ्गलमाप्तकामः
११०१०१०३ आस्थाय धाम रममाण उदारकीर्त्तिः
११०१०१०४ संहर्तुमैच्छत कुलं स्थितकृत्यशेषः
११०१०१११ कर्मानि पुण्यनिवहानि सुमङ्गलानि
११०१०११२ गायज्जगत्कलिमलापहराणि कृत्वा
११०१०११३ कालात्मना निवसता यदुदेवगेहे
११०१०११४ पिण्डारकं समगमन्मुनयो निसृष्टाः
११०१०१२१ विश्वामित्रोऽसितः कण्वो
११०१०१२२ दुर्वासा भृगुरङ्गिराः
११०१०१२३ कश्यपो वामदेवोऽत्रिर्
११०१०१२४ वसिष्ठो नारदादयः
११०१०१३१ क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः
११०१०१३३ उपसङ्गृह्य पप्रच्छुरविनीता विनीतवत्
११०१०१४१ ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम्
११०१०१४३ एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा
११०१०१५१ प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः
११०१०१५३ प्रसोष्यन्ती पुत्रकामा किं स्वित्सञ्जनयिष्यति

११०१०१६१ एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप
११०१०१६३ जनयिष्यति वो मन्दा मुषलं कुलनाशनम्
११०१०१७१ तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम्
११०१०१७३ साम्बस्य ददृशुस्तस्मिन्मुषलं खल्वयस्मयम्
११०१०१८१ किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः
११०१०१८३ इति विह्वलिता गेहानादाय मुषलं ययुः
११०१०१९१ तच्चोपनीय सदसि परिम्लानमुखश्रियः
११०१०१९३ राज्ञ आवेदयां चक्रुः सर्वयादवसन्निधौ
११०१०२०१ श्रुत्वामोघं विप्रशापं दृष्ट्वा च मुषलं नृप
११०१०२०३ विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः
११०१०२११ तच्चूर्णयित्वा मुषलं यदुराजः स आहुकः
११०१०२१३ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम्
११०१०२२१ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः
११०१०२२३ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः
११०१०२३१ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे
११०१०२३३ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत्
११०१०२४१ भगवान्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा
११०१०२४३ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत
११०२००१० श्रीशुक उवाच
११०२००११ गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह
११०२००१३ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः
११०२००२१ को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम्
११०२००२३ न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः
११०२००३१ तमेकदा तु देवर्षिं वसुदेवो गृहागतम्
११०२००३३ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत्
११०२००४० श्रीवसुदेव उवाच
११०२००४१ भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम्
११०२००४३ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम्
११०२००५१ भूतानां देवचरितं दुःखाय च सुखाय च
११०२००५३ सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम्
११०२००६१ भजन्ति ये यथा देवान्देवा अपि तथैव तान्

११०२००६३ छायेव कर्मसचिवाः साधवो दीनवत्सलाः
११०२००७१ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव
११०२००७३ यान्श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात्
११०२००८१ अहं किल पुरानन्तं प्रजार्थो भुवि मुक्तिदम्
११०२००८३ अपूजयं न मोक्षाय मोहितो देवमायया
११०२००९१ यथा विचित्रव्यसनाद्भवद्भिर्विश्वतोभयात्
११०२००९३ मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत
११०२०१०० श्रीशुक उवाच
११०२०१०१ राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता
११०२०१०३ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः
११०२०११० श्रीनारद उवाच
११०२०१११ सम्यगेतद्व्यवसितं भवता सात्वतर्षभ
११०२०११३ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान्
११०२०१२१ श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः
११०२०१२३ सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि
११०२०१३१ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः
११०२०१३३ स्मारितो भगवानद्य देवो नारायणो मम
११०२०१४१ अत्राप्युदाहरन्तीममितिहासं पुरातनम्
११०२०१४३ आर्षभाणां च संवादं विदेहस्य महात्मनः
११०२०१५१ प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः
११०२०१५३ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः
११०२०१६१ तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया
११०२०१६३ अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम्
११०२०१७१ तेषां वै भरतो ज्येष्ठो नारायणपरायणः
११०२०१७३ विख्यातं वर्षमेतद्यन् नाम्ना भारतमद्भुतम्
११०२०१८१ स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम्
११०२०१८३ उपासीनस्तत्पदवीं लेभे वै जनृनभिस्त्रिभिः
११०२०१९१ तेषां नव नवद्वीप पतयोऽस्य समन्ततः
११०२०१९३ कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः
११०२०२०१ नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः
११०२०२०३ श्रमणा वातरसना आत्मविद्याविशारदाः

११०२०२११ कविर्हविरन्तरीक्षः प्रबुद्धः पिप्पलायनः
११०२०२१३ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः
११०२०२२१ त एते भगवद्रूपं विश्वं सदसदात्मकम्
११०२०२२३ आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम्
११०२०२३१ अव्याहतेष्टगतयः सुरसिद्धसाध्य
११०२०२३२ गन्धर्वयक्षनरकिन्नरनागलोकान्
११०२०२३३ मुक्ताश्चरन्ति मुनिचारणभूतनाथ
११०२०२३४ विद्याधरद्विजगवां भुवनानि कामम्
११०२०२४१ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया
११०२०२४३ वितायमानमृषिभिरजनाभे महात्मनः
११०२०२५१ तान्दृष्ट्वा सूर्यसङ्काशान्महाभागवतान्नृप
११०२०२५३ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे
११०२०२६१ विदेहस्तानभिप्रेत्य नारायणपरायणान्
११०२०२६३ प्रीतः सम्पूजयां चक्रे आसनस्थान्यथार्हतः
११०२०२७१ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव
११०२०२७३ पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः
११०२०२८० श्रीविदेह उवाच
११०२०२८१ मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विसः
११०२०२८३ विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि
११०२०२९१ दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः
११०२०२९३ तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम्
११०२०३०१ अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः
११०२०३०३ संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम्
११०२०३११ धर्मान्भागवतान्ब्रूत यदि नः श्रुतये क्षमम्
११०२०३१३ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः
११०२०३२० श्रीनारद उवाच
११०२०३२१ एवं ते निमिना पृष्टा वसुदेव महत्तमाः
११०२०३२३ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम्
११०२०३३० श्रीकविरुवाच
११०२०३३१ मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम्
११०२०३३३ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः

११०२०३४१ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये
११०२०३४३ अञ्जः पुंसामविदुषां विद्धि भागवतान्हि तान्
११०२०३५१ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित्
११०२०३५३ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह
११०२०३६१ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात्
११०२०३६३ करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत्
११०२०३७१ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः
११०२०३७३ तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा
११०२०३८१ अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा
११०२०३८३ तत्कर्मसङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात्
११०२०३९१ शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके
११०२०३९३ गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः
११०२०४०१ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः
११०२०४०३ हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः
११०२०४११ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन्
११०२०४१३ सरित्समुद्रांश्च हरेः शरीरं यत्किं च भूतं प्रणमेदनन्यः
११०२०४२१ भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः
११०२०४२३ प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्
११०२०४३१ इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः
११०२०४३३ भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात्
११०२०४४० श्रीराजोवाच
११०२०४४१ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम्
११०२०४४३ यथाचरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः
११०२०४५० श्रीहविरुवाच
११०२०४५१ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः
११०२०४५३ भूतानि भगवत्यात्मन्येष भागवतोत्तमः
११०२०४६१ ईस्वरे तदधीनेषु बालिशेषु द्विषत्सु च
११०२०४६३ प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः
११०२०४७१ अर्चायामेव हरये पूजां यः श्रद्धयेहते
११०२०४७३ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः
११०२०४८१ गृहीत्वापीन्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति

११०२०४८३ विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः
११०२०४९१ देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः
११०२०४९३ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः
११०२०५०१ न कामकर्मबीजानां यस्य चेतसि सम्भवः
११०२०५०३ वासुदेवैकनिलयः स वै भागवतोत्तमः
११०२०५११ न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः
११०२०५१३ सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः
११०२०५२१ न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा
११०२०५२३ सर्वभूतसमः शान्तः स वै भागवतोत्तमः
११०२०५३१ त्रिभुवनविभवहेतवेऽप्यकुण्ठ
११०२०५३२ स्मृतिरजितात्मसुरादिभिर्विमृग्यात्
११०२०५३३ न चलति भगवत्पदारविन्दाल्
११०२०५३४ लवनिमिषार्धमपि यः स वैष्णवाग्र्यः
११०२०५४१ भगवत उरुविक्रमाङ्घ्रिशाखा नखमणिचन्द्रिकया निरस्ततापे
११०२०५४३ हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः
११०२०५५१ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः
११०२०५५३ प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः
११०३००१० श्रीराजोवाच
११०३००११ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम्
११०३००१३ मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः
११०३००२१ नानुतृप्ये जुषन्युष्मद् वचो हरिकथामृतम्
११०३००२३ संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम्
११०३००३० श्रीअन्तरीक्ष उवाच
११०३००३१ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज
११०३००३३ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये
११०३००४१ एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः
११०३००४३ एकधा दशधात्मानं विभजञ्जुषते गुणान्
११०३००५१ गुणैर्गुणान्स भुञ्जान आत्मप्रद्योतितैः प्रभुः
११०३००५३ मन्यमान इदं सृष्टमात्मानमिह सज्जते
११०३००६१ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत्
११०३००६३ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरम्

११०३००७१ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान्
११०३००७३ आभूतसम्प्लवात्सर्ग प्रलयावश्नुतेऽवशः
११०३००८१ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम्
११०३००८३ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति
११०३००९१ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि
११०३००९३ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति
११०३०१०१ पातालतलमारभ्य सङ्कर्षणमुखानलः
११०३०१०३ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः
११०३०१११ संवर्तको मेघगणो वर्षति स्म शतं समाः
११०३०११३ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट्
११०३०१२१ ततो विराजमुत्सृज्य् वैराजः पुरुषो नृप
११०३०१२३ अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः
११०३०१३१ वायुना हृतगन्धा भूः सलिलत्वाय कल्पते
११०३०१३३ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते
११०३०१४१ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते
११०३०१४३ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते
११०३०१४५ कालात्मना हृतगुणं नभ आत्मनि लीयते
११०३०१५१ इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप
११०३०१५३ प्रविशन्ति ह्यहङ्कारं स्वगुणैरहमात्मनि
११०३०१६१ एषा माया भगवतः सर्गस्थित्यन्तकारिणी
११०३०१६३ त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि
११०३०१७० श्रीराजोवाच
११०३०१७१ यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः
११०३०१७३ तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम्
११०३०१८० श्रीप्रबुद्ध उवाच
११०३०१८१ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च
११०३०१८३ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम्
११०३०१९१ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना
११०३०१९३ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः
११०३०२०१ एवं लोकं परम्विद्यान्नश्वरं कर्मनिर्मितम्
११०३०२०३ सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम्

११०३०२११ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्
११०३०२१३ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्
११०३०२२१ तत्र भागवतान्धर्मान्शिक्षेद्गुर्वात्मदैवतः
११०३०२२३ अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः
११०३०२३१ सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु
११०३०२३३ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम्
११०३०२४१ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम्
११०३०२४३ ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः
११०३०२५१ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम्
११०३०२५३ विविक्तचीरवसनं सन्तोषं येन केनचित्
११०३०२६१ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि
११०३०२६३ मनोवाक्कर्मदण्डं च सत्यं शमदमावपि
११०३०२७१ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः
११०३०२७३ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम्
११०३०२८१ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्
११०३०२८३ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम्
११०३०२९१ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्
११०३०२९३ परिचर्यां चोभयत्र महत्सु नृषु साधुषु
११०३०३०१ परस्परानुकथनं पावनं भगवद्यशः
११०३०३०३ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः
११०३०३११ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्
११०३०३१३ भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्
११०३०३२१ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्
११०३०३२२ धसन्ति नन्दन्ति वदन्त्यलौकिकाः
११०३०३२३ नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
११०३०३२४ भवन्ति तूष्णीं परमेत्य निर्वृताः
११०३०३३१ इति भागवतान्धर्मान्शिक्षन्भक्त्या तदुत्थया
११०३०३३३ नारायणपरो मायामञ्जस्तरति दुस्तराम्
११०३०३४० श्रीराजोवाच
११०३०३४१ नारायणाभिधानस्य ब्रह्मणः परमात्मनः
११०३०३४३ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः

११०३०३५० श्रीपिप्पलायन उवाच
११०३०३५१ स्थित्युद्भवप्रलयहेतुरहेतुरस्य
११०३०३५२ यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च
११०३०३५३ देहेन्द्रियासुहृदयानि चरन्ति येन
११०३०३५४ सञ्जीवितानि तदवेहि परं नरेन्द्र
११०३०३६१ नैतन्मनो विशति वागुत चक्षुरात्मा
११०३०३६२ प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः
११०३०३६३ शब्दोऽपि बोधकनिषेधतयात्ममूलम्
११०३०३६४ अर्थोक्तमाह यदृते न निषेधसिद्धिः
११०३०३७१ सत्त्वं रजस्तम इति त्रिवृदेकमादौ
११०३०३७२ सूत्रं महानहमिति प्रवदन्ति जीवम्
११०३०३७३ ज्ञानक्रियार्थफलरूपतयोरुशक्ति
११०३०३७४ ब्रह्मैव भाति सदसच्च तयोः परं यत्
११०३०३८१ नात्मा जजान न मरिष्यति नैधतेऽसौ
११०३०३८२ न क्षीयते सवनविद्व्यभिचारिणां हि
११०३०३८३ सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
११०३०३८४ प्राणो यथेन्द्रियबलेन विकल्पितं सत्
११०३०३९१ अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र
११०३०३९३ सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः
११०३०४०१ यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
११०३०४०२ चेतोमलानि विधमेद्गुणकर्मजानि
११०३०४०३ तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं
११०३०४०४ शाक्षाद्यथामलदृशोः सवितृप्रकाशः
११०३०४१० श्रीराजोवाच
११०३०४११ कर्मयोगं वदत नः पुरुषो येन संस्कृतः
११०३०४१३ विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम्
११०३०४२१ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरन्तिके
११०३०४२३ नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम्
११०३०४३० श्रीआविर्होत्र उवाच
११०३०४३१ कर्माकर्म विकर्मेति वेदवादो न लौकिकः
११०३०४३३ वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः

११०३०४४१ परोक्षवादो वेदोऽयं बालानामनुशासनम्
११०३०४४३ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा
११०३०४५१ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः
११०३०४५३ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः
११०३०४६१ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे
११०३०४६३ नैष्कर्म्यं लभते सिद्धिं रोचनार्था फलश्रुतिः
११०३०४७१ य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः
११०३०४७३ विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम्
११०३०४८१ लब्ध्वानुग्रह आचार्यात्तेन सन्दर्शितागमः
११०३०४८३ महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः
११०३०४९१ शुचिः सम्मुखमासीनः प्राणसंयमनादिभिः
११०३०४९३ पिण्डं विशोध्य सन्न्यास कृतरक्षोऽर्चयेद्धरिम्
११०३०५०१ अर्चादौ हृदये चापि यथालब्धोपचारकैः
११०३०५०३ द्रव्यक्षित्यात्मलिण्गानि निष्पाद्य प्रोक्ष्य चासनम्
११०३०५११ पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः
११०३०५१३ हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत्
११०३०५२१ साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः
११०३०५२३ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः
११०३०५३१ गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः
११०३०५३३ साङ्गम्सम्पूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम्
११०३०५४१ आत्मानम्तन्मयम्ध्यायन्मूर्तिं सम्पूजयेद्धरेः
११०३०५४३ शेषामाधाय शिरसा स्वधाम्न्युद्वास्य सत्कृतम्
११०३०५५१ एवमग्न्यर्कतोयादावतिथौ हृदये च यः
११०३०५५३ यजतीश्वरमात्मानमचिरान्मुच्यते हि सः
११०४००१० श्रीराजोवाच
११०४००११ यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः
११०४००१३ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः
११०४००२० श्रीद्रुमिल उवाच
११०४००२१ यो वा अनन्तस्य गुनानन्ताननुक्रमिष्यन्स तु बालबुद्धिः
११०४००२३ रजांसि भूमेर्गणयेत्कथञ्चित्कालेन नैवाखिलशक्तिधाम्नः
११०४००३१ भूतैर्यदा पञ्चभिरात्मसृष्टैः

११०४००३२ पुरं विराजं विरचय्य तस्मिन्
११०४००३३ स्वांशेन विष्टः पुरुषाभिधानम्
११०४००३४ अवाप नारायण आदिदेवः
११०४००४१ यत्काय एष भुवनत्रयसन्निवेशो
११०४००४२ यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि
११०४००४३ ज्ञानं स्वतः श्वसनतो बलमोज ईहा
११०४००४४ सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता
११०४००५१ आदावभूच्छतधृती रजसास्य सर्गे
११०४००५२ विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः
११०४००५३ रुद्रोऽप्ययाय तमसा पुरुषः स आद्य
११०४००५४ इत्युद्भवस्थितिलयाः सततं प्रजासु
११०४००६१ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां
११०४००६२ नारायणो नर ऋषिप्रवरः प्रशान्तः
११०४००६३ नैष्कर्म्यलक्षणमुवाच चचार कर्म
११०४००६४ योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः
११०४००७१ इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति
११०४००७२ कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम्
११०४००७३ गत्वाप्सरोगणवसन्तसुमन्दवातैः
११०४००७४ स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः
११०४००८१ विज्ञाय शक्रकृतमक्रममादिदेवः
११०४००८२ प्राह प्रहस्य गतविस्मय एजमानान्
११०४००८३ मा भैर्विभो मदन मारुत देववध्वो
११०४००८४ गृह्णीत नो बलिमशून्यमिमं कुरुध्वम्
११०४००९१ इत्थं ब्रुवत्यभयदे नरदेव देवाः
११०४००९२ सव्रीडनम्रशिरसः सघृणं तमूचुः
११०४००९३ नैतद्विभो त्वयि परेऽविकृते विचित्रं
११०४००९४ स्वारामधीरनिकरानतपादपद्मे
११०४०१०१ त्वां सेवतां सुरकृता बहवोऽन्तरायाः
११०४०१०२ स्वौको विलङ्घ्य परमं व्रजतां पदं ते
११०४०१०३ नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्
११०४०१०४ धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि

११०४०१११ क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैष्णान्
११०४०११२ अस्मानपारजलधीनतितीर्य केचित्
११०४०११३ क्रोधस्य यान्ति विफलस्य वशं पदे गोर्
११०४०११४ मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति
११०४०१२१ इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः
११०४०१२३ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः
११०४०१३१ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः
११०४०१३३ गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः
११०४०१४१ तानाह देवदेवेशः प्रणतान्प्रहसन्निव
११०४०१४३ आसामेकतमां वृङ्क्ष्वं सवर्णां स्वर्गभूषणाम्
११०४०१५१ ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः
११०४०१५३ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः
११०४०१६१ इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम्
११०४०१६३ ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः
११०४०१७१ हंसस्वरूप्यवददच्युत आत्मयोगं
११०४०१७२ दत्तः कुमार ऋषभो भगवान्पिता नः
११०४०१७३ विष्णुः शिवाय जगतां कलयावतिर्णस्
११०४०१७४ तेनाहृता मधुभिदा श्रुतयो हयास्ये
११०४०१८१ गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये
११०४०१८२ क्रौडे हतो दितिज उद्धरताम्भसः क्ष्माम्
११०४०१८३ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे
११०४०१८४ ग्राहात्प्रपन्नमिभराजममुञ्चदार्तम्
११०४०१९१ संस्तुन्वतो निपतितान्श्रमणानृषींश्च
११०४०१९२ शक्रं च वृत्रवधतस्तमसि प्रविष्टम्
११०४०१९३ देवस्त्रियोऽसुरगृहे पिहिता अनाथा
११०४०१९४ जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे
११०४०२०१ देवासुरे युधि च दैत्यपतीन्सुरार्थे
११०४०२०२ हत्वान्तरेषु भुवनान्यदधात्कलाभिः
११०४०२०३ भूत्वाथ वामन इमामहरद्बलेः क्ष्मां
११०४०२०४ याञ्चाच्छलेन समदाददितेः सुतेभ्यः
११०४०२११ निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो

११०४०२१२ रामस्तु हैहयकुलाप्ययभार्गवाग्निः
११०४०२१३ सोऽब्धिं बबन्ध दशवक्त्रमहन्सलङ्कं
११०४०२१४ सीतापतिर्जयति लोकमलघ्नकीर्तिः
११०४०२२१ भूमेर्भरावतरणाय यदुष्वजन्मा
११०४०२२२ जातः करिष्यति सुरैरपि दुष्कराणि
११०४०२२३ वादैर्विमोहयति यज्ञकृतोऽतदर्हान्
११०४०२२४ शूद्रान्कलौ क्षितिभुजो न्यहनिष्यदन्ते
११०४०२३१ एवंविधानि जन्मानि कर्माणि च जगत्पतेः
११०४०२३३ भूरीणि भूरियशसो वर्णितानि महाभुज
११०५००१० श्रीराजोवाच
११०५००११ भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः
११०५००१३ तेषामशान्तकामानां क निष्ठाविजितात्मनाम्
११०५००२० श्रीचमस उवाच
११०५००२१ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह
११०५००२३ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्
११०५००३१ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्
११०५००३३ न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः
११०५००४१ दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः
११०५००४३ स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम्
११०५००५१ विप्रो राजन्यवैश्यौ वा हरेः प्राप्ताः पदान्तिकम्
११०५००५३ श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः
११०५००६१ कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः
११०५००६३ वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः
११०५००७१ रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः
११०५००७३ दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान्
११०५००८१ वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः
११०५००८३ यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः
११०५००९१ श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा
११०५००९३ जातस्मयेनान्धधियः सहेश्वरान्सतोऽवमन्यन्ति हरिप्रियान्खलाः
११०५०१०१ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं
११०५०१०२ यथा खमात्मानमभीष्टमीश्वरम्

११०५०१०३ वेदोपगीतं च न शृण्वतेऽबुधा
११०५०१०४ मनोरथानां प्रवदन्ति वार्तया
११०५०१११ लोके व्यवायामिषमद्यसेवा नित्या हि जन्तोर्न हि तत्र चोदना
११०५०११३ व्यवस्थितिस्तेषु विवाहयज्ञ सुराग्रहैरासु निवृत्तिरिष्टा
११०५०१२१ धनं च धर्मैकफलं यतो वै
११०५०१२२ ज्ञानं सविज्ञानमनुप्रशान्ति
११०५०१२३ गृहेषु युञ्जन्ति कलेवरस्य
११०५०१२४ मृत्युं न पश्यन्ति दुरन्तवीर्यम्
११०५०१३१ यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा
११०५०१३३ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम्
११०५०१४१ ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः
११०५०१४३ पशून्द्रुह्यन्ति विश्रब्धाः प्रेत्य खादन्ति ते च तान्
११०५०१५१ द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम्
११०५०१५३ मृतके सानुबन्धेऽस्मिन्बद्धस्नेहाः पतन्त्यधः
११०५०१६१ ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम्
११०५०१६३ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते
११०५०१७१ एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः
११०५०१७३ सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः
११०५०१८१ हित्वात्ममायारचिता गृहापत्यसुहृत्स्त्रियः
११०५०१८३ तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः
११०५०१९० श्री राजोवाच
११०५०१९१ कस्मिन्काले स भगवान्किं वर्णः कीदृशो नृभिः
११०५०१९३ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम्
११०५०२०० श्रीकरभाजन उवाच
११०५०२०१ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः
११०५०२०३ नानावर्णाभिधाकारो नानैव विधिनेज्यते
११०५०२११ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः
११०५०२१३ कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्डकमण्डलू
११०५०२२१ मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः
११०५०२२३ यजन्ति तपसा देवं शमेन च दमेन च
११०५०२३१ हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः

११०५०२३३ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते
११०५०२४१ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः
११०५०२४३ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः
११०५०२५१ तं तदा मनुजा देवं सर्वदेवमयं हरिम्
११०५०२५३ यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः
११०५०२६१ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः
११०५०२६३ वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते
११०५०२७१ द्वापरे भगवाञ्श्यामः पीतवासा निजायुधः
११०५०२७३ श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः
११०५०२८१ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम्
११०५०२८३ यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप
११०५०२९१ नमस्ते वासुदेवाय नमः सङ्कर्षणाय च
११०५०२९३ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः
११०५०३०१ नारायणाय ऋषये पुरुषाय महात्मने
११०५०३०३ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः
११०५०३११ इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम्
११०५०३१३ नानातन्त्रविधानेन कलावपि तथा श‍ृणु
११०५०३२१ कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्
११०५०३२३ यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः
११०५०३३१ ध्येयं सदा परिभवघ्नमभीष्टदोहं
११०५०३३२ तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्
११०५०३३३ भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं
११०५०३३४ वन्दे महापुरुष ते चरणारविन्दम्
११०५०३४१ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
११०५०३४२ धर्मिष्ठ आर्यवचसा यदगादरण्यम्
११०५०३४३ मायामृगं दयितयेप्सितमन्वधावद्
११०५०३४४ वन्दे महापुरुष ते चरणारविन्दम्
११०५०३५१ एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः
११०५०३५३ मनुजैरिज्यते राजन्श्रेयसामीश्वरो हरिः
११०५०३६१ कलिं सभाजयन्त्यार्या गुण ज्ञाः सारभागिनः
११०५०३६३ यत्र सङ्कीर्तनेनैव सर्वस्वार्थोऽभिलभ्यते

११०५०३७१ न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह
११०५०३७३ यतो विन्देत परमां शान्तिं नश्यति संसृतिः
११०५०३८१ कृतादिषु प्रजा राजन्कलाविच्छन्ति सम्भवम्
११०५०३८३ कलौ खलु भविष्यन्ति नारायणपरायणाः
११०५०३९१ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः
११०५०३९३ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी
११०५०४०१ कावेरी च महापुण्या प्रतीची च महानदी
११०५०४०३ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर
११०५०४०५ प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः
११०५०४११ देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्
११०५०४१३ सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्
११०५०४२१ स्वपादमूलम्भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः
११०५०४२३ विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः
११०५०४३० श्रीनारद उवाच
११०५०४३१ धर्मान्भागवतानित्थं श्रुत्वाथ मिथिलेश्वरः
११०५०४३३ जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत्
११०५०४४१ ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः
११०५०४४३ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम्
११०५०४५१ त्वमप्येतान्महाभाग धर्मान्भागवतान्श्रुतान्
११०५०४५३ आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम्
११०५०४६१ युवयोः खलु दम्पत्योर्यशसा पूरितं जगत्
११०५०४६३ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः
११०५०४७१ दर्शनालिङ्गनालापैः शयनासनभोजनैः
११०५०४७३ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः
११०५०४८१ वैरेण यं नृपतयः शिशुपालपौण्ड्र
११०५०४८२ शाल्वादयो गतिविलासविलोकनाद्यैः
११०५०४८३ ध्यायन्त आकृतधियः शयनासनादौ
११०५०४८४ तत्साम्यमापुरनुरक्तधियां पुनः किम्
११०५०४९१ मापत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे
११०५०४९३ मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये
११०५०५०१ भूभारासुरराजन्य हन्तवे गुप्तये सताम्

११०५०५०३ अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते

११०५०५१० श्रीशुक उवाच

११०५०५११ एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः

११०५०५१३ देवकी च महाभागा जहतुर्मोहमात्मनः

११०५०५२१ इतिहासमिमं पुण्यं धारयेद्यः समाहितः

११०५०५२३ स विधूयेह शमलं ब्रह्मभूयाय कल्पते

११०६००१० श्रीशुक उवाच

११०६००११ अथ ब्रह्मात्मजैः देवैः प्रजेशैरावृतोऽभ्यगात्

११०६००१३ भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः

११०६००२१ इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ

११०६००२३ ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः

११०६००३१ गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः

११०६००३३ ऋषयः पितरश्चैव सविद्याधरकिन्नराः

११०६००४१ द्वारकामुपसञ्जग्मुः सर्वे कृष्णदिदृक्षवः

११०६००४३ वपुषा येन भगवान्नरलोकमनोरमः

११०६००४५ यशो वितेने लोकेषु सर्वलोकमलापहम्

११०६००५१ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः

११०६००५३ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम्

११०६००६१ स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो युदूत्तमम्

११०६००६३ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम्

११०६००७० श्रीदेवा ऊचुः

११०६००७१ नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः

११०६००७३ यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात्

११०६००८१ त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं

११०६००८२ व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः

११०६००८३ नैतैर्भवानजित कर्मभिरज्यते वै

११०६००८४ यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः

११०६००९१ शुद्धिर्नृणां न तु तथेड्य दुराशयानां

११०६००९२ विद्याश्रुताध्ययनदानतपःक्रियाभिः

११०६००९३ सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध

११०६००९४ सच्छ्रद्धया श्रवणसम्भृतया यथा स्यात्

११०६०१०१ स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः
११०६०१०२ क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः
११०६०१०३ यः सात्वतैः समविभूतय आत्मवद्भिर्
११०६०१०४ व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय
११०६०१११ यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ
११०६०११२ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा
११०६०११३ अध्यात्मयोग उत योगिभिरात्ममायां
११०६०११४ जिज्ञासुभिः परमभागवतैः परीष्टः
११०६०१२१ पर्युष्टया तव विभो वनमालयेयं
११०६०१२२ संस्पार्धिनी भगवती प्रतिपत्नीवच्छ्रीः
११०६०१२३ यः सुप्रणीतममुयार्हणमाददन्नो
११०६०१२४ भूयात्सदाङ्घ्रिरशुभाशयधूमकेतुः
११०६०१३१ केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको
११०६०१३२ यस्ते भयाभयकरोऽसुरदेवचम्वोः
११०६०१३३ स्वर्गाय साधुषु खलेष्वितराय भूमन्
११०६०१३४ पदः पुनातु भगवन्भजतामघं नः
११०६०१४१ नस्योतगाव इव यस्य वशे भवन्ति
११०६०१४२ ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः
११०६०१४३ कालस्य ते प्रकृतिपूरुषयोः परस्य
११०६०१४४ शं नस्तनोतु चरणः पुरुषोत्तमस्य
११०६०१५१ अस्यासि हेतुरुदयस्थितिसंयमानाम्
११०६०१५२ अव्यक्तजीवमहतामपि कालमाहुः
११०६०१५३ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः
११०६०१५४ कालो गभीररय उत्तमपूरुषस्त्वम्
११०६०१६१ त्वत्तः पुमान्समधिगम्य ययास्य वीर्यं
११०६०१६२ धत्ते महान्तमिव गर्भममोघवीर्यः
११०६०१६३ सोऽयं तयानुगत आत्मन आण्डकोशं
११०६०१६४ हैमं ससर्ज बहिरावरणैरुपेतम्
११०६०१७१ तत्तस्थूषश्च जगतश्च भवानधीशो
११०६०१७२ यन्माययोत्थगुणविक्रिययोपनीतान्
११०६०१७३ अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो

११०६०१७४ येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म
११०६०१८१ स्मायावलोकलवदर्शितभावहारि
११०६०१८२ भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः
११०६०१८३ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्
११०६०१८४ यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः
११०६०१९१ विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः
११०६०१९२ पादावनेजसरितः शमलानि हन्तुम्
११०६०१९३ आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्
११०६०१९४ तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति
११०६०२०० श्रीबादरायणिरुवाच
११०६०२०१ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम्
११०६०२०३ अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः
११०६०२१० श्रीब्रह्मोवाच
११०६०२११ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो
११०६०२१३ त्वमस्माभिरशेषात्मन्तत्तथैवोपपादितम्
११०६०२२१ धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया
११०६०२२३ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा
११०६०२३१ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम्
११०६०२३३ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः
११०६०२४१ यानि ते चरितानीश मनुष्याः साधवः कलौ
११०६०२४३ शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः
११०६०२५१ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम
११०६०२५३ शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो
११०६०२६१ नाधुना तेऽखिलाधार देवकार्यावशेषितम्
११०६०२६३ कुलं च विप्रशापेन नष्टप्रायमभूदिदम्
११०६०२७१ ततः स्वधाम परमं विशस्व यदि मन्यसे
११०६०२७३ सलोकाल्लोकपालान्नः पाहि वैकुण्ठकिङ्करान्
११०६०२८० श्रीभगवानुवाच
११०६०२८१ अवधारितमेतन्मे यदात्थ विबुधेश्वर
११०६०२८३ कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः
११०६०२९१ तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम्

११०६०२९३ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः
११०६०३०१ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम्
११०६०३०३ गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति
११०६०३११ इदानीं नाश आरब्धः कुलस्य द्विजशापजः
११०६०३१३ यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ
११०६०३२० श्रीशुक उवाच
११०६०३२१ इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम्
११०६०३२३ सह देवगणैर्देवः स्वधाम समपद्यत
११०६०३३१ अथ तस्यां महोत्पातान्द्वारवत्यां समुत्थितान्
११०६०३३३ विलोक्य भगवानाह यदुवृद्धान्समागतान्
११०६०३४० श्रीभगवानुवाच
११०६०३४१ एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः
११०६०३४३ शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः
११०६०३५१ न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः
११०६०३५३ प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम्
११०६०३६१ यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोदुराट्
११०६०३६३ विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम्
११०६०३७१ वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितृन्सुरान्
११०६०३७३ भोजयित्वोषिजो विप्रान्नानागुणवतान्धसा
११०६०३८१ तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै
११०६०३८३ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम्
११०६०३९० श्रीशुक उवाच
११०६०३९१ एवं भगवतादिष्टा यादवाः कुरुनन्दन
११०६०३९३ गन्तुं कृतधियस्तीर्थं स्यन्दनान्समयूयुजन्
११०६०४०१ तन्निरीक्ष्योद्धवो राजन्श्रुत्वा भगवतोदितम्
११०६०४०३ दृष्ट्वारिष्टानि घोराणि नित्यं कृष्णमनुव्रतः
११०६०४११ विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम्
११०६०४१३ प्रणम्य शिरिसा पादौ प्राञ्जलिस्तमभाषत
११०६०४२० श्रीउद्धव उवाच
११०६०४२१ देवदेवेश योगेश पुण्यश्रवणकीर्तन
११०६०४२३ संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवान्

११०६०४२५ विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः
११०६०४३१ नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव
११०६०४३३ त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि
११०६०४४१ तव विक्रीडितं कृष्ण नृनां परममङ्गलम्
११०६०४४३ कर्णपीयूषमासाद्य त्यजन्त्यन्यस्पृहां जनाः
११०६०४५१ शय्यासनाटनस्थान स्नानक्रीडाशनादिषु
११०६०४५३ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेम हि
११०६०४६१ त्वयोपभुक्तस्रग्गन्ध वासोऽलङ्कारचर्चिताः
११०६०४६३ उच्छिष्टभोजिनो दासास्तव मायां जयेम हि
११०६०४७१ वातवसना य ऋषयः श्रमणा ऊर्ध्रमन्थिनः
११०६०४७३ ब्रह्माख्यं धाम ते यान्ति शान्ताः सन्न्यासीनोऽमलाः
११०६०४८१ वयं त्विह महायोगिन्भ्रमन्तः कर्मवर्त्मसु
११०६०४८३ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः
११०६०४९१ स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च
११०६०४९३ गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम्
११०६०५०० श्रीशुक उवाच
११०६०५०१ एवं विज्ञापितो राजन्भगवान्देवकीसुतः
११०६०५०३ एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत
११०७००१० श्रीभगवानुवाच
११०७००११ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे
११०७००१३ ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः
११०७००२१ मया निष्पादितं ह्यत्र देवकार्यमशेषतः
११०७००२३ यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः
११०७००३१ कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात्
११०७००३३ समुद्रः सप्तमे ह्येनां पुरीं च प्लावयिष्यति
११०७००४१ यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः
११०७००४३ भविष्यत्यचिरात्साधो कलिनापि निराकृतः
११०७००५१ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले
११०७००५३ जनोऽभद्ररुचिर्भद्र भविष्यति कलौ युगे
११०७००६१ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु
११०७००६३ मय्यावेश्य मनः संयक्समदृग्विचरस्व गाम्

११०७००७१ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः
११०७००७३ नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्
११०७००८१ पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक्
११०७००८३ कर्माकर्मविकर्मेति गुणदोषधियो भिदा
११०७००९१ तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदम्जगत्
११०७००९३ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे
११०७०१०१ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम्
११०७०१०३ अत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे
११०७०१११ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते
११०७०११३ गुणबुद्ध्या च विहितं न करोति यथार्भकः
११०७०१२१ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः
११०७०१२३ पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः
११०७०१३० श्रीशुक उवाच
११०७०१३१ इत्यादिष्टो भगवता महाभागवतो नृप
११०७०१३३ उद्धवः प्रणिपत्याह तत्त्वं जिज्ञासुरच्युतम्
११०७०१४० श्रीउद्धव उवाच
११०७०१४१ योगेश योगविन्यास योगात्मन्योगसम्भव
११०७०१४३ निःश्रेयसाय मे प्रोक्तस्त्यागः सन्न्यासलक्षणः
११०७०१५१ त्यागोऽयं दुष्करो भूमन्कामानां विषयात्मभिः
११०७०१५३ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः
११०७०१६१ सोऽहं ममाहमिति मूढमतिर्विगाढस्
११०७०१६२ त्वन्मायया विरचितात्मनि सानुबन्धे
११०७०१६३ तत्त्वञ्जसा निगदितं भवता यथाहं
११०७०१६४ संसाधयामि भगवन्ननुशाधि भृत्यम्
११०७०१७१ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं
११०७०१७२ वक्तारमीश विबुधेष्वपि नानुचक्षे
११०७०१७३ सर्वे विमोहितधियस्तव माययेमे
११०७०१७४ ब्रह्मादयस्तनुभृतो बहिरर्थभावाः
११०७०१८१ तस्माद्भवन्तमनवद्यमनन्तपारं
११०७०१८२ सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम्
११०७०१८३ निर्विण्णधीरहमु हे वृजिनाभितप्तो

११०७०१८४ नारायणं नरसखं शरणं प्रपद्ये
११०७०१९० श्रीभगवानुवाच
११०७०१९१ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः
११०७०१९३ समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात्
११०७०२०१ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः
११०७०२०३ यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते
११०७०२११ पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः
११०७०२१३ आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम्
११०७०२२१ एकद्वित्रिचतुस्पादो बहुपादस्तथापदः
११०७०२२३ बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया
११०७०२३१ अत्र मां मृगयन्त्यद्धा युक्ता हेतुभिरीश्वरम्
११०७०२३३ गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः
११०७०२४१ अत्राप्युदाहरन्तीममितिहासं पुरातनम्
११०७०२४३ अवधूतस्य संवादं यदोरमिततेजसः
११०७०२५१ अवधूतं द्वियं कञ्चिच्चरन्तमकुतोभयम्
११०७०२५३ कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित्
११०७०२६० श्रीयदुरुवाच
११०७०२६१ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा
११०७०२६३ यामासाद्य भवाल्लोकं विद्वांश्चरति बालवत्
११०७०२७१ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः
११०७०२७३ हेतुनैव समीहन्त आयुषो यशसः श्रियः
११०७०२८१ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः
११०७०२८३ न कर्ता नेहसे किञ्चिज्जडोन्मत्तपिशाचवत्
११०७०२९१ जनेषु दह्यमानेषु कामलोभदवाग्निना
११०७०२९३ न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः
११०७०३०१ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम्
११०७०३०३ ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः
११०७०३१० श्रीभगवानुवाच
११०७०३११ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा
११०७०३१३ पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः
११०७०३२० श्रीब्राह्मण उवाच

११०७०३२१ सन्ति मे गुरवो राजन्बहवो बुद्ध्युपश्रिताः
११०७०३२३ यतो बुद्धिमुपादाय मुक्तोऽटामीह तान्शृणु
११०७०३३१ पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः
११०७०३३३ कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः
११०७०३४१ मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः
११०७०३४३ कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत्
११०७०३५१ एते मे गुरवो राजन्चतुर्विंशतिराश्रिताः
११०७०३५३ शिक्षा वृत्तिभिरेतेषामन्वशिक्षमिहात्मनः
११०७०३६१ यतो यदनुशिक्षामि यथा वा नाहुषात्मज
११०७०३६३ तत्तथा पुरुषव्याघ्र निबोध कथयामि ते
११०७०३७१ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः
११०७०३७३ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम्
११०७०३८१ शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवः
११०७०३८३ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम्
११०७०३९१ प्राणवृत्त्यैव सन्तुष्येन्मुनिर्नैवेन्द्रियप्रियैः
११०७०३९३ ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः
११०७०४०१ विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः
११०७०४०३ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत्
११०७०४११ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः
११०७०४१३ गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक्
११०७०४२१ अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन
११०७०४२३ व्याप्त्याव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत्
११०७०४३१ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः
११०७०४३३ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान्
११०७०४४१ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम्
११०७०४४३ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः
११०७०४५१ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः
११०७०४५३ सर्वभक्ष्योऽपि युक्तात्मा नादत्ते मलमग्निवत्
११०७०४६१ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम्
११०७०४६३ भुङ्क्ते सर्वत्र दातृणां दहन्प्रागुत्तराशुभम्
११०७०४७१ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः

११०७०४७३ प्रविष्ट ईयते तत्तत् स्वरूपोऽग्निरिवैधसि
११०७०४८१ विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः
११०७०४८३ कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना
११०७०४९१ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ
११०७०४९३ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम्
११०७०५०१ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति
११०७०५०३ न तेषु युज्यते योगी गोभिर्गा इव गोपतिः
११०७०५११ बुध्यते स्वे न भेदेन व्यक्तिस्थ इव तद्गतः
११०७०५१३ लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत्
११०७०५२१ नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित्
११०७०५२३ कुर्वन्विन्देत सन्तापं कपोत इव दीनधीः
११०७०५३१ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ
११०७०५३३ कपोत्या भार्यया सार्धमुवास कतिचित्समाः
११०७०५४१ कपोतौ स्नेहगुणित हृदयौ गृहधर्मिणौ
११०७०५४३ दृष्टिं दृष्ट्याङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः
११०७०५५१ शय्यासनाटनस्थान वार्ताक्रीडाशनादिकम्
११०७०५५३ मिथुनीभूय विश्रब्धौ चेरतुर्वनराजिषु
११०७०५६१ यं यं वाञ्छति सा राजन्तर्पयन्त्यनुकम्पिता
११०७०५६३ तं तं समनयत्कामं कृच्छ्रेणाप्यजितेन्द्रियः
११०७०५७१ कपोती प्रथमं गर्भं गृह्णन्ती काल आगते
११०७०५७३ अण्डानि सुषुवे नीडे स्तपत्युः सन्निधौ सती
११०७०५८१ तेषु काले व्यजायन्त रचितावयवा हरेः
११०७०५८३ शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः
११०७०५९१ प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ
११०७०५९३ शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः
११०७०६०१ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः
११०७०६०३ प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः
११०७०६११ स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया
११०७०६१३ विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः
११०७०६२१ एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ
११०७०६२३ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम्

११०७०६३१ दृष्ट्वा तान्लुब्धकः कश्चिद्यदृच्छातो वनेचरः
११०७०६३३ जगृहे जालमातत्य चरतः स्वालयान्तिके
११०७०६४१ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ
११०७०६४३ गतौ पोषणमादाय स्वनीडमुपजग्मतुः
११०७०६५१ कपोती स्वात्मजान्वीक्ष्य बालकाञ्जालसम्वृतान्
११०७०६५३ तानभ्यधावत्क्रोशन्ती क्रोशतो भृशदुःखिता
११०७०६६१ सासकृत्स्नेहगुणिता दीनचित्ताजमायया
११०७०६६३ स्वयं चाबध्यत शिचा बद्धान्पश्यन्त्यपस्मृतिः
११०७०६७१ कपोतः स्वात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान्
११०७०६७३ भार्यां चात्मसमां दीनो विललापातिदुःखितः
११०७०६८१ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः
११०७०६८३ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः
११०७०६९१ अनुरूपानुकूला च यस्य मे पतिदेवता
११०७०६९३ शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः
११०७०७०१ सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः
११०७०७०३ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः
११०७०७११ तांस्तथैवावृतान्शिग्भिर्मृत्युग्रस्तान्विचेष्टतः
११०७०७१३ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत्
११०७०७२१ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम्
११०७०७२३ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम्
११०७०७३१ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत्
११०७०७३३ पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति
११०७०७४१ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्
११०७०७४३ गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः
११०८००१० श्रीब्राह्मण उवाच
११०८००११ सुखमैन्द्रियकं राजन्स्वर्गे नरक एव च
११०८००१३ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः
११०८००२१ ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा
११०८००२३ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः
११०८००३१ शयीताहानि भूरीणि निराहारोऽनुपक्रमः
११०८००३३ यदि नोपनयेद्ग्रासो महाहिरिव दिष्टभुक्

११०८००४१ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम्
११०८००४३ शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि
११०८००५१ मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः
११०८००५३ अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः
११०८००६१ समृद्धकामो हीनो वा नारायणपरो मुनिः
११०८००६३ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः
११०८००७१ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः
११०८००७३ प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत्
११०८००८१ योषिद्धिरण्याभरणाम्बरादि द्रव्येषु मायारचितेषु मूढः
११०८००८३ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः
११०८००९१ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता
११०८००९३ गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः
११०८०१०१ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः
११०८०१०३ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः
११०८०१११ सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षितम्
११०८०११३ पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही
११०८०१२१ सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षुकः
११०८०१२३ मक्षिका इव सङ्गृह्णन्सह तेन विनश्यति
११०८०१३१ पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि
११०८०१३३ स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः
११०८०१४१ नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः
११०८०१४३ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा
११०८०१५१ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसञ्चितम्
११०८०१५३ भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु
११०८०१६१ सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः
११०८०१६३ मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम्
११०८०१७१ ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित्
११०८०१७३ शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात्
११०८०१८१ नृत्यवादित्रगीतानि जुषन्ग्राम्याणि योषिताम्
११०८०१८३ आसां क्रीडनको वश्य ऋष्यश्रृङ्गो मृगीसुतः
११०८०१९१ जिह्वयातिप्रमाथिन्या जनो रसविमोहितः

११०८०१९३ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा
११०८०२०१ इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः
११०८०२०३ वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते
११०८०२११ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्
११०८०२१३ न जयेद्रसनं यावज्जितं सर्वं जिते रसे
११०८०२२१ पिङ्गला नाम वेश्यासीद्विदेहनगरे पुरा
११०८०२२३ तस्या मे शिक्षितं किञ्चिन्निबोध नृपनन्दन
११०८०२३१ सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती
११०८०२३३ अभूत्काले बहिर्द्वारे बिभ्रती रूपमुत्तमम्
११०८०२४१ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ
११०८०२४३ तान्शुल्कदान्वित्तवतः कान्तान्मेनेऽर्थकामुकी
११०८०२५१ आगतेष्वपयातेषु सा सङ्केतोपजीविनी
११०८०२५३ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः
११०८०२६१ एवं दुराशया ध्वस्त निद्रा द्वार्यवलम्बती
११०८०२६३ निर्गच्छन्ती प्रविशती निशीथं समपद्यत
११०८०२७१ तस्या वित्ताशया शुष्यद् वक्त्राया दीनचेतसः
११०८०२७३ निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः
११०८०२८१ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम
११०८०२८३ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः
११०८०२९१ न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति
११०८०२९३ यथा विज्ञानरहितो मनुजो ममतां नृप
११०८०३०० पिङ्गलोवाच
११०८०३०१ अहो मे मोहविततिं पश्यताविजितात्मनः
११०८०३०३ या कान्तादसतः कामं कामये येन बालिशा
११०८०३११ सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय
११०८०३१३ अकामदं दुःखभयाधिशोक मोहप्रदं तुच्छमहं भजेऽज्ञा
११०८०३२१ अहो मयात्मा परितापितो वृथा साङ्केत्यवृत्त्यातिविगर्ह्यवार्तया
११०८०३२३ स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती
११०८०३३१ यदस्थिभिर्निर्मितवंशवंस्य
११०८०३३२ स्थूणं त्वचा रोमनखैः पिनद्धम्
११०८०३३३ क्षरन्नवद्वारमगारमेतद्

११०८०३३४ विण्मूत्रपूर्णं मदुपैति कान्या
११०८०३४१ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः
११०८०३४३ यान्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात्
११०८०३५१ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम्
११०८०३५३ तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा
११०८०३६१ कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः
११०८०३६३ आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः
११०८०३७१ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा
११०८०३७३ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः
११०८०३८१ मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः
११०८०३८३ येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति
११०८०३९१ तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः
११०८०३९३ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम्
११०८०४०१ सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती
११०८०४०३ विहराम्यमुनैवाहमात्मना रमणेन वै
११०८०४११ संसारकूपे पतितं विषयैर्मुषितेक्षणम्
११०८०४१३ ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः
११०८०४२१ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात्
११०८०४२३ अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत्
११०८०४३० श्रीब्राह्मण उवाच
११०८०४३१ एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम्
११०८०४३३ छित्त्वोपशममास्थाय शय्यामुपविवेश सा
११०८०४४१ आशा हि परमं दुःखं नैराश्यं परमं सुखम्
११०८०४४३ यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला
११०९००१० श्रीब्राह्मण उवाच
११०९००११ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम्
११०९००१३ अनन्तं सुखमाप्नोति तद्विद्वान्यस्त्वकिञ्चनः
११०९००२१ सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः
११०९००२३ तदामिषं परित्यज्य स सुखं समविन्दत
११०९००३१ न मे मानापमानौ स्तो न चिन्ता गेहपुत्रिणाम्
११०९००३३ आत्मक्रीड आत्मरतिर्विचरामीह बालवत्

११०९००४१ द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ
११०९००४३ यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः
११०९००५१ क्वचित्कुमारी त्वात्मानं वृणानान्गृहमागतान्
११०९००५३ स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु
११०९००६१ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव
११०९००६३ अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत्
११०९००७१ सा तज्जुगुप्सितं मत्वा महती वृईडिता ततः
११०९००७३ बभञ्जैकैकशः शङ्खान्द्वौ द्वौ पाण्योरशेषयत्
११०९००८१ उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्वशङ्खयोः
११०९००८३ तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः
११०९००९१ अन्वशिक्षमिमं तस्या उपदेशमरिन्दम
११०९००९३ लोकाननुचरन्नेतान्लोकतत्त्वविवित्सया
११०९०१०१ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि
११०९०१०३ एक एव वसेत्तस्मात्कुमार्या इव कङ्कणः
११०९०१११ मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः
११०९०११३ वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः
११०९०१२१ यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून्
११०९०१२३ सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम्
११०९०१३१ तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा
११०९०१३३ यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे
११०९०१४१ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः
११०९०१४३ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः
११०९०१५१ गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः
११०९०१५३ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते
११०९०१६१ एको नारायणो देवः पूर्वसृष्टं स्वमायया
११०९०१६३ संहृत्य कालकलया कल्पान्त इदमीश्वरः
११०९०१६५ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः
११०९०१७१ कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु
११०९०१७३ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः
११०९०१८१ परावराणां परम आस्ते कैवल्यसंज्ञितः
११०९०१८३ केवलानुभवानन्द सन्दोहो निरुपाधिकः

११०९०१९१ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम्
११०९०१९३ सङ्क्षोभयन्सृजत्यादौ तया सूत्रमरिन्दम
११०९०२०१ तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम्
११०९०२०३ यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान्
११०९०२११ यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः
११०९०२१३ तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः
११०९०२२१ यत्र यत्र मनो देही धारयेत्सकलं धिया
११०९०२२३ स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्स्वरूपताम्
११०९०२३१ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः
११०९०२३३ याति तत्सात्मतां राजन्पूर्वरूपमसन्त्यजन्
११०९०२४१ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः
११०९०२४३ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो
११०९०२५१ देहो गुरुर्मम विरक्तिविवेकहेतुर्
११०९०२५२ बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम्
११०९०२५३ तत्त्वान्यनेन विमृशामि यथा तथापि
११०९०२५४ पारक्यमित्यवसितो विचराम्यसङ्गः
११०९०२६१ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्
११०९०२६२ पुष्नाति यत्प्रियचिकीर्षया वितन्वन्
११०९०२६३ स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः
११०९०२६४ सृष्ट्वास्य बीजमवसीदति वृक्षधर्मः
११०९०२७१ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा
११०९०२७२ शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित्
११०९०२७३ घ्राणोऽन्यतश्चपलदृक्क्व च कर्मशक्तिर्
११०९०२७४ बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति
११०९०२८१ सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
११०९०२८२ वृक्षान्सरीसृपपशून्खगदन्दशूकान्
११०९०२८३ तैस्तैरतुष्टहृदयः पुरुषं विधाय
११०९०२८४ ब्रह्मावलोकधिषणं मुदमाप देवः
११०९०२९१ लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
११०९०२९२ मानुष्यमर्थदमनित्यमपीह धीरः
११०९०२९३ तूर्णं यतेत न पतेदनुमृत्यु यावन्

११०९०२९४ निःश्रेयसाय विषयः खलु सर्वतः स्यात्
११०९०३०१ एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि
११०९०३०३ विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतः
११०९०३११ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम्
११०९०३१३ ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः
११०९०३२० श्रीभगवानुवाच
११०९०३२१ इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः
११०९०३२३ वन्दितः स्वर्चितो राज्ञा ययौ प्रीतो यथागतम्
११०९०३३१ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः
११०९०३३३ सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह
१११००१० श्रीभगवानुवाच
१११०००११ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः
१११०००१३ वर्णाश्रमकुलाचारमकामात्मा समाचरेत्
१११०००२१ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम्
१११०००२३ गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम्
१११०००३१ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः
१११०००३३ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः
१११०००४१ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत्
१११०००४३ जिज्ञासायां सम्प्रवृत्तो नाद्रियेत्कर्मचोदनाम्
१११०००५१ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित्
१११०००५३ मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्
१११०००६१ अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः
१११०००६३ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक्
१११०००७१ जायापत्यगृहक्षेत्र स्वजनद्रविणादिषु
१११०००७३ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः
१११०००८१ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक्
१११०००८३ यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः
१११०००९१ निरोधोत्पत्त्यणुबृहन् नानात्वं तत्कृतान्गुणान्
१११०००९३ अन्तः प्रविष्ट आधत्त एवं देहगुणान्परः
१११००१०१ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि
१११००१०३ संसारस्तन्निबन्धोऽयं पुंसो विद्या च्छिदात्मनः

१११००१११ तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परम्

१११००११३ सङ्गम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम्

१११००१२१ आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः

१११००१२३ तत्सन्धानं प्रवचनं विद्यासन्धिः सुखावहः

१११००१३१ वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूताम्

१११००१३३ गुनांश्च सन्दह्य यदात्ममेतत्स्वयं च शांयत्यसमिद्यथाग्निः

१११००१४१ अथैषाम्कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः

१११००१४३ नानात्वमथ नित्यत्वं लोककालागमात्मनाम्

१११००१५१ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा

१११००१५३ तत्तदाकृतिभेदेन जायते भिद्यते च धीः

१११००१६१ एवमप्यङ्ग सर्वेषां देहिनां देहयोगतः

१११००१६३ कालावयवतः सन्ति भावा जन्मादयोऽसकृत्

१११००१७१ तत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते

१११००१७३ भोक्तुश्च दुःखसुखयोः को न्वर्थो विवशं भजेत्

१११००१८१ न देहिनां सुखं किञ्चिद्विद्यते विदुषामपि

१११००१८३ तथा च दुःखं मूढानां वृथाहङ्करणं परम्

१११००१९१ यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः

१११००१९३ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा

१११००२०१ कोऽन्वर्थः सुखयत्येनं कामो वा मृत्युरन्तिके

१११००२०३ आघातं नीयमानस्य वध्यस्येव न तुष्टिदः

१११००२११ श्रुतं च दृष्टवद्दुष्टं स्पर्धासूयात्ययव्ययैः

१११००२१३ बह्वन्तरायकामत्वात्कृषिवच्चापि निष्फलम्

१११००२२१ अन्तरायैरविहितो यदि धर्मः स्वनुष्ठितः

१११००२२३ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु

१११००२३१ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः

१११००२३३ भुञ्जीत देववत्तत्र भोगान्दिव्यान्निजार्जितान्

१११००२४१ स्वपुण्योपचिते शुभ्रे विमान उपगीयते

१११००२४३ गन्धर्वैर्विहरन्मध्ये देवीनां हृद्यवेषधृक्

१११००२५१ स्त्रीभिः कामगयानेन किङ्किनीजालमालिना

१११००२५३ क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः

१११००२६१ तावत्स मोदते स्वर्गे यावत्पुण्यं समाप्यते

१११००२६३ क्षीणपुन्यः पतत्यर्वागनिच्छन्कालचालितः
१११००२७१ यद्यधर्मरतः सङ्गादसतां वाजितेन्द्रियः
१११००२७३ कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः
१११००२८१ पशूनविधिनालभ्य प्रेतभूतगणान्यजन्
१११००२८३ नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः
१११००२९१ कर्माणि दुःखोदर्काणि कुर्वन्देहेन तैः पुनः
१११००२९३ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः
१११००३०१ लोकानां लोकपालानां मद्भयं कल्पजीविनाम्
१११००३०३ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः
१११००३११ गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान्
१११००३१३ जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ
१११००३२१ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः
१११००३२३ नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि
१११००३३१ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम्
१११००३३३ य एतत्समुपासीरंस्ते मुह्यन्ति शुचार्पिताः
१११००३४१ काल आत्मागमो लोकः स्वभावो धर्म एव च
१११००३४३ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति
१११००३५० श्रीउद्धव उवाच
१११००३५१ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः
१११००३५३ गुणैर्न बध्यते देही बध्यते वा कथं विभो
१११००३६१ कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः
१११००३६३ किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा
१११००३७१ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर
१११००३७३ नित्यबद्धो नित्यमुक्त एक एवेति मे भ्रमः
११११००१० श्रीभगवानुवाच
११११००११ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः
११११००१३ गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्
११११००२१ शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया
११११००२३ स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी
११११००३१ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्
११११००३३ मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते

११११००४१ एकस्यैव ममांशस्य जीवस्यैव महामते

११११००४३ बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः

११११००५१ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते

११११००५३ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि

११११००६१ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे

११११००६३ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्

११११००७१ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः

११११००७३ योऽविद्यया युक्स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः

११११००८१ देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः

११११००८३ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा

११११००९१ इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च

११११००९३ गृह्यमाणेष्वहं कुर्यान्न विद्वान्यस्त्वविक्रियः

१११२०१०१ दैवाधीने शरीरेऽस्मिन्गुणभाव्येन कर्मणा

११११०१०३ वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते

११११०१११ एवं विरक्तः शयन आसनाटनमज्जने

११११०११३ दर्शनस्पर्शनघ्राण भोजनश्रवणादिषु

११११०११५ न तथा बध्यते विद्वान्तत्र तत्रादयन्गुणान्

११११०१२१ प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः

११११०१२३ वैशारद्येक्षयासङ्ग शितया छिन्नसंशयः

११११०१२५ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते

११११०१४१ यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियर्ननोधियाम्

११११०१४३ वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः

११११०१५१ यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद्यदृच्छया

११११०१५३ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः

११११०१६१ न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा

११११०१६३ वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः

११११०१७१ न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत्साध्वसाधु वा

११११०१७३ आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः

११११०१८१ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि

११११०१८३ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः

११११०१९१ गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च

१११२०१९३ वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी
१११२०२०१ यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य
१११२०२०३ लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः
१११२०२११ एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि
१११२०२१३ उपारमेत विरजं मनो मय्यर्प्य सर्वगे
१११२०२२१ यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्
१११२०२२३ मयि सर्वाणि कर्माणि निरपेक्षः समाचर
१११२०२३१ श्रद्धालुर्मत्कथाः शृण्वन्सुभद्रा लोकपावनीः
१११२०२३३ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः
१११२०२४१ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः
१११२०२४३ लभते निश्चलां भक्तिं मय्युद्धव सनातने
१११२०२५१ सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता
१११२०२५३ स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्
१११२०२६० श्रीउद्धव उवाच
१११२०२६१ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो
१११२०२६३ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता
१११२०२७१ एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो
१११२०२७३ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम्
१११२०२८१ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः
१११२०२८३ अवतीर्णोऽसि भगवन्स्वेच्छोपात्तपृथग्वपुः
१११२०२९० श्रीभगवानुवाच
१११२०२९१ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम्
१११२०२९३ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः
१११२०३०१ कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः
१११२०३०३ अनीहो मितभुक्शान्तः स्थिरो मच्छरणो मुनिः
१११२०३११ अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः
१११२०३१३ अमानी मानदः कल्यो मैत्रः कारुणिकः कविः
१११२०३२१ आज्ञायैवं गुणान्दोषान्मयादिष्टानपि स्वकान्
१११२०३२३ धर्मान्सन्त्यज्य यः सर्वान्मां भजेत स तु सत्तमः
१११२०३३१ ज्ञात्वाज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः
१११२०३३३ भजन्त्यनन्यभावेन ते मे भक्ततमा मताः

१११११०३४१ मल्लिङ्गमद्भक्तजन दर्शनस्पर्शनार्चनम्
१११११०३४३ परिचर्या स्तुतिः प्रह्व गुणकर्मानुकीर्तनम्
१११११०३५१ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव
१११११०३५३ सर्वलाभोपहरणं दास्येनात्मनिवेदनम्
१११११०३६१ मज्जन्मकर्मकथनं मम पर्वानुमोदनम्
१११११०३६३ गीतताण्डववादित्र गोष्ठीभिर्मद्गृहोत्सवः
१११११०३७१ यात्रा बलिविधानं च सर्ववार्षिकपर्वसु
१११११०३७३ वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्
१११११०३८१ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः
१११११०३८३ उद्यानोपवनाक्रीड पुरमन्दिरकर्मणि
१११११०३९१ सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः
१११११०३९३ गृहशुश्रूषणं मह्यं दासवद्यदमायया
१११११०४०१ अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम्
१११११०४०३ अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम्
१११११०४११ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः
१११११०४१३ तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते
१११११०४२१ सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम्
१११११०४२३ भूरात्मा सर्वभूतानि भद्र पूजापदानि मे
१११११०४३१ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्
१११११०४३३ आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना
१११११०४४१ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया
१११११०४४३ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरःसरैः
१११११०४५१ स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि
१११११०४५३ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम्
१११११०४६१ धिष्ण्येष्वित्येषु मद्रूपं शङ्खचक्रगदाम्बुजैः
१११११०४६३ युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः
१११११०४७१ इष्टापूर्तेन मामेवं यो यजेत समाहितः
१११११०४७३ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया
१११११०४८१ प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव
१११११०४८३ नोपायो विद्यते सम्यक्प्रायणं हि सतामहम्
१११११०४९१ अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन

१११२०४९३ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा
१११२००१० श्रीभगवानुवाच
१११२००११ न रोधयति मां योगो न साङ्ख्यं धर्म एव च
१११२००१३ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा
१११२००२१ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः
१११२००२३ यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम्
१११२००३१ सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः
१११२००३३ गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः
१११२००४१ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः
१११२००४३ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगे युगे
१११२००५१ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः
१११२००५३ वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः
१११२००६१ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः
१११२००६३ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे
१११२००७१ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः
१११२००७३ अव्रतातप्ततपसः मत्सङ्गान्मामुपागताः
१११२००८१ केवलेन हि भावेन गोप्यो गावो नगा मृगाः
१११२००८३ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा
१११२००९१ यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः
१११२००९३ व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपि
१११२०१०१ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः
१११२०१०३ विगाढभावेन न मे वियोग तीव्राधयोऽन्यं ददृशुः सुखाय
१११२०१११ तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण
१११२०११३ क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः
१११२०१२१ ता नाविदन्मय्यनुषङ्गबद्ध धियः स्वमात्मानमदस्तथेदम्
१११२०१२३ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे
१११२०१३१ मत्कामा रमणं जारमस्वरूपविदोऽबलाः
१११२०१३३ ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः
१११२०१४१ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम्
१११२०१४३ प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च
१११२०१५१ मामेकमेव शरणमात्मानं सर्वदेहिनाम्

१११२०१५३ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः
१११२०१६० श्रीउद्धव उवाच
१११२०१६१ संशयः श‍ृण्वतो वाचं तव योगेश्वरेश्वर
१११२०१६३ न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः
१११२०१७० श्रीभगवानुवाच
१११२०१७१ स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः
१११२०१७३ मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः
१११२०१८१ यथानलः खेऽनिलबन्धुरुष्मा बलेन दारुण्यधिमथ्यमानः
१११२०१८३ अणुः प्रजातो हविषा समेधते तथैव मे व्यक्तिरियं हि वाणी
१११२०१९१ एवं गदिः कर्म गतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च
१११२०१९३ सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः
१११२०२०१ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः
१११२०२०३ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत्
१११२०२११ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः
१११२०२१३ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते
१११२०२२१ द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः
१११२०२२३ दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः
१११२०२३१ अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः
१११२०२३३ हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम्
१११२०२४१ एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः
१११२०२४३ विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम्
१११३००१० श्रीभगवानुवाच
१११३००११ सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः
१११३००१३ सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि
१११३००२१ सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः
१११३००२३ सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते
१११३००३१ धर्मो रजस्तमो हन्यात्सत्त्ववृद्धिरनुत्तमः
१११३००३३ आशु नश्यति तन्मूलो ह्यधर्म उभये हते
१११३००४१ आगमोऽपः प्रजा देशः कालः कर्म च जन्म च
१११३००४३ ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः
१११३००५१ तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते

१११३००५३ निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम्
१११३००६१ सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये
१११३००६३ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम्
१११३००७१ वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम्
१११३००७३ एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः
१११३००८० श्रीउद्धव उवाच
१११३००८१ विदन्ति मर्त्याः प्रायेण विषयान्पदमापदाम्
१११३००८३ तथापि भुञ्जते कृष्ण तत्कथं श्वखराजवत्
१११३००९० श्रीभगवानुवाच
१११३००९१ अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि
१११३००९३ उत्सर्पति रजो घोरं ततो वैकारिकं मनः
१११३०१०१ रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः
१११३०१०३ ततः कामो गुणध्यानाद्दुःसहः स्याद्धि दुर्मतेः
१११३०१११ करोति कामवशगः कर्माण्यविजितेन्द्रियः
१११३०११३ दुःखोदर्काणि सम्पश्यन्रजोवेगविमोहितः
१११३०१२१ रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः
१११३०१२३ अतन्द्रितो मनो युञ्जन्दोषदृष्टिर्न सज्जते
१११३०१३१ अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयञ्छनैः
१११३०१३३ अनिर्विण्णो यथाकालं जितश्वासो जितासनः
१११३०१४१ एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः
१११३०१४३ सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा
१११३०१५० श्रीउद्धव उवाच
१११३०१५१ यदा त्वं सनकादिभ्यो येन रूपेण केशव
१११३०१५३ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम्
१११३०१६० श्रीभगवानुवाच
१११३०१६१ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः
१११३०१६३ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीम्गतिम्
१११३०१७० सनकादय ऊचुः
१११३०१७१ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो
१११३०१७३ कथमन्योन्यसन्त्यागो मुमुक्षोरतितितीर्षोः
१११३०१८० श्रीभगवानुवाच

१११३०१८१ एवं पृष्टो महादेवः स्वयम्भूर्भूतभावनः
१११३०१८३ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः
१११३०१९१ स मामचिन्तयद्देवः प्रश्नपारतितीर्षया
१११३०१९३ तस्याहं हंसरूपेण सकाशमगमं तदा
१११३०२०१ दृष्ट्वा माम्त उपव्रज्य कृत्व पादाभिवन्दनम्
१११३०२०३ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति
१११३०२११ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा
१११३०२१३ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे
१११३०२२१ वस्तुनो यद्यनानात्व आत्मनः प्रश्न ईदृशः
१११३०२२३ कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः
१११३०२३१ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः
१११३०२३३ को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः
१११३०२४१ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः
१११३०२४३ अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा
१११३०२५१ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः
१११३०२५३ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः
१११३०२६१ गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया
१११३०२६३ गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत्
१११३०२७१ जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः
१११३०२७३ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः
१११३०२८१ यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः
१११३०२८३ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम्
१११३०२९१ अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम्
१११३०२९३ विद्वान्निर्विद्य संसार चिन्तां तुर्ये स्थितस्त्यजेत्
१११३०३०१ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः
१११३०३०३ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा
१११३०३११ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा
१११३०३१३ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा
१११३०३२१ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्
१११३०३२२ भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान्
१११३०३२३ स्वप्ने सुषुप्त उपसंहरते स एकः

१११३०३२४ स्मृत्यन्वयात्रिगुणवृत्तिदृगिन्द्रियेशः
१११३०३३१ एवं विमृश्य गुणतो मनसस्त्र्यवस्था
१११३०३३२ मन्मायया मयि कृता इति निश्चितार्थाः
१११३०३३३ सञ्छिद्य हार्दमनुमानसदुक्तितीक्ष्ण
१११३०३३४ ज्ञानासिना भजत माखिलसंशयाधिम्
१११३०३४१ ईक्षेत विभ्रममिदं मनसो विलासं
१११३०३४२ दृष्टं विनष्टमतिलोलमलातचक्रम्
१११३०३४३ विज्ञानमेकमुरुधेव विभाति माया
१११३०३४४ स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः
१११३०३५१ दृष्टिम्ततः प्रतिनिवर्त्य निवृत्ततृष्णस्
१११३०३५२ तूष्णीं भवेन्निजसुखानुभवो निरीहः
१११३०३५३ सन्दृश्यते क्क च यदीदमवस्तुबुद्ध्या
१११३०३५४ त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात्
१११३०३६१ देहं च नश्वरमवस्थितमुत्थितं वा
१११३०३६२ सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम्
१११३०३६३ दैवादपेतमथ दैववशादुपेतं
१११३०३६४ वासो यथा परिकृतं मदिरामदान्धः
१११३०३७१ देहोऽपि दैववशगः खलु कर्म यावत्
१११३०३७२ स्वारम्भकं प्रतिसमीक्षत एव सासुः
१११३०३७३ तं सप्रपञ्चमधिरूढसमाधियोगः
१११३०३७४ स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः
१११३०३८१ मयैतदुक्तं वो विप्रा गुह्यं यत्साङ्ख्ययोगयोः
१११३०३८३ जानीत मागतं यज्ञं युष्मद्धर्मविवक्षया
१११३०३९१ अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः
१११३०३९३ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च
१११३०४०१ मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्
१११३०४०३ सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः
१११३०४११ इति मे छिन्नसन्देहा मुनयः सनकादयः
१११३०४१३ सभाजयित्वा परया भक्त्यागृणत संस्तवैः
१११३०४२१ तैरहं पूजितः संयक्संस्तुतः परमर्षिभिः
१११३०४२३ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः

१११४००१० श्रीउद्धव उवाच
१११४००११ वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः
१११४००१३ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता
१११४००२१ भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः
१११४००२३ निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः
१११४००३० श्रीभगवानुवाच
१११४००३१ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता
१११४००३३ मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः
१११४००४१ तेन प्रोक्ता स्वपुत्राय मनवे पूर्वजाय सा
१११४००४३ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः
१११४००५१ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः
१११४००५३ मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः
१११४००६१ किन्देवाः किन्नरा नागा रक्षःकिम्पुरुषादयः
१११४००६३ बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः
१११४००७१ याभिर्भूतानि भिद्यन्ते भूतानां पतयस्तथा
१११४००७३ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि
१११४००८१ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम्
१११४००८३ पारम्पर्येण केषाञ्चित्पाषण्डमतयोऽपरे
१११४००९१ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ
१११४००९३ श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि
१११४०१०१ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम्
१११४०१०३ अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम्
१११४०१०५ केचिद्यज्ञं तपो दानं व्रतानि नियमान्यमान्
१११४०१११ आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः
१११४०११३ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रा मन्दाः शुचार्पिताः
१११४०१२१ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः
१११४०१२३ मयात्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम्
१११४०१३१ अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः
१११४०१३३ मया सन्तुष्टमनसः सर्वाः सुखमया दिशः
१११४०१४१ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
१११४०१४२ न सार्वभौमं न रसाधिपत्यम्

१११४०१४३ न योगसिद्धीरपुनर्भवं वा

१११४०१४४ मय्यर्पितात्मेच्छति मद्विनान्यत्

१११४०१५१ न तथा मे प्रियतम आत्मयोनिर्न शङ्करः

१११४०१५३ न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्

१११४०१६१ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्

१११४०१६३ अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः

१११४०१७१ निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः

१११४०१७३ कामैरनालब्धधियो जुषन्ति ते यन्नैरपेक्ष्यं न विदुः सुखं मम

१११४०१८१ बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः

१११४०१८३ प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते

१११४०१९१ यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात्

१११४०१९३ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः

१११४०२०१ न साधयति मां योगो न साङ्ख्यं धर्म उद्धव

१११४०२०३ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता

१११४०२११ भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्

१११४०२१३ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात्

१११४०२२१ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता

१११४०२२३ मद्भक्त्यापेतमात्मानं न सम्यक्प्रपुनाति हि

१११४०२३१ कथं विना रोमहर्षं द्रवता चेतसा विना

१११४०२३३ विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः

१११४०२४१ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च

१११४०२४३ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति

१११४०२५१ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम्

१११४०२५३ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम्

१११४०२६१ यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः

१११४०२६३ तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्

१११४०२७१ विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते

१११४०२७३ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते

१११४०२८१ तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्

१११४०२८३ हित्वा मयि समाधत्स्व मनो मद्भावभावितम्

१११४०२९१ स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान्

१११४०२९३ क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः
१११४०३०१ न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः
१११४०३०३ योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः
१११४०३१० श्रीउद्धव उवाच
१११४०३११ यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम्
१११४०३१३ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं त्वं वक्तुमर्हसि
१११४०३२० श्रीभगवानुवाच
१११४०३२१ सम आसन आसीनः समकायो यथासुखम्
१११४०३२३ हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः
१११४०३३१ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः
१११४०३३३ विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः
१११४०३४१ हृद्यविच्छिनमोंकारं घण्टानादं बिसोर्णवत्
१११४०३४३ प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम्
१११४०३५१ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत्
१११४०३५३ दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः
१११४०३६१ हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखम्
१११४०३६३ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम्
१११४०३७१ कर्णिकायां न्यसेत्सूर्य सोमाग्नीनुत्तरोत्तरम्
१११४०३७३ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम्
१११४०३८१ समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम्
१११४०३८३ सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम्
१११४०३९१ समानकर्णविन्यस्त स्फुरन्मकरकुण्डलम्
१११४०३९३ हेमाम्बरं घनश्यामं श्रीवत्सश्रीनिकेतनम्
१११४०४०१ शङ्खचक्रगदापद्म वनमालाविभूषितम्
१११४०४०३ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम्
१११४०४११ द्युमत्किरीटकटक कटिसूत्राङ्गदायुतम्
१११४०४१३ सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षनम्
१११४०४२१ सुकुमारमभिध्यायेत्सर्वाङ्गेषु मनो दधत्
१११४०४२३ इन्द्रियाणीन्द्रियार्थेभ्यो मनसाकृष्य तन्मनः
१११४०४२५ बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः
१११४०४३१ तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत्

१११४०४३३ नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम्
१११४०४४१ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत्
१११४०४४३ तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत्
१११४०४५१ एवं समाहितमतिर्मामेवात्मानमात्मनि
१११४०४५३ विचष्टे मयि सर्वात्मञ्ज्योतिर्ज्योतिषि संयुतम्
१११४०४६१ ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः
१११४०४६३ संयास्यत्याशु निर्वाणं द्रव्य ज्ञानक्रियाभ्रमः
१११५००१० श्रीभगवानुवाच
१११५००११ जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः
१११५००१३ मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः
१११५००२० श्रीउद्धव उवाच
१११५००२१ कया धारणया का स्वित्कथं वा सिद्धिरच्युत
१११५००२३ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान्
१११५००३० श्रीभगवानुवाच
१११५००३१ सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः
१११५००३३ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः
१११५००४१ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः
१११५००४३ प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता
१११५००५१ गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति
१११५००५३ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः
१११५००६१ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम्
१११५००६३ मनोजवः कामरूपं परकायप्रवेशनम्
१११५००७१ स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम्
१११५००७३ यथासङ्कल्पसंसिद्धिराज्ञाप्रतिहता गतिः
१११५००८१ त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता
१११५००८३ अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः
१११५००९१ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः
१११५००९३ यया धारणया या स्याद्यथा वा स्यान्निबोध मे
१११५०१०१ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः
१११५०१०३ अणिमानमवाप्नोति तन्मात्रोपासको मम
१११५०१११ महत्तत्त्वात्मनि मयि यथासंस्थं मनो दधत्

१११५०११३ महिमानमवाप्नोति भूतानां च पृथक्पृथक्
१११५०१२१ परमाणुमये चित्तं भूतानां मयि रञ्जयन्
१११५०१२३ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात्
१११५०१३१ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम्
१११५०१३३ सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः
१११५०१४१ महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम्
१११५०१४३ प्राकाम्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः
१११५०१५१ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे
१११५०१५३ स ईशित्वमवाप्नोति क्षेत्रज्ञक्षेत्रचोदनाम्
१११५०१६१ नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते
१११५०१६३ मनो मय्यादधद्योगी मद्धर्मा वशितामियात्
१११५०१७१ निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः
१११५०१७३ परमानन्दमाप्नोति यत्र कामोऽवसीयते
१११५०१८१ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि
१११५०१८३ धारयञ्छ्वेततां याति षडूर्मिरहितो नरः
१११५०१९१ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन्
१११५०१९३ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ
१११५०२०१ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि
१११५०२०३ मां तत्र मनसा ध्यायन्विश्वं पश्यति दूरतः
१११५०२११ मनो मयि सुसंयोज्य देहं तदनुवायुना
१११५०२१३ मद्धारणानुभावेन तत्रात्मा यत्र वै मनः
१११५०२२१ यदा मन उपादाय यद्यद्रूपं बुभूषति
१११५०२२३ तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः
१११५०२३१ परकायं विशन्सिद्ध आत्मानं तत्र भावयेत्
१११५०२३३ पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत्
१११५०२४१ पाष्ण्यापीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु
१११५०२४३ आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम्
१११५०२५१ विहरिष्यन्सुराक्रीडे मत्स्थं सत्त्वं विभावयेत्
१११५०२५३ विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः
१११५०२६१ यथा सङ्कल्पयेद्बुद्ध्या यदा वा मत्परः पुमान्
१११५०२६३ मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते

१११५०२७१ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान्
१११५०२७३ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम
१११५०२८१ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः
१११५०२८३ तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता
१११५०२९१ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः
१११५०२९३ मद्योगशान्तचित्तस्य यादसामुदकं यथा
१११५०३०१ मद्विभूतीरभिध्यायन्श्रीवत्सास्त्रविभूषिताः
१११५०३०३ ध्वजातपत्रव्यजनैः स भवेदपराजितः
१११५०३११ उपासकस्य मामेवं योगधारणया मुनेः
१११५०३१३ सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः
१११५०३२१ जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः
१११५०३२३ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा
१११५०३३१ अन्तरायान्वदन्त्येता युञ्जतो योगमुत्तमम्
१११५०३३३ मया सम्पद्यमानस्य कालक्षपणहेतवः
१११५०३४१ जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः
१११५०३४३ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत्
१११५०३५१ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः
१११५०३५३ अहं योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनाम्
१११५०३६१ अहमात्मान्तरो बाह्योऽनावृतः सर्वदेहिनाम्
१११५०३६३ यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा
१११६००१० श्रीउद्धव उवाच
१११६००११ त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम्
१११६००१३ सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः
१११६००२१ उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः
१११६००२३ उपासते त्वां भगवन्याथातथ्येन ब्राह्मणाः
१११६००३१ येषु येषु च भूतेषु भक्त्या त्वां परमर्षयः
१११६००३३ उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे
१११६००४१ गूढश्चरसि भूतात्मा भूतानां भूतभावन
१११६००४३ न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते
१११६००५१ याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते
१११६००५३ ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम्

१११६००६० श्रीभगवानुवाच
१११६००६१ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर
१११६००६३ युयुत्सुना विनशने सपत्नैरर्जुनेन वै
१११६००७१ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम्
१११६००७३ ततो निवृत्तो हन्ताहं हतोऽयमिति लौकिकः
१११६००८१ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः
१११६००८३ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि
१११६००९१ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः
१११६००९३ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः
१११६०१०१ अहं गतिर्गतिमतां कालः कलयतामहम्
१११६०१०३ गुनाणां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः
१११६०१११ गुणिनामप्यहं सूत्रं महतां च महानहम्
१११६०११३ सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः
१११६०१२१ हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत्
१११६०१२३ अक्षराणामकारोऽस्मि पदानि च्छन्दुसामहम्
१११६०१३१ इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्
१११६०१३३ आदित्यानामहं विष्णू रुद्राणां नीललोहितः
१११६०१४१ ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः
१११६०१४३ देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु
१११६०१५१ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम्
१११६०१५३ प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा
१११६०१६१ मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम्
१११६०१६३ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम्
१११६०१७१ ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्
१११६०१७३ तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम्
१११६०१८१ उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम्
१११६०१८३ यमः संयमतां चाहम्सर्पाणामस्मि वासुकिः
१११६०१९१ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः श‍ृङ्गिदंष्ट्रिणाम्
१११६०१९३ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ
१११६०२०१ तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम्
१११६०२०३ आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम्

१११६०२११ धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः
१११६०२१३ वनस्पतीनामश्वत्थ ओषधीनामहं यवः
१११६०२२१ पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः
१११६०२२३ स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः
१११६०२३१ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम्
१११६०२३३ वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः
१११६०२४१ योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम्
१११६०२४३ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम्
१११६०२५१ स्त्रीणां तु शतरूपाहं पुंसां स्वायम्भुवो मनुः
१११६०२५३ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम्
१११६०२६१ धर्माणामस्मि सन्न्यासः क्षेमाणामबहिर्मतिः
१११६०२६३ गुह्यानां सुनृतं मौनं मिथुनानामजस्त्वहम्
१११६०२७१ संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ
१११६०२७३ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभिजित्
१११६०२८१ अहं युगानां च कृतं धीराणां देवलोऽसितः
१११६०२८३ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान्
१११६०२९१ वासुदेवो भगवतां त्वं तु भागवतेष्वहम्
१११६०२९३ किम्पुरुषानां हनुमान्विद्याध्राणां सुदर्शनः
१११६०३०१ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम्
१११६०३०३ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम्
१११६०३११ व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः
१११६०३१३ तितिक्षास्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम्
१११६०३२१ ओजः सहो बलवतां कर्माहं विद्धि सात्वताम्
१११६०३२३ सात्वतां नवमूर्तीनामादिमूर्तिरहं परा
१११६०३३१ विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम्
१११६०३३३ भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः
१११६०३४१ अपां रसश्च परमस्तेजिष्ठानां विभावसुः
१११६०३४३ प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः
१११६०३५१ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः
१११६०३५३ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः
१११६०३६१ गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षनम्

१११६०३६३ आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम्
१११६०३७१ पृथिवी वायुराकाश आपो ज्योतिरहं महान्
१११६०३७३ विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम्
१११६०३७५ अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्त्वविनिश्चयः
१११६०३८१ मयेश्वरेण जीवेन गुणेन गुणिना विना
१११६०३८३ सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित्
१११६०३९१ सङ्ख्यानं परमाणूनां कालेन क्रियते मया
१११६०३९३ न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः
१११६०४०१ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः
१११६०४०३ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेऽंशकः
१११६०४११ एतास्ते कीर्तिताः सर्वाः सङ्क्षेपेण विभूतयः
१११६०४१३ मनोविकारा एवैते यथा वाचाभिधीयते
१११६०४२१ वाचं यच्छ मनो यच्छ प्राणान्यच्छेद्रियाणि च
१११६०४२३ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने
१११६०४३१ यो वै वाङ्मनसी संयगसंयच्छन्धिया यतिः
१११६०४३३ तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत्
१११६०४४१ तस्माद्वचो मनः प्राणान्नियच्छेन्मत्परायणः
१११६०४४३ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते
१११७००१० श्रीउद्धव उवाच
१११७००११ यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः
१११७००१३ वर्णाशमाचारवतां सर्वेषां द्विपदामपि
१११७००२१ यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत्
१११७००२३ स्वधर्मेणारविन्दाक्ष तन्ममाख्यातुमर्हसि
१११७००३१ पुरा किल महाबाहो धर्मं परमकं प्रभो
१११७००३३ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव
१११७००४१ स इदानीं सुमहता कालेनामित्रकर्शन
१११७००४३ न प्रायो भविता मर्त्य लोके प्रागनुशासितः
१११७००५१ वक्ता कर्ताविता नान्यो धर्मस्याच्युत ते भुवि
१११७००५३ सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः
१११७००६१ कर्त्राविर्त्रा प्रवक्त्रा च भवता मधुसूदन
१११७००६३ त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति

१११७००७१ तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः
१११७००७३ यथा यस्य विधीयेत तथा वर्णय मे प्रभो
१११७००८० श्रीशुक उवाच
१११७००८१ इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान्हरिः
१११७००८३ प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान्
१११७००९० श्रीभगवानुवाच
१११७००९१ धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम्
१११७००९३ वर्णाश्रमाचारवतां तमुद्धव निबोध मे
१११७०१०१ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः
१११७०१०३ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः
१११७०१११ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक्
१११७०११३ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः
१११७०१२१ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी
१११७०१२३ विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः
१११७०१३१ विप्रक्षत्रियविड्शूद्रा मुखबाहूरुपादजाः
१११७०१३३ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः
१११७०१४१ गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम
१११७०१४३ वक्षःस्थलाद्वनेवासः सन्न्यासः शिरसि स्थितः
१११७०१५१ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः
१११७०१५३ आसन्प्रकृतयो नृनां नीचैर्नीचोत्तमोत्तमाः
१११७०१६१ शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम्
१११७०१६३ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः
१११७०१७१ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः
१११७०१७३ स्थैर्यं ब्रह्मन्यमैश्वर्यं क्षत्रप्रकृतयस्त्विमाः
१११७०१८१ आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम्
१११७०१८३ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः
१११७०१९१ शुश्रूषणं द्विजगवां देवानां चाप्यमायया
१११७०१९३ तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः
१११७०२०१ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः
१११७०२०३ कामः क्रोधश्च तर्षश्च स भावोऽन्त्यावसायिनाम्
१११७०२११ अहिंसा सत्यमस्तेयमकामक्रोधलोभता

१११७०२१३ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः
१११७०२२१ द्वितीयं प्राप्यानुपूर्व्याज्ञन्मोपनयनं द्विजः
१११७०२२३ वसन्गुरुकुले दान्तो ब्रह्माधीयीत चाहूतः
१११७०२३१ मेखलाजिनदण्डाक्ष ब्रह्मसूत्रकमण्डलून्
१११७०२३३ जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान्दधत्
१११७०२४१ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः
१११७०२४३ न च्छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि
१११७०२५१ रेतो नावकिरेज्ञातु ब्रह्मव्रतधरः स्वयम्
१११७०२५३ अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदां जपेत्
१११७०२६१ अग्न्यर्काचार्यगोविप्र गुरुवृद्धसुराञ्शुचिः
१११७०२६३ समाहित उपासीत सन्ध्ये द्वे यतवाग्जपन्
१११७०२७१ आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्
१११७०२७३ न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः
१११७०२८१ सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत्
१११७०२८३ यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः
१११७०२९१ शुश्रूषमाण आचार्यं सदोपासीत नीचवत्
१११७०२९३ यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः
१११७०३०१ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः
१११७०३०३ विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम्
१११७०३११ यद्यसौ छन्दसां लोकमारोक्ष्यन्ब्रह्मविष्टपम्
१११७०३१३ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः
१११७०३२१ अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम्
१११७०३२३ अपृथग्धीरुपसीत ब्रह्मवर्चस्व्यकल्मषः
१११७०३३१ स्त्रीणां निरीक्षणस्पर्श संलापक्ष्वेलनादिकम्
१११७०३३३ प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत्
१११७०३४१ शौचमाचमनं स्नानं सन्ध्योपास्तिर्ममार्चनम्
१११७०३४३ तीर्थसेवा जपोऽस्पृश्या भक्ष्यासम्भाष्यवर्जनम्
१११७०३५१ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन
१११७०३५३ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः
१११७०३६१ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन्
१११७०३६३ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः

१११७०३७१ अथानन्तरमावेक्ष्यन्यथाजिज्ञासितागमः

१११७०३७३ गुरवे दक्षिणां दत्त्वा स्नायाद्गुर्वनुमोदितः

१११७०३८१ गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः

१११७०३८३ आश्रमादाश्रमं गच्छेन्नान्यथामत्परश्चरेत्

१११७०३९१ गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम्

१११७०३९३ यवीयसीं तु वयसा यं सवर्णामनु क्रमात्

१११७०४०१ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम्

१११७०४०३ प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम्

१११७०४११ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम्

१११७०४१३ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः

१११७०४२१ ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते

१११७०४२३ कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च

१११७०४३१ शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः

१११७०४३३ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शान्तिम्

१११७०४४१ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम्

१११७०४४३ तानुद्धरिष्ये न चिरादापद्भ्यो नौरिवार्णवात्

१११७०४५१ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः

१११७०४५३ आत्मानमात्मना धीरो यथा गजपतिर्गजान्

१११७०४६१ एवंविधो नरपतिर्विमानेनार्कवर्चसा

१११७०४६३ विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते

१११७०४७१ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत्

१११७०४७३ खड्गेन वापदाक्रान्तो न श्ववृत्त्या कथञ्चन

१११७०४८१ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययापदि

१११७०४८३ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथञ्चन

१११७०४९१ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम्

१११७०४९३ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा

१११७०५०१ वेदाध्यायस्वधास्वाहा बल्यन्नाद्यैर्यथोदयम्

१११७०५०३ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत्

१११७०५११ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा

१११७०५१३ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून्

१११७०५२१ कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि

१११७०५२३ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत्
१११७०५३१ पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः
१११७०५३३ अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा
१११७०५४१ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन्
१११७०५४३ न गृहैरनुबध्येत निर्ममो निरहङ्कृतः
१११७०५५१ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान्
१११७०५५३ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत्
१११७०५६१ यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः
१११७०५६३ स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते
१११७०५७१ अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः
१११७०५७३ अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः
१११७०५८१ एवं गृहाशयाक्षिप्त हृदयो मूढधीरयम्
१११७०५८३ अतृप्तस्ताननुध्यायन्मृतोऽन्धं विशते तमः
१११८००१० श्रीभगवानुवाच
१११८००११ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा
१११८००१३ वन एव वसेच्छान्तस्तृतीयं भागमायुषः
१११८००२१ कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत्
१११८००२३ वसीत वल्कलं वासस्तृणपर्णाजिनानि वा
१११८००३१ केशरोमनखश्मश्रु मलानि बिभृयाद्दतः
१११८००३३ न धावेदप्सु मज्जेत त्रि कालं स्थण्डिलेशयः
१११८००४१ ग्रीष्मे तप्येत पञ्चाग्नीन्वर्षास्वासारषाड्जले
१११८००४३ आकण्ठमग्नः शिशिर एवं वृत्तस्तपश्चरेत्
१११८००५१ अग्निपक्वं समश्नीयात्कालपक्वमथापि वा
१११८००५३ उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा
१११८००६१ स्वयं सञ्चिनुयात्सर्वमात्मनो वृत्तिकारणम्
१११८००६३ देशकालबलाभिज्ञो नाददीतान्यदाहृतम्
१११८००७१ वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान्
१११८००७३ न तु श्रौतेन पशुना मां यजेत वनाश्रमी
१११८००८१ अग्निहोत्रं च दर्शश्च पौर्णमासश्च पूर्ववत्
१११८००८३ चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः
१११८००९१ एवं चीर्णेन तपसा मुनिर्धमनिसन्ततः

१११८००९३ मां तपोमयमाराध्य ऋषिलोकादुपैति माम्
१११८०१०१ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत्
१११८०१०३ कामायाल्पीयसे युञ्ज्याद्बालिशः कोऽपरस्ततः
१११८०१११ यदासौ नियमेऽकल्पो जरया जातवेपथुः
१११८०११३ आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत्
१११८०१२१ यदा कर्मविपाकेषु लोकेषु निरयात्मसु
१११८०१२३ विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः
१११८०१३१ इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे
१११८०१३३ अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत्
१११८०१४१ विप्रस्य वै सन्न्यसतो देवा दारादिरूपिणः
१११८०१४३ विघ्नान्कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम्
१११८०१५१ बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम्
१११८०१५३ त्यक्तं न दण्डपात्राभ्यामन्यत्किञ्चिदनापदि
१११८०१६१ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम्
१११८०१६३ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत्
१११८०१७१ मौनानीहानिलायामा दण्डा वाग्देहचेतसाम्
१११८०१७३ न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यतिः
१११८०१८१ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयंश्चरेत्
१११८०१८३ सप्तागारानसङ्क्लृप्तांस्तुष्येल्लब्धेन तावता
१११८०१९१ बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः
१११८०१९३ विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम्
१११८०२०१ एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः
१११८०२०३ आत्मक्रीड आत्मरत आत्मवान्समदर्शनः
१११८०२११ विविक्तक्षेमशरणो मद्भावविमलाशयः
१११८०२१३ आत्मानं चिन्तयेदेकमभेदेन मया मुनिः
१११८०२२१ अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया
१११८०२२३ बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः
१११८०२३१ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः
१११८०२३३ विरक्तः क्षुद्रकामेभ्यो लब्ध्वात्मनि सुखं महत्
१११८०२४१ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत्
१११८०२४३ पुण्यदेशसरिच्छैल वनाश्रमवतीं महीम्

१११८०२५१ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत्

१११८०२५३ संसिध्यत्याश्वसम्मोहः शुद्धसत्त्वः शिलान्धसा

१११८०२६१ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति

१११८०२६३ असक्तचित्तो विरमेदिहामुत्रचिकीर्षितात्

१११८०२७१ यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम्

१११८०२७३ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत्

१११८०२८१ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः

१११८०२८३ सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः

१११८०२९१ बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत्

१११८०२९३ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत्

१११८०३०१ वेदवादरतो न स्यान्न पाषण्डी न हैतुकः

१११८०३०३ शुष्कवादविवादे न कञ्चित्पक्षं समाश्रयेत्

१११८०३११ नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु

१११८०३१३ अतिवादांस्तितिक्षेत नावमन्येत कञ्चन

१११८०३१५ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित्

१११८०३२१ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः

१११८०३२३ यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च

१११८०३३१ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित्

१११८०३३३ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम्

१११८०३४१ आहारार्थं समीहेत युक्तं तत्प्राणधारणम्

१११८०३४३ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते

१११८०३५१ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम्

१११८०३५३ तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः

१११८०३६१ शौचमाचमनं स्नानं न तु चोदनया चरेत्

१११८०३६३ अन्यांश्च नियमाञ्ज्ञानी यथाहं लीलयेश्वरः

१११८०३७१ न हि तस्य विकल्पाख्या या च मद्वीक्षया हता

१११८०३७३ आदेहान्तात्क्वचित्ख्यातिस्ततः सम्पद्यते मया

१११८०३८१ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान्

१११८०३८३ अज्ज्ञासितमद्धर्मो मुनिं गुरुमुपव्रजेत्

१११८०३९१ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः

१११८०३९३ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः

१११८०४०१ यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः
१११८०४०३ ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति
१११८०४११ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा
१११८०४१३ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते
१११८०४२१ भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः
१११८०४२३ गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम्
१११८०४३१ ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम्
१११८०४३३ गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम्
१११८०४४१ इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक्
१११८०४४३ सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढाम्
१११८०४५१ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्
१११८०४५३ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः
१११८०४६१ इति स्वधर्मनिर्णिक्त सत्त्वो निर्ज्ञातमद्गतिः
१११८०४६३ ज्ञानविज्ञानसम्पन्नो न चिरात्समुपैति माम्
१११८०४७१ वर्णाश्रमवतां धर्म एष आचारलक्षणः
१११८०४७३ स एव मद्भक्तियुतो निःश्रेयसकरः परः
१११८०४८१ एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम्
१११८०४८३ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम्
१११९००१० श्रीभगवानुवाच
१११९००११ यो विद्याश्रुतसम्पन्नः आत्मवान्नानुमानिकः
१११९००१३ मयामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत्
१११९००२१ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः
१११९००२३ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः
१११९००३१ ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम
१११९००३३ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्
१११९००४१ तपस्तीर्थं जपो दानं पवित्राणीतराणि च
१११९००४३ नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता
१११९००५१ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव
१११९००५३ ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः
१११९००६१ ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि
१११९००६३ सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन्

१११९००७१ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो
१११९००७२ मायान्तरापतति नाद्यपवर्गयोर्यत्
१११९००७३ जन्मादयोऽस्य यदमी तव तस्य किं स्युर्
१११९००७४ आद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये
१११९००८० श्रीउद्धव उवाच
१११९००८१ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम्
१११९००८३ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम्
१११९००९१ तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश
१११९००९३ पश्यामि नान्यच्छरणं तवाङ्घ्रि द्वन्द्वातपत्रादमृताभिवर्षात्
१११९०१०१ दष्टं जनं सम्पतितं बिलेऽस्मिन्कालाहिना क्षुद्रसुखोरुतर्षम्
१११९०१०३ समुद्धरैनं कृपयापवर्ग्यैर्वचोभिरासिञ्च महानुभाव
१११९०११० श्रीभगवानुवाच
१११९०१११ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम्
१११९०११३ अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम्
१११९०१२१ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः
१११९०१२३ श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत
१११९०१३१ तानहं तेऽभिधास्यामि देवव्रतमखाच्छ्रुतान्
१११९०१३३ ज्ञानवैराग्यविज्ञान श्रद्धाभक्त्युपबृंहितान्
१११९०१४१ नवैकादश पञ्च त्रीन्भावान्भूतेषु येन वै
१११९०१४३ ईक्षेताथाइकमप्येषु तज्ज्ञानं मम निश्चितम्
१११९०१५१ एतदेव हि विज्ञानं न तथैकेन येन यत्
१११९०१५३ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम्
१११९०१६१ आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात्
१११९०१६३ पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत्
१११९०१७१ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्
१११९०१७३ प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते
१११९०१८१ कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम्
१११९०१८३ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत्
१११९०१९१ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ
१११९०१९३ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परं
१११९०२०१ श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्

१११९०२०३ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम
१११९०२११ आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम्
१११९०२१३ मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः
१११९०२२१ मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम्
१११९०२२३ मय्यर्पणं च मनसः सर्वकामविवर्जनम्
१११९०२३१ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च
१११९०२३३ इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः
१११९०२४१ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्
१११९०२४३ मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते
१११९०२५१ यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम्
१११९०२५३ धर्मं ज्ञानं स वैराग्यमैश्वर्यं चाभिपद्यते
१११९०२६१ यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति
१११९०२६३ रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम्
१११९०२७१ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम्
१११९०२७३ गुणेस्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः
१११९०२८१ श्रीउद्धव उवाच यमः कतिविधः प्रोक्तो
१११९०२८३ नियमो वारिकर्षण कः शमः को दमः कृष्ण
१११९०२९१ का तितिक्षा धृतिः प्रभो किं दानं किं तपः शौर्यं
१११९०२९३ किम्सत्यमृतमुच्यते कस्त्यागः किं धनं चेष्टं
१११९०३०१ को यज्ञः का च दक्षिणा पुंसः किं स्विद्बलं श्रीमन्
१११९०३०३ भगो लाभश्च केशव का विद्या ह्रीः परा का श्रीः
१११९०३११ किं सुखं दुःखमेव च कः पण्डितः कश्च मूर्खः
१११९०३१३ कः पन्था उत्पथश्च कः कः स्वर्गो नरकः कः स्वित्
१११९०३२१ को बन्धुरुत किं गृहम्क आढ्यः को दरिद्रो वा
१११९०३२३ कृपणः कः क ईश्वरः एतान्प्रश्नान्मम ब्रूहि
१११९०३२५ विपरीतांश्च सत्पते श्रीभगवानुवाच
१११९०३३१ अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः
१११९०३३३ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम्
१११९०३४१ शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम्
१११९०३४३ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्
१११९०३५१ एते यमाः सनियमा उभयोर्द्वादश स्मृताः

१११९०३५३ पुंसामुपासितास्तात यथाकामं दुहन्ति हि
१११९०३६१ शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः
१११९०३६३ तितिक्षा दुःखसम्मर्षो जिह्वोपस्थजयो धृतिः
१११९०३७१ दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम्
१११९०३७३ स्वभावविजयः शौर्यं सत्यं च समदर्शनम्
१११९०३८१ अन्यच्च सुनृता वाणी कविभिः परिकीर्तिता
१११९०३८३ कर्मस्वसङ्गमः शौचं त्यागः सन्न्यास उच्यते
१११९०३९१ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः
१११९०३९३ दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम्
१११९०४०१ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः
१११९०४०३ विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु
१११९०४११ श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः
१११९०४१३ दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित्
१११९०४२१ मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः
१११९०४२३ उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः
१११९०४३१ नरकस्तमौन्नाहो बन्धुर्गुरुरहं सखे
१११९०४३३ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते
१११९०४४१ दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः
१११९०४४३ गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः
१११९०४५१ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः
१११९०४५३ किं वर्णितेन बहुना लक्षणं गुणदोषयोः
१११९०४५५ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः
११२०००१० श्रीउद्धव उवाच
११२०००११ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते
११२०००१३ अवेक्षतेऽरविण्डाक्ष गुणं दोषं च कर्मणाम्
११२०००२१ वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम्
११२०००२३ द्रव्यदेशवयःकालान्स्वर्गं नरकमेव च
११२०००३१ गुणदोषभिदादृष्टिमन्तरेण वचस्तव
११२०००३३ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम्
११२०००४१ पितृदेवमनुष्यानां वेदश्चक्षुस्तवेश्वर
११२०००४३ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि

११२०००५१ गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः
११२०००५३ निगमेनापवादश्च भिदाया इति ह भ्रमः
११२०००६० श्रीभगवानुवाच
११२०००६१ योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया
११२०००६३ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्
११२०००७१ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु
११२०००७३ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्
११२०००८१ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्
११२०००८३ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः
११२०००९१ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता
११२०००९३ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते
११२००१०१ स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव
११२००१०३ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत्
११२००१११ अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः
११२००११३ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया
११२००१२१ स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा
११२००१२३ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम्
११२००१३१ न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः
११२००१३३ नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति
११२००१४१ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः
११२००१४३ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम्
११२००१५१ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम्
११२००१५३ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः
११२००१६१ अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः
११२००१६३ मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति
११२००१७१ नृदेहमाद्यं सुलभं सुदुर्लभं
११२००१७२ प्लवं सुकल्पं गुरुकर्णधारम्
११२००१७३ मयानुकूलेन नभस्वतेरितं
११२००१७४ पुमान्भवाब्धिं न तरेत्स आत्महा
११२००१८१ यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः
११२००१८३ अभ्यासेनात्मनो योगी धारयेदचलं मनः

११२००१९१ धार्यमाणं मनो यर्हि भ्राम्यदश्वनवस्थितम्
११२००१९३ अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत्
११२००२०१ मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः
११२००२०३ सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत्
११२००२११ एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः
११२००२१३ हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतो मुहुः
११२००२२१ साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः
११२००२२३ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति
११२००२३१ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः
११२००२३३ मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया
११२००२४१ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया
११२००२४३ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः
११२००२५१ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम्
११२००२५३ योगेनैव दहेदंहो नान्यत्तत्र कदाचन
११२००२६१ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः
११२००२६३ कर्मणां जात्यशुद्धानामनेन नियमः कृतः
११२००२६५ गुणदोषविधानेन सङ्गानां त्याजनेच्छया
११२००२७१ जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु
११२००२७३ वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः
११२००२८१ ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः
११२००२८३ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन्
११२००२९१ प्रोक्तेन भक्तियोगेन भजतो मासकृन्मुनेः
११२००२९३ कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते
११२००३०१ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः
११२००३०३ क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि
११२००३११ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः
११२००३१३ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह
११२००३२१ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्
११२००३२३ योगेन दानधर्मेण श्रेयोभिरितरैरपि
११२००३३१ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा
११२००३३३ स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति

११२००३४१ न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम
११२००३४३ वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम्
११२००३५१ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम्
११२००३५३ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत्
११२००३६१ न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः
११२००३६३ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्
११२००३७१ एवमेतान्मया दिष्टाननुतिष्ठन्ति मे पथः
११२००३७३ क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः
११२१००१० श्रीभगवानुवाच
११२१००११ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान्
११२१००१३ क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते
११२१००२१ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः
११२१००२३ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः
११२१००३१ शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु
११२१००३३ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ
११२१००३५ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ
११२१००४१ दर्शितोऽयं मयाचारो
११२१००४२ धर्ममुद्वहतां धुरम्
११२१००५१ भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्चधातवः
११२१००५३ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः
११२१००६१ वेदेन नामरूपाणि विषमाणि समेष्वपि
११२१००६३ धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये
११२१००७१ देशकालादिभावानां वस्तूनां मम सत्तम
११२१००७३ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम्
११२१००८१ अकृष्णसारो देशानामब्रह्मण्योऽसुचिर्भवेत्
११२१००८३ कृष्णसारोऽप्यसौवीर कीकटासंस्कृतेरिणम्
११२१००९१ कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा
११२१००९३ यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः
११२१०१०१ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च
११२१०१०३ संस्कारेणाथ कालेन महत्वाल्पतयाथ वा
११२१०१११ शक्त्याशक्त्याथ वा बुद्ध्या समृद्ध्या च यदात्मने

११२१०११३ अघं कुर्वन्ति हि यथा देशावस्थानुसारतः
११२१०१२१ धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम्
११२१०१२३ कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः
११२१०१३१ अमेध्यलिप्तं यद्येन गन्धलेपं व्यपोहति
११२१०१३३ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते
११२१०१४१ स्नानदानतपोऽवस्था वीर्यसंस्कारकर्मभिः
११२१०१४३ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः
११२१०१५१ मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम्
११२१०१५३ धर्मः सम्पद्यते षड्भिरधर्मस्तु विपर्ययः
११२१०१६१ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः
११२१०१६३ गुणदोषार्थनियमस्तद्भिदामेव बाधते
११२१०१७१ समानकर्माचरणं पतितानां न पातकम्
११२१०१७३ औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः
११२१०१८१ यतो यतो निवर्तेत विमुच्येत ततस्ततः
११२१०१८३ एष धर्मो नृणां क्षेमः शोकमोहभयापहः
११२१०१९१ विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत्
११२१०१९३ सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम्
११२१०२०१ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते
११२१०२०३ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम्
११२१०२११ तया विरहितः साधो जन्तुः शून्याय कल्पते
११२१०२१३ ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च
११२१०२२१ विषयाभिनिवेशेन नात्मानं वेद नापरम्
११२१०२२३ वृक्ष जीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन्
११२१०२३१ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्
११२१०२३३ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम्
११२१०२४१ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च
११२१०२४३ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु
११२१०२५१ नतानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि
११२१०२५३ कथं युञ्ज्यात्पुनस्तेषु तांस्तमो विशतो बुधः
११२१०२६१ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः
११२१०२६३ फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि

११२१०२७१ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः
११२१०२७३ अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते
११२१०२८१ न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः
११२१०२८३ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः
११२१०२९१ ते मे मतमविज्ञाय परोक्षं विषयात्मकाः
११२१०२९३ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना
११२१०३०१ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया
११२१०३०३ यजन्ते देवता यज्ञैः पितृभूतपतीन्खलाः
११२१०३११ स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम्
११२१०३१३ आशिषो हृदि सङ्कल्प्य त्यजन्त्यर्थान्यथा वणिक्
११२१०३२१ रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः
११२१०३२३ उपासत इन्द्रमुख्यान्देवादीन्न यथैव माम्
११२१०३३१ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि
११२१०३३३ तस्यान्त इह भूयास्म महाशाला महाकुलाः
११२१०३४१ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम्
११२१०३४३ मानिनां चातिलुब्धानां मद्वार्तापि न रोचते
११२१०३५१ वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे
११२१०३५३ परोक्षवादा ऋषयः परोक्षं मम च प्रियम्
११२१०३६१ शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्
११२१०३६३ अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत्
११२१०३७१ मयोपबृंहितं भूम्ना ब्रह्मणानन्तशक्तिना
११२१०३७३ भूतेषु घोषरूपेण विसेषूर्णेव लक्ष्यते
११२१०३८१ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात्
११२१०३८३ आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा
११२१०३९१ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः
११२१०३९३ ओंकाराद्व्यञ्जितस्पर्श स्वरोष्मान्तस्थभूषिताम्
११२१०४०१ विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः
११२१०४०३ अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम्
११२१०४११ गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च
११२१०४१३ त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट्
११२१०४२१ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्

११२१०४२३ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन
११२१०४३१ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम्
११२१०४३३ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम्
११२१०४३५ मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति
११२२००१० श्रीउद्धव उवाच
११२२००११ कति तत्त्वानि विश्वेश सङ्ख्यातान्यृषिभिः प्रभो
११२२००१३ नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम
११२२००२१ केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिं
११२२००२३ सप्तैके नव षट्केचिच्चत्वार्येकादशापरे
११२२००२५ केचित्सप्तदश प्राहुः षोडशैके त्रयोदश
११२२००३१ एतावत्त्वं हि सङ्ख्यानामृषयो यद्विवक्षया
११२२००३३ गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि
११२२००४० श्रीभगवानुवाच
११२२००४१ युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा
११२२००४३ मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम्
११२२००५१ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा
११२२००५३ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः
११२२००६१ यासां व्यतिकरादासीद्विकल्पो वदतां पदम्
११२२००६३ प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति
११२२००७१ परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ
११२२००७३ पौर्वापर्यप्रसङ्ख्यानं यथा वक्तुर्विवक्षितम्
११२२००८१ एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च
११२२००८३ पूर्वस्मिन्वा परस्मिन्वा तत्त्वे तत्त्वानि सर्वशः
११२२००९१ पौर्वापर्यमतोऽमीषां प्रसङ्ख्यानमभीप्सताम्
११२२००९३ यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात्
११२२०१०१ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम्
११२२०१०३ स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत्
११२२०१११ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि
११२२०११३ तदन्यकल्पनापार्था ज्ञानं च प्रकृतेर्गुणः
११२२०१२१ प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः
११२२०१२३ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः

११२२०१३१ सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते
११२२०१३३ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च
११२२०१४१ पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः
११२२०१४३ ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव
११२२०१५१ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः
११२२०१५३ वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः
११२२०१६१ शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः
११२२०१६३ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः
११२२०१७१ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी
११२२०१७३ सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते
११२२०१८१ व्यक्तादायो विकुर्वाणा धातवः पुरुषेक्षया
११२२०१८३ लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात्
११२२०१९१ सप्तैव धातव इति तत्रार्थाः पञ्च खादयः
११२२०१९३ ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः
११२२०२०१ षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्
११२२०२०३ तैर्युइत आत्मसम्भूतैः सृष्ट्वेदं समपाविशत्
११२२०२११ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः
११२२०२१३ जातानि तैरिदं जातं जन्मावयविनः खलु
११२२०२२१ सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च
११२२०२२३ पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः
११२२०२३१ तद्वत्षोडशसङ्ख्याने आत्मैव मन उच्यते
११२२०२३३ भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश
११२२०२४१ एकादशत्व आत्मासौ महाभूतेन्द्रियाणि च
११२२०२४३ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ
११२२०२५१ इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम्
११२२०२५३ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम्
११२२०२६० श्रीउद्धव उवाच
११२२०२६१ प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ
११२२०२६३ अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः
११२२०२६५ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि
११२२०२७१ एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि

११२२०२७३ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः
११२२०२८१ त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः
११२२०२८३ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः
११२२०२९० श्रीभगवानुवाच
११२२०२९१ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ
११२२०२९३ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः
११२२०३०१ ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते
११२२०३०३ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत्
११२२०३११ दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे
११२२०३१३ आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः
११२२०३२१ एवं त्वगादि श्रवणादि चक्षुर्
११२२०३२२ जिह्वादि नासादि च चित्तयुक्तम्
११२२०३३१ योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः
११२२०३३३ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च
११२२०३४१ आत्मापरिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः
११२२०३४३ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात्
११२२०३५० श्रीउद्धव उवाच
११२२०३५१ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो
११२२०३५३ उच्चावचान्यथा देहान्गृह्णन्ति विसृजन्ति च
११२२०३६१ तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः
११२२०३६३ न ह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः
११२२०३७० श्रीभगवानुवाच
११२२०३७१ मनः कर्ममयं णॄणामिन्द्रियैः पञ्चभिर्युतम्
११२२०३७३ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते
११२२०३८१ ध्यायन्मनोऽनु विषयान्दृष्टान्वानुश्रुतानथ
११२२०३८३ उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनु शाम्यति
११२२०३९१ विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः
११२२०३९३ जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः
११२२०४०१ जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद
११२२०४०३ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः
११२२०४११ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ

११२२०४१३ तत्र पूर्वमिवात्मानमपूर्वम्चानुपश्यति
११२२०४२१ इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि
११२२०४२३ बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा
११२२०४३१ नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च
११२२०४३३ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते
११२२०४४१ यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः
११२२०४४३ तथैव सर्वभूतानां वयोऽवस्थादयः कृताः
११२२०४५१ सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम्
११२२०४५३ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम्
११२२०४६१ मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान्
११२२०४६३ म्रियते वामरो भ्रान्त्या यथाग्निर्दारुसंयुतः
११२२०४७१ निषेकगर्भजन्मानि बाल्यकौमारयौवनम्
११२२०४७३ वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव
११२२०४८१ एता मनोरथमयीर्हान्यस्योच्चावचास्तनूः
११२२०४८३ गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च
११२२०४९१ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ
११२२०४९३ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः
११२२०५०१ तरोर्बीजविपाकाभ्यां यो विद्वाञ्जन्मसंयमौ
११२२०५०३ तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक्
११२२०५११ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान्
११२२०५१३ तत्त्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते
११२२०५२१ सत्त्वसङ्गादृषीन्देवान्रजसासुरमानुषान्
११२२०५२३ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः
११२२०५३१ नृत्यतो गायतः पश्यन्यथैवानुकरोति तान्
११२२०५३३ एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते
११२२०५४१ यथाम्भसा प्रचलता तरवोऽपि चला इव
११२२०५४३ चक्षुसा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः
११२२०५५१ यथा मनोरथधियो विषय्ानुभवो मृषा
११२२०५५३ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः
११२२०५६१ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते
११२२०५६३ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा

११२२०५७१ तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः
११२२०५७३ आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम्
११२२०५८१ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथ वा
११२२०५८३ ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः
११२२०५९१ निष्ठ्युतो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः
११२२०५९३ श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत्
११२२०६०० श्रीउद्धव उवाच
११२२०६०१ यथैवमनुबुध्येयं
११२२०६०२ वद नो वदतां वर
११२२०६११ सुदुःषहमिमं मन्य आत्मन्यसदतिक्रमम्
११२२०६१३ विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी
११२२०६१५ ऋते त्वद्धर्मनिरतान्शान्तांस्ते चरणालयान्
११२३००१० श्रीबादरायणिरुवाच
११२३००११ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः
११२३००१३ सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः
११२३००२० श्रीभगवानुवाच
११२३००२१ बार्हस्पत्य स नास्त्यत्र साधुर्वै दुर्जनेरितैः
११२३००२३ दुरक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः
११२३००३१ न तथा तप्यते विद्धः पुमान्बाणैस्तु मर्मगैः
११२३००३३ यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः
११२३००४१ कथयन्ति महत्पुण्यमितिहासमिहोद्धव
११२३००४३ तमहं वर्णयिष्यामि निबोध सुसमाहितः
११२३००५१ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः
११२३००५३ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम्
११२३००६१ अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया
११२३००६३ वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः
११२३००७१ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः
११२३००७३ शून्यावसथ आत्मापि काले कामैरनर्चितः
११२३००८१ दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः
११२३००८३ दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम्
११२३००९१ तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः

११२३००९३ धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः
११२३०१०१ तदवध्यानविस्रस्त पुण्यस्कन्धस्य भूरिद
११२३०१०३ अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः
११२३०१११ ज्ञात्यो जगृहुः किञ्चित्किञ्चिद्दस्यव उद्धव
११२३०११३ दैवतः कालतः किञ्चिद्ब्रह्मबन्धोर्नृपार्थिवात्
११२३०१२१ स एवं द्रविणे नष्टे धर्मकामविवर्जितः
११२३०१२३ उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम्
११२३०१३१ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः
११२३०१३३ खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत्
११२३०१४१ स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः
११२३०१४३ न धर्माय न कामाय यस्यार्थायास ईदृशः
११२३०१५१ प्रायेणाथाः कदर्याणां न सुखाय कदाचन
११२३०१५३ इह चात्मोपतापाय मृतस्य नरकाय च
११२३०१६१ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः
११२३०१६३ लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो रूपमिवेप्सितम्
११२३०१७१ अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये
११२३०१७३ नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम्
११२३०१८१ स्तेयं हिंसानृतं दम्भः कामः क्रोधः स्मयो मदः
११२३०१८३ भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च
११२३०१९१ एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम्
११२३०१९३ तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत्
११२३०२०१ भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा
११२३०२०३ एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः
११२३०२११ अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः
११२३०२१३ त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम्
११२३०२२१ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम्
११२३०२२३ तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम्
११२३०२३१ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान्
११२३०२३३ द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि
११२३०२४१ देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च भागिनः
११२३०२४३ असंविभज्य चात्मानं यक्षवित्तः पतत्यधः

११२३०२५१ व्यर्थयार्थेहया वित्तं प्रमत्तस्य वयो बलम्
११२३०२५३ कुशला येन सिध्यन्ति जरठः किं नु साधये
११२३०२६१ कस्मात्सङ्क्लिश्यते विद्वान्व्यर्थयार्थेहयासकृत्
११२३०२६३ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः
११२३०२७१ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत
११२३०२७३ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः
११२३०२८१ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः
११२३०२८३ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः
११२३०२९१ सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः
११२३०२९३ अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि
११२३०३०१ तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः
११२३०३०३ मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत्
११२३०३१० श्रीभगवानुवाच
११२३०३११ इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः
११२३०३१३ उन्मुच्य हृदयग्रन्थीन्शान्तो भिक्षुरभून्मुनिः
११२३०३२१ स चचार महीमेतां संयतात्मेन्द्रियानिलः
११२३०३२३ भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत्
११२३०३३१ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः
११२३०३३३ दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः
११२३०३४१ केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम्
११२३०३४३ पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन
११२३०३४५ प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः
११२३०३५१ अन्नं च भैक्ष्यसम्पन्नं भुञ्जानस्य सरित्तटे
११२३०३५३ मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि
११२३०३६१ यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत्
११२३०३६३ तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः
११२३०३६५ बध्नन्ति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति
११२३०३७१ क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः
११२३०३७३ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः
११२३०३८१ अहो एष महासारो धृतिमान्गिरिराडिव
११२३०३८३ मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः

११२३०३९१ इत्येके विहसन्त्येनमेके दुर्वातयन्ति च
११२३०३९३ तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम्
११२३०४०१ एवं स भौतिकं दुःखं दैविकं दैहिकं च यत्
११२३०४०३ भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत
११२३०४११ परिभूत इमां गाथामगायत नराधमैः
११२३०४१३ पातयद्भिः स्व धर्मस्थो धृतिमास्थाय सात्त्विकीम्
११२३०४२० द्विज उवाच
११२३०४२१ नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः
११२३०४२३ मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत्
११२३०४३१ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि
११२३०४३३ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति
११२३०४४१ अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे
११२३०४४३ मनः स्वलिङ्गं परिगृह्य कामाञ्जुषन्निबद्धो गुणसङ्गतोऽसौ
११२३०४५१ दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि
११२३०४५३ सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः
११२३०४६१ समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम्
११२३०४६३ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः
११२३०४७१ मनोवशेऽन्ये ह्यभवन्स्म देवा मनश्च नान्यस्य वशं समेति
११२३०४७३ भीष्मो हि देवः सहसः सहीयान्युञ्ज्याद्वशे तं स हि देवदेवः
११२३०४८१ तम्दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित्
११२३०४८३ कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः
११२३०४९१ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः
११२३०४९३ एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति
११२३०५०१ जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत्
११२३०५०३ जिह्वां क्वचित्सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत्
११२३०५११ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत्
११२३०५१३ यदङ्गमङ्गेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे
११२३०५२१ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः
११२३०५२३ न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम्
११२३०५३१ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै
११२३०५३३ ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः

११२३०५४१ कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे
११२३०५४३ देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम्
११२३०५५१ कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ
११२३०५५३ नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मै न परस्य द्वन्द्वम्
११२३०५६१ न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य
११२३०५६३ यथाहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः
११२३०५७१ एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः
११२३०५७३ अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव
११२३०५८० श्रीभगवानुवाच
११२३०५८१ निर्विद्य नष्टद्रविणे गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम्
११२३०५८३ निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं मुनिराह गाथाम्
११२३०५९१ सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः
११२३०५९३ मित्रोदासीनरिपवः संसारस्तमसः कृतः
११२३०६०१ तस्मात्सर्वात्मना तात निगृहाण मनो धिया
११२३०६०३ मय्यावेशितया युक्त एतावान्योगसङ्ग्रहः
११२३०६११ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः
११२३०६१३ धारयञ्छ्रावयञ्छृण्वन्द्वन्द्वैर्नैवाभिभूयते
११२४००१० श्रीभगवानुवाच
११२४००११ अथ ते सम्प्रवक्ष्यामि साङ्ख्यं पूर्वैर्विनिश्चितम्
११२४००१३ यद्विज्ञाय पुमान्सद्यो जह्याद्वैकल्पिकं भ्रमम्
११२४००२१ आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम्
११२४००२३ यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे
११२४००३१ तन्मायाफलरूपेण केवलं निर्विकल्पितम्
११२४००३३ वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत्
११२४००४१ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका
११२४००४३ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते
११२४००५१ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः
११२४००५३ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च
११२४००६१ तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः
११२४००६३ ततो विकुर्वतो जातो योऽहङ्कारो विमोहनः
११२४००७१ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत्

११२४००७३ तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः
११२४००८१ अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च
११२४००८३ तैजसाद्देवता आसन्नेकादश च वैकृतात्
११२४००९१ मया सञ्चोदिता भावाः सर्वे संहत्यकारिणः
११२४००९३ अण्डमुत्पादयामासुर्ममायतनमुत्तमम्
११२४०१०१ तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ
११२४०१०३ मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः
११२४०१११ सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात्
११२४०११३ लोकान्सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा
११२४०१२१ देवानामोक आसीत्स्वर्भूतानां च भुवः पदम्
११२४०१२३ मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम्
११२४०१३१ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः
११२४०१३३ त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम्
११२४०१४१ योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः
११२४०१४३ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः
११२४०१५१ मया कालात्मना धात्रा कर्मयुक्तमिदं जगत्
११२४०१५३ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति
११२४०१६१ अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति
११२४०१६३ सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च
११२४०१७१ यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन्
११२४०१७३ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः
११२४०१८१ यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम्
११२४०१८३ आदिरन्तो यदा यस्य तत्सत्यमभिधीयते
११२४०१९१ प्रकृतिर्यस्योपादानमाधारः पुरुषः परः
११२४०१९३ सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम्
११२४०२०१ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः
११२४०२०३ महान्गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम्
११२४०२११ विराण्मयासाद्यमानो लोककल्पविकल्पकः
११२४०२१३ पञ्चत्वाय विशेषाय कल्पते भुवनैः सह
११२४०२२१ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते
११२४०२२३ धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते

११२४०२३१ अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे
११२४०२३३ लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते
११२४०२४१ रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे
११२४०२४३ अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु
११२४०२५१ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे
११२४०२५३ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः
११२४०२६१ स लीयते महान्स्वेषु गुणेसु गुणवत्तमः
११२४०२६३ तेऽव्यक्ते सम्प्रलीयन्ते तत्काले लीयतेऽव्यये
११२४०२७१ कालो मायामये जीवे जीव आत्मनि मय्यजे
११२४०२७३ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः
११२४०२८१ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः
११२४०२८३ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः
११२४०२९१ एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः
११२४०२९३ प्रतिलोमानुलोमाभ्यां परावरदृश मया
११२५००१० श्रीभगवानुवाच
११२५००११ गुणानामसम्मिश्राणां पुमान्येन यथा भवेत्
११२५००१३ तन्मे पुरुषवर्येदमुपधारय शंसतः
११२५००२१ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः
११२५००२३ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः
११२५००३१ काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम्
११२५००३३ मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः
११२५००४१ क्रोधो लोभोऽनृतं हिंसा याञ्चा दम्भः क्लमः कलिः
११२५००४३ शोकमोहौ विषादार्ती निद्राशा भीरनुद्यमः
११२५००५१ सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः
११२५००५३ वृत्तयो वर्णितप्रायाः सन्निपातमथो श‍ृणु
११२५००६१ सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः
११२५००६३ व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः
११२५००७१ धर्मे चार्थे च कामे च यदासौ परिनिष्ठितः
११२५००७३ गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः
११२५००८१ प्रवृत्तिलक्षणे निष्ठा पुमान्यर्हि गृहाश्रमे
११२५००८३ स्वधर्मे चानु तिष्ठेत गुणानां समितिर्हि सा

११२५००९१ पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः
११२५००९३ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम्
११२५०१०१ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः
११२५०१०३ तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा
११२५०१११ यदा आशिष आशास्य मां भजेत स्वकर्मभिः
११२५०११३ तं रजःप्रकृतिं विद्याथिंसामाशास्य तामसम्
११२५०१२१ सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे
११२५०१२३ चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते
११२५०१३१ यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम्
११२५०१३३ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान्
११२५०१४१ यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम्
११२५०१४३ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया
११२५०१५१ यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम्
११२५०१५३ युज्येत शोकमोहाभ्यां निद्रया हिंसयाशया
११२५०१६१ यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः
११२५०१६३ देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम्
११२५०१७१ विकुर्वन्क्रियया चाधीरनिवृत्तिश्च चेतसाम्
११२५०१७३ गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय
११२५०१८१ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम्
११२५०१८३ मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय
११२५०१९१ एधमाने गुणे सत्त्वे देवानां बलमेधते
११२५०१९३ असुराणां च रजसि तमस्युद्धव रक्षसाम्
११२५०२०१ सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्
११२५०२०३ प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततम्
११२५०२११ उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः
११२५०२१३ तमसाधोऽध आमुख्याद्रजसान्तरचारिणः
११२५०२२१ सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः
११२५०२२३ तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः
११२५०२३१ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत्
११२५०२३३ राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम्
११२५०२४१ कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत्

११२५०२४३ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम्
११२५०२५१ वनं तु सात्त्विको वासो ग्रामो राजस उच्यते
११२५०२५३ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम्
११२५०२६१ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः
११२५०२६३ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः
११२५०२७१ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी
११२५०२७३ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा
११२५०२८१ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम्
११२५०२८३ राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि
११२५०२९१ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम्
११२५०२९३ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम्
११२५०३०१ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः
११२५०३०३ श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि
११२५०३११ सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः
११२५०३१३ दृष्टं श्रुतं अनुध्यातं बुद्ध्या वा पुरुषर्षभ
११२५०३२१ एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः
११२५०३२३ येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः
११२५०३२५ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते
११२५०३३१ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम्
११२५०३३३ गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः
११२५०३४१ निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः
११२५०३४३ रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः
११२५०३५१ सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः
११२५०३५३ सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम्
११२५०३६१ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसम्भवैः
११२५०३६३ मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत्
११२६००१० श्रीभगवानुवाच
११२६००११ मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः
११२६००१३ आनन्दं परमात्मानमात्मस्थं समुपैति माम्
११२६००२१ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया
११२६००२३ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः

११२६००२५ वर्तमानोऽपि न पुमान्युज्यतेऽवस्तुभिर्गुणैः
११२६००३१ सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित्
११२६००३३ तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत्
११२६००४१ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः
११२६००४३ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे
११२६००५१ त्यक्त्वात्मानं व्रयन्तीं तां नग्न उन्मत्तवन्नृपः
११२६००५३ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः
११२६००६१ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः
११२६००६३ न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः
११२६००७० ऐल उवाच
११२६००७१ अहो मे मोहविस्तारः कामकश्मलचेतसः
११२६००७३ देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः
११२६००८१ नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया
११२६००८३ मूषितो वर्षपूगानां बताहानि गतान्युत
११२६००९१ अहो मे आत्मसम्मोहो येनात्मा योषितां कृतः
११२६००९३ क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः
११२६०१०१ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम्
११२६०१०३ यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन्
११२६०१११ कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा
११२६०११३ योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः
११२६०१२१ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा
११२६०१२३ किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम्
११२६०१३१ स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम्
११२६०१३३ योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः
११२६०१४१ सेवतो वर्षपूगान्मे उर्वश्या अधरासवम्
११२६०१४३ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा
११२६०१५१ पुंश्चल्यापहृतं चित्तं को न्वन्यो मोचितुं प्रभुः
११२६०१५३ आत्मारामेश्वरमृते भगवन्तमधोक्षजम्
११२६०१६१ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः
११२६०१६३ मनोगतो महामोहो नापयात्यजितात्मनः
११२६०१७१ किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः

११२६०१७३ द्रष्टुः स्वरूपाविदुषो योऽहं यदजितेन्द्रियः
११२६०१८१ क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः
११२६०१८३ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः
११२६०१९१ पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः
११२६०१९३ किमात्मनः किं सुहृदामिति यो नावसीयते
११२६०२०१ तस्मिन्कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते
११२६०२०३ अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः
११२६०२११ त्वङ्मांसरुधिरस्नायु मेदोमज्जास्थिसंहतौ
११२६०२१३ विण्मूत्रपूये रमतां कृमीणां कियदन्तरम्
११२६०२२१ अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित्
११२६०२२३ विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा
११२६०२३१ अदृष्टादश्रुताद्भावान्न भाव उपजायते
११२६०२३३ असम्प्रयुञ्जतः प्राणान्शाम्यति स्तिमितं मनः
११२६०२४१ तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः
११२६०२४३ विदुषां चाप्यविस्रब्धः षड्वर्गः किमु मादृशाम्
११२६०२५० श्रीभगवानुवाच
११२६०२५१ एवं प्रगायन्नृपदेवदेवः स उर्वशीलोकमथो विहाय
११२६०२५३ आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञाअनविधूतमोहः
११२६०२६१ ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान्
११२६०२६३ सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः
११२६०२७१ सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः
११२६०२७३ निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः
११२६०२८१ तेषु नित्यं महाभाग महाभागेषु मत्कथाः
११२६०२८३ सम्भवन्ति हि ता नृणां जुषतां प्रपुनन्त्यघम्
११२६०२९१ ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः
११२६०२९३ मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि
११२६०३०१ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते
११२६०३०३ मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि
११२६०३११ यथोपश्रयमाणस्य भगवन्तं विभावसुम्
११२६०३१३ शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा
११२६०३२१ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायणम्

११२६०३२३ सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम्
११२६०३३१ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम्
११२६०३३३ धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम्
११२६०३४१ सन्तो दिशन्ति चक्षूंसि बहिरर्कः समुत्थितः
११२६०३४३ देवता बान्धवाः सन्तः सन्त आत्माहमेव च
११२६०३५१ वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिष्पृहः
११२६०३५३ मुक्तसङ्गो महीमेतामात्मारामश्चचार ह
११२७००१० श्रीउद्धव उवाच
११२७००११ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो
११२७००१३ यस्मात्त्वां ये यथार्चन्ति सात्वताः सात्वतर्षभ
११२७००२१ एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम्
११२७००२३ नारदो भगवान्व्यास आचार्योऽङ्गिरसः सुतः
११२७००३१ निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः
११२७००३३ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान्भवः
११२७००४१ एतद्वै सर्ववर्णानामाश्रमाणां च सम्मतम्
११२७००४३ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद
११२७००५१ एतत्कमलपत्राक्ष कर्मबन्धविमोचनम्
११२७००५३ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर
११२७००६० श्रीभगवानुवाच
११२७००६१ न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव
११२७००६३ सङ्क्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः
११२७००७१ वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः
११२७००७३ त्रयाणामीप्सितेनैव विधिना मां समर्चरेत्
११२७००८१ यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः
११२७००८३ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे
११२७००९१ अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजः
११२७००९३ द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया
११२७०१०१ पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये
११२७०१०३ उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना
११२७०१११ सन्ध्योपास्त्यादिकर्माणि वेदेनाचोदितानि मे
११२७०११३ पूजां तैः कल्पयेत्सम्यक् सङ्कल्पः कर्मपावनीम्

११२७०१२१ शैली दारुमयी लौही लेप्या लेख्या च सैकती
११२७०१२३ मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता
११२७०१३१ चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम्
११२७०१३३ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने
११२७०१४१ अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम्
११२७०१४३ स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम्
११२७०१५१ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः
११२७०१५३ भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि
११२७०१६१ स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव
११२७०१६३ स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः
११२७०१७१ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः
११२७०१७३ श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि
११२७०१८१ भूर्यप्यभक्तोपाहृतं न मे तोषाय कल्पते
११२७०१८३ गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः
११२७०१९१ शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः
११२७०१९३ आसीनः प्रागुदग्वार्चेदर्चायां त्वथ सम्मुखः
११२७०२०१ कृतन्यासः कृतन्यासां मदर्चां पाणिनामृजेत्
११२७०२०३ कलशं प्रोक्षणीयं च यथावदुपसाधयेत्
११२७०२११ तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च
११२७०२१३ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत्
११२७०२२१ पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि देशिकः
११२७०२२३ हृदा शीर्ष्णाथ शिखया गायत्र्या चाभिमन्त्रयेत्
११२७०२३१ पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम
११२७०२३३ अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम्
११२७०२४१ तयात्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः
११२७०२४३ आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत्
११२७०२५१ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत्
११२७०२५३ धर्मादिभिश्च नवभिः कल्पयित्वासनं मम
११२७०२६१ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम्
११२७०२६३ उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये
११२७०२७१ सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान्

११२७०२७३ मुषलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत्
११२७०२८१ नन्दं सुनन्दं गरुडं प्रचण्डं चण्डं एव च
११२७०२८३ महाबलं बलं चैव कुमुदं कमुदेक्षणम्
११२७०२९१ दुर्गां विनायकं व्यासं विष्वक्षेनं गुरून्सुरान्
११२७०२९३ स्वे स्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः
११२७०३०१ चन्दनोशीरकर्पूर कुङ्कुमागुरुवासितैः
११२७०३०३ सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति
११२७०३११ स्वर्णघर्मानुवाकेन महापुरुषविद्यया
११२७०३१३ पौरुषेणापि सूक्तेन सामभी राजनादिभिः
११२७०३२१ वस्त्रोपवीताभरण पत्रस्रग्गन्धलेपनैः
११२७०३२३ अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितम्
११२७०३३१ पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान्
११२७०३३३ धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः
११२७०३४१ गुडपायससर्पींषि शष्कुल्यापूपमोदकान्
११२७०३४३ संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत्
११२७०३५१ अभ्यङ्गोन्मर्दनादर्श दन्तधावाभिषेचनम्
११२७०३५३ अन्नाद्यगीतनृत्यानि पर्वणि स्युरुतान्वहम्
११२७०३६१ विधिना विहिते कुण्डे मेखलागर्तवेदिभिः
११२७०३६३ अग्निमाधाय परितः समूहेत्पाणिनोदितम्
११२७०३७१ परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि
११२७०३७३ प्रोक्षण्यासाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम्
११२७०३८१ तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः
११२७०३८३ लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम्
११२७०३९१ स्फुरत्किरीटकटक कटिसूत्रवराङ्गदम्
११२७०३९३ श्रीवत्सवक्षसं भ्राजत् कौस्तुभं वनमालिनम्
११२७०४०१ ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च
११२७०४१३ प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः
११२७०४११ जुहुयान्मूलमन्त्रेण षोडशर्चावदानतः
११२७०४१३ धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टिकृतं बुधः
११२७०४२१ अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत्
११२७०४२३ मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम्

११२७०४३१ दत्त्वाचमनमुच्छेषं विष्वक्षेनाय कल्पयेत्
११२७०४३३ मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत्
११२७०४४१ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम
११२७०४४३ मत्कथाः श्रावयन्शृण्वन्मुहूर्तं क्षणिको भवेत्
११२७०४५१ स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि
११२७०४५३ स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत्
११२७०४६१ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्
११२७०४६३ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्
११२७०४७१ इति शेषां मया दत्तां शिरस्याधाय सादरम्
११२७०४७३ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः
११२७०४८१ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत्
११२७०४८३ सर्वभूतेष्वात्मनि च सर्वात्माहमवस्थितः
११२७०४९१ एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः
११२७०४९३ अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम्
११२७०५०१ मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद्दृढम्
११२७०५०३ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान्
११२७०५११ पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम्
११२७०५१३ क्षेत्रापणपुरग्रामान्दत्त्वा मत्सार्ष्टितामियात्
११२७०५२१ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्
११२७०५२३ पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात्
११२७०५३१ मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति
११२७०५३३ भक्तियोगं स लभत एवं यः पूजयेत माम्
११२७०५४१ यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः
११२७०५४३ वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम्
११२७०५५१ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च
११२७०५५३ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम्
११२८००१० श्रीभगवानुवाच
११२८००११ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत्
११२८००१३ विश्वमेकामकं पश्यन्प्रकृत्या पुरुषेण च
११२८००२१ परस्वभावकर्माणि यः प्रशंसति निन्दति
११२८००२३ स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः

११२८००३१ तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः

११२८००३३ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक्पुमान्

११२८००४१ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत्

११२८००४३ वाचोदितं तदनृतं मनसा ध्यातमेव च

११२८००५१ छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः

११२८००५३ एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम्

११२८००६१ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः

११२८००६३ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः

११२८००७१ तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः

११२८००७३ निरूपितेऽयं त्रिविधा निर्मूल भातिरात्मनि

११२८००७५ इदं गुणमयं विद्धि त्रिविधं मायया कृतम्

११२८००८१ एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम्

११२८००८३ न निन्दति न च स्तौति लोके चरति सूर्यवत्

११२८००९१ प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा

११२८००९३ आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह

११२८०१०० श्रीउद्धव उवाच

११२८०१०१ नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः

११२८०१०३ अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते

११२८०१११ आत्माव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः

११२८०११३ अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः

११२८०१२० श्रीभगवानुवाच

११२८०१२१ यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम्

११२८०१२३ संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः

११२८०१३१ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते

११२८०१३३ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा

११२८०१४१ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत्

११२८०१४३ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते

११२८०१५१ शोकहर्षभयक्रोध लोभमोहस्पृहादयः

११२८०१५३ अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः

११२८०१६१ देहेन्द्रियप्राणमनोऽभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः

११२८०१६३ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः

११२८०१७१ अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म
११२८०१७३ ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः
११२८०१८१ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम्
११२८०१८३ आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये
११२८०१९१ यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य
११२८०१९३ तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्
११२८०२०१ विज्ञानमेतत्त्रियवस्थमङ्ग गुणत्रयं कारणकर्यकर्तृ
११२८०२०३ समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम्
११२८०२११ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम्
११२८०२१३ भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा
११२८०२२१ अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एसः
११२८०२२३ ब्रह्म स्वयं ज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम्
११२८०२३१ एवं स्फुतं ब्रह्मविवेकहेतुभिः
११२८०२३२ परापवादेन विशारदेन
११२८०२३३ छित्त्वात्मसन्देहमुपारमेत
११२८०२३४ स्वानन्दतुष्टोऽखिलकामुकेभ्यः
११२८०२४१ नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुर्जलम्हुताशः
११२८०२४३ मनोऽन्नमात्रं धिषणा च सत्त्वमहङ्कृतिः खं क्षितिरर्थसाम्यम्
११२८०२५१ समाहितैः कः करणैर्गुणात्मभिर्
११२८०२५२ गुणो भवेन्मत्सुविविक्तधाम्नः
११२८०२५३ विक्षिप्यमाणैरुत किं नु दूषणं
११२८०२५४ घनैरुपेतैर्विगतै रवेः किम्
११२८०२६१ यथा नभो वाय्वनलाम्बुभूगुणैर्
११२८०२६२ गतागतैर्वर्तुगुणैर्न सज्जते
११२८०२६३ तथाक्षरं सत्त्वरजस्तमोमलैर्
११२८०२६४ अहंमतेः संसृतिहेतुभिः परम्
११२८०२७१ तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत्
११२८०२७३ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः
११२८०२८१ यथामयोऽसाधु चिकित्सितो नृणां पुनः पुनः सन्तुदति प्ररोहन्
११२८०२८३ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम्
११२८०२९१ कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः

११२८०२९३ ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम्
११२८०३०१ करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपतात्
११२८०३०३ न तत्र विद्वान्प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या
११२८०३११ तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम्
११२८०३१३ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद
११२८०३२१ यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत्
११२८०३२३ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम्
११२८०३३१ पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग
११२८०३३३ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा
११२८०३४१ यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते
११२८०३४३ एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः
११२८०३५१ एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः
११२८०३५३ एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति
११२८०३६१ एतावानात्मसम्मोहो यद्विकल्पस्तु केवले
११२८०३६३ आत्मनृते स्वमात्मानमवलम्बो न यस्य हि
११२८०३७१ यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम्
११२८०३७३ व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम्
११२८०३८१ योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः
११२८०३८३ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः
११२८०३९१ योगधारणया कांश्चिदासनैर्धारणान्वितैः
११२८०३९३ तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत्
११२८०४०१ कांश्चिन्ममानुध्यानेन नामसङ्कीर्तनादिभिः
११२८०४०३ योगेश्वरानुवृत्त्या वा हन्यादशुभदान्शनैः
११२८०४११ केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम्
११२८०४१३ विधाय विविधोपायैरथ युञ्जन्ति सिद्धये
११२८०४२१ न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः
११२८०४२३ अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः
११२८०४३१ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात्
११२८०४३३ तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य मत्परः
११२८०४४१ योगचर्यामिमां योगी विचरन्मदपाश्रयः
११२८०४४३ नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः

११२९००१० श्रीउद्धव उवाच
११२९००११ सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः
११२९००१३ यथाञ्जसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यञ्जसाच्युत
११२९००२१ प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः
११२९००२३ विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः
११२९००३१ अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन
११२९००३३ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययामी विहता न मानिनः
११२९००४१ किं चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेसु यदात्मसात्त्वम्
११२९००४३ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः
११२९००५१ तं त्वाखिलात्मदयितेश्वरमाश्रितानां
११२९००५२ सर्वार्थदं स्वकृतविद्विसृजेत को नु
११२९००५३ को वा भजेत्किमपि विस्मृतयेऽनु भूत्यै
११२९००५४ किं वा भवेन्न तव पादरजोजुषां नः
११२९००६१ नैवोपयन्त्यपचितिं कवयस्तवेश
११२९००६२ ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः
११२९००६३ योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्न्
११२९००६४ आचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति
११२९००७० श्रीशुक उवाच
११२९००७१ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः
११२९००७३ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः
११२९००८० श्रीभगवानुवाच
११२९००८१ हन्त ते कथयिष्यामि मम धर्मान्सुमङ्गलान्
११२९००८३ यान्श्रद्धयाचरन्मर्त्यो मृत्युं जयति दुर्जयम्
११२९००९१ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन्
११२९००९३ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः
११२९०१०१ देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान्
११२९०१०३ देवासुरमनुष्येषु मद्भक्ताचरितानि च
११२९०१११ पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान्
११२९०११३ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः
११२९०१२१ मामेव सर्वभूतेषु बहिरन्तरपावृतम्
११२९०१२३ ईक्षेतात्मनि चात्मानं यथा खममलाशयः

११२९०१३१ इति सर्वाणि भूतानि मद्भावेन महाद्युते
११२९०१३३ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः
११२९०१४१ ब्राह्मणे पुक्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके
११२९०१४३ अक्रूरे क्रूरके चैव समदृक्पण्डितो मतः
११२९०१५१ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात्
११२९०१५३ स्पर्धासूयातिरस्काराः साहङ्कारा वियन्ति हि
११२९०१६१ विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम्
११२९०१६३ प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्
११२९०१७१ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते
११२९०१७३ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः
११२९०१८१ सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषया
११२९०१८३ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः
११२९०१९१ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम
११२९०१९३ मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः
११२९०२०१ न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि
११२९०२०३ मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः
११२९०२११ यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत्
११२९०२१३ तदायासो निरर्थः स्याद्भयादेरिव सत्तम
११२९०२२१ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्
११२९०२२३ यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम्
११२९०२३१ एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः
११२९०२३३ समासव्यासविधिना देवानामपि दुर्गमः
११२९०२४१ अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत्
११२९०२४३ एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः
११२९०२५१ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत्
११२९०२५३ सनातनं ब्रह्मगुह्यं परं ब्रह्माधिगच्छति
११२९०२६१ य एतन्मम भक्तेषु सम्प्रदद्यात्सुपुष्कलम्
११२९०२६३ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना
११२९०२७१ य एतत्समधीयीत पवित्रं परमं शुचि
११२९०२७३ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन्
११२९०२८१ य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः

११२९०२८३ मयि भक्तिं परां कुर्वन्कर्मभिर्न स बध्यते
११२९०२९१ अप्युद्धव त्वया ब्रह्म सखे समवधारितम्
११२९०२९३ अपि ते विगतो मोहः शोकश्चासौ मनोभवः
११२९०३०१ नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च
११२९०३०३ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम्
११२९०३११ एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च
११२९०३१३ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम्
११२९०३२१ नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते
११२९०३२३ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते
११२९०३३१ ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे
११२९०३३३ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः
११२९०३४१ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे
११२९०३४३ तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै
११२९०३५० श्रीशुक उवाच
११२९०३५१ स एवमादर्शितयोगमार्गस्तदोत्तमःश्लोकवचो निशम्य
११२९०३५३ बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः
११२९०३६१ विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्बहुमन्यमानः
११२९०३६३ कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम्
११२९०३७० श्रीउद्धव उवाच
११२९०३७१ विद्रावितो मोहमहान्धकारो य आश्रितो मे तव सन्निधानात्
११२९०३७३ विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवन्त्यजाद्य
११२९०३८१ प्रत्यर्पितो मे भवतानुकम्पिना भृत्याय विज्ञानमयः प्रदीपः
११२९०३८३ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यं समीयाच्छरणं त्वदीयम्
११२९०३९१ वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु
११२९०३९३ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना
११२९०४०१ नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि माम्
११२९०४०३ यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी
११२९०४१० श्रीभगवानुवाच
११२९०४११ गच्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रमम्
११२९०४१३ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः
११२९०४२१ ईक्षयालकनन्दाया विधूताशेषकल्मषः

११२९०४२३ वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिःस्पृहः
११२९०४३१ तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः
११२९०४३३ शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः
११२९०४४१ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन्
११२९०४४३ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव
११२९०४४५ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम्
११२९०४५० श्रीशुक उवाच
११२९०४५१ स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः
११२९०४५३ शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे
११२९०४६१ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः
११२९०४६३ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः
११२९०४७१ ततस्तमन्तर्हृदि सन्निवेश्य गतो महाभागवतो विशालाम्
११२९०४७३ यथोपदिष्टां जगदेकबन्धुना तपः समास्थाय हरेरगाद्गतिम्
११२९०४८१ य एतदानन्दसमुद्रसम्भृतं ज्ञानामृतं भागवताय भाषितम्
११२९०४८३ कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयासेव्य जगद्विमुच्यते
११२९०४९१ भवभयमपहन्तुं ज्ञानविज्ञानसारं
११२९०४९२ निगमकृदुपजह्रे भृङ्गवद्वेदसारम्
११२९०४९३ अमृतमुदधितश्चापाययद्भृत्यवर्गान्
११२९०४९४ पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि
११३०००१० श्रीराजोवाच
११३०००११ ततो महाभागवत उद्धवे निर्गते वनम्
११३०००१३ द्वारवत्यां किमकरोद्भगवान्भूतभावनः
११३०००२१ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः
११३०००२३ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत्
११३०००३१ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः
११३०००३२ कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम्
११३०००३३ यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां
११३०००३४ दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः
११३०००४० श्री ऋषिरुवाच
११३०००४१ दिवि भुव्यन्तरिक्षे च महोत्पातान्समुत्थितान्
११३०००४३ दृष्ट्वासीनान्सुधर्मायां कृष्णः प्राह यदूनिदम्

११३०००५० श्रीभगवानुवाच
११३०००५१ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः
११३०००५३ मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः
११३०००६१ स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः
११३०००६३ वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती
११३०००७१ तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः
११३०००७३ देवताः पूजयिष्यामः स्नपनालेपनार्हणैः
११३०००८१ ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम्
११३०००८३ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः
११३०००९१ विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम्
११३०००९३ देवद्विजगवां पूजा भूतेषु परमो भवः
११३००१०१ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः
११३००१०३ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः
११३००१११ तस्मिन्भगवतादिष्टं यदुदेवेन यादवाः
११३००११३ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम्
११३००१२१ ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु
११३००१२३ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः
११३००१३१ महापानाभिमत्तानां वीराणां दृप्तचेतसाम्
११३००१३३ कृष्णमायाविमूढानां सङ्घर्षः सुमहानभूत्
११३००१४१ युयुधुः क्रोधसंरब्धा वेलायामाततायिनः
११३००१४३ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः
११३००१५१ पतत्पताकै रथकुञ्जरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि
११३००१५३ मिथः समेत्याश्वतरैः सुदुर्मदा न्यहन्शरैर्दद्भिरिव द्विपा वने
११३००१६१ प्रद्युम्नसाम्बौ युधि रूढमत्सराव्
११३००१६२ अक्रूरभोजावनिरुद्धसात्यकी
११३००१६३ सुभद्रसङ्ग्रामजितौ सुदारुणौ
११३००१६४ गदौ सुमित्रासुरथौ समीयतुः
११३००१७१ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः
११३००१७३ अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम्
११३००१८१ दाशार्हवृष्ण्यन्धकभोजसात्वता
११३००१८२ मध्वर्बुदा माथुरशूरसेनाः

११३००१८३ विसर्जनाः कुकुराः कुन्तयश्च
११३००१८४ मिथस्तु जघ्नुः सुविसृज्य सौहृदम्
११३००१९१ पुत्रा अयुध्यन्पितृभिर्भ्रातृभिश्च
११३००१९२ स्वस्रीयदौहित्रपितृव्यमातुलैः
११३००१९३ मित्राणि मित्रैः सुहृदः सुहृद्भिर्
११३००१९४ ज्ञातींस्त्वहन्ज्ञातय एव मूढाः
११३००२०१ शरेषु हीयमाएषु भज्यमानेसु धन्वसु
११३००२०३ शस्त्रेषु क्षीयमानेषु मुष्टिभिर्जह्रुरेरकाः
११३००२११ ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः
११३००२१३ जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते
११३००२२१ प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः
११३००२२३ हन्तुं कृतधियो राजन्नापन्ना आततायिनः
११३००२३१ अथ तावपि सङ्क्रुद्धावुद्यम्य कुरुनन्दन
११३००२३३ एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि
११३००२४१ ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम्
११३००२४३ स्पर्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम्
११३००२५१ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः
११३००२५३ अवतारितो भुवो भार इति मेनेऽवशेषितः
११३००२६१ रामः समुद्रवेलायां योगमास्थाय पौरुषम्
११३००२६३ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि
११३००२७१ रामनिर्याणमालोक्य भगवान्देवकीसुतः
११३००२७३ निषसाद धरोपस्थे तुष्णीमासाद्य पिप्पलम्
११३००२८१ बिभ्रच्चतुर्भुजं रूपं भ्रायिष्णु प्रभया स्वया
११३००२८३ दिशो वितिमिराः कुर्वन्विधूम इव पावकः
११३००२९१ श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम्
११३००२९३ कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम्
११३००३०१ सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम्
११३००३०३ पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम्
११३००३११ कटिसूत्रब्रह्मसूत्र किरीटकटकाङ्गदैः
११३००३१३ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम्
११३००३२१ वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः

११३००३२३ कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम्
११३००३३१ मुषलावशेषायःखण्ड कृतेषुर्लुब्धको जरा
११३००३३३ मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया
११३००३४१ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः
११३००३४३ भीतः पपात शिरसा पादयोरसुरद्विषः
११३००३५१ अजानता कृतमिदं पापेन मधुसूदन
११३००३५३ क्षन्तुमर्हसि पापस्य उत्तमःश्लोक मेऽनघ
११३००३६१ यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम्
११३००३६३ वदन्ति तस्य ते विष्णो मयासाधु कृतं प्रभो
११३००३७१ तन्माशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम्
११३००३७३ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम्
११३००३८१ यस्यात्मयोगरचितं न विदुर्विरिञ्चो
११३००३८२ रुद्रादयोऽस्य तनयाः पतयो गिरां ये
११३००३८३ त्वन्मायया पिहितदृष्टय एतदञ्जः
११३००३८४ किं तस्य ते वयमसद्गतयो गृणीमः
११३००३९० श्रीभगवानुवाच
११३००३९१ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे
११३००३९३ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम्
११३००४०१ इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा
११३००४०३ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ
११३००४११ दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम्
११३००४१३ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ
११३००४२१ तं तत्र तिग्मद्युभिरायुधैर्वृतं
११३००४२२ ह्यश्वत्थमूले कृतकेतनं पतिम्
११३००४२३ स्नेहप्लुतात्मा निपपात पादयो
११३००४२४ रथादवप्लुत्य सबाष्पलोचनः
११३००४३१ अपश्यतस्त्वच्चरणाम्बुजं प्रभो दृष्टिः प्रणष्टा तमसि प्रविष्टा
११३००४३३ दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रणष्टे
११३००४४१ इति ब्रुवति सूते वै रथो गरुडलाञ्छनः
११३००४४३ खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः
११३००४५१ तमन्वगच्छन्दिव्यानि विष्णुप्रहरणानि च

११३००४५३ तेनातिविस्मितात्मानं सूतमाह जनार्दनः
११३००४६१ गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः
११३००४६३ सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम्
११३००४७१ द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः
११३००४७३ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति
११३००४८१ स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः
११३००४८३ अर्जुनेनाविताः सर्व इन्द्रप्रस्थं गमिष्यथ
११३००४९१ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः
११३००४९३ मन्मायारचितामेतां विज्ञयोपशमं व्रज
११३००५०१ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः
११३००५०३ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम्
११३१००१० श्रीशुक उवाच
११३१००११ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः
११३१००१३ महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः
११३१००२१ पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः
११३१००२३ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः
११३१००३१ द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः
११३१००३३ गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च
११३१००४१ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः
११३१००४३ कुर्वन्तः सङ्कुलं राजन्भक्त्या परमया युताः
११३१००५१ भगवान्पितामहं वीक्ष्य विभूतीरात्मनो विभुः
११३१००५३ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत्
११३१००६१ लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम्
११३१००६३ योगधारणयाग्नेय्या दग्ध्वा धामाविशत्स्वकम्
११३१००७१ दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात्
११३१००७३ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः
११३१००८१ देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि
११३१००८३ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः
११३१००९१ सौदामन्या यथाकाशे यान्त्या हित्वाभ्रमण्डलम्
११३१००९३ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः
११३१०१०१ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः

११३१०१०३ विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा
११३१०१११ राजन्परस्य तनुभृज्जननाप्ययेहा
११३१०११२ मायाविडम्बनमवेहि यथा नटस्य
११३१०११३ सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते
११३१०११४ संहृत्य चात्ममहिनोपरतः स आस्ते
११३१०१२१ मर्त्येन यो गुरुसुतं यमलोकनीतं
११३१०१२२ त्वां चानयच्छरणदः परमास्त्रदग्धम्
११३१०१२३ जिग्येऽन्तकान्तकमपीशमसावनीशः
११३१०१२४ किं स्वावने स्वरनयन्मृगयुं सदेहम्
११३१०१३१ तथाप्यशेषस्थितिसम्भवाप्ययेष्व्
११३१०१३२ अनन्यहेतुर्यदशेषशक्तिधृक्
११३१०१३३ नैच्छत्प्रणेतुं वपुरत्र शेषितं
११३१०१३४ मर्त्येन किं स्वस्थगतिं प्रदर्शयन्
११३१०१४१ य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम्
११३१०१४३ प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम्
११३१०१५१ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः
११३१०१५३ पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः
११३१०१६१ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप
११३१०१६३ तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविर्मूर्च्छिताः
११३१०१७१ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः
११३१०१७३ व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम्
११३१०१८१ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ
११३१०१८३ कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम्
११३१०१९१ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः
११३१०१९३ उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः
११३१०२०१ रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन्
११३१०२०३ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः
११३१०२०५ कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः
११३१०२११ अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः
११३१०२१३ आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः
११३१०२२१ बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम्

११३१०२२३ हतानां कारयामास यथावदनुपूर्वशः
११३१०२३१ द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात्
११३१०२३३ वर्जयित्वा महाराज श्रीमद्भगवदालयम्
११३१०२४१ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः
११३१०२४३ स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम्
११३१०२५१ स्त्रीबालवृद्धानादाय हतशेषान्धनञ्जयः
११३१०२५३ इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत्
११३१०२६१ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः
११३१०२६३ त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम्
११३१०२७१ य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च
११३१०२७३ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते
११३१०२८१ इत्थं हरेर्भगवतो रुचिरावतार
११३१०२८२ वीर्याणि बालचरितानि च शन्तमानि
११३१०२८३ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो
११३१०२८४ भक्तिं परां परमहंसगतौ लभेत
१२०१००१० श्रीशुक उवाच
१२०१००११ योऽन्त्यः पुरञ्जयो नाम भविष्यो बारहद्रथः
१२०१००१३ तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम्
१२०१००२१ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः
१२०१००२३ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः
१२०१००३१ नन्दिवर्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे
१२०१००३३ अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः
१२०१००४१ शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः
१२०१००४३ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः
१२०१००५१ विधिसारः सुतस्तस्या जातशत्रुर्भविष्यति
१२०१००५३ दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः
१२०१००६१ नन्दिवर्धन आजेयो महानन्दिः सुतस्ततः
१२०१००६३ शिशुनागा दशैवैते सष्ट्युत्तरशतत्रयम्
१२०१००७१ समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः
१२०१००७३ महानन्दिसुतो राजन्शूद्रागर्भोद्भवो बली
१२०१००८१ महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत्

१२०१००८३ ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः
१२०१००९१ स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः
१२०१००९३ शासिष्यति महापद्मो द्वितीय इव भार्गवः
१२०१०१०१ तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः
१२०१०१०३ य इमां भोक्ष्यन्ति महीं राजानश्च शतं समाः
१२०१०१११ नव नन्दान्द्विजः कश्चित्प्रपन्नानुद्धरिष्यति
१२०१०११३ तेषां अभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ
१२०१०१२१ स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति
१२०१०१२३ तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः
१२०१०१३१ सुयशा भविता तस्य सङ्गतः सुयशःसुतः
१२०१०१३३ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति
१२०१०१३५ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः
१२०१०१४१ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम्
१२०१०१४३ समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह
१२०१०१५१ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठो भविता ततः
१२०१०१५३ वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः
१२०१०१६१ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति
१२०१०१६३ ततो भागवतस्तस्माद्देवभूतिः कुरूद्वह
१२०१०१७१ शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम्
१२०१०१७३ ततः काण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप
१२०१०१८१ शुङ्गं हत्वा देवभूतिं काण्वोऽमात्यस्तु कामिनम्
१२०१०१८३ स्वयं करिष्यते राज्यं वसुदेवो महामतिः
१२०१०१९१ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः
१२०१०१९३ काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च
१२०१०१९५ शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे
१२०१०२०१ हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली
१२०१०२०३ गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित्कालमसत्तमः
१२०१०२११ कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः
१२०१०२१३ श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः
१२०१०२२१ लम्बोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः
१२०१०२२३ मेघस्वातिश्चिबिलकादटमानस्तु तस्य च

१२०१०२३१ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः
१२०१०२३३ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः
१२०१०२४१ चकोरो बहवो यत्र शिवस्वातिररिन्दमः
१२०१०२४३ तस्यापि गोमती पुत्रः पुरीमान्भविता ततः
१२०१०२५१ मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः
१२०१०२५३ विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः
१२०१०२६१ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च
१२०१०२७३ षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन
१२०१०२७१ सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः
१२०१०२७३ कङ्काः षोडश भूपाला भविष्यन्त्यतिलोलुपाः
१२०१०२८१ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः
१२०१०२८३ भूयो दश गुरुण्डाश्च मौला एकादशैव तु
१२०१०२९१ एते भोक्ष्यन्ति पृथिवीं दश वर्षशतानि च
१२०१०२९३ नवाधिकां च नवतिं मौला एकादश क्षितिम्
१२०१०३०१ भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः
१२०१०३०३ किलकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः
१२०१०३११ शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः
१२०१०३१३ इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट्
१२०१०३२१ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः
१२०१०३२३ पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च
१२०१०३३१ एककाला इमे भूपाः सप्तान्ध्राः सप्त कौशलाः
१२०१०३३३ विदूरपतयो भाव्या निषधास्तत एव हि
१२०१०३४१ मागधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः
१२०१०३४३ करिष्यत्यपरो वर्णान्पुलिन्दयदुमद्रकान्
१२०१०३५१ प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः
१२०१०३५३ वीर्यवान्क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि
१२०१०३५५ अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम्
१२०१०३६१ सौराष्ट्रावन्त्याभीराश्च शूरा अर्बुदमालवाः
१२०१०३६३ व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः
१२०१०३७१ सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम्
१२०१०३७३ भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः

१२०१०३८१ तुल्यकाला इमे राजन्म्लेच्छप्रायाश्च भूभृतः
१२०१०३८३ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः
१२०१०३९१ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः
१२०१०३९३ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः
१२०१०४०१ असंस्कृताः क्रियाहीना रजसा तमसावृताः
१२०१०४०३ प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः
१२०१०४११ तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः
१२०१०४१३ अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः
१२०२००१० श्रीशुक उवाच
१२०२००११ ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया
१२०२००१३ कालेन बलिना राजन्नङ्क्ष्यत्यायुर्बलं स्मृतिः
१२०२००२१ वित्तमेव कलौ नृणां जन्माचारगुणोदयः
१२०२००२३ धर्मन्यायव्यवस्थायां कारणं बलमेव हि
१२०२००३१ दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके
१२०२००३३ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि
१२०२००४१ लिङ्गं एवाश्रमख्यातावन्योन्यापत्तिकारणम्
१२०२००४३ अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः
१२०२००५१ अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु
१२०२००५३ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम्
१२०२००६१ दूरे वार्ययनं तीर्थं लावण्यं केशधारणम्
१२०२००६३ उदरंभरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि
१२०२००६५ दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम्
१२०२००७१ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले
१२०२००७३ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः
१२०२००८१ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः
१२०२००८३ आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्
१२०२००९१ शाकमूलामिषक्षौद्र फलपुष्पाष्टिभोजनाः
१२०२००९३ अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः
१२०२०१०१ शीतवातातपप्रावृड् हिमैरन्योन्यतः प्रजाः
१२०२०१०३ क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया
१२०२०१११ त्रिंशद्विंशति वर्षाणि

१२०२०११२ परमायुः कलौ नृणाम्

१२०२०१२१ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः

१२०२०१२३ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम्

१२०२०१३१ पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु

१२०२०१३३ चौर्यानृतवृथाहिंसा नानावृत्तिषु वै नृषु

१२०२०१४१ शूद्रप्रायेषु वर्णेषु च्छागप्रायासु धेनुषु

१२०२०१४३ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु

१२०२०१५१ अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु

१२०२०१५३ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु

१२०२०१६१ इत्थं कलौ गतप्राये जनेषु खरधर्मिषु

१२०२०१६३ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति

१२०२०१७१ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः

१२०२०१७३ धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये

१२०२०१८१ शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः

१२०२०१८३ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति

१२०२०१९१ अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः

१२०२०१९३ असिनासाधुदमनमष्टैश्वर्यगुणान्वितः

१२०२०२०१ विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः

१२०२०२०३ नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति

१२०२०२११ अथ तेषां भविष्यन्ति मनांसि विशदानि वै

१२०२०२१३ वासुदेवाङ्गरागाति पुण्यगन्धानिलस्पृशाम्

१२०२०२१५ पौरजानपदानां वै हतेष्वखिलदस्युषु

१२०२०२२१ तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति

१२०२०२२३ वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते

१२०२०२३१ यदावतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः

१२०२०२३३ कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी

१२०२०२४१ यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती

१२०२०२४३ एकराशौ समेष्यन्ति भविष्यति तदा कृतम्

१२०२०२५१ येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः

१२०२०२५३ ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः

१२०२०२६१ आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्

१२०२०२६३ एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम्
१२०२०२७१ सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि
१२०२०२७३ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि
१२०२०२८१ तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्
१२०२०२८३ ते त्वदीये द्विजाः काल अधुना चाश्रिता मघाः
१२०२०२९१ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः
१२०२०२९३ तदाविशत्कलिर्लोकं पापे यद्रमते जनः
१२०२०३०१ यावत्स पादपद्माभ्यां स्पृशनास्ते रमापतिः
१२०२०३०३ तावत्कलिर्वै पृथिवीं पराक्रन्तुं न चाशकत्
१२०२०३११ यदा देवर्षयः सप्त मघासु विचरन्ति हि
१२०२०३१३ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः
१२०२०३२१ यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः
१२०२०३२३ तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति
१२०२०३३१ यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि
१२०२०३३३ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः
१२०२०३४१ दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम्
१२०२०३४३ भविष्यति तदा नृणां मन आत्मप्रकाशकम्
१२०२०३५१ इत्येष मानवो वंशो यथा सङ्ख्यायते भुवि
१२०२०३५३ तथा विड्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे
१२०२०३६१ एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम्
१२०२०३६३ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि
१२०२०३७१ देवापिः शान्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः
१२०२०३७३ कलापग्राम आसाते महायोगबलान्वितौ
१२०२०३८१ ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ
१२०२०३८३ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः
१२०२०३९१ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्
१२०२०३९३ अनेन क्रमयोगेन भुवि प्राणिषु वर्तते
१२०२०४०१ राजन्नेते मया प्रोक्ता नरदेवास्तथापरे
१२०२०४०३ भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः
१२०२०४११ कृमिविड्भस्मसंज्ञान्ते राजनाम्नोऽपि यस्य च
१२०२०४१३ भूतध्रुक्तत्कृते स्वार्थं किं वेद निरयो यतः

१२०२०४२१ कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता
१२०२०४२३ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा
१२०२०४३१ तेजोऽबन्नमयं कायं गृहीत्वात्मतयाबुधाः
१२०२०४३३ महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः
१२०२०४४१ ये ये भूपतयो राजन्भुञ्जते भुवमोजसा
१२०२०४४३ कालेन ते कृताः सर्वे कथामात्राः कथासु च
१२०३००१० श्रीशुक उवाच
१२०३००११ दृष्ट्वात्मनि जये व्यग्रान्नृपान्हसति भूरियम्
१२०३००१३ अहो मा विजिगीषन्ति मृत्योः क्रीडनका नृपाः
१२०३००२१ काम एष नरेन्द्राणां मोघः स्याद्विदुषामपि
१२०३००२३ येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः
१२०३००३१ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः
१२०३००३३ ततः सचिवपौराप्त करीन्द्रानस्य कण्टकान्
१२०३००४१ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम्
१२०३००४३ इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम्
१२०३००५१ समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा
१२०३००५३ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम्
१२०३००६१ यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह
१२०३००६३ गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः
१२०३००७१ मत्कृते पितृपुत्राणां भ्रातृणां चापि विग्रहः
१२०३००७३ जायते ह्यसतां राज्ये ममताबद्धचेतसाम्
१२०३००८१ ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः
१२०३००८३ स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः
१२०३००९१ पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः
१२०३००९३ मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः
१२०३०१०१ तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः
१२०३०१०३ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः
१२०३०१११ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः
१२०३०११३ नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः
१२०३०१२१ अन्ये च बहवो दैत्या राजानो ये महेश्वराः
१२०३०१२३ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः

१२०३०१३१ ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः
१२०३०१३३ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो
१२०३०१४१ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्
१२०३०१४३ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम्
१२०३०१५१ यस्तूत्तमःश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः
१२०३०१५३ तमेव नित्यं श‍ृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः
१२०३०१६० श्रीराजोवाच
१२०३०१६१ केनोपायेन भगवन्कलेर्दोषान्कलौ जनाः
१२०३०१६३ विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने
१२०३०१७१ युगानि युगधर्मांश्च मानं प्रलयकल्पयोः
१२०३०१७३ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः
१२०३०१८० श्रीशुक उवाच
१२०३०१८१ कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः
१२०३०१८३ सत्यं दया तपो दानमिति पादा विभोर्नृप
१२०३०१९१ सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः
१२०३०१९३ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः
१२०३०२०१ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः
१२०३०२०३ अधर्मपादैरनृत हिंषासन्तोषविग्रहैः
१२०३०२११ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः
१२०३०२१३ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप
१२०३०२२१ तपःसत्यदयादानेष्वर्धं ह्रस्वति द्वापरे
१२०३०२२३ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः
१२०३०२३१ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः
१२०३०२३३ आध्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः
१२०३०२४१ कलौ तु धर्मपादानां तुर्यांशोऽधर्महेतुभिः
१२०३०२४३ एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति
१२०३०२५१ तस्मिन्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः
१२०३०२५३ दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः
१२०३०२६१ सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः
१२०३०२६३ कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि
१२०३०२७१ प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च

१२०३०२७३ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः
१२०३०२८१ यदा कर्मसु काम्येषु भक्तिर्यशसि देहिनाम्
१२०३०२८३ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन्
१२०३०२९१ यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः
१२०३०२९३ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः
१२०३०३०१ यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम्
१२०३०३०३ शोकमोहौ भयं दैन्यं स कलिस्तामसः स्मृतः
१२०३०३११ तस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः
१२०३०३१३ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः
१२०३०३२१ दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः
१२०३०३२३ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः
१२०३०३३१ अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः
१२०३०३३३ तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः
१२०३०३४१ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः
१२०३०३४३ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः
१२०३०३५१ पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः
१२०३०३५३ अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम्
१२०३०३६१ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम्
१२०३०३६३ भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः
१२०३०३७१ पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः
१२०३०३७३ ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः
१२०३०३८१ शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः
१२०३०३८३ धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम्
१२०३०३९१ नित्यं उद्विग्नमनसो दुर्भिक्षकरकर्शिताः
१२०३०३९३ निरन्ने भूतले राजननावृष्टिभयातुराः
१२०३०४०१ वासोऽन्नपानशयन व्यवायस्नानभूषणैः
१२०३०४०३ हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः
१२०३०४११ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः
१२०३०४१३ त्यक्ष्यन्ति च प्रियान्प्राणान्हनिष्यन्ति स्वकानपि
१२०३०४२१ न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि
१२०३०४२३ पुत्रान्भार्यां च कुलजां क्षुद्राः शिश्नोदरंभराः

१२०३०४३१ कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम्
१२०३०४३३ प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः
१२०३०४४१ यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशो गृणन्पुमान्
१२०३०४४३ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः
१२०३०४५१ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसम्भवान्
१२०३०४५३ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः
१२०३०४६१ श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चादृतोऽपि वा
१२०३०४६३ नृणां धुनोति भगवान्हृत्स्थो जन्मायुताशुभम्
१२०३०४७१ यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम्
१२०३०४७३ एवमात्मगतो विष्णुर्योगिनामशुभाशयम्
१२०३०४८१ विद्यातपःप्राणनिरोधमैत्री तीर्थाभिषेकव्रतदानजप्यैः
१२०३०४८३ नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते
१२०३०४९१ तस्मात्सर्वात्मना राजन्हृदिस्थं कुरु केशवम्
१२०३०४९३ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम्
१२०३०५०१ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः
१२०३०५०३ आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसंश्रयः
१२०३०५११ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः
१२०३०५१३ कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत्
१२०३०५२१ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः
१२०३०५२३ द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्
१२०४००१० श्रीशुक उवाच
१२०४००११ कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप
१२०४००१३ कथितो युगमानं च श‍ृणु कल्पलयावपि
१२०४००२१ चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते
१२०४००२३ स कल्पो यत्र मनवश्चतुर्दश विशाम्पते
१२०४००३१ तदन्ते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता
१२०४००३३ त्रयो लोका इमे तत्र कल्पन्ते प्रलयाय हि
१२०४००४१ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्
१२०४००४३ शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः
१२०४००५१ द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः
१२०४००५३ तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै

१२०४००६१ एष प्राकृतिको राजन्प्रलयो यत्र लीयते
१२०४००६३ अण्डकोषस्तु सङ्घातो विघाट उपसादिते
१२०४००७१ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति
१२०४००७३ तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः
१२०४००७५ क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः
१२०४००८१ सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः
१२०४००८३ रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति
१२०४००९१ ततः संवर्तको वह्निः सङ्कर्षणमुखोत्थितः
१२०४००९३ दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ
१२०४०१०१ उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः
१२०४०१०३ दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत्
१२०४०१११ ततः प्रचण्डपवनो वर्षाणामधिकं शतम्
१२०४०११३ परः सांवर्तको वाति धूम्रं खं रजसावृतम्
१२०४०१२१ ततो मेघकुलान्यङ्ग चित्र वर्णान्यनेकशः
१२०४०१२३ शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः
१२०४०१३१ तत एकोदकं विश्वं
१२०४०१३२ ब्रह्माण्डविवरान्तरम्
१२०४०१४१ तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे
१२०४०१४३ ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते
१२०४०१५१ अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः
१२०४०१५३ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा
१२०४०१६१ लीयते चानिले तेजो वायोः खं ग्रसते गुणम्
१२०४०१६३ स वै विशति खं राजंस्ततश्च नभसो गुणम्
१२०४०१७१ शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते
१२०४०१७३ तैजसश्चेन्द्रियाण्यङ्ग देवान्वैकारिको गुणैः
१२०४०१८१ महान्ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम्
१२०४०१८३ ग्रसतेऽव्याकृतं राजन्गुणान्कालेन चोदितम्
१२०४०१९१ न तस्य कालावयवैः परिणामादयो गुणाः
१२०४०१९३ अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम्
१२०४०२०१ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी
१२०४०२०३ न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः

१२०४०२११ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः
१२०४०२१३ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति
१२०४०२२१ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा
१२०४०२२३ शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः
१२०४०२३१ बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्
१२०४०२३३ दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत्
१२०४०२४१ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत्
१२०४०२४३ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्
१२०४०२५१ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते
१२०४०२५३ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि
१२०४०२६१ यथा जलधरा व्योम्नि भवन्ति न भवन्ति च
१२०४०२६३ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात्
१२०४०२७१ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह
१२०४०२७३ विनार्थेन प्रतीयेरन्पटस्येवाङ्ग तन्तवः
१२०४०२८१ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः
१२०४०२८३ अन्योन्यापाश्रयात्सर्वमाद्यन्तवदवस्तु यत्
१२०४०२९१ विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा
१२०४०२९३ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत्
१२०४०३०१ न हि सत्यस्य नानात्वमविद्वान्यदि मन्यते
१२०४०३०३ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव
१२०४०३११ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु
१२०४०३१३ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः
१२०४०३२१ यथा घनोऽर्कप्रभवोऽर्कदर्शितो
१२०४०३२२ ह्यर्कांशभूतस्य च चक्षुषस्तमः
१२०४०३२३ एवं त्वहं ब्रह्मगुणस्तदीक्षितो
१२०४०३२४ ब्रह्मांशकस्यात्मन आत्मबन्धनः
१२०४०३३१ घनो यदार्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा
१२०४०३३३ यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत्
१२०४०३४१ यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्
१२०४०३४३ छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग सम्प्लवम्
१२०४०३५१ नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप

१२०४०३५३ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते
१२०४०३६१ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा
१२०४०३६३ परिणामिनां अवस्थास्ता जन्मप्रलयहेतवः
१२०४०३७१ अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना
१२०४०३७३ अवस्था नैव दृश्यन्ते वियति ज्योतिषां इव
१२०४०३८१ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः
१२०४०३८३ आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी
१२०४०३९१ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः
१२०४०३९३ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः
१२०४०४०१ संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्
१२०४०४०२ नान्यः प्लवो भगवतः पुरुषोत्तमस्य
१२०४०४०३ लीलाकथारसनिषेवणमन्तरेण
१२०४०४०४ पुंसो भवेद्विविधदुःखदवार्दितस्य
१२०४०४११ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः
१२०४०४१३ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः
१२०४०४२१ स वै मह्यं महाराज भगवान्बादरायणः
१२०४०४२३ इमां भागवतीं प्रीतः संहितां वेदसम्मिताम्
१२०४०४३१ इमां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये
१२०४०४३३ दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः
१२०५००१० श्रीशुक उवाच
१२०५००११ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः
१२०५००१३ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः
१२०५००२१ त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि
१२०५००२३ न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि
१२०५००३१ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान्
१२०५००३३ बीजाङ्कुरवद्देहादेर्व्यतिरिक्तो यथानलः
१२०५००४१ स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम्
१२०५००४३ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः
१२०५००५१ घटे भिन्ने घटाकाश आकाशः स्याद्यथा पुरा
१२०५००५३ एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः
१२०५००६१ मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः

१२०५००६३ तन्मनः सृजते माया ततो जीवस्य संसृतिः
१२०५००७१ स्नेहाधिष्ठानवर्त्यग्नि संयोगो यावदीयते
१२०५००७३ तावद्दीपस्य दीपत्वमेवं देहकृतो भवः
१२०५००७५ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति
१२०५००८१ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः
१२०५००८३ आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः
१२०५००९१ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो
१२०५००९३ बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया
१२०५०१०१ चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः
१२०५०१०३ मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम्
१२०५०१११ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्
१२०५०११३ एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले
१२०५०१२१ दशन्तं तक्षकं पादे लेलिहानं विषाननैः
१२०५०१२३ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः
१२०५०१३१ एतत्ते कथितं तात यदात्मा पृष्टवान्नृप
१२०५०१३३ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि
१२०६००१० सूत उवाच
१२०६००११ एतन्निशम्य मुनिनाभिहितं परीक्षिद्
१२०६००१२ व्यासात्मजेन निखिलात्मदृशा समेन
१२०६००१३ तत्पादमूलमुपसृत्य नतेन मूर्ध्ना
१२०६००१४ बद्धाञ्जलिस्तमिदमाह स विष्णुरातः
१२०६००२० राजोवाच
१२०६००२१ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना
१२०६००२३ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः
१२०६००३१ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम्
१२०६००३३ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः
१२०६००४१ पुराणसंहितामेतामश्रौष्म भवतो वयम्
१२०६००४३ यस्यां खलूत्तमःश्लोको भगवाननवर्ण्यते
१२०६००५१ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम्
१२०६००५३ प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया
१२०६००६१ अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे

१२०६००६३ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून्
१२०६००७१ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया
१२०६००७३ भवता दर्शितं क्षेमं परं भगवतः पदम्
१२०६००८० सूत उवाच
१२०६००८१ इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः
१२०६००८३ जगाम भिक्षुभिः साकं नरदेवेन पूजितः
१२०६००९१ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना
१२०६००९३ समाधाय परं दध्यावस्पन्दासुर्यथा तरुः
१२०६०१०१ प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः
१२०६०१०३ ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः
१२०६०१११ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना
१२०६०११३ हन्तुकामो नृपं गच्छन्ददर्श पथि कश्यपम्
१२०६०१२१ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम्
१२०६०१२३ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम्
१२०६०१३१ ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना
१२०६०१३३ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम्
१२०६०१४१ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः
१२०६०१४३ विस्मिता ह्यभवन्सर्वे देवासुरनरादयः
१२०६०१५१ देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः
१२०६०१५३ ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः
१२०६०१६१ जन्मेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम्
१२०६०१६३ यथाजुहाव सन्क्रुद्धो नागान्सत्रे सह द्विजैः
१२०६०१७१ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान्
१२०६०१७३ दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ
१२०६०१८१ अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान्
१२०६०१८३ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः
१२०६०१९१ तं गोपायति राजेन्द्र शक्रः शरणमागतम्
१२०६०१९३ तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ
१२०६०२०१ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः
१२०६०२०३ सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते
१२०६०२११ तच्छ्रुत्वाजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे

१२०६०२१३ तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता
१२०६०२२१ इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः
१२०६०२२३ बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः
१२०६०२३१ तं पतन्तं विमानेन सहतक्षकमम्बरात्
१२०६०२३३ विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः
१२०६०२४१ नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट्
१२०६०२४३ अनेन पीतममृतमथ वा अजरामरः
१२०६०२५१ जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा
१२०६०२५३ राजंस्ततोऽन्यो नास्त्यस्य प्रदाता सुखदुःखयोः
१२०६०२६१ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप
१२०६०२६३ पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत्
१२०६०२७१ तस्मात्सत्रमिदं राजन्संस्थीयेताभिचारिकम्
१२०६०२७३ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते
१२०६०२८० सूत उवाच
१२०६०२८१ इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः
१२०६०२८३ सर्पसत्रादुपरतः पूजयामास वाक्पतिम्
१२०६०२९१ सैषा विष्णोर्महामाया बाध्ययालक्षणा यया
१२०६०२९३ मुह्यन्त्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः
१२०६०३०१ न यत्र दम्भीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः
१२०६०३०३ न यद्विवादो विविधस्तदाश्रयो मनश्च सङ्कल्पविकल्पवृत्ति यत्
१२०६०३११ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम्
१२०६०३१३ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत तन्मुनिः
१२०६०३२१ परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः
१२०६०३२३ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः
१२०६०३३१ त एतदधिगच्छन्ति विष्णोर्यत्परमं पदम्
१२०६०३३३ अहं ममेति दौर्जन्यं न येषां देहगेहजम्
१२०६०३४१ अतिवादांस्तितिक्षेत नावमन्येत कञ्चन
१२०६०३४३ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित्
१२०६०३५१ नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे
१२०६०३५३ यत्पादाम्बुरुहध्यानात्संहितामध्यगामिमाम्
१२०६०३६० श्रीशौनक उवाच

१२०६०३६१ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः
१२०६०३६३ वेदाश्च कथिता व्यस्ता एतत्सौम्याभिधेहि नः
१२०६०३७० सूत उवाच
१२०६०३७१ समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः
१२०६०३७३ हृद्याकाशादभूत्नादो वृत्तिरोधाद्विभाव्यते
१२०६०३८१ यदुपासनया ब्रह्मन्योगिनो मलमात्मनः
१२०६०३८३ द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम्
१२०६०३९१ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट्
१२०६०३९३ यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः
१२०६०४०१ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक्
१२०६०४०३ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः
१२०६०४११ स्वधाम्नो ब्राह्मणः साक्षाद्वाचकः परमात्मनः
१२०६०४१३ स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्
१२०६०४२१ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह
१२०६०४२३ धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः
१२०६०४३१ ततोऽक्षरसमाम्नायमसृजद्भगवानजः
१२०६०४३३ अन्तस्थोष्मस्वरस्पर्श ह्रस्वदीर्घादिलक्षणम्
१२०६०४४१ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः
१२०६०४४३ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया
१२०६०४५१ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान्
१२०६०४५३ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन्
१२०६०४६१ ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः
१२०६०४६३ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः
१२०६०४७१ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः
१२०६०४७३ वेदान्ब्रह्मर्षयो व्यस्यन्हृदिस्थाच्युतचोदिताः
१२०६०४८१ अस्मिन्नप्यन्तरे ब्रह्मन्भगवान्लोकभावनः
१२०६०४८३ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये
१२०६०४९१ पराशरात्सत्यवत्यामंशांशकलया विभुः
१२०६०४९३ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्
१२०६०५०१ ऋगथर्वयजुःसाम्नां राशीरुद्धृत्य वर्गशः
१२०६०५०३ चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव

१२०६०५११ तासां स चतुरः शिष्यानुपाहूय महामतिः
१२०६०५१३ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः
१२०६०५२१ पैलाय संहितामाद्यां बह्वृचाख्यां उवाच ह
१२०६०५२३ वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम्
१२०६०५३१ साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्
१२०६०५३३ अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे
१२०६०५४१ पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः
१२०६०५४३ बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम्
१२०६०५५१ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव
१२०६०५५३ पराशरायाग्निमित्र इन्द्रप्रमितिरात्मवान्
१२०६०५६१ अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम्
१२०६०५६३ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान्
१२०६०५७१ शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम्
१२०६०५७३ वात्स्यमुद्गलशालीय गोखल्यशिशिरेष्वधात्
१२०६०५८१ जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम्
१२०६०५८३ बलाकपैलजाबाल विरजेभ्यो ददौ मुनिः
१२०६०५९१ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम्
१२०६०५९३ चक्रे वालायनिर्भज्यः काशारश्चैव तां दधुः
१२०६०६०१ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः
१२०६०६०३ श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते
१२०६०६११ वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्
१२०६०६१३ यच्चेरुर्ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम्
१२०६०६२१ याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत्
१२०६०६२३ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्
१२०६०६३१ इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया
१२०६०६३३ विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति
१२०६०६४१ देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम्
१२०६०६४३ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान्
१२०६०६५१ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः
१२०६०६५३ तैत्तिरीया इति यजुः शाखा आसन्सुपेशलाः
१२०६०६६१ याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधि गवेषयन्

१२०६०६६३ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम्
१२०६०६७० श्रीयाज्ञवल्क्य उवाच
१२०६०६७१ ओं नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण काल
१२०६०६७२ स्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु
१२०६०६७३ बहिरपि चाकाश इवोपाधिनाव्यवधीयमानो भवानेक
१२०६०६७४ एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादान
१२०६०६७५ विसर्गाभ्यामिमां लोकयात्रामनुवहति
१२०६०६८१ यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहर्
१२०६०६८२ अहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिन
१२०६०६८३ बीजावभर्जन भगवतः समभिधीमहि तपन मण्डलम्
१२०६०६९१ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनैन्द्रियासु
१२०६०६९२ गणाननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति
१२०६०७०१ य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रह
१२०६०७०२ गिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक
१२०६०७०३ ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्माव
१२०६०७०४ स्थने प्रवर्तयति
१२०६०७११ अवनिपतिरिवासाधूनां भयमुदीरयन्नटति परित आशापालैस्
१२०६०७१२ तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः
१२०६०७२१ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिरभिवन्दितम्
१२०६०७२३ अहमयातयामयजुष्काम उपसरामीति
१२०६०७३० सूत उवाच
१२०६०७३१ एवं स्तुतः स भगवान्वाजिरूपधरो रविः
१२०६०७३३ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः
१२०६०७४१ यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः
१२०६०७४३ जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः
१२०६०७५१ जैमिनेः समगस्यासीत्सुमन्तुस्तनयो मुनिः
१२०६०७५३ सुत्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम्
१२०६०७६१ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान्
१२०६०७६३ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विज
१२०६०७७१ हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः
१२०६०७७३ शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः

१२०६०७८१ उदीच्याः सामगाः शिष्या आसन्पञ्चशतानि वै
१२०६०७८३ पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान्प्रचक्षते
१२०६०७९१ लौगाक्षिर्माङ्गलिः कुल्यः कुशीदः कुक्षिरेव च
१२०६०७९३ पौष्यञ्जिसिष्या जगृहुः संहितास्ते शतं शतम्
१२०६०८०१ कृतो हिरण्यनाभस्य चतुर्विंशति संहिताः
१२०६०८०३ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान्
१२०७००१० सूत उवाच
१२०७००११ अथर्ववित्सुमन्तुश्च शिष्यमध्यापयत्स्वकाम्
१२०७००१३ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान्
१२०७००२१ शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः
१२०७००२३ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो श‍ृणु
१२०७००२५ कुमुदः शुनको ब्रह्मन्जाजलिश्चाप्यथर्ववित्
१२०७००३१ बभ्रुः शिष्योऽथान्गिरसः सैन्धवायन एव च
१२०७००३३ अधीयेतां संहिते द्वे सावर्णाद्यास्तथापरे
१२०७००४१ नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः
१२०७००४३ एते आथर्वणाचार्याः श‍ृणु पौराणिकान्मुने
१२०७००५१ त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रनः
१२०७००५३ वैशम्पायनहारीतौ षड्वै पौराणिका इमे
१२०७००६१ अधीयन्त व्यासशिष्यात्संहितां मत्पितुर्मुखात्
१२०७००६३ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम्
१२०७००७१ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रनः
१२०७००७३ अधीमहि व्यासशिष्याच्चत्वारो मूलसंहिताः
१२०७००८१ पुराणलक्षणं ब्रह्मन्ब्रह्मर्षिभिर्निरूपितम्
१२०७००८३ श‍ृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः
१२०७००९१ सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च
१२०७००९३ वंशो वंशानुचरीतं संस्था हेतुरपाश्रयः
१२०७०१०१ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः
१२०७०१०३ केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थया
१२०७०१११ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः
१२०७०११३ भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते
१२०७०१२१ पुरुषानुगृहीतानामेतेषां वासनामयः

१२०७०१२३ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम्
१२०७०१३१ वृत्तिर्भूतानि भूतानां चराणामचराणि च
१२०७०१३३ कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा
१२०७०१४१ रक्षाच्युतावतारेहा विश्वस्यानु युगे युगे
१२०७०१४३ तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः
१२०७०१५१ मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः
१२०७०१५३ र्षयोऽंशावताराश्च हरेः षड्विधमुच्यते
१२०७०१६१ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः
१२०७०१६३ वंशानुचरितं तेषाम्वृत्तं वंशधराश्च ये
१२०७०१७१ नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः
१२०७०१७३ संस्थेति कविभिः प्रोक्तश्चतुर्धास्य स्वभावतः
१२०७०१८१ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः
१२०७०१८३ यं चानुशायिनं प्राहुरव्याकृतमुतापरे
१२०७०१९१ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु
१२०७०१९३ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः
१२०७०२०१ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु
१२०७०२०३ बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम्
१२०७०२११ विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम्
१२०७०२१३ योगेर्ल वा तदात्मानं वेदेहाया निवर्तते
१२०७०२२१ एवं लक्षणलक्ष्याणि पुराणानि पुराविदः
१२०७०२२३ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च
१२०७०२३१ ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडं
१२०७०२३३ नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम्
१२०७०२४१ भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम्
१२०७०२४३ वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट्
१२०७०२५१ ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः
१२०७०२५३ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम्
१२०८००१० श्रीशौनक उवाच
१२०८००११ सूत जीव चिरं साधो वद नो वदतां वर
१२०८००१३ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः
१२०८००२१ आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः

१२०८००२३ यः कल्पान्ते ह्युर्वरितो येन ग्रस्तमिदं जगत्
१२०८००३१ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्भार्गवर्षभः
१२०८००३३ नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते
१२०८००४१ एक एवार्णवे भ्राम्यन्ददर्श पुरुषं किल
१२०८००४३ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम्
१२०८००५१ एष नः संशयो भूयान्सूत कौतूहलं यतः
१२०८००५३ तं नश्छिन्धि महायोगिन्पुराणेष्वपि सम्मतः
१२०८००६० सूत उवाच
१२०८००६१ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः
१२०८००६३ नारायणकथा यत्र गीता कलिमलापहा
१२०८००७१ प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात्
१२०८००७३ छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः
१२०८००८१ बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः
१२०८००८३ बिभ्रत्कमण्डलुं दण्डमुपवीतं समेखलम्
१२०८००९१ कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये
१२०८००९३ अग्न्यर्कगुरुविप्रात्मस्वर्चयन्सन्ध्ययोर्हरिम्
१२०८०१०१ सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः
१२०८०१०३ बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः
१२०८०१११ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम्
१२०८०११३ आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम्
१२०८०१२१ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे
१२०८०१२३ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः
१२०८०१३१ इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः
१२०८०१३३ दध्यावधोक्षजं योगी ध्वस्तक्लेशान्तरात्मना
१२०८०१४१ तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः
१२०८०१४३ व्यतीयाय महान्कालो मन्वन्तरषडात्मकः
१२०८०१५१ एतत्पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन्किलान्तरे
१२०८०१५३ तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम्
१२०८०१६१ गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ
१२०८०१६३ मुनये प्रेषयामास रजस्तोकमदौ तथा
१२०८०१७१ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे

१२०८०१७३ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो
१२०८०१८१ तदाश्रमपदं पुण्यं पुण्यद्रुमलताञ्चितम्
१२०८०१८३ पुण्यद्विजकुलाकीऋनं पुण्यामलजलाशयम्
१२०८०१९१ मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम्
१२०८०१९३ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम्
१२०८०२०१ वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान्
१२०८०२०३ सुमनोभिः परिष्वक्तो ववावुत्तम्भयन्स्मरम्
१२०८०२११ उद्यच्चन्द्रनिशावक्रः प्रवालस्तबकालिभिः
१२०८०२१३ गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः
१२०८०२२१ अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः
१२०८०२२३ अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः
१२०८०२३१ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिङ्कराः
१२०८०२३३ मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम्
१२०८०२४१ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः
१२०८०२४३ मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम्
१२०८०२५१ सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा
१२०८०२५३ मधुर्मनो रजस्तोक इन्द्रभृत्या व्यकम्पयन्
१२०८०२६१ क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात्
१२०८०२६३ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः
१२०८०२७१ इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनु कन्दुकम्
१२०८०२७३ वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम्
१२०८०२८१ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः
१२०८०२८३ सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः
१२०८०२९१ त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने
१२०८०२९३ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः
१२०८०३०१ इतीन्द्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः
१२०८०३०३ यन्नागादहमो भावं न तच्चित्रं महत्सु हि
१२०८०३११ दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट्
१२०८०३१३ श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम्
१२०८०३२१ तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः
१२०८०३२३ अनुग्रहायाविरासीन्नरनारायणो हरिः

१२०८०३३१ तौ शुक्लकृष्णौ नवकञ्जलोचनौ
१२०८०३३२ चतुर्भुजौ रौरववल्कलाम्बरौ
१२०८०३३३ पवित्रपाणी उपवीतकं त्रिवृत्
१२०८०३३४ कमण्डलुं दण्डमृजुं च वैणवम्
१२०८०३४१ पद्माक्षमालामुत जन्तुमार्जनं
१२०८०३४२ वेदं च साक्षात्तप एव रूपिणौ
१२०८०३४३ तपत्तडिद्वर्णपिशङ्गरोचिषा
१२०८०३४४ प्रांशू दधानौ विबुधर्षभार्चितौ
१२०८०३५१ ते वै भगवतो रूपे नरनारायणावृषी
१२०८०३५३ दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत्
१२०८०३६१ स तत्सन्दर्शनानन्द निर्वृतात्मेन्द्रियाशयः
१२०८०३६३ हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम्
१२०८०३७१ उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव
१२०८०३७३ नमो नम इतीशानौ बभाशे गद्गदाक्षरम्
१२०८०३८१ तयोरासनमादाय पादयोरवनिज्य च
१२०८०३८३ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत्
१२०८०३९१ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी
१२०८०३९३ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत्
१२०८०४०० श्रीमार्कण्डेय उवाच
१२०८०४०१ किं वर्णये तव विभो यदुदीरितोऽसुः
१२०८०४०२ संस्पन्दते तमनु वाङ्मनैन्द्रियाणि
१२०८०४०३ स्पन्दन्ति वै तनुभृतामजशर्वयोश्च
१२०८०४०४ स्वस्याप्यथापि भजतामसि भावबन्धुः
१२०८०४११ मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः
१२०८०४१२ क्षेमाय तापविरमाय च मृत्युजित्यै
१२०८०४१३ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं
१२०८०४१४ सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः
१२०८०४२१ तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं
१२०८०४२२ यत्स्थं न कर्मगुणकालरजः स्पृशन्ति
१२०८०४२३ यद्वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं
१२०८०४२४ ध्यायन्ति वेदहृदया मुनयस्तदास्त्यै

१२०८०४३१ नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः
१२०८०४३२ क्षेमं जनस्य परितोभिय ईश विद्मः
१२०८०४३३ ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः
१२०८०४३४ कालस्य ते किमुत तत्कृतभौतिकानाम्
१२०८०४४१ तद्वै भजाम्यृतधियस्तव पादमूलं
१२०८०४४२ हित्वेदमात्मच्छदि चात्मगुरोः परस्य
१२०८०४४३ देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं
१२०८०४४४ विन्देत ते तर्हि सर्वमनीषितार्थम्
१२०८०४५१ सत्त्वं रजस्तम इतीश तवात्मबन्धो
१२०८०४५२ मायामयाः स्थितिलयोदयहेतवोऽस्य
१२०८०४५३ लीला धृता यदपि सत्त्वमयी प्रशान्त्यै
१२०८०४५४ नान्ये नृणां व्यसनमोहभियश्च याभ्याम्
१२०८०४६१ तस्मात्तवेह भगवन्नथ तावकानां
१२०८०४६२ शुक्लां तनुं स्वदयितां कुशला भजन्ति
१२०८०४६३ यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं
१२०८०४६४ लोको यतोऽभयमुतात्मसुखं न चान्यत्
१२०८०४७१ तस्मै नमो भगवते पुरुषाय भूम्ने
१२०८०४७२ विश्वाय विश्वगुरवे परदैवताय
१२०८०४७३ नारायणाय ऋषये च नरोत्तमाय
१२०८०४७४ हंसाय संयतगिरे निगमेश्वराय
१२०८०४८१ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः
१२०८०४८२ सन्तं स्वकेष्वसुषु हृद्यपि दृक्पथेषु
१२०८०४८३ तन्माययावृतमतिः स उ एव साक्षाद्
१२०८०४८४ आद्यस्तवाखिलगुरोरुपसाद्य वेदम्
१२०८०४९१ यद्दर्शनं निगम आत्मरहःप्रकाशं
१२०८०४९२ मुह्यन्ति यत्र कवयोऽजपरा यतन्तः
१२०८०४९३ तं सर्ववादविषयप्रतिरूपशीलं
१२०८०४९४ वन्दे महापुरुषमात्मनिगूढबोधम्
१२०९००१० सूत उवाच
१२०९००११ संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता
१२०९००१३ नारायणो नरसखः प्रीत आह भृगूद्वहम्

१२०९००२० श्रीभगवानुवाच
१२०९००२१ भो भो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना
१२०९००२३ मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः
१२०९००३१ वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया
१२०९००३३ वरं प्रतीच्छ भद्रं ते वरदोऽस्मि त्वदीप्सितम्
१२०९००४० श्रीऋषिरुवाच
१२०९००४१ जितं ते देवदेवेश प्रपन्नार्तिहराच्युत
१२०९००४३ वरेणैतावतालं नो यद्भवान्समदृश्यत
१२०९००५१ गृहीत्वाजादयो यस्य श्रीमत्पादाब्जदर्शनम्
१२०९००५३ मनसा योगपक्वेन स भवान्मेऽक्षिगोचरः
१२०९००६१ अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे
१२०९००६३ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम्
१२०९००७० सूत उवाच
१२०९००७१ इतीडितोऽर्चितः काममृषिणा भगवान्मुने
१२०९००७३ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः
१२०९००८१ तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः
१२०९००८३ वसन्नग्न्यर्कसोमाम्बु भूवायुवियदात्मसु
१२०९००९१ ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत्
१२०९००९३ क्वचित्पूजां विसस्मार प्रेमप्रसरसम्प्लुतः
१२०९०१०१ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः
१२०९०१०३ उपासीनस्य सन्ध्यायां ब्रह्मन्वायुरभून्महान्
१२०९०१११ तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन्करालाः
१२०९०११३ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभि वर्षधाराः
१२०९०१२१ ततो व्यदृश्यन्त चतुः समुद्राः समन्ततः क्ष्मातलमाग्रसन्तः
१२०९०१२३ समीरवेगोर्मिभिरुग्रनक्र महाभयावर्तगभीरघोषाः
१२०९०१३१ अन्तर्बहिश्चाद्भिरतिद्युभिः खरैः
१२०९०१३२ शतह्रदाभिरुपतापितं जगत्
१२०९०१३३ चतुर्विधं वीक्ष्य सहात्मना मुनिर्
१२०९०१३४ जलाप्लुतां क्ष्मां विमनाः समत्रसत्
१२०९०१४१ तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः
१२०९०१४३ आपूर्यमाणो वरषद्भिरम्बुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम्

१२०९०१५१ सक्ष्मान्तरिक्षं सदिवं सभागणं
१२०९०१५२ त्रैलोक्यमासीत्सह दिग्भिराप्लुतम्
१२०९०१५३ स एक एवोर्वरितो महामुनिर्
१२०९०१५४ बभ्राम विक्षिप्य जटा जडान्धवत्
१२०९०१६१ क्षुत्तृड्परीतो मकरैस्तिमिङ्गिलैर्
१२०९०१६२ उपद्रुतो वीचिनभस्वताहतः
१२०९०१६३ तमस्यपारे पतितो भ्रमन्दिशो
१२०९०१६४ न वेद खं गां च परिश्रमेषितः
१२०९०१७१ क्वचिन्मग्नो महावर्ते तरलैस्ताडितः क्वचित्
१२०९०१७३ यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः
१२०९०१८१ क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम्
१२०९०१८३ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः
१२०९०१९१ अयुतायतवर्षाणां सहस्राणि शतानि च
१२०९०१९३ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः
१२०९०२०१ स कदाचिद्भ्रमंस्तस्मिन्पृथिव्याः ककुदि द्विजः
१२०९०२०३ न्याग्रोधपोतं ददृशे फलपल्लवशोभितम्
१२०९०२११ प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम्
१२०९०२१३ शयानं पर्णपुटके ग्रसन्तं प्रभया तमः
१२०९०२२१ महामरकतश्यामं श्रीमद्वदनपङ्कजम्
१२०९०२२३ कम्बुग्रीवं महोरस्कं सुनसं सुन्दरभ्रुवम्
१२०९०२३१ श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम्
१२०९०२३३ विद्रुमाधरभासेषच् छोणायितसुधास्मितम्
१२०९०२४१ पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम्
१२०९०२४३ श्वासैजद्वलिसंविग्न निम्ननाभिदलोदरम्
१२०९०२५१ चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम्
१२०९०२५३ मुखे निधाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः
१२०९०२६१ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पौल्मविलोचनाम्बुजः
१२०९०२६३ प्रहृष्टरोमाद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम्
१२०९०२७१ तावच्छिशोर्वै श्वसितेन भार्गवः
१२०९०२७२ सोऽन्तः शरीरं मशको यथाविशत्
१२०९०२७३ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो

१२०९०२७४ यथा पुरामुह्यदतीव विस्मितः
१२०९०२८१ खं रोदसी भागणानद्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान्
१२०९०२८३ वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः
१२०९०२९१ महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम्
१२०९०२९३ यत्किञ्चिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम्
१२०९०३०१ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं यत्र ऋषी अपश्यत
१२०९०३०३ विश्वं विपश्यञ्छ्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ
१२०९०३११ तस्मिन्पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम्
१२०९०३१३ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन
१२०९०३२१ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि
१२०९०३२३ अभ्ययादतिसङ्क्लिष्टः परिष्वक्तुमधोक्षजम्
१२०९०३३१ तावत्स भगवान्साक्षाद्योगाधीशो गुहाशयः
१२०९०३३३ अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता
१२०९०३४१ तमन्वथ वटो ब्रह्मन्सलिलं लोकसम्प्लवः
१२०९०३४३ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः
१२१०००१० सूत उवाच
१२१०००११ स एवमनुभूयेदं नारायणविनिर्मितम्
१२१०००१३ वैभवं योगमायायास्तमेव शरणं ययौ
१२१०००२० श्रीमार्कण्डेय उवाच
१२१०००२१ प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे
१२१०००२३ यन्माययापि विबुधा मुह्यन्ति ज्ञानकाशया
१२१०००३० सूत उवाच
१२१०००३१ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन्
१२१०००३३ रुद्राण्या भगवान्रुद्रो ददर्श स्वगणैर्वृतः
१२१०००४१ अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत
१२१०००४३ पश्येमं भगवन्विप्रं निभृतात्मेन्द्रियाशयम्
१२१०००५१ निभृतोदझषव्रातो वातापाये यथार्णवः
१२१०००५३ कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान्
१२१०००६० श्रीभगवानुवाच
१२१०००६१ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत
१२१०००६३ भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये

१२१०००७१ अथापि संवदिष्यामो भवान्येतेन साधुना
१२१०००७३ अयं हि परमो लाभो नृणां साधुसमागमः
१२१०००८० सूत उवाच
१२१०००८१ इत्युक्त्वा तमुपेयाय भगवान्स सतां गतिः
१२१०००८३ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम्
१२१०००९१ तयोरागमनं साक्षादीशयोर्जगदात्मनोः
१२१०००९३ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च
१२१००१०१ भगवांस्तदभिज्ञाय गिरिशो योगमायया
१२१००१०३ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः
१२१००१११ आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम्
१२१००११३ त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम्
१२१००१२१ व्याघ्रचर्माम्बरं शूल धनुरिष्वसिचर्मभिः
१२१००१२३ अक्षमालाडमरुक कपालं परशुं सह
१२१००१३१ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः
१२१००१३३ किमिदं कुत एवेति समाधेर्विरतो मुनिः
१२१००१४१ नेत्रे उन्मील्य ददृशे सगणं सोमयागतम्
१२१००१४३ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः
१२१००१५१ तस्मै सपर्यां व्यदधात्सगणाय सहोमया
१२१००१५३ स्वागतासनपाद्यार्घ्य गन्धस्रग्धूपदीपकैः
१२१००१६१ आह त्वात्मानुभावेन पूर्णकामस्य ते विभो
१२१००१६३ करवाम किमीशान येनेदं निर्वृतं जगत्
१२१००१७१ नमः शिवाय शान्ताय सत्त्वाय प्रमृडाय च
१२१००१७३ रजोजुषेऽथ घोराय नमस्तुभ्यं तमोजुषे
१२१००१८० सूत उवाच
१२१००१८१ एवं स्तुतः स भगवानादिदेवः सतां गतिः
१२१००१८३ परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत
१२१००१९० श्रीभगवानुवाच
१२१००१९१ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः
१२१००१९३ अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम्
१२१००२०१ ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः
१२१००२०३ एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः

१२१००२११ सलोका लोकपालास्तान्वन्दन्त्यर्चन्त्युपासते
१२१००२१३ अहं च भगवान्ब्रह्मा स्वयं च हरिरीश्वरः
१२१००२२१ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते
१२१००२२३ नात्मनश्च जनस्यापि तद्युष्मान्वयमीमहि
१२१००२३१ न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः
१२१००२३३ ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः
१२१००२४१ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम्
१२१००२४३ बिभ्रत्यात्मसमाधान तपःस्वाध्यायसंयमैः
१२१००२५१ श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः
१२१००२५३ शुध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः
१२१००२६० सूत उवाच
१२१००२६१ इति चन्द्रललामस्य धर्मगह्योपबृंहितम्
१२१००२६३ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन्
१२१००२७१ स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम्
१२१००२७३ शिववागमृतध्वस्त क्लेशपुञ्जस्तमब्रवीत्
१२१००२८० श्रीमार्कण्डेय उवाच
१२१००२८१ अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम्
१२१००२८३ यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः
१२१००२९१ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम्
१२१००२९३ आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च
१२१००३०१ नैतावता भगवतः स्वमायामयवृत्तिभिः
१२१००३०३ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा
१२१००३११ सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः
१२१००३१३ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा
१२१००३२१ तस्मै नमो भगवते त्रिगुणाय गुणात्मने
१२१००३२३ केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये
१२१००३३१ कं वृणे नु परं भूमन्वरं त्वद्वरदर्शनात्
१२१००३३३ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत्
१२१००३४१ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात्
१२१००३४३ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि
१२१००३५० सूत उवाच

१२१००३५१ इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा
१२१००३५३ तमाह भगवाञ्छर्वः शर्वया चाभिनन्दितः
१२१००३६१ कामो महर्षे सर्वोऽयं भक्तिमांस्त्वमधोक्षजे
१२१००३६३ आकल्पान्ताद्यशः पुण्यमजरामरता तथा
१२१००३७१ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विरक्तिमत्
१२१००३७३ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यतास्तु ते
१२१००३८० सूत उवाच
१२१००३८१ एवं वरान्स मुनये दत्त्वागात्र्यक्ष ईश्वरः
१२१००३८३ देव्यै तत्कर्म कथयन्ननुभूतं पुरामुना
१२१००३९१ सोऽप्यवाप्तमहायोग महिमा भार्गवोत्तमः
१२१००३९३ विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः
१२१००४०१ अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः
१२१००४०३ अनुभूतं भगवतो मायावैभवमद्भुतम्
१२१००४११ एतत्केचिदविद्वांसो मायासंसृतिरात्मनः
१२१००४१३ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते
१२१००४२१ य एवमेतद्भृगुवर्य वर्णितं रथाङ्गपाणेरनुभावभावितम्
१२१००४२३ संश्रावयेत्संश्रृणुयादु तावुभौ तयोर्न कर्माशयसंसृतिर्भवेत्
१२१११००१० श्रीशौनक उवाच
१२१११००११ अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम्
१२१११००१३ समस्ततन्त्रराद्धान्ते भवान्भागवत तत्त्ववित्
१२१११००२१ तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पतेः
१२१११००२३ अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथा च यैः
१२१११००३१ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम्
१२१११००३३ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम्
१२१११००४० सूत उवाच
१२१११००४१ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि
१२१११००४३ याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः
१२१११००५१ मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट्
१२१११००५३ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम्
१२१११००६१ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः
१२१११००६३ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः

१२११००७१ प्रजापतिः प्रजननमपानो मृत्युरीशितुः
१२११००७३ तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः
१२११००८१ लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः
१२११००८३ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः
१२११००९१ यावानयं वै पुरुषो यावत्या संस्थया मितः
१२११००९३ तावानसावपि महा पुरुषो लोकसंस्थया
१२११०१०१ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः
१२११०१०३ तत्प्रभा व्यापिनी साक्षात्श्रीवत्समुरसा विभुः
१२११०१११ स्वमायां वनमालाख्यां नानागुणमयीं दधत्
१२११०११३ वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम्
१२११०१२१ बिभर्ति साङ्ख्यं योगं च देवो मकरकुण्डले
१२११०१२३ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयङ्करम्
१२११०१३१ अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः
१२११०१३३ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते
१२११०१४१ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत्
१२११०१४३ अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम्
१२११०१५१ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम्
१२११०१५३ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम्
१२११०१६१ इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम्
१२११०१६३ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम्
१२११०१७१ मण्डलं देवयजनं दीक्षा संस्कार आत्मनः
१२११०१७३ परिचर्या भगवत आत्मनो दुरितक्षयः
१२११०१८१ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन्
१२११०१८३ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत्
१२११०१९१ आतपत्रं तु वैकुण्ठं द्विजा धामाकुतोभयम्
१२११०१९३ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम्
१२११०२०१ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः
१२११०२०३ विष्वक्षेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः
१२११०२०५ नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः
१२११०२११ वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम्
१२११०२१३ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते

१२११०२२१ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः
१२११०२२३ अर्थेन्द्रियाशयज्ञानैर्भगवान्परिभाव्यते
१२११०२३१ अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम्
१२११०२३३ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः
१२११०२४१ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक्
१२११०२४२ स्वमहिमपरिपूर्णो मायया च स्वयैतत्
१२११०२४३ सृजति हरति पातीत्याख्ययानावृताक्षो
१२११०२४४ विवृत इव निरुक्तस्तत्परैरात्मलभ्यः
१२११०२५१ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्
१२११०२५२ राजन्यवंशदहनानपवर्गवीर्य
१२११०२५३ गोविन्द गोपवनिताव्रजभृत्यगीत
१२११०२५४ तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान्
१२११०२६१ य इदं कल्य उत्थाय महापुरुषलक्षणम्
१२११०२६३ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम्
१२११०२७० श्रीशौनक उवाच
१२११०२७१ शुको यदाह भगवान्विष्णुराताय शृण्वते
१२११०२७३ सौरो गणो मासि मासि नाना वसति सप्तकः
१२११०२८१ तेषां नामानि कर्माणि नियुक्तानामधीश्वरैः
१२११०२८३ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः
१२११०२९० सूत उवाच
१२११०२९१ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम्
१२११०२९३ निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते
१२११०३०१ एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः
१२११०३०३ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः
१२११०३११ कालो देशः क्रिया कर्ता करणं कार्यमागमः
१२११०३१३ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः
१२११०३२१ मध्वादिषु द्वादशसु भगवान्कालरूपधृक्
१२११०३२३ लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः
१२११०३३१ धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने
१२११०३३३ पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी
१२११०३४१ अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली

१२१११०३४३ नारदः कच्छनीरश्च नयन्त्येते स्म माधवम्
१२१११०३५१ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः
१२१११०३५३ रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी
१२१११०३६१ वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः
१२१११०३६३ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी
१२१११०३७१ इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाङ्गिराः
१२१११०३७३ प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी
१२१११०३८१ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः
१२१११०३८३ अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी
१२१११०३९१ पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा
१२१११०३९३ घृताची गौतमश्चेति तपोमासं नयन्त्यमी
१२१११०४०१ ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा
१२१११०४०३ विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी
१२१११०४११ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी
१२१११०४१३ विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी
१२१११०४२१ भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः
१२१११०४२३ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी
१२१११०४३१ त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा
१२१११०४३३ ब्रह्मापेतोऽथ सतजिद्धृतराष्ट्र इषम्भराः
१२१११०४४१ विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित्
१२१११०४४३ विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी
१२१११०४५१ एता भगवतो विष्णोरादित्यस्य विभूतयः
१२१११०४५३ स्मरतां सन्ध्ययोर्नृणां हरन्त्यंहो दिने दिने
१२१११०४६१ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै
१२१११०४६३ चरन्समन्तात्तनुते परत्रेह च सन्मतिम्
१२१११०४७१ सामर्ग्यजुर्भिस्तल्लिङ्गैरृषयः संस्तुवन्त्यमुम्
१२१११०४७३ गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः
१२१११०४८१ उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः
१२१११०४८३ चोदयन्ति रथं पृष्ठे नैरृता बलशालिनः
१२१११०४९१ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः
१२१११०४९३ पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम्

१२११०५०१ एवं ह्यनादिनिधनो भगवान्हरिरीश्वरः
१२११०५०३ कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः
१२१२००१० सूत उवाच
१२१२००११ नमो धर्माय महते नमः कृष्णाय वेधसे
१२१२००१३ ब्रह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान्
१२१२००२१ एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम्
१२१२००२३ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम्
१२१२००३१ अत्र सङ्कीर्तितः साक्षात्सर्वपापहरो हरिः
१२१२००३३ नारायणो हृषीकेशो भगवान्सात्वताम्पतिः
१२१२००४१ अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम्
१२१२००४३ ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम्
१२१२००५१ भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम्
१२१२००५३ पारीक्षितमुपाख्यानं नारदाख्यानमेव च
१२१२००६१ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः
१२१२००६३ शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षितः
१२१२००७१ योगधारणयोत्क्रान्तिः संवादो नारदाजयोः
१२१२००७३ अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः
१२१२००८१ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः
१२१२००८३ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः
१२१२००९१ ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये
१२१२००९३ ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः
१२१२०१०१ कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः
१२१२०१०३ भुव उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा
१२१२०१११ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च
१२१२०११३ अर्धनारीश्वरस्याथ यतः स्वायम्भुवो मनुः
१२१२०१२१ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा
१२१२०१२३ सन्तानो धर्मपत्नीनां कर्दमस्य प्रजापतेः
१२१२०१३१ अवतारो भगवतः कपिलस्य महात्मनः
१२१२०१३३ देवहूत्याश्च संवादः कपिलेन च धीमता
१२१२०१४१ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम्
१२१२०१४३ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः

१२१२०१५१ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः
१२१२०१५३ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च
१२१२०१६१ द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम्
१२१२०१६३ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः
१२१२०१७१ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च सन्ततिः
१२१२०१७३ यतो देवासुरनरास्तिर्यङ्नगखगादयः
१२१२०१८१ त्वाष्ट्रस्य जन्मनिधनं पुत्रयोश्च दितेर्द्विजाः
१२१२०१८३ दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः
१२१२०१९१ मन्वन्तरानुकथनं गजेन्द्रस्य विमोक्षणम्
१२१२०१९३ मन्वन्तरावताराश्च विष्णोर्हयशिरादयः
१२१२०२०१ कौर्मं मात्स्यं नारसिंहं वामनं च जगत्पतेः
१२१२०२०३ क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम्
१२१२०२११ देवासुरमहायुद्धं राजवंशानुकीर्तनम्
१२१२०२१३ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः
१२१२०२२१ इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च
१२१२०२२३ सूर्यवंशानुकथनं शशादाद्या नृगादयः
१२१२०२३१ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः
१२१२०२३३ खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च
१२१२०२४१ रामस्य कोशलेन्द्रस्य चरितं किल्बिषापहम्
१२१२०२४३ निमेरङ्गपरित्यागो जनकानां च सम्भवः
१२१२०२५१ रामस्य भार्गवेन्द्रस्य निःक्षतृईकरणं भुवः
१२१२०२५३ ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च
१२१२०२६१ दौष्मन्तेर्भरतस्यापि शान्तनोस्तत्सुतस्य च
१२१२०२६३ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः
१२१२०२७१ यत्रावतीऋणो भगवान्कृष्णाख्यो जगदीश्वरः
१२१२०२७३ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले
१२१२०२८१ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः
१२१२०२८३ पूतनासुपयःपानं शकटोच्चाटनं शिशोः
१२१२०२९१ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः
१२१२०२९३ अघासुरवधो धात्रा वत्सपालावगूहनम्
१२१२०३०१ धेनुकस्य सहभ्रातुः प्रलम्बस्य च सङ्क्षयः

१२१२०३०३ गोपानां च परित्राणं दावाग्नेः परिसर्पतः
१२१२०३११ दमनं कालियस्याहेर्महाहेर्नन्दमोक्षणम्
१२१२०३१३ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः
१२१२०३२१ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम्
१२१२०३२३ गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ
१२१२०३३१ यज्ञभिषेकः कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु
१२१२०३३३ शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः
१२१२०३४१ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः
१२१२०३४३ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः
१२१२०३५१ गजमुष्टिकचाणूर कंसादीनां तथा वधः
१२१२०३५३ मृतस्यानयनं सूनोः पुनः सान्दीपनेर्गुरोः
१२१२०३६१ मथुरायां निवसता यदुचक्रस्य यत्प्रियम्
१२१२०३६३ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः
१२१२०३७१ जरासन्धसमानीत सैन्यस्य बहुशो वधः
१२१२०३७३ घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम्
१२१२०३८१ आदानं पारिजातस्य सुधर्मायाः सुरालयात्
१२१२०३८३ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः
१२१२०३९१ हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम्
१२१२०३९३ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत्
१२१२०४०१ चैद्यपौण्ड्रकशाल्वानां दन्तवक्रस्य दुर्मतेः
१२१२०४०३ शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः
१२१२०४११ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम्
१२१२०४१३ भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान्
१२१२०४२१ विप्रशापापदेशेन संहारः स्वकुलस्य च
१२१२०४२३ उद्धवस्य च संवादो वसुदेवस्य चाद्भुतः
१२१२०४३१ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः
१२१२०४३३ ततो मर्त्यपरित्याग आत्मयोगानुभावतः
१२१२०४४१ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः
१२१२०४४३ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा
१२१२०४५१ देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः
१२१२०४५३ शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा

१२१२०४५५ महापुरुषविन्यासः सूर्यस्य जगदात्मनः

१२१२०४६१ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः

१२१२०४६३ लीलावतारकर्माणि कीर्तितानीह सर्वशः

१२१२०४७१ पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशो गृणन्

१२१२०४७३ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात्

१२१२०४८१ सङ्कीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम्

१२१२०४८३ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः

१२१२०४९१ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः

१२१२०४९३ तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम्

१२१२०५०१ तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम्

१२१२०५०३ तदेव शोकार्णवशोषणं नृणां यदुत्तमःश्लोकयशोऽनुगीयते

१२१२०५११ न यद्वचश्चित्रपदं हरेर्यशो

१२१२०५१२ जगत्पवित्रं प्रगृणीत कर्हिचित्

१२१२०५१३ तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं

१२१२०५१४ यत्राच्युतस्तत्र हि साधवोऽमलाः

१२१२०५२१ तद्वाग्विसर्गो जनताघसम्प्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि

१२१२०५२३ नामान्यनन्तस्य यशोऽङ्कितानि यत्शृण्वन्ति गायन्ति गृणन्ति साधवः

१२१२०५३१ नैष्कर्म्यमप्यच्युतभाववर्जितं

१२१२०५३२ न शोभते ज्ञानमलं निरञ्जनम्

१२१२०५३३ कुतः पुनः शश्वदभद्रमीश्वरे

१२१२०५३४ न ह्यर्पितं कर्म यदप्यनुत्तमम्

१२१२०५४१ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु

१२१२०५४३ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादरादिभिः

१२१२०५५१ अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति

१२१२०५५३ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम्

१२१२०५६१ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम्

१२१२०५६३ नारायणं देवमदेवमीशमजस्रभावा भजताविवेश्य

१२१२०५७१ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात्

१२१२०५७३ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम्

१२१२०५८१ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः

१२१२०५८३ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम्

१२१२०५९१ य एतत्श्रावयेन्नित्यं यामक्षणमनन्यधीः
१२१२०५९३ श्लोकमेकं तदर्धं वा पादं पादार्धमेव वा
१२१२०५९५ श्रद्धावान्योऽनुश्रृणुयात्पुनात्यात्मानमेव सः
१२१२०६०१ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्भवेत्
१२१२०६०३ पठत्यनश्नन्प्रयतः पूतो भवति पातकात्
१२१२०६११ पुष्करे मथुरयां च द्वारवत्यां यतात्मवान्
१२१२०६१३ उपोष्य संहितामेतां पठित्वा मुच्यते भयात्
१२१२०६२१ देवता मुनयः सिद्धाः पितरो मनवो नृपाः
१२१२०६२३ यच्छन्ति कामान्गृणतः शृण्वतो यस्य कीर्तनात्
१२१२०६३१ ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते
१२१२०६३३ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम्
१२१२०६४१ पुराणसंहितामेतामधीत्य प्रयतो द्विजः
१२१२०६४३ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत्
१२१२०६५१ विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्योदधिमेखलाम्
१२१२०६५३ वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात्
१२१२०६६१ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम्
१२१२०६६३ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः
१२१२०६७१ तमहमजमनन्तमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम्
१२१२०६७३ द्युपतिभिरजशक्रशङ्कराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि
१२१२०६८१ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजङ्गमालयाय
१२१२०६८३ भगवत उपलब्धिमात्रधम्ने सुरऋषभाय नमः सनातनाय
१२१२०६९१ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावो
१२१२०६९२ऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम्
१२१२०६९३ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं
१२१२०६९४ तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि
१२१३००१० सूत उवाच
१२१३००११ यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्
१२१३००१२ वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः
१२१३००१३ ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
१२१३००१४ यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः
१२१३००२१ पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्

१२१३००२२ निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः
१२१३००२३ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनाम्भसां
१२१३००२४ यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति
१२१३००३१ पुराणसङ्ख्यासम्भूतिमस्य वाच्यप्रयोजने
१२१३००३३ दानं दानस्य माहात्म्यं पाठादेश्च निबोधत
१२१३००४१ ब्राह्मं दश सहस्राणि पाद्मं पञ्चोनषष्टि च
१२१३००४२ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम्
१२१३००५१ दशाष्टौ श्रीभागवतं नारदं पञ्चविंशति
१२१३००५३ मार्कण्डं नव वाह्नं च दशपञ्च चतुःशतम्
१२१३००६१ चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च
१२१३००६३ दशाष्टौ ब्रह्मवैवर्तं लैङ्गमेकादशैव तु
१२१३००७१ चतुर्विंशति वाराहमेकाशीतिसहस्रकम्
१२१३००७३ स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम्
१२१३००८१ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश
१२१३००८३ एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु
१२१३००९१ एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः
१२१३००९३ तत्राष्टदशसाहस्रं श्रीभागवतं इष्यते
१२१३०१०१ इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे
१२१३०१०३ स्थिताय भवभीताय कारुण्यात्सम्प्रकाशितम्
१२१३०१११ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम्
१२१३०११३ हरिलीलाकथाव्राता मृतानन्दितसत्सुरम्
१२१३०१२१ सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम्
१२१३०१२३ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्
१२१३०१३१ प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्
१२१३०१३३ ददाति यो भागवतं स याति परमां गतिम्
१२१३०१४१ राजन्ते तावदन्यानि पुराणानि सतां गणे
१२१३०१४३ यावद्भागवतं नैव श्रूयतेऽमृतसागरम्
१२१३०१५१ सर्ववेदान्तसारं हि श्रीभागवतमिष्यते
१२१३०१५३ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्
१२१३०१६१ निम्नगानां यथा गङ्गा देवानामच्युतो यथा
१२१३०१६३ वैष्णवानां यथा शम्भुः पुराणानामिदम्तथा

१२१३०१७१ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा
१२१३०१७३ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः
१२१३०१८१ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
१२१३०१८२ यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते
१२१३०१८३ तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविस्कृतं
१२१३०१८४ तच्छृण्वन्सुपठन्विचारणपरो भक्त्या विमुच्येन्नरः
१२१३०१९१ कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
१२१३०१९२ तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा
१२१३०१९३ योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यतस्
१२१३०१९४ तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि
१२१३०२०१ नमस्तस्मै भगवते वासुदेवाय साक्षिणे
१२१३०२०३ य इदम्कृपया कस्मै व्याचचक्षे मुमुक्षवे
१२१३०२११ योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे
१२१३०२१३ संसारसर्पदष्टं यो विष्णुरातममूमुचत्
१२१३०२२१ भवे भवे यथा भक्तिः पादयोस्तव जायते
१२१३०२२३ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो
१२१३०२३१ नामसङ्कीर्तनं यस्य सर्वपाप प्रणाशनम्
१२१३०२३३ प्रणामो दुःखशमनस्तं नमामि हरिं परम्

॥ ॐ तत्सत् ॥

# Document Info

| | |
|---|---|
| **Text title :** | bhAgavata purANa |
| **Author :** | |
| **Language :** | Sanskrit |
| **Category :** | purANa |
| **Subject :** | hinduism \religion |
| **Description/Comments :** | .txt Provided by Ulrich with a searchable PDF |
| **Transliterated by :** | |
| **Proofread by :** | |
| **Latest update :** | July 16, 2010 |



bhagpur.pdf
was typeset on January 19, 2015 using XeLaTeX

Please send corrections to *sanskrit@cheerful.com*